॥ श्री ॥

# वेदान्त परिभाषा ।

मणिप्रभा शिखामणि सहिता ।

॥ श्रीः ॥

श्रीमद्धर्मराजाध्वरीन्द्रप्रणीता

# वेदान्तपरिभाषा ।

उदासीनस्वामिश्रीमदमरदासविरचितमणिप्रभाख्य-
टीकासंवलितया तदात्मजरामकृष्णाध्वरि-
कृतशिखामणिटीकया विभूषिता ।

श्रीकाशीनिवासिनिर्मलपं० स्वामिगोविन्दसिंहसाधुना
परिश्रमेण सुसंस्कृता



सेयं

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशिता ।

संवत् १९८५ शके १८५०.

॥ श्रीः ॥

समणिप्रभाशिखामणिसहिताया वेदान्तपरिभाषाया

# वेदान्ततत्त्वसमीक्षाख्याभूमिका

पण्डितस्वामिश्री ६ राममिश्रशास्त्रिपरिशोधितशास्त्रदीपिकाभूमिकायाः श्रीमदुदासीनपण्डितस्वामिश्रीबालरामपरिशोधितयोगभाष्यभूमिका-याश्च प्रत्युत्तरविचाररूपतया काशीनिवासिनिर्मलपं० स्वामि-श्रीगोविन्दसिंहेन साधुना संगृहीता ।

अज्ञेभ्यो मतिदायिनी विपदि या सन्त्रासविध्वंसिनी
वादिव्यूहबिलेशयप्रमथने शक्तिः परा गारुडी ।
मोहध्वान्तविमर्दिनी सुकृतिनां सद्धर्मसंदर्शिनी
सद्विद्याजननी सदा विजयतां श्रीशाङ्करी भारती ॥

अथाहोरात्रसत्यानृतरागद्वेषशीतोष्णसुखदुःखभावाभावधर्माधर्माद्यनेकविधपरस्परप्रतिद्वन्द्विपदार्थ-परिपूरिते कदापि केनापि केनचिदपि प्रकारेणाचिन्तनीयेऽनिर्वचनीये विचित्रेऽस्मिन् संसारे संचरत्सु सुखदुःखमयेषु देवासुरतिर्यग्योनिमानुषेषु त्रिगुणात्मनः प्रधानस्यापि परिणामात्, परमाण्वादेर्ब्रह्माण्डपर्यन्तस्योत्पत्तिस्थितिप्रलयकारणस्येश्वरस्येच्छया वा, धर्माधर्मसाधनानामिष्टानिष्ट-फलसम्बन्धकारिणां कर्मणां वा, शुभाशुभानां विपाकस्वभावाद्वा, स्वयमेवानेकप्रकारमुत्पद्यमा-नस्य तिष्ठतो विनश्यतो वा, नियतवृत्तेः स्थावरजङ्गमस्य न कदाचित्काचिदवस्था सा या न संभवतीति सम्यग्विमृशतो विशेषविचारशीलस्य विदुषो न हि कस्यचिदपि तत्तद्विशेषविशिष्ट-स्पष्टकल्पितनानाविधमतमतान्तरेऽनवरतात्यन्ताग्रहस्तथापि स्वभावोऽयमाधुनिकाचार्याणां यत्ते सुप्रतिष्ठितं सद्युक्तिप्रमाणाभ्यामुपनिबद्धं सुपरीक्षकैः सम्यक् परीक्षितमपि प्राचीनपूर्वजैर्लोको-पकाराय वा स्वात्मप्रख्यापनाय वा केनचित्सूक्ष्मस्वार्थेन करुणया वा प्रचारितमप्रतिहतं राद्धान्त-मखिलीकृत्य न खलु स्वस्मिन्नाचार्यत्वमर्जयन्ते ॥

तथा हि—शिष्यते=अनुशिष्यतेऽपूर्वोऽर्थो बोध्यतेऽनेनेति व्युत्पत्त्या शास्त्रशब्देन वेद एवाभि-धीयते । वेदोपजीविस्मृतिपुराणादिनिबन्धेष्वप्येकप्रयोजनोपनिबद्धत्वेनैककार्यकरत्वेन च तद्व्य-वहारः । अत एव छन्दोव्याकरणाभिधानकोषादिषडङ्गलक्षणग्रन्था अपि शास्त्राणि भवन्ति ॥

अत्र एव धर्मशास्त्रप्रवर्तकानां प्राचीनानाम्—

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ १ ॥"

इत्यादिसारगर्भितवचनैर्बुभुत्सुजनेष्टानिष्टावबोधके वाङ्मात्रे शास्त्रत्वव्यवहारेऽप्युपपद्यते ॥ तच्च शास्त्रं द्विविधम्, ऐहिकाभ्युदयावबोधकं परमपुरुषार्थावबोधकं च । आद्यं यथा शिल्पचिकित्साधर्मराजनीतिनृत्यगीताद्यवबोधकम् । द्वितीयं च दर्शनात्मकम् । तानि च सांख्यवैशेषिकन्यायपातञ्जलमीमांसावेदान्ताख्यानि षट् । एतानि तत्त्वज्ञानार्थं वेदान् विचार्याधिकारिभेदेनैककार्यकरत्वरूपसंगत्या च क्रमेण कपिलकणादगोतमपतञ्जलिजैमिनिवेदव्यासाख्यमुनिषट्कप्रणीतानि । अत एव वेदा अपि पूर्वाचार्यैर्मन्दमध्यमोत्तमाधिकारिणो निरीक्ष्य कर्मकाण्डोपासनाकाण्डज्ञानकाण्डभेदेन विभक्ता इति निश्चीयते । एवं च परमपुरुषार्थनिरूपणपरं सर्वं शास्त्रं मन्दमध्यमोत्तमाधिकारिभेदेन त्रेधा प्रवृत्तमिति न तिरोहितमेतत् । तत्रापि मन्दाधिकृतोद्देशेन प्रवृत्तः परमकारुणिको भगवान् जैमिनिर्यावद्वेदार्थविचाररूपां द्वादशाध्यायीं पूर्वमीमांसानाम्नीं सूत्रात्मनोपनिबबन्ध, विधिमन्त्रनामधेयनिषेधार्थवादात्मके वेदे '**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्**' इत्यादिन्यायेन विधिवाक्यानामेव प्राधान्यमन्येषां च तच्छेषत्वमपि सुस्पष्टमेव बोधयामास । '**ज्योतिःष्टोमेन स्वर्गकामो यजेत**' '**राजा राजसूयेन यजेत स्वाराज्यकामः**' '**श्येनेनाभिचरन् यजेत शत्रुवधकामः**' इत्यादिविधिवाक्यान्यपि तत्तद्विषयसम्पर्कसमुद्भवानित्यसुखाभिलाषिणं वर्णाश्रमाभिमानिनं रागद्वेषादितो दग्धहृदयं सर्वथागतधियं स्वात्मनि श्रद्धामात्रावशेषं कामुकमेवाधिकुर्वन्ति । एतादृशाधिकृतोद्देशेनैव-'**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः**' इत्यादिवेदवाक्यानि '**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् । जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन्**' इत्यादिस्मृतिशिरोभूतानि भगवद्वाक्यानि च संलग्नानि भवन्ति । अनेनैव भगवद्वचनेन विदुषो वस्तुतः कर्मानधिकारोऽपि सूचितो भवति । एवं पूर्वमीमांसाशास्त्रमात्रे न हि किञ्चिदपि तत् कर्म यत्फलाभिसन्धिशून्यम, नापि कश्चिदेतादृशो लोकेऽधिकारी यश्चाकामुकोऽपि विविधक्लेशसाध्यां विघ्नविशेषबहुलां धनधान्यादिविनाशसम्पदामुक्तां क्रियां जानन्नपि तामनुसंज्वरेत् । अविपश्चितामेव पूर्वमीमांसाप्रतिपादितेऽर्थेऽधिकारो न तु कृतधियां विपश्चितामिति बोधयता परमकारुणिकेन भगवता वासुदेवेन परमप्रियमर्जुनं निमित्तीकृत्य "यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥ कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् । क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥ भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् । व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥" अ० २ ॥ इत्यादिबह्वर्थकवचनामृतेन समासिक्तोऽयं लोक इति । अनेनैवोक्तैतादृशमूढबुद्धीनां समाध्यनधिकारोऽपि स्पष्टमेव भगवतोक्त इति ध्येयम् ॥

ततश्च-

"कुर्वते कर्म भोगाय कर्म कर्तुश्च भुञ्जते ।
नद्यां कीटा इवावर्तादावर्तान्तरमाशु ते ॥

व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम् ॥" इत्यादिन्यायगर्भिताभियुक्तवचनेन—

"इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥
येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥" अ० ७ ॥

इत्यादिभगवद्वाक्यैश्चेश्वरानुग्रहाद्वा सञ्चितजन्मजन्मान्तरीयाशुभकर्मणां क्षयाद्वा प्रबलपुण्यपुञ्जसत्समुद्रेकाद्वा कदाचिज्जन्मान्तरे तेषामेवेच्छाद्वेषादिसमुद्भूतद्वन्द्वमोहनाशे सति भगवति वासुदेवे दृढा भक्तिरुत्पद्यते। त एवार्द्धप्रबुद्धा मध्यमाधिकारिणो भवन्ति। ते च वेदैकदेशात्मकम् 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे' 'य एतदेवं विद्वान् साधु सामेत्युपासते' 'अन्नं ब्रह्मेत्युपासीत' 'मनो ब्रह्मेत्युपासीत' 'आत्मानमेव प्रियमुपासीत' इत्याद्युपासनावबोधकविधिवाक्यव्यूहमेव श्रुतिशिरोभूतं मन्यमानास्तत्रानुरक्ता भवन्ति। एतादृशमध्यमाधिकृतोद्देशेनैव कपिलकणादगोतमपतञ्जलिप्रणीतशास्त्राणां यथायथं प्रवृत्तिरिति निश्चीयते। भगवान् वासुदेवोऽपि परमप्रियशिष्यमर्जुनमेतादृशमध्यमाधिकारिणमेव मत्वा स्वकीये यावदुपदेशावसाने—

"सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमतिस्ततो वक्ष्यामि ते हितम् ॥ ६४ ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ ६६ ॥" अ० १८॥

इत्यादिपरमपूज्यवचनैः सर्वधर्मपरित्यागपूर्वकस्वात्मपरायणतामेव बोधयामास। अत एवार्जुनमभिमुखीकृत्य स्वकीयसमुपदिष्टोपास्त्यात्मकमर्थं तत्र तत्र भगवान् 'इमं राजर्षयो विदुः—भक्ता राजर्षयस्तथा—राजविद्या राजगुह्यम्'—इत्यादिवाक्यै राजविद्याशब्देन व्याजहार न तु ब्रह्मविद्याशब्देनेत्यवगम्यते ॥

ब्रह्मविद्या च पराविद्याऽपरनाम्नी तत्र तत्रोपनिषत्सु शमदमादिसाधनचतुष्टयसम्पन्नान् भगवदाराधनादितो निर्धूतकल्मषानुत्तमानेवाधिकृत्य 'अधीहि भगवन् ब्रह्मविद्याम्' 'ब्रह्मविद्यां प्रवक्ष्यामि' 'रहस्यं ब्रह्मविद्यायाम्' 'तस्मै स होवाच ब्रह्मविद्यां वरिष्ठाम्' 'परमं ब्रह्मविद्यायाः' 'ब्रह्मविद्याप्रबोधो हि केनोपायेन जायते' 'अध्येमि ब्रह्मविद्याम्' 'नाम वै ब्रह्मविद्याम्' 'वाग्वै विज्ञापयति ब्रह्मविद्याम्' 'विज्ञानेन वै विजानाति ब्रह्मविद्याम्' 'ब्रह्मविद्यया सर्वं भविष्यन्तः' 'इयं ब्रह्मविद्या सर्वोपनिषद्विद्या वा' 'अनया ब्रह्मविद्यया ब्रह्मणः पन्थान-

मारूढाः' 'ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्' 'तां पुरोवाचाङ्गिरसे ब्रह्मविद्याम्' 'प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' 'तेषामेवैतां ब्रह्मविद्यां वदेत' इत्यादिश्रुतिशेखरैरनेकधा प्रवृत्ता भगवदुपास्त्यपरनाम्नी राजविद्यातो भिन्नैवेत्यवसीयते । एतादृशब्रह्मविद्याविष्करणाभिप्रायेणैव प्रवृत्तम् 'अथातो ब्रह्मजिज्ञासा' इत्यादिचतुरध्यायात्मकमुत्तरमीमांसाऽपरनामकं भगवद्वेदव्यासप्रणीतं वेदान्तशास्त्रमिति व्यवह्रियते । अत्र च-'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यः' 'नान्यैर्देवैस्तपसा कर्मणा वा' 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते ध्यायमानः । शान्तो दान्तः समस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत'

"संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥ १ ॥
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज॥२॥"बृहस्पतिः॥

इत्यादिश्रुतिस्मृतिशतकोपदिष्टो विवेकवैराग्यादिसाधनचतुष्टयसम्पन्नानामुत्तमानामेवाधिकार इत्यवगम्यते । अत एव हि 'अथातो ब्रह्मजिज्ञासा' इति सूत्रस्थस्य अथशब्दस्य कैश्चित्प्राचीनैरनवधानपूर्वकाभिमतां कर्माधिगमानन्तर्यार्थकतां व्युदस्य साधनचतुष्टयसंपत्त्यानन्तर्यार्थकतां संस्थापयामासुः सर्वशास्त्रविदं वरिष्ठाः श्रीशङ्कराचार्याः । श्रीभाष्याचार्यास्तु-'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति' 'इतिवृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषेति' इति च केषाञ्चित् पूर्वाचार्याणां वचनं प्रमाणतयोपदर्शयन्तः 'अथातो ब्रह्मजिज्ञासा' इति सूत्रस्थाथशब्दस्य कर्माधिगमानन्तर्यार्थत्वमास्थाय पूर्वमीमांसापरिशिष्टचतुरध्यायी-संकर्षणकाण्डोपेतविंशत्यध्यायी-स्वरूपयोः पूर्वोत्तरमीमांसयोरेकशास्त्रत्वमाहुः । अत्रोच्यते-अधिगमनमधिगम इति भावघञन्ताधिगमशब्देन किं कर्मणां साक्षात्कारो विवक्षितः प्राप्तिर्वा स्वीकरणं वा । नाद्यः, तत्रापि किं कर्मसाक्षात्कारस्य स्वतन्त्ररूपेण ब्रह्मविचारकारणत्वं किं वा तदन्तर्गतिमात्रम् । नाद्यः, विवेकादीनामन्येषामपि श्रुतिस्मृतिप्रसिद्धानां विद्यमानत्वात् । न द्वितीयः, तत्रापि किं विविदिषाद्वारा ब्रह्मविचारोपयुक्ततया तदानन्तर्यमथशब्दार्थतया विवक्षितम् उत ब्रह्मविचारकालेऽपि कर्मणां करणीयतया तदानन्तर्यमथशब्दार्थ इति । नाद्यः, आनन्तर्योक्तिद्वाराऽधिकारिविशेषणसमर्पको ह्यथशब्दः । ततश्च कर्मावबोधानन्तर्ये तद्बोधस्य कर्मविचारं विना असिद्धः विचारितकर्मत्वमधिकारिविशेषणं लभ्यते । न च विविदिषोपयुक्तस्य विचारितकर्मत्वस्याधिकारिविशेषणत्वमत्र वक्तव्यम्, अधिकारं विना कृतमकृतमिति शङ्कानिराकरणद्वाराऽयं निर्णय उपयुज्यते तदेवाधिकारिविशेषणम् । वेदान्तविचारे च उत्कटविविदिषादिनिर्णयेनैव तादृशशङ्काया निराससम्भवात् । न विविदिषाप्राचीनस्य विचारितकर्मत्वस्य पृथङ् निर्णयोऽपेक्षितः । तस्य विविदिषाद्वारैव विचारोपयुक्तत्वात् । द्वितीये तु

कर्मसहितवेदान्तविचारस्य ततः प्राक् कर्मविचारं विना कर्तुमशक्यतया वेदान्तविचारारम्भे कर्मसमानकाले विचारितकर्मत्वनिर्णय उपयुक्तो भवेत् । न तु तदस्ति । कर्मानुष्ठानसहित एव ब्रह्मविचारः स्वकार्योपयुक्त इत्यत्र प्रमाणाभावात् । ननु विविदिषावाक्येन कर्मणामपि मोक्षार्थत्व-विधानात् ज्ञानैकसाध्ये मोक्षे तद्वारा कर्मोपयोगस्य वक्तव्यतया ज्ञानसाधनश्रवणादिभिः समुच्चितानि कर्माणि भविष्यन्तीति चेत् न विविदिषावाक्यं विविदिषार्थमेव कर्माणि विधत्त इति "अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥" अ० ३ ॥ पा० ४ ॥ शा० इत्यादिब्रह्मसूत्रेण—

"कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते ॥ १ ॥"

इत्यादिस्मृतिभिश्च स्पष्टमेव । अपि च 'कर्मणा पितृलोकः' इत्यादिश्रुत्या नित्यनैमित्तिक-यज्ञादिकर्मभिः पैत्रोऽर्यमादिपितृदेवतासम्बन्धी लोको भोगभूमिविशेषोऽधिगम्यो निश्चितो भवति । तथा 'विद्यया देवलोकः' इति श्रुत्या विद्यया उपासनात्मकमानसक्रियया देवानामिन्द्रादिहिरण्य-गर्भान्तानां लोकोऽधिगम्यो निश्चितो भवति । एवमीश्वरार्पणबुद्ध्याऽनुष्ठितयोः कर्मोपासनयोस्तु 'कषायपक्तिः कर्माणि' इति स्मृतिबोधितं चित्तस्य कषायाणां बहुतरजन्मपरम्पराहितोत्तरोत्तर-जन्मादिहेतुभूतदृढतररागद्वेषादिसंस्काराणां नाशनमेव साध्यं फलमस्ति । अथवा **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'** इति श्रुतिवाक्यात् विविदिषासंन्यासपूर्वकश्रवणप्रवृत्तिफलोपहितोत्कटज्ञानेच्छावेदनं मोक्षजनक-तत्त्वज्ञानं वा तत्फलम् । विविदिषन्ति इत्यत्र हि विद ज्ञाने इत्यस्माद्धातोरिच्छायां सन्प्रत्ययः । तत्र यदि यज्ञेन इत्यादिपदैः करणत्वेनोपस्थितानां प्रधानीभूतसन्प्रत्ययार्थे इच्छायामन्वयः तदा विविदिषा फलमिति पक्षः । यदि तु प्रकृत्यर्थे ज्ञानेऽन्वयस्तदा ज्ञानमेव फलमिति पक्षः । अश्वेन ग्रामं जिगमिषतीत्यादिवाक्ये प्रकृत्यर्थगमने अश्वस्य करणत्वेनान्वयबोधदर्शनादिति भावः ॥

तत्र कथं कर्मविचारतदवबोधानन्तर्यं ब्रह्मविचारस्येति चेत् उच्यते । अत्र हि येनास्मिञ्जन्मनि कर्मविचारः कृतस्तेनैव वेदान्तविचारः कर्तुं शक्यते नान्येनेति शङ्को मन्यते । तथा हि । अस्मिन् शास्त्रे निर्विशेषब्रह्मविद्याया निरूपणं सविशेषब्रह्मविद्याया दहरोपासनादिरूपायाः कर्मान-वबद्धायास्तदवबद्धायाश्चान्तरादित्यादिविद्यायाश्च निरूपणं तदनुष्ठानार्थमेव भविष्यति । तत्र कर्मावबद्धोपासनस्य कर्मसमुच्चयः स्पष्टः एव । एवं निर्विशेषविद्यानुष्ठानकालेऽपि 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति निर्विशेषब्रह्मविच्वेन श्रुतिस्मृतिप्रसिद्धानां जनकादीनां कर्मदर्शनात् कर्मकर्तव्यताऽवगम्यते । न च कर्मणैव हीति वाक्यं विद्यानुष्ठानकाले न जनकादिषु कर्म प्रतिपादयति किन्तु तेषु विविदिषोपयुक्तं कर्म प्रतिपादयतीति समञ्जसम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति वाक्ये ब्राह्मणग्रहणेन विविदिषोपयुक्ते कर्मणि ब्राह्मणानामेवाधिका-

रात् । न च विविदिषाकामस्याधिकारिणोऽर्थसिद्धस्योद्देश्यतया न ब्राह्मण्येन विशेषणं युक्तमिति वाच्यम् । 'राजा स्वाराज्यकामो राजसूयेन यजेत' इत्यत्र राजकर्तृकप्रयोगविधिपक्षे राजकर्तृके प्रयोगे तदन्यस्यासामर्थ्येनाधिकारासम्भवात् यथा राजत्वस्यार्थादधिकारिकोटिप्रवेशः फलयागविधिसम्बन्धपक्षेऽप्राप्तयागोद्देशेन फलसम्बन्धस्य राजत्वजातेश्च कर्त्रवच्छेदद्वारा विधानासम्भवेऽपि फलसम्बन्धमात्रविधिं स्वीकृत्य कर्तृविशेषापेक्षायां स्वाराज्यकामपदं राजानुवादकपदसमभिव्याहारेण वस्तुगत्या तत्परमेव पर्यवस्यति इति स एवार्थात् कर्ताऽधिकारी च भविष्यति इति वा स्वीक्रियते, तद्वत् प्रकृतेऽपि भविष्यतीति अतो विविदिषार्थे कर्मणि ब्राह्मणानामेवाधिकारात् जनकादिषु दृश्यमानं कर्म मोक्षार्थमेवेति ज्ञानैकसाध्ये मोक्षे ज्ञानाङ्गतया तस्य निवेशो वक्तव्य इति निष्प्रपञ्चब्रह्मसाक्षात्कारोपयुक्तायां तदुपासनायां कर्मसाहित्यं सिद्धमिति चेत् न । विविदिषावाक्येन यादृशा नित्यनैमित्तिककर्मयोगाः पापक्षयार्थत्वेन प्रसिद्धास्तेषां विविदिषासंयोगमात्रं क्रियते इति । 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगी च' इत्यादिस्तुतिबलान्निरभिसन्धि कर्म कर्तुर्मुमुक्षुत्वमवगम्यते । तस्यैव च कर्मणः 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' इत्युत्तरश्लोके योगपदोदितायां चित्तशुद्धौ विनियोगः । तथा च गीतावचने कर्मफलमनाश्रित इत्युक्त्या प्रसिद्धानि यान्यग्निहोत्रादीनि फलवन्ति कर्माणि तेष्वेव फलाभिसन्धिपरित्यागे ज्ञानार्थतावगमान्मुमुक्षुणा क्रियमाणानि कर्माणि प्रसिद्धकर्मभ्यो भिद्यन्त इति सिध्यति । तदैकार्थ्याय विविदिषावाक्येऽपि प्रसिद्धानामेव कर्मणां विनियोगः स्वीकर्तव्यः । अनाश्रितः कर्मफलमिति वचनेन काम्यानामपि कर्मणां ज्ञानार्थताऽस्तीत्यपि सिध्यतीति द्रष्टव्यम् । ततश्च प्राप्तकर्मोद्देशेन फलसम्बन्धविधौ ब्राह्मणत्वस्य कर्तृविशेषणतया विधाने वाक्यभेदः स्यात् । तदनुवादमात्रेणाख्याताक्षिप्तः कर्ता वस्तुगत्या स एव पर्यवसितो भवति 'राजा स्वाराज्यकामो राजसूयेन यजेत' इति वाक्य इवेति युक्तम् । राजसूयस्यानिर्ज्ञातकर्तृविशेषतया कर्त्राकाङ्क्षायां तथाऽभ्युपगमेऽपि त्रैवर्णिकतया निर्ज्ञातकर्तृकाणां भावनानां विविदिषावाक्ये विविदिषार्थत्वेन विधीयमानानां कर्तृविशेषानपेक्षतया अनुवादमात्रेण विशेषपर्यवसानासंभवात् । तस्मात्तत्र ब्राह्मणपदं त्रैवर्णिकोपलक्षणमेव । ततश्च जनकादिषु दृश्यमानस्य कर्मणो विविदिषार्थत्वे न कोऽपि विरोधः । न च प्रत्यवायपरिहारार्थमप्युपासनाकाले नित्यनैमित्तिकानि कर्माणि कर्तव्यानि । ततश्च वेदान्तशास्त्रनिरूपणीया सर्वाप्युपासना कर्मसमुच्चितैवेति तत्तदुपासनाफलकामेनाधिकारिणा वेदान्तविचारमात्रेण कर्मसमुच्चितत्तदुपासनायाः कर्तुमशक्यतया कर्मविचारोऽपि कर्तव्यः प्राप्नोतीत्युभयोरेकः कर्ता सिध्यतीति चेत्, न श्रवणमनननिदिध्यासनरूपे निर्विशेषविद्यानुष्ठाने परिव्राज एवाधिकारोऽवगम्यते 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादिवचनैः । तत्र हि मोक्षार्थतया पारिव्राज्यविधानात् । ज्ञानैकसाध्ये मोक्षे साक्षात्कारणत्वासम्भवेन द्वारापेक्षायाम् 'तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धि

मान्' इति श्रुतिवचनेन 'निःसारमेव संसारम्' इत्यादिस्मृत्या च द्वारतया ज्ञानस्य प्रतिपादनात् । तत्रापि प्रमाणसाध्ये द्वारापेक्षायां संन्यस्य श्रवणं कुर्यादिति वचनेन श्रवणस्य द्वारताप्रतिपादनात् । श्रवणे च दृष्टेन चित्तविक्षेपाभावेनोपयोगसम्भवेनादृष्टं कल्पनीयमिति अवघातविधिवत् प्रकारान्तरेण चित्तविक्षेपाभावसंपादनं वारयन्नियमविधिः पर्यवस्यति । न चैवम् 'ब्राह्मणो निर्वेदमायात्' 'ब्राह्मणाः पुत्रैषणायाश्च लोकैषणायाश्च वित्तैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति श्रुत्या 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मः प्रशस्यते' इति स्मृत्या च ब्राह्मणानामेव संन्यासविधानात् जनकादिष्वात्मविद्याप्रदर्शनमनुपपन्नं स्यादिति वाच्यम् । तेषाम्—

"दिने दिने च वेदान्तश्रवणाद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं भवेत् ॥"

इति पापक्षयार्थस्य प्रतिषेधाभावेन शूद्रादिवत् करणे प्रत्यवायाभावेन वेदान्तार्थनिर्णयरूपदृष्टप्रयोजनार्थस्य च सम्भवात् । तच्च जन्मान्तरे विद्यापरिपाकोपयुक्तं भविष्यति । संन्यासिनस्तु तत्त्वसाक्षात्कारोपयुक्तसकलवैदिकाङ्गसहितश्रवणाधिकारसम्भवादसति प्रतिबन्धेऽस्मिन्नेव जन्मनि विद्या परिपच्यते । दहरोपासनया देवत्वं गतानां तु वैदिककर्मकृतचित्तविक्षेपनिवृत्तेः स्वत एव विद्यमानतया स्वयं दिने बर्हिषि लवननियम इव संन्यासनियमो न प्रवर्त्तते इति प्रैषाद्युच्चारणपूर्वकवैदिकलौकिककर्मपरित्यागात्मकसंन्यासनियमाभावेऽपि ब्रह्मलोक एव विद्यापरिपाकसंभवात् क्रममुक्तिफलसगुणविद्याविधानान्यथानुपपत्त्या संन्यासं विनाऽपि विद्यापरिपाक इति कल्पनोपपत्तेश्चापुनरावृत्तिश्रवणे न काचिदनुपपत्तिः । अतो विवेकादिसम्पन्नस्य मोक्षपर्यन्तश्रवणाधिकारिणः परिव्राजोऽग्निहोत्रादिकर्मसु अधिकाराभावेन तदकरणे प्रत्यवायाभावात् । न निर्विशेषविद्यानुष्ठानकाले कर्माणि कर्तव्यानि । अतो न निर्विशेषविद्याधिकारिणि विचारितकर्मत्वस्योपयोगोऽस्ति इति सुस्थितम् । ननु पूर्वोत्तरमीमांसयोरेकपुरुषाध्येतव्यताप्रयोजकमेकग्रन्थत्वं शक्यं व्युत्पादयितुम् । तथा हि । 'अथातो धर्मजिज्ञासा' इत्यत्र हि अथशब्देन कृत्स्नवेदाध्ययनानन्तर्यमुच्यते । अतःशब्देन कृत्स्नस्य विवक्षितार्थत्वमुच्यते । तदनुसारेण धर्मशब्दः कृत्स्नवेदार्थपर इत्येव वक्तुमुचितम् । कृत्स्नवेदाध्ययनस्य कृत्स्नवेदार्थविचार एवानन्तर्योक्तिरुचिता तदेकदेशाध्ययनमेव धर्मशब्दस्य यथाश्रुतार्थत्वे आनन्तर्यप्रतियोगितया वक्तुमुचितम् । उपनिषदध्ययनानन्तर्यस्य धर्मविचारेऽनुपयोगात् । एवं कृत्स्नवेदविवक्षितार्थत्वहेतुरपि धर्मशब्दस्य वेदार्थपरतां न्यायतौल्यादुपदर्शयति । धर्मस्य हि वेदविवक्षितत्वाद्विचारणीयत्वे उच्यमाने यो यो वेदविवक्षितः स विचारणीय इति प्राप्नोति । ततश्चोपनिषदर्थस्यापि विचारणीयता प्राप्नोति वेदविवक्षितत्वाविशेषात् । यद्वा धर्मशब्दः अलौकिकश्रेयःसाधनताप्रवृत्तिनिमित्तकः सन् ज्योतिःष्टोमादिवद् ब्रह्मणोऽपि शक्त्यैवाभिधायकः "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते' इति श्रुत्या ब्रह्मणोऽपि श्रेयःसाधनताबोधनात् । ननु श्रेयःसाधनतामात्रार्थत्वे श्येनादीनामपि तथात्वात्

धर्मता स्यात् । तद्व्यावृत्त्यर्थं बलवदनिष्टाननुबन्धित्वमपि वक्तव्यम् । तथा च न ब्रह्म-साधारण्यम् 'एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' इति वचनेन ब्रह्मणोऽपि बलवदनिष्टानुबन्धित्वादिति चेत् न । बलवदनिष्टाननुबन्धित्वं किं साधनविशेषणम् उत श्रेयोविशेषणम् । आद्येऽपि किं तदविनाभूतत्वं बलवदनिष्टाननुबन्धित्वम्, उत तज्जननयोग्यत्वम् । नाद्यः, श्येनादीनामपि प्रायश्चित्ते सति नरकाजनकतया तद्विनाभूतत्वात् धर्मता स्यात् । द्वितीये तु सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति वचनानुसारेणाभिचारफलकत्वस्यापि सिद्धौ नित्यप्रयोगेऽपि सत्यामभिचार-कामनायां वैरिविपत्तिफलकत्वस्यापि सम्भवात् बलवदनिष्टजननयोग्यत्वमस्तीति धर्मता न स्यात्' नापि श्रेयोविशेषणं तदिति द्वितीयः पक्षः । तथा सति श्येनादीनां धर्मता स्यात् । तज्जन्यश्रेयसोऽनिष्टानुबन्धनाभावात् । तस्मादेवं बलवदनिष्टाननुबन्धित्वं वक्तव्यम् । बलवदनिष्टप्रयोजक-श्रेयोगतोद्देश्यताप्रतियोग्यनुष्ठाननिष्पन्नभिन्नताविशिष्टत्वम् । तच्च श्रेयःसाधनविशेषणम् उद्देश्यताया अनिष्टप्रयोजकत्वं स्वजन्ययागानुष्ठानद्वारकं बोध्यम् । तथा च यदा वैरिविपत्तिकामनां विना दर्शपूर्णमासावनुष्ठीयेते तदा तत्प्रयोगफलपापक्षयगतोद्देश्यताया नरकप्रयोजकत्वाभावेन तत्प्रति-योग्यनुष्ठाननिष्पन्नस्य कर्मणो निरुक्तं बलवदनिष्टाननुबन्धित्वमस्त्येवेति न दोषः । वैरिविपत्त्यर्थ-प्रयोगे तु निरुक्तं नास्ति इति श्येनादिवत् अस्याधर्मत्वमेव । एतादृशं बलवदनिष्टाननुबन्धित्वं ब्रह्मणोऽप्यस्ति । तस्यानुष्ठेयत्वाभावेनानुष्ठाननिष्पन्नभिन्नतायाः सत्त्वात् । तथा च निरुक्तेन प्रवृत्तिनिमित्तेन धर्मशब्दः कर्मब्रह्मसाधारणः सिध्यति । तथा च 'अथातो धर्मजिज्ञासा' इति प्रतिज्ञा कर्मब्रह्मसाधारणीति सिद्धम् । एवमेकप्रतिज्ञाक्रोडीकृतत्वात् 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिः शब्दात्' इत्यन्तमन्तर्गतेन संकर्षणकाण्डेन सह विंशतिलक्षणीरूपमेकं शास्त्रं सिध्यति । ननु संकर्षेण षोडशलक्षणी कर्ममीमांसा जैमिनिकृता चतुर्लक्षणी ब्रह्ममीमांसा च व्यासदेवप्रणीता जैमिनिव्यासदेवयोश्च विरुद्धसिद्धान्ताभिनिवेशोऽवगम्यते । तथा हि । "शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥" अ० ३ ॥ पा० २ ॥ शा० ॥ "परामर्शं जैमि-निरचोदना चापवदति हि ॥ १ ॥" अ० ३ ॥ पा० ४ ॥ शा० ॥" इति सूत्राभ्यां ब्रह्मसंन्यासापलापं जैमिनिमतत्वेनानूद्य "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ९ ॥" अ० ३ ॥ पा० ४ ॥ शा० ॥ "अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥" अ० ३ ॥ पा० ४ ॥ शा० ॥ इति सूत्राभ्यां ब्रह्मसंन्यासस्वीकारः बादरायणमतत्वेन दर्शितः । "परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥" अ० ४ ॥ पा० ३ ॥ शा० ॥ "तद्भूतस्य तु नातद्भावो जैमिनेरपि ॥ ४० ॥" अ० ३ ॥ पा० ४ ॥ शा० ॥ इति सूत्राभ्यां ब्रह्मसंन्यासयोरुपगमो जैमिनिमतत्वेनापि दर्शितः इति चेत् न । "विप्रतिषेधाच्च समञ्जसम् ॥ १० ॥" अ० २ ॥ पा० २ ॥ शा० ॥ इति न्यायेन सांख्यमतवत् जैमिनिमतमपि पूर्वोत्तरवचनविरोधेनानादेयमिति सूचनाय तद्दर्शनोपपत्तेः । तथा च विरुद्धसिद्धान्ताभिनिविष्टविकृतनिबन्धयोः कथमेकता स्यात् । अपि च निबन्धयोरप्यस्ति विरोधः । "आम्नायस्य क्रियार्थत्वादानर्थक्य-

मतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥" अ०, ॥ पा० २ ॥ जैमि० ॥ इत्यक्रियार्थानामप्रामाण्यमाशङ्क्य "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥" अ०, ॥ पा० २ ॥ जैमि० ॥ इति तेषामेव विधिस्तावकत्वेन जैमिनिना प्रामाण्यं व्यवस्थापितम् । इदञ्च वेदान्तवाक्यसाधारणम् । आम्नायशब्दस्य वेदमात्रपरत्वात् । व्यासदेवेन तु "शास्त्रयोनित्वात् ॥ ३ ॥" अ० १ ॥ पा० १ ॥ शा० ॥ इति वेदान्तानां ब्रह्मणि प्रामाण्यमुपक्षिप्य "तत्तु समन्वयात् ॥ ४ ॥" अ० १० ॥ पा० १ ॥ शा० ॥ इति सूत्रेणार्थवादाधिकरणोक्तं वेदान्तेषु क्रियाशेषत्वं पूर्वपक्षीकृत्य स्वातन्त्र्येण ब्रह्मणि प्रामाण्यं प्रतिष्ठापितम् । एवमेव नवमाध्याये जैमिनितन्त्रे "देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥" अ० ९ ॥ पा० १ ॥ जैमि० ॥ इत्यादिसूत्रे देवतानिराकरणम् । व्यासतन्त्रे तु मन्त्रार्थवादादिप्रामाण्याभ्युपगमेन "तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥" अ० १ ॥ पा० ३ ॥ शा० ॥ इत्यादिना देवताविग्रहादिकं व्यवस्थापितम् । तत्कथमेकनिबन्धत्वमिति चेत्, न तावद्विरुद्धमताभिनिविष्टपुरुषप्रणीतत्वमेकनिबन्धविरोधि विरुद्धाभिप्रायशीलानामपि कञ्चिदर्थविशेषमुद्दिश्य समयबन्धपूर्वकमेव निबन्धनिर्मातृत्वोपपत्तेः । दृश्यते हि विरुद्धसिद्धान्ताभिनिविष्टयोरपि वामनजयादित्ययोः काशिकाख्यैकनिबन्धनिर्मातृत्वम् । निबन्धतस्तु विरोधो नास्त्येव 'अथातो धर्मजिज्ञासा' इति हि द्वे प्रतिज्ञे एकविंशतिलक्षणीसाधारणी तस्याम् अथशब्दः कर्मब्रह्मसाधारणः द्वितीया तु कर्मकाण्डमात्रविषया तस्यां धर्मशब्दः केवलकर्ममात्रपरः इति प्रतिज्ञाद्वयं चैकेन सूत्रेणावृत्त्या सुसम्पादमेव । सूत्राणामावृत्त्याऽनेकार्थत्वस्यालङ्कारत्वात् । अत एव "अथातः शेषलक्षणम् ॥ १ ॥" अ० ३ ॥ पा० १ ॥ जैमि० ॥ इति सूत्रं द्विलक्षण्याः परं शिष्टं यावत् किञ्चन लक्षणं तत्सर्वं वक्तुमारब्धमथातः शेषलक्षणम् इति अविशिष्टदशाध्यायीप्रतिज्ञापरत्वेन व्याख्याय तृतीयाध्यायप्रतिज्ञापरत्वेनापि व्याख्यातम् । "शेषः परार्थत्वात् ॥ २ ॥" अ० ३ ॥ पा० १ ॥ जै० ॥ इति सूत्रं तु द्वितीयप्रतिज्ञायां लक्षणप्रतिपादनपरतया संगतम् । तद्वत् "चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥" अ० १ ॥ पा० १ ॥ जै० ॥ इति सूत्रं द्वितीयप्रतिज्ञायां लक्षणप्रतिपादकतया समनुगतं भविष्यति । तत्र च कर्मणि चोदनायाः प्रामाण्ये प्रतिज्ञाते तत्प्रामाण्यनिरूपणं प्रथमाध्यायार्थत्वेन प्रतिज्ञायते "तस्य निमित्तं परीष्टिः ॥ ३ ॥" अ० १ ॥ पा० १ ॥ जै० ॥ इति तदनुसारेण "आम्नायस्य" इति सूत्रे चोदनासमभिव्याहृतानामेव सिद्धार्थपरत्वेन प्रतीयमानानामप्रामाण्यमाशङ्क्य 'विधिना त्वेकवाक्यत्वात्' इति सूत्रेण तेष्वेव विधेयस्तावकत्वमुच्यते इति न वेदान्तविषयक 'शास्त्रयोनित्वात्' 'तत्तु समन्वयात्' इति सूत्रयोर्विरोधः । 'न देवता देवतान्तराभावात्' इति सूत्रेण न देवानां कर्मण्यधिकारः, स्वोद्देश्यदेवतान्तराभावादिति प्रतिपादयता मन्त्रार्थवादप्रामाण्यानुसारेण जैमिनिना देवतादिकं स्वीकृतमेवेति तदीयतन्त्रगतं नावमिकाधिकरणम् अपूर्वमेव धर्माणां प्रयोजकम्, न देवता तत्र तस्य गुणत्वादित्येवमर्थपरम्, न तु देवतास्वरूपनिराकरणपरम् । देवतायाश्च गुणत्वं देवतोद्देश्यकत्यागरूपे यागे उद्देश्यकारकत्वेनेति तत्सत्यपि फलदातृत्वे न प्राधान्येन तेन विरुध्यते

अतो न निबन्धतो विरोध इति सिद्धमेकनिबन्धत्वं विंशतिलक्षण्याः। एकनिबन्धाध्ययने चैक एवाधिकारी भवति। एवञ्च पूर्वोत्तरमीमांसाध्ययनस्यैककर्तृत्वे सिद्धे युगपदध्येतुमशक्यत्वात् क्रमापेक्षायां यथा अग्निहोत्रयवागूपाकयोरर्थात् क्रम आश्रीयते पूर्वं यवागूपाकस्ततोऽग्निहोत्रहोमः यवागूपाकं विना यवागूरूपद्रव्यासिद्धौ होमस्यैवानिष्पत्तेः, तथा पूर्वमीमांसाया उत्तरमीमांसापेक्षणात् सैव पूर्वं कर्त्तव्या। अर्थक्रमानुसारेण पूर्वमीमांसागतप्रामाण्यविचारः श्रुत्यादिविषयकः सर्वत्रापि वेदान्तविचारेऽपेक्षितः शब्दान्तरादिभिः कृतः धर्मभेदविचारो विद्याभेदविचारेऽपेक्षितः श्रुतिलिङ्गादितत्प्राबल्यविचारः प्रायशोऽपेक्षितः। सर्वत्र श्रुत्यादिभिः कृतः क्रमविचारः सृष्ट्यादिक्रमे अर्चिरादिमार्गक्रमे च अपेक्षितः। अतिदेशादिविचारोऽपि 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' इत्यादिवाक्यार्थनिर्णयेऽपेक्षितः। 'प्रदानवदेव तदुक्तम् ॥४३॥' अ० ३ ॥ पा० ३॥ शा० ६॥ कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् इत्यादौ संमतित्वेन पूर्वमीमांसागतन्यायानाम् उदाहृतत्वात् तदर्थज्ञानार्थमप्यपेक्षा अस्त्येव तथा पाठक्रमानुसारेण क्रमः सिध्यति। **'स्वाध्यायोऽध्येतव्यः'** इति विधिना क्रमविशेषविशिष्टमक्षरराशिं स्वाध्यायशब्दोदितम् अधीयीत इति विधाने व्युत्क्रमेणाध्ययने क्रियमाणे स्वाध्यायाध्ययनत्वासम्भवात् स्वाध्यायाक्षराणां यः क्रमः तदनुरूपः अध्ययनक्रमः इति पर्यवसिते वर्णानां स्वतः क्रमासम्भवात् पाठोपाधिकः क्रमः प्राप्नोति। स च पाठोऽध्ययनविधिना विधीयमानोऽध्येतृगतः अक्षरक्रमकल्पको न भवति तस्यैवाद्यापि क्रमविशेषस्याज्ञानात्, किन्त्वनादिसम्प्रदायागतः पूर्वपूर्वाध्यापकपाठः। तथा च यथा पूर्वपूर्वाध्यापकपाठानुसारेणाध्ययनक्रमः कल्प्यते तथा तदनुसारेण विचारक्रमोऽपि कल्पनीयः। तथा च कर्मकाण्डस्य पूर्वं पाठात् ज्ञानकाण्डस्य चानन्तरं पाठात् तद्विचारयोरपि तथैव क्रमः प्राप्नोति। एवं मुख्यप्रवृत्तिक्रमाभ्यामपि पूर्वोत्तरमीमांसाविचारयोः क्रमः कल्पनीयः। तथा च सिद्धं कर्मविचारानन्तरमेव ब्रह्मविचार इति। अत्रोच्यते। शास्त्रं हि वाक्यविशेषः तस्यैकत्वे प्रयोजकमेतत्। "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४६ ॥" अ० २॥ पा० १॥ जैमि० ॥ इति सूत्रे यद्यर्थशब्दः प्रयोजनपरः तदा एकफलत्वमेकवाक्यतायां प्रयोजकम्, यदा प्रधानविशेष्यपरः तदा तदेकत्वमिति यथायथं प्रकृते द्वयमपि नास्तीति दर्शयितुमुभयग्रहणम्। पूर्वोत्तरमीमांसयोरर्थभेदस्तद्ग्रन्थपर्यालोचनयाऽवगम्यते। न चावान्तरार्थभेदेन अवान्तरवाक्यभेदे सत्यपि महावाक्यैक्यवद्धर्मब्रह्मरूपावान्तरार्थभेदे सत्यपि वेदार्थरूपो वा अलौकिकश्रेयःसाधनरूपो वा एको महावाक्यार्थो भविष्यतीति प्रकृते महावाक्यमेकमित्युच्यत इति वाच्यम्। तादृशैकवाक्यताग्राहकप्रमाणाभावात्। यच्च तावदुक्तं प्रतिज्ञासाधारण्यं तदपि न सम्भवति। धर्मशब्दस्य प्रथमसूत्रस्थस्य चोदनासूत्रानुसारेण ज्योतिःष्टोमादिमात्रपरत्वावगमात्। चोदनासूत्रं हि 'चोदना चोपदेशश्च विधिश्चैकार्थवाचकः' इत्यभियुक्तव्यवहारानुसारेण निर्णीतविधिपदैकार्थ्यचोदनाशब्दसहितमलौकिकविधिगम्यश्रेयःसाधनत्वमेव धर्मशब्दप्रवृत्तिनिमित्तं दर्शयति। न चैतत् प्रथमसूत्रस्य प्रतिज्ञाद्वयपरत्वमभ्युपेत्य द्वितीयप्रतिज्ञान्तर्गतधर्मशब्दव्याख्यानपरमिति क्लिष्टकल्पनायां किञ्चिन्नियामकमस्ति। न च प्रथमसूत्रान्तर्गतधर्मशब्दस्य धर्मब्रह्मोभयसाधारण्ये कृत्स्नवेदाध्ययनानन्तर्यप्रतिपादकेनाथशब्देन कृत्स्नवेदविवक्षितार्थस्वरूप

हेतुप्रतिपादकेनातःशब्देन चावगते तन्निर्वाहाय तथा कल्पनीयमिति वाच्यम् । वेदविवक्षितार्थत्वरूपहेतुर्हि यदि व्याप्त्यभिप्रायेण प्रयुक्तः स्यात् तदा खलु वेदविवक्षितत्वात् धर्मस्य विचारणीयत्वे उच्यमाने तत्सामान्याद् ब्रह्मणोऽपि विचारणीयत्वं प्राप्नोति इति धर्मशब्द उभयपरः स्यात् । तत्र यदि योयो वेदविवक्षितः स विचारणीय इति व्याप्तिः प्रतिपाद्यते तदा दृष्टान्तालाभः। यदि च यो यो वेदविवक्षितार्थः सोऽधीतवेदविचारणीयः इति व्याप्तिर्विवक्षिता तदा असच्छास्त्रविवक्षितोऽप्यर्थोऽधीतवेदविचारणीय इत्यपि दूषणं प्राप्नोति । तस्मान्नायं व्याप्त्यभिप्रायेण प्रयुज्यते किन्तु विषनिर्हरणादिमन्त्रवत् प्रतीयमानेऽर्थे वेदतात्पर्याभावात् तद्विचारो व्यर्थः । प्रमाफलपर्य्यवसानासम्भवादिति शङ्कायामविवक्षाकारणाभावात् वेदस्य स्वार्थे विवक्षाऽस्त्येवेति धर्मविचारः कर्त्तव्यः इति एतावन्मात्रमुच्यते । न तु तत्र वेदस्य कृत्स्नत्वमप्याहत्यैवोच्यते किन्तु पूर्वकाण्डस्य विवक्षितत्वादिति विशिष्य नोच्यते । तथोक्तौ हि तद्व्यावर्त्यो वेदान्तभागः इति सोऽविवक्षितार्थ इति शङ्का प्रसरेदिति तत्सामान्यात् पूर्वकाण्डार्थोऽप्यविवक्षितोऽस्त्विति पुनः शङ्का प्रसरेदिति अथशब्देनापि धर्मविचारस्य वेदाध्ययनानन्तर्योक्तौ न वेदः पूर्वभागेन विशेषयितुं शक्यते । पूर्वभागमात्राध्ययनस्य स्वाध्यायविहितत्वाभावेन तदानन्तर्य्योक्तिर्निर्मूला स्यादिति । तथा च शङ्काविशेषोन्मेषो मा भूदिति अथातःशब्दार्थयोः पूर्वभागानिवेशमात्रेण लक्षणसूत्रपर्यालोचनया प्रतीयमानं सूत्रार्थं परित्यज्यार्थान्तरकल्पनमनुचितम् । न च धर्मशब्दस्य धर्मब्रह्मोभयसाधारण्याभावे "ये च वेदविदो विप्रा ये त्वध्यात्मविदो जनाः । ते सर्वेऽपि वदन्त्येनं कृष्णं धर्मं सनातनम् ॥" इति धर्मशब्दस्य परमेश्वरसाधारण्येन व्यवहारोऽनुपपन्नः स्यादिति वाच्यम् । यथा 'प्रणम्रेषु महीपेषु प्रसादो मूर्तिमानयम्' इति मूर्तप्रसादरूपत्वेन स्तुतिपरं तथा सनातनधर्मत्वेन स्तुतिपरमेव न तु तच्छक्तिनिर्णायकमिति । अत एव व्यासदेवेनापि 'फलमत उपपत्तेः ॥ ३८ ॥' अ० ३ । पा० २ ॥ शा० ॥ इत्यतःशब्देन प्रकृतं ब्रह्म फलदातृत्वेनोपक्षिप्य तत्प्रतिद्वन्द्वितया जैमिनीयमतोपन्यासे ज्योतिःष्टोमादिमात्रपरो धर्मशब्द एव । "धर्मं जैमिनिरत एव ॥ ४० ॥" अ० ३ ॥ पा० २॥ शा० ॥ इति प्रयुक्तः । **'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्'** इति सृष्ट्यारम्भे देवैः क्रियमाणे धर्मे प्रथमत्वव्यवहारोऽपि धर्मशब्दस्योभयसाधारण्यं व्यावर्त्तयति । अन्यथा ततः पूर्वं ब्रह्मरूपधर्मस्य विद्यमानतया देवानुष्ठीयमानयज्ञस्य प्रथमधर्मत्वं न स्यात् । अतो न धर्मपदशक्तिपर्यालोचनायामपि साधारणी प्रतिज्ञा लभ्यते । 'आम्नायस्य क्रियार्थत्वात्' इत्यादिपूर्वपक्षसूत्रपर्य्यालोचनया वेदान्तर्गतसिद्धवस्तुप्रतिपादककृत्स्नवाक्यसाधारणः पूर्वपक्षः प्रतीयते तदनुसारेण सिद्धान्तोऽपि सर्वसाधारण इत्येव प्रतीयते । न च तत्क्लेशेन व्याख्याय शास्त्रैकत्वसमर्थने किंचन प्रमाणमस्ति । न च यथाश्रुतजैमिनिसूत्रपर्य्यालोचनया विरोधेऽवगम्यमानेऽपि व्यासेन तेषां स्वविरुद्धमर्थान्तरं परिकल्प्य तदेकशास्त्राभिप्रायेण सूत्राणि प्रणीतानीति कल्पनायां किंचिन्नियामकमस्ति, प्रत्युत तन्मतोपमर्दकतयैव सूत्रप्रणयनस्य स्वरसतः प्रतीयमान-

त्वात् । न च "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ १ ॥" इति योगियाज्ञवल्क्योक्त्या मीमांसाया एकत्वेन व्यवहारोऽस्ति, अन्यथा विद्यास्थानानां पञ्चदशसंख्याकत्वं स्यादिति वाच्यम् । तथात्वे पुराणानामपि सर्वेषामेकग्रन्थता स्यात् । एवं न्याययोरप्येकग्रन्थता स्यात् । न चैकवेदार्थोपयोगितया तदिष्टमेवेति वाच्यम् । तथात्वे चतुर्दशत्वमपि विद्यास्थानानां न स्यात् । वेदाङ्गेष्वपि षडङ्गत्वव्यवहारो लुप्येत । तस्मात् एकेन मीमांसात्वेन धर्मेण भिन्ननिबन्धयोः क्रोडीकारमभिप्रेत्य चतुर्दशत्वेन परिगणनमिति न तावता एकग्रन्थत्वसिद्धिरिति । अस्तु वा एकग्रन्थत्वसिद्धिः तथापि कथं कृत्स्नमेकेनाध्येयमिति सिध्यति । न ह्येको ग्रन्थः कृत्स्न एकेनाध्येय इत्यत्र किंचिन्नियामकमस्ति, अपितु यस्य यावानंश उपयुक्तस्तेन तावानध्येयः । न हि ज्वरनिवृत्तिकामेन तन्निवर्तकौषधिपरिज्ञानाय ज्वरचिकित्सामारभ्य वाजीकरणान्तवैद्यशास्त्रं पठनीयम्, तत्र तथा निर्बन्धकशास्त्राभावात् । अधिकारिभेदाच्च न कृत्स्नचिकित्साशास्त्राध्ययनमेकेनेति यदुच्येत तत्प्रकृतेऽपि समानम् । अधिकारिभेदस्य दर्शितत्वात्कर्मावबोधकामस्तत्राधिकारी ब्रह्मावबोधकामश्च वेदान्तविचारे इति न विचारशास्त्रद्वयमेकेन पठनीयमित्यत्र किञ्चिद्वचनमस्ति । स्वाध्यायविधिस्त्वक्षरावाप्तिपर्यन्तो न विचारद्वयस्यैककर्तृकत्वं प्रयोजयतीति न कश्चिद्विरोधः ॥

किञ्च कर्मफलस्वर्गादेरनित्यत्वेन विरक्तस्य न तत्राधिकारः । न च दृढविविदिषार्थमपि तत्राधिकारः कल्पनीयः । जन्मान्तरकृतैः कर्मभिरपि तत्सिद्धिसम्भवात् । नितरां श्रेयो निश्रेयसं ब्रह्मस्वरूपभूतं नित्यं सुखं तत्फलकं ब्रह्मज्ञानम् । तच्च धर्मज्ञानवन्न स्वोत्पत्त्यनन्तरं फलात् प्राचीनमान्तरमनुष्ठानमपेक्षते । तथा च मोक्षस्य न ज्ञानोत्पाद्यतया ज्ञानफलत्वम् । अपितु कण्ठचामीकरवत् ज्ञानाभिव्यङ्ग्यतया । तथा च ज्ञानैकफलस्य मोक्षस्य न कर्मफलवदनित्यत्वमिति भावः । मोक्षजनकब्रह्मज्ञानफलकत्वं विचारस्य चित्तदोषनिवृत्तिद्वारा द्रष्टव्यम् । तथा च विचारयोः फलभेदात् भेद इति सिद्धं समीहितम् ॥

अत्रैव स्वपरिशोधितशास्त्रदीपिकायाः भूमिकायां श्रीभाष्यकाराणां मतमुज्जीवयन्तोऽस्मद्गुरुचरणा अपि वेदाविरोधितर्कोपन्यासपुरःसरं वेदार्थविचाररूपत्वेन हेतुना पूर्वोत्तरमीमांसयोरेकशास्त्रतां साधयन्तोऽन्यानपि विचारणीयान् कतिपयतर्कान् प्रतिपादयन्ति । पूर्वं तावत् न चास्य हेतोः समीहितसाधकत्वं न ह्यभेदविरोधिविरुद्धधर्माक्रान्तयोः पदार्थयोः केनचिदुभयवृत्तिधर्मेणैक्यं सम्भावयितुं शक्यम् । अन्यथा पृथिवीजलयोरपि रसवत्त्वेनैक्यं प्रसज्येत । विरुद्धधर्माक्रान्तत्वं च पूर्वोत्तरमीमांसयोः कर्मकाण्डज्ञानकाण्डप्रतिपादकत्वेनातिरोहितमेव । ज्ञानकर्मणोर्विरोधश्च 'ज्ञानाग्निदग्धकर्माणम्' 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा' इत्यादिभगवद्वाक्यैः स्पष्ट एव प्रतीयते इत्यहोरात्रवद्विरुद्धार्थप्रतिपादकयोः पूर्वोत्तरमीमांसयोः कथम् एकता स्यादिति । अपिच सायणभाष्यादावनैकान्तिकोऽयं हेतुः । न हि सायणादिभिर्वेदविरोधितर्कोपन्यासपुरःसरं वेदभाष्यमभाषि, नापि तद्वेदार्थविचाररूपत्वाभाववत् तस्मादनैकान्तिकमिदं लिङ्गं न प्रकृतसाध्यसाधनायालमिति निश्चीयते ॥

अथ पूर्वकाण्डे तत्तदर्थावबोधकश्रुतिषु तत्तत्प्रकरणावसाने नाभ्यासोऽर्थपरिसमाप्तिबोधको दृश्यते, वेदान्तेषु तु 'न स पुनरावर्तते न स पुनरावर्तते' इत्याद्यभ्यासोऽर्थपरिसमाप्तिबोधको दृश्यते अतः पूर्वोत्तरमीमासयोरैक्यं सम्भाव्यमिति वाच्यम्। नष्टप्रचारे उच्छिन्नशाखाप्राये पूर्वकाण्डे तत्तदर्थबोधकश्रुतिषु तत्तत्प्रकारणावसानेऽर्थपरिसमाप्तिबोधकोऽभ्यासो नास्तीति कथं श्रीचरणैर्निश्चीयते। न हि यथोत्तरमीमांसायां विचारितविद्यानां तत्र तत्रोपनिषत्स्वानुपूर्व्या उपलम्भः तथा पूर्वमीमांसाविचारितश्रुतीनामानुपूर्वी कुत्रचिदुपलभ्यते येनाभ्यासो निश्चीयेते। अपिचाम्नायमात्रस्य मुख्यतया क्रियार्थकत्वमतदर्थानाञ्चानर्थक्यमाशङ्क्य "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति सूत्रेणेतरयावच्छ्रुतिवाक्यानां विधिस्तावकत्वेन साफल्यं सिद्धान्तयन् महर्षिर्जैमिनिः श्रुतिदृष्टरीतिमनुकुर्वन्नपि कथं पादान्ते वा प्रकरणान्ते वा पदावृत्तिं वा वाक्यावृत्तिं वा कुर्य्यात्। परमर्षिर्व्यासदेवश्च "तत्तु समन्वयात्" इति सूत्रेणाम्नायमात्रस्य साक्षात्परंपरया परब्रह्मार्थकत्वेन सिद्धान्तयन् साक्षात् तत्परश्रुतिदृष्टरीतिमनुकुर्वंश्च पादान्ते वा प्रकरणान्ते वा कथं न वाक्यावृत्तिं वा सूत्रावृत्तिं वा कुर्य्यात्। न हि सहोदरयोरपि चैत्रमैत्रयोर्देवदत्तेन शिष्येण चैत्रस्य यत्र प्रामाण्यं गृहीतमिति यज्ञदत्तो गुरुरपि तस्य तत्रैव प्रामाण्यं गृह्णीयान्न त्वन्यस्यान्यत्रेति नियमः किन्त्वावयोरिव गुरुशिष्ययोरपि व्यासजैमिन्योर्भिन्नसिद्धान्ताभिरुच्योरेकेन परब्रह्मपरश्रुतीनां मुख्यत्वाभिप्रायेण तद्दृष्टरीतिमनुकुर्वता वाक्यावृत्तिरादृता न त्वितरेण विधिवाक्येषु मुख्यत्वाभिप्रायवतेति पूर्वोत्तरमीमांसयोः पृथक् शास्त्रत्वाभ्युपगमे न कश्चिद्विरोधः। किञ्च वेदान्तवाक्येष्वपि किं यत्रार्थपरिसमाप्तिस्तत्रैवाभ्यासः यद्वा यत्राभ्यासस्तत्रैवार्थपरिसमाप्तिः। नाद्यः, वाजसनेयिब्राह्मणोपनिषदि भूयसां तत्तद्विचाररूपार्थानां तत्र तत्र समाप्तिसत्त्वेऽपि अभ्यासापरिदर्शनात्। अत एव न द्वितीयः, तत्रैव कुत्राप्यभ्यासाभावेनार्थपरिसमाप्त्यभावप्रसङ्गात्। तथा च तत्रोपदिष्टब्रह्मविद्यादिरूपाणामर्थानां पर्यवसानमन्यत्रापेक्षणीयं भवेत्। न चैतद्विदुषामभिमतमिति श्रीचरणा एवास्मिन्नर्थे साक्षिणस्सन्तु अपि च पूर्वकाण्डेऽपि ऋग्वेदीयैतरेयब्राह्मणे पञ्चिकान्तेऽध्यायान्ते च 'एकविंशत्या एकविंशत्या' 'भवति भवति' इत्यादिरूप एकपदाभ्यासो दृश्यते तथा ऐतरेयारण्यकेऽपि आरण्यकान्ते 'अहो रूपमहो रूपम्' इत्यादिपदद्वयस्याध्यायान्ते च 'भवन्ति भवन्ति' इत्याद्येकपदस्याभ्यासो दृश्यते अतो नाभ्यासस्यार्थपरिसमाप्तिबोधकत्वं किन्तु सायणभाष्याद्युक्तरीत्याऽध्यायपञ्चिकादिसमाप्तिसूचकत्वमेव निश्चीयते॥

अत एव तु 'द्वादशाहवदुभयविधं बादरायणोऽतः॥ अ० ४॥ पा० ४॥ सू० १२॥' इत्युत्तरकाण्डे पूर्वकाण्डोदितार्थमुदाहरणरूपेणावलम्ब्य पूर्वोत्तरमीमांसयोः पृथक् शास्त्रतां सूचयामासुः श्रीव्यासदेवाः। एकशास्त्रत्वे तु 'द्वादशाहवत्' इत्युदाहरणमेव भज्येत। न हि तच्छास्त्रप्रोक्ता अर्थास्तच्छास्त्र एव दृष्टान्तीभूताः कस्यचित्स्वार्थं साधयन्त उपलभ्यन्ते। नापि यदुदाहरणत्वेनोपन्यस्तं तदुपजीव्यं भवति अन्यथा 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते॥ १२॥' अ० २॥ पा० ४॥ शा०॥ इत्युत्तरकाण्डे 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' इत्यादियोगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयो गृह्यन्ते तस्याप्युपजीव्यत्वमुत्तरमीमांसया सहैक्यञ्च स्यात्॥

अपिच श्रुतिस्मृत्योः प्रत्यक्षानुमानशब्दाभ्यां व्यवहरणेन व्यासजैमिनितन्त्रयोः समानतन्त्रत्वेऽपि न द्वयोः संभूयैकतन्त्रता अन्यथा परस्परसिद्धसङ्केतसंग्रहमात्रेण तन्त्राणामेकतन्त्रत्वे 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानपरोधात् ॥ अ० १॥ पा० ४ ॥ सू० २३ ॥' इत्युत्तरकाण्डे प्रकृतिशब्देन कारणग्रहणे सांख्यशास्त्रेणैक्यं स्यात् । अत एवोभयत्रापशूद्राधिकरणमपि पूर्वोत्तरमीमांसयोः पृथक् शास्त्रत्वानुमापकमन्यथा यावत्क्लिष्टकल्पितप्रयोजनानां तत एव सिद्धिसम्भवेऽपशूद्राधिकरणं व्यर्थं स्यादेव । अपिच "इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ १ ॥" इति याज्ञवल्क्यवचनमपि न सिद्धसाध्यरूपे धर्मद्वैविध्ये प्रमाणम् । किन्तु इज्याचारादीनां मध्ये योगेनात्मदर्शनरूपं धर्मं परमत्वेन बोधयति । तथा च योगशास्त्रोक्तोपासनापरपर्यायमात्मदर्शनमेव परमो धर्मः न तूत्तरमीमांसानिरूप्यः तत्र ब्रह्मण एव निरूप्यत्वेन पृथक् प्रतिज्ञातत्वात् । अत एव पूर्वोत्तरमीमांसयोः पृथक् शास्त्रत्वे शास्त्रषट्कादिव्यवहारोऽप्युपपद्यते । नायं व्यवहारोऽवाचीनो यदवान्तरविशेषमादायापि समर्थनीयो भवेत् । किन्तु–

"बाह्यस्तेनाभिभाषी बहिरुदवसितं पाति तर्कोऽप्रतिष्ठो
मीमांसा प्रातिहार्यं भजति गुणगणं यस्य संख्याति सांख्यः ।
हृत्पीठे योगशुद्धे निहितमुपनिषद्वाहवृन्दैः परं मे
भाग्यं श्रीलक्ष्मणार्यो जगति विजयते यस्य लेशाः शिवाद्याः ॥ १ ॥"

इति भारतटीकायां नीलकण्ठः । 'षड् दर्शनानि मेऽङ्गानि' इति कुलार्णवे शङ्करः । 'सात्त्विकं तत्र वेदान्तं मीमांसा राजसं मतम्' इति देवीभागवते व्यासः । 'दर्शनानि षडेव हि' इति च । इत्यादिप्रमाणैरत्यन्तप्राचीन एव । एवं युक्तिप्रमाणसहस्रेण सिद्धस्य शास्त्रषट्कादिव्यवहारस्यावान्तरविशेषमादाय समर्थनमप्यनुचितमेव । फलजिज्ञास्यभेदेन पूर्वोत्तरमीमांसयोर्भेदाभिधानं तूक्तमेव । अत एव जिज्ञास्ये भूतत्वभव्यत्वलक्षणवैलक्षण्यं पुरस्कृत्य क्रमोपक्रान्तयोः पूर्वोत्तरमीमांसयोः क्रमविवक्षाऽसम्भवाभिधानमपि साधु । यतो ज्ञानजन्यचिकीर्षया यत्ने सति यागादिर्धर्मो भवति । तथा च धर्मजिज्ञासासूत्रगतधर्मशब्दो वस्तुगत्या जन्यं यच्छ्रेयःसाधनं तदेव प्रतिपादयतीति प्रथमसूत्रपर्यालोचनयैवोत्पद्यमानो भव्यो विषयः सिद्ध्यति । भूतं च निर्विकारं नित्यनिर्वृतं सदा सिद्धस्वभावमत एव न पुरुषव्यापारापेक्षा । न च भूतब्रह्मनिरूपणपरे शास्त्रे प्रतीकाद्युपासनाया अपि क्रियासमभिहारेणाविधानात् पूर्वोत्तरमीमांसयोः क्रमविवक्षाऽसम्भवाभिधानमयुक्तमेवेति वाच्यम्, वेदान्तानां निर्विशेषप्रकरणगतानां प्राधान्येनाखण्डवस्तुमात्रपरत्वं न तूपासनापरत्वं तस्याः तत्र प्रासङ्गिकत्वात् इति तु "अथातो ब्रह्मजिज्ञासा" इति प्रथमसूत्रपर्यालोचनयैव निश्चीयते । अन्यथा 'अथातो ब्रह्मोपासनाजिज्ञासा' इत्येवासूत्रयिष्यत् । द्वन्द्वानन्तरं शेषलक्षणषष्ठ्या च समीहितसिद्धिरप्यभविष्यत् । अतो लोके सहोदरेषु सबलयोर्ज्येष्ठकनिष्ठयोः निर्बलस्य मध्यमस्यान्यतरेण सह गौणतया निर्वाहवदुपासनाकाण्डस्यापि

निर्वाहः साधुरेव । न च यथा यत्किञ्चित्स्वाध्यायाध्ययनानन्तर्यं धर्मजिज्ञासायां ब्रह्मजिज्ञासायां च समानमेवं नित्यनैमित्तिकादियत्किञ्चित्कर्माधिगमानन्तर्यं ब्रह्मजिज्ञासायामपि सुवचं यतो भवत्पक्षेऽपि संन्यासिनामेव ज्ञानाधिकारिताया व्यवस्थापनेन संन्यासप्रतिनियतकर्मावगमानन्तर्यस्य भवतोऽप्यापतितत्वात् ब्रह्मचर्यस्य च सर्वाश्रमप्रकृतित्वेन तदनन्तरमेव संन्यासाधिकारिताया वक्तव्यत्वेन तदवगमानन्तर्यस्यावश्यमभ्युपेयत्वादिति वाच्यम् । संन्यासब्रह्मचर्यप्रतिनियतस्मार्तकर्मावगमानन्तर्यस्य ब्रह्मजिज्ञासाया वक्तव्यत्वेऽपि पूर्वकाण्डाभिहितश्रौतकर्माधिगमानन्तर्याभिधानस्यायुक्तत्वात् । तथा च कथं 'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वासिद्धिरिति' इति वाक्यं सार्थकं स्यात् । अत एव विदुरधर्मव्यासादीनां ब्रह्मविदां पुराणेषु कीर्तनमपि साधूपपद्यते । न हि यथा श्रौतकर्मणां किञ्चिन्न्यूने निष्फलत्वं तथा वेदान्तरूपस्वाध्यायस्यापि रूपान्तरेणाध्ययने श्रवणे वा निष्फलता भवति। रूपान्तरेण श्रवणं च 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' इत्यादिवाक्यैः स्पष्टमेव । न च 'अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः । इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥' इति स्मृतिः कर्मस्वधिकृतस्यैव स्पष्टं मोक्षाधिकारं ब्रूते अतः कर्मब्रह्ममीमांसयोः शेषशेषिभावोऽपि इति वाच्यम् 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्'—इत्यादिश्रुत्या क्रमविवक्षानियमस्य निरस्तत्वात् । न च कर्मणामदृष्टद्वारा सामान्यतः कार्यमात्रं प्रति साधारणकारणत्वेऽपि तत्तत्कार्यविशेषे तत्तदसाधारणरूपेणैव कारणताया वक्तव्यत्वात् असाधारणकारणत्वमप्यावश्यकमिति रूपविशेषेण साधारणासाधारणकारणतायाः सुवचतया वेदान्तवाक्यजन्यवाक्यार्थप्रत्ययोत्पत्तयेऽपि गुणप्रधानभूतपूर्वापरपदार्थाकाङ्क्षासन्निधियोग्यतानुसन्धानवत्तेषामनुसन्धानमप्यावश्यकमिति वाच्यम्, पूर्वोक्तप्रकारेण कथञ्चित्कर्मणां विविदिषोत्पादकत्वेऽपि शाब्दबुद्धावकिञ्चित्करत्वान्न ह्याकाङ्क्षादिसामग्रीसमवधाने शाब्दबुद्धिः स्वात्मोत्पत्तौ विविदिषामन्तरा किञ्चिदप्यपेक्षते । अन्यथा 'दशमस्त्वमसि' इत्यादौ शाब्दबुद्ध्यभावप्रसङ्गादत्रैव वेदान्तविरुद्धतन्मूलन्यायबलेन योग्यत्वावधारणे तद्भिन्नस्य कर्मादेरन्यथासिद्धत्वमपि स्पष्टमेवेति सिद्धं साधनचतुष्टयसम्पत्त्यानन्तर्यार्थकत्वम् 'अथातो ब्रह्मजिज्ञासा' इति सूत्रनिष्ठाथशब्दस्येति सर्वमवदातम् । एवमधिकारिविषयप्रयोजनाद्यनेकभेदभिन्नयोः पूर्वोत्तरमीमांसयोः पृथक् शास्त्रत्वे सिद्धे तत्त्वमस्यादिमहावाक्योत्थाखण्डार्थबुद्धिरेवाज्ञानतत्कार्यं विनाशयन्ती कैवल्यं सम्पादयतीत्यपि निर्विवादमेव ॥

यत्तु कश्चिदुदासीनो बालरामः स्वपरिशोधितयोगभाष्यस्य योगतत्त्वसमीक्षाख्यभूमिकायां वेदान्तशास्त्रसिद्धान्तमुन्मूलयन्निव "प्रसंख्यानधर्ममेघसम्प्रज्ञाताद्यवस्थापन्नं ध्यानं विज्ञानजननद्वारा कैवल्यहेतुः, ज्ञानप्रसादपरवैराग्यध्रुवस्मृत्याद्यवस्थापन्नं च साक्षात्कैवल्यहेतुः" इत्याद्यनल्पजल्पितैर्ध्यानमेव मुख्यतया कैवल्योपायत्वेन व्यवस्थापयति तदपि 'ज्ञानादेव कैवल्यम्' 'नान्यः पन्था विद्यतेऽयनाय' 'न हि ज्ञानेन सदृशम्' 'ज्ञानं लब्ध्वा परां शान्तिम्' 'सर्वं कर्मा-

खिलं पार्थ ज्ञाने परिसमाप्यते' इत्यादिश्रुतिस्मृतिविरुद्धत्वान्मन्दधियामेव शोभनम् । न च या विषयभोगवासना सोपनिषच्छ्रवणाङ्गभूतया योगाङ्गयमादिसम्पत्त्या निवर्तते प्रमाणप्रमेयगता सम्भावना तु श्रवणमननाभ्यां निवर्तिष्यते इति न तदर्थं निदिध्यासनाद्यपेक्षा तथापि या तु यद्यपि वेदान्ता ब्रह्म बोधयन्त्येव ब्रह्म च केनापि मानेन न बाधितमथापि तदहं न साक्षात्कुर्वे किन्तु तन्मम परोक्षमेव भाति इत्यादिभ्रान्तितत्संस्कारपरम्परारूपा विपरीतभावना सा यावदनुवर्त्तिष्यते न तावद् विद्याऽप्रतिबद्धं स्वफलं प्रसोतुमर्हत्यतस्तदपनोदनपुरःसरमुपनिषद्भिर्बोधितं सर्वमानाबाधितं सच्चिदादिलक्षणं ब्रह्मैवाहमस्मि तच्च सर्वदा साक्षात्कुर्वे इत्येवं नैजं रूपमभ्यक्षयितुं विज्ञानावस्थापर्यन्तं निदिध्यासनमवश्यं शरणीकरणीयमिति वाच्यम् । वेदान्तशास्त्रे नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसम्पन्नस्य सम्यक् श्रवणमनननिदिध्यासनानुष्ठानवतस्तत्त्वंपदार्थविवेचनपूर्वकमहावाक्यार्थापरोक्षज्ञानेन ब्रह्मभावलक्षणो मोक्षो भवतीति सिद्धान्तितम् । तत्र "शृण्वन्तोऽप्यत्र बहवो यं न विदुः" इत्यादिश्रुत्या श्रुतोपनिषत्कस्यापि बुद्धिमान्द्यादिना केनचित्प्रतिबन्धेन वाक्यार्थविषयापरोक्षप्रमित्यनुत्पत्तौ तदुत्पादनद्वारा निदिध्यासनादीनां कथंचिदुपयुक्तत्वेऽपि तेषां साक्षात्कैवल्यसाधनता तु वेदान्तबहिष्कृतेषु तमोवहेषु मन्देष्वेव शोभते न तु विज्ञेष्विति स्पष्टमेव । न च प्रसंख्यानापरपर्यायस्य निदिध्यासनस्य ब्रह्मसाक्षात्कारकारणत्वे "ततस्तु तं पश्यति निष्कलं ध्यायमानः" "अथ तद्दर्शनाभ्युपायो योगः" "श्रद्धाभक्तिध्यानयोगादवेहि" "अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥२४॥" अ० ३॥ पा०२॥शा०॥ "युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः । शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति॥" इत्यादिश्रुतिस्मृतिवचनानि प्रमाणानीति रेकणीयम् । 'प्याद्प्रिय ! न वयमिमानि प्रमाणानि नैव सन्तीति निषेधयामः किं तर्हि तेषां मन्दाधिकृतोद्देशेन प्रवृत्तिरिति वेदान्तहार्दं बोधयामः । तथा हि । श्रवणमननाभ्यां निर्विचिकित्से विषये स्थापितस्य धारणावतश्चेतस एकाकारवृत्तिप्रवाहत्वमेव निदिध्यासनं वाच्यम्, तदेव च "तत्र प्रत्ययैकतानता ध्यानम्" इति संक्षिप्तशब्दपरम्परया कीर्तयन्ति जरद्विदन्तः न त्वस्थेमबहुललोलीभूत—इत्यादिप्रकृतानुपयुक्तशब्दव्यूहेन । एतादृशध्यानाभिप्रायेणैव भगवान् परमप्रियमर्जुनमभिमुखीकृत्य "आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्" इत्यादिपूज्यवचनविशेषैः साधारणजनतामुपदिदेश । भूयश्च 'योऽयं योगस्त्वया प्रोक्तः' 'चञ्चलं हि मनः कृष्ण' इत्याद्युक्त्या भगवदुक्तेऽर्थे स्वात्मानधिकारं सूचयन्तम् 'अयतिः श्रद्धयोपेतः' इत्यादिना जन्मान्तरीयसद्गत्यभिप्रायेण जिज्ञासयन्तं चार्जुनं भगवानपि 'प्राप्य पुण्यकृताँल्लोकान्' 'यतते च ततो भूयः संसिद्धौ कुरुनन्दन' 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इत्यादिना षष्ठे सविस्तरमभ्यासयोगं निरूप्य पश्चात् सप्तमे 'ज्ञानी त्वात्मैव मे मतम्' 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते' इत्यादिना ज्ञानविज्ञानयोगमुक्तवान् अतो ज्ञायते न ध्यानापरनामकनिदिध्यासनस्य ब्रह्मसाक्षात्कारे साक्षात्कारणत्वं किन्तु भगवदुपदिष्टमार्गेण जन्मपरम्परायां कृतपरिश्रमस्यैव चरमे जन्मनि चोपासनाद्विमलस्वान्तस्य पटुकरणस्याधिकारिणो

गुरुमुखान्महावाक्यश्रवणमात्रेणाप्रतिहतस्वात्मसाक्षात्कारो भवतीति नाविदितं वेदान्तविदाम् । अत एव 'तरति शोकमात्मवित्' 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परम्' 'आचार्यवान् पुरुषो वेद' 'आत्मा वा अरे द्रष्टव्यः' 'तं त्वौपनिषदं पुरुषं पृच्छामि' 'पुरुषार्थोऽतः-शब्दादिति बादरायणः ॥ १ ॥' अ० ३ ॥ पा० ४ ॥ शा० इत्यादिश्रुतिस्मृतिवाक्यानामपि स्वार्थे प्रामाण्यं सम्पद्यते । अत एव च-

"विपर्यस्तोनिदिध्यासेत्किं ध्यानमविपर्ययात् ।
देहात्मत्वविपर्यासं न कदाचिद्व्रजाम्यहम् ॥ ६१ ॥
अहं मनुष्य इत्यादिव्यवहारो विनाऽप्यमुम् ।
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ ६२ ॥
प्रारब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।
कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥ ६३ ॥
विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ।
अबाधिकां व्यवहृतिं पश्यन् ध्यायाम्यहं कुतः ॥ ६४ ॥
विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ ६५ ॥"

इत्यादीनि वृद्धवाक्यान्यपि स्वार्थे सार्थकानि भवन्ति अन्यथा वेदान्तसिद्धान्त एव व्याकुलीकृतः स्यादिति विदांकुर्वन्तु सूक्ष्मधीकाः सुधियः ।

किञ्च भवदीयं तत्र प्रत्ययैकतानतास्वरूपं निदिध्यासनापरनामकं ध्यानं तद्वति तत्प्रकारात्मकं वा तदभाववति तत्प्रकारात्मकं वा, आद्ये तदपि परोक्षध्येयप्रत्ययात्मकमपरोक्षध्येयप्रत्ययात्मकं वा, आद्ये परोक्षस्य विषयस्य वर्षसहस्रेण ध्यानशतेनाप्यपरोक्षीकर्तुमशक्यत्वात् तथा च कथं कैवल्यसम्पादकं तद् । अदृष्टद्वारकत्वेन चेत् तर्हि वेदान्तसिद्धान्त एव व्याकुलीकृतः स्याद्यतो न हि वेदान्तेषु कुत्राप्यदृष्टस्य कैवल्यसम्पादकत्वं निरूपितमिति वृद्धिमिच्छतो मूलमपकिरतो गतं स्यादिति । द्वितीयेऽपि ध्येयं पूर्वं कथमपरोक्षीकृतं यद्विषयिका पश्चात् तत्र-प्रत्ययैकतानता जाता ततोऽपि पूर्वस्माद्ध्यानाच्चेत्पूर्वध्यानाव्यवस्थापातः, गुरुवश्रवणमात्राच्चेत्सिद्धं नः समीहितं यतो वयमपि शब्दादेव ध्येयसाक्षात्कारं स्वीकुर्मः । प्रथमद्वितीयेऽपि स्वरूपतो विषयतश्च सर्वथा मिथ्याभूतायास्तत्र-प्रत्ययैकतानतायाः कदापि कैवल्यसम्पादकत्वासम्भवात् तस्माद्ध्यानस्य स्वान्तस्थैर्यमन्तरा सर्वथाऽनुपयुक्तत्वे सिद्धेऽकामेनापि गुरुमुखनिःसृतमहावाक्यादेव स्वात्मसाक्षात्कारकरणमङ्गीकरणीयमित्यलं वृथा प्रयासेनेति । न च संवादिभ्रमात् प्रवृत्त्यापि मणिकिरणे मणिबुद्ध्या मणिलाभवत् यस्मिन् कस्मिंश्चिदध्यस्तध्येयविषयके ध्याने सत्यपि सर्वाध्यस्ताधिष्ठानं चिदात्मकं स्वात्मब्रह्म स्वयमेव संस्फुरिष्यतीति वाच्यम् । अज्ञ वञ्चितोऽसि सिद्धान्तात् प्रकृतानुपयुक्तैर्मिथ्याभूतैर्दृष्टान्तैः यतः संवादिभ्रमात्प्रवृत्तिरपि स्वात्मसम्पत्तये कथञ्चिद्विषयसादृश्य-

मपेक्षते न हि परस्परविपरीतस्वभावयोश्चिदचिदोः कथञ्चित्सादृश्यं शक्यतेऽपि वक्तुम् तथा च कथंकारं समीहितसिद्धिः, अस्ति भाति प्रियात्मना सर्वत्र साजात्यं सिद्धं चेत् तदप्यनाहार्यप्रत्ययविषयत्वेन वा आहार्यप्रत्ययविषयत्वेन वा सिद्धमिति वक्तव्यम्। आद्ये तस्य निःसन्देहब्रह्मज्ञानात्मकत्वेन 'ध्यायन्तु संशयापन्नाः' इति वृद्धवाक्येन संतुष्यताम्। द्वितीयेऽप्याहार्यारोपस्य कथमपि फलासम्पादकत्वेन कैवल्यानिष्पत्तेः स्वान्तसंशोधनमात्रमेव ध्यानफलं न त्वन्यदिति चेत्तर्हि जीव्यतां चिरम्।

**निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।**
**ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥ १॥**

इत्यादिवृद्धवाक्यान्यपि त्वत्पक्षमेव हि पोषयन्तु। एतेन 'आ प्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥' अ० ४ ॥ पा० १ ॥ शा० ॥ इत्यधिकरणे 'विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥' अ० ३ ॥ पा० ३ ॥ शा० ॥ इत्यधिकरणे च दहराद्यहंग्रहोपासकानां प्रसंख्यानादुपास्यसगुणब्रह्मसाक्षात्काराङ्गीकारोऽपि समाहितः स्वान्तसंशोधनद्वारा महावाक्यार्थबोधं प्रति तस्य हेतुत्वेन स्वीकृतत्वात्। न चैवं 'सा हि सत्कारदीर्घकालनैरन्तर्यसेविता सती दृढभूमिर्विशेषसाक्षात्काराय प्रभवति कामिनीभावनेव स्त्रैणपुंसः' इत्यादिभामतीवाक्येन विरोध इति शङ्क्यम्। एतस्यापि "शृण्वन्तोऽप्यत्र बहवो यं न विद्युः" इत्यादिश्रुतिप्रोक्तमन्दाधिकृताभिप्रायकत्वेन स्वार्थे साफल्यात्। अन्यथा 'अत्रोच्यते' इति स्वसिद्धान्ताभिप्रायकशब्दोपन्यासपूर्वकम् "का पुनरियं ब्रह्मोपासना नाम किं शाब्दज्ञानमात्रसंततिराहो निर्विचिकित्सशाब्दज्ञानसंततिः। यदि शाब्दज्ञानमात्रसन्ततिः किमियमभ्यस्यमानाऽप्यविद्यां समुच्छेत्तुमर्हति तत्त्वविनिश्चयस्तदभ्यासो वा सवासनं विपर्यासमुन्मूलयेत् न संशयाभ्यासः सामान्यमात्रदर्शनाभ्यासो वा न हि स्थाणुर्वा पुरुषो वेति वाऽऽरोहपरिणाहवद् द्रव्यमिति वा शतशोऽपि ज्ञानमभ्यस्यमानं पुरुष एवेति निश्चयाय पर्याप्तमृते विशेषदर्शनात्" इत्यादि पुनरपि "अत्रोच्यते" इति स्वसिद्धान्ताविष्कारकं शब्दमुपन्यस्य 'सत्यं सदेव सौम्य' इत्युपक्रमात् 'तत्त्वमसि' इत्यन्तात् शब्दाद्ब्रह्ममीमांसोपकरणादसकृदभ्यस्ताद् निर्विचिकित्सेऽनाद्यविद्योपादानदेहाद्यतिरिक्तप्रत्यगात्मतत्त्वावबोधे जातेऽपि अविद्यासंस्कारानुवृत्तावनुवर्तन्ते सांसारिकाः प्रत्ययास्तद्व्यवहाराश्च तथापि तानप्ययं व्यवहारप्रत्ययान् मिथ्येति मन्यमानो विद्वान्न श्रद्धत्ते पित्तोपहतेन्द्रिय इव गुडं थूत्कृत्य त्यजन्नपि तस्य तिक्तताम् इत्यादि च सर्वं भामतीकाराणां लेखनं परस्परं विरुध्येत। तस्मात् प्रमाणपरिगणनायां प्रसंख्यानस्य कुत्राप्यपरिगणनात्, तज्जन्यब्रह्मसाक्षात्कारस्वीकरणमपि सर्वथा वेदान्ततत्त्वानभिज्ञेष्वेव शोभनं न तु वेदान्तविज्ञेषु। न च काकतालीयसंवादिवराटकसंख्याविशेषाहार्यज्ञानवदर्थाबाधेन प्रमाणत्वोपपत्तिरिति वाच्यम्, अप्रमाणमूलकस्य प्रमाणत्वायोगात्। आहार्यवृत्तेश्चोपासनावृत्तिवत् ज्ञानभिन्नमानसक्रियारूपतया इच्छादिवदबाधितार्थविषयत्वेऽपि प्रमात्वानभ्युपगमात् न च "वेदान्तवाक्यजज्ञानभावना-

जाऽपरोक्षधीः । मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥ १ ॥" इति कल्पतरुकृतवचनविरोध इति वाच्यम् । एतस्यापि मन्दाधिकृतोद्देशेन सार्थक्यात् । अत एव च "अभिव्यक्तचैतन्याभिन्नत्वमर्थस्यापरोक्ष्यं तत्तु नित्याभिव्यक्तजीवचैतन्याभिन्ने ब्रह्मणि स्वाभाविकम् । अत एव 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतिः । घटादीनामपरोक्षचैतन्याभेदाध्यासोपाधिकं तदेव प्रत्यक्षोऽयं घटः प्रत्यक्षं पश्यामीत्यादिव्यवहारालम्बनं ज्ञानस्यापरोक्ष्यापरोक्षार्थव्यवहारानुकूलज्ञानत्वं तत्त्वस्य सुखादेश्च प्रकाशरूपे नित्याभिव्यक्तसाक्षिचैतन्ये चाक्षुषादिवृत्त्यभिव्यक्तचैतन्ये वाऽनुगतं स्वाभाविकं चाक्षुषादिवृत्तिषु तत्तदभिव्यक्तचैतन्याभेदाध्यासोपाधिकं न तु जातिरूपम् । इन्द्रियजन्यत्वाद्युपाधिरूपं वा ज्ञानानामापरोक्ष्यम् अपरोक्षज्ञानविषयत्वमर्थापरोक्ष्यमिति युक्तम्, तत्तांशविषयप्रत्यभिज्ञायां तत्तांशे चातिप्रसक्तेः, साक्ष्यव्यापनाच्च । एवं च तत्त्वमस्यादिशब्दजन्यमपरोक्षजीवाभिन्नब्रह्मज्ञानमपरोक्षमेव भवति श्रवणजन्ये ब्रह्मज्ञाने क्लृप्तकरणभावस्य शब्दस्यैवाविद्यानिवर्त्तके चरमसाक्षात्कारेऽपि करणत्वोपपत्तेर्न तत्र करणान्तरं कल्पनीयमिति" इत्यादिपरिमलग्रन्थोऽप्युपपद्यते । अन्यथा मूलकृतटीकाकृतोक्तीनां मिथः पूर्वोत्तरविरोधेऽनवधारितार्थकं वेदान्तशास्त्रं विफलतामेवेयात् । यस्मात्प्रसंख्यानाद्ब्रह्मसाक्षात्काराभिधानं शास्त्रकृतां लाङ्गलजीवनवत् मन्दाधिकृतोद्देशेन गौणमेवेति निर्विवादम् ॥

अथ माऽस्तु प्रसंख्यानस्य ब्रह्मसाक्षात्कारे साक्षात्करणत्वं 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' 'मनसैवेदमाप्तव्यम्' 'एषोऽणुरात्मा चेतसा वेदितव्यः' 'सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्' 'शास्त्राचार्योपदेशशमादिसंस्कृतं मन आत्मज्ञाने कारणम्' इति गीताभाष्याच्च महावाक्यविचाराधिगतब्रह्मात्मैक्यावगतिमूलकप्रसंख्यानसहकृतमन्तःकरणमेव ब्रह्मसाक्षात्कारे करणं न महावाक्यमात्रं प्रसंख्यानमात्रं वा सर्वशाखाप्रत्ययन्यायेन तथैव लाभात् कामिनीसाक्षात्कारेऽपि प्रसंख्यानसहकृतमनस एव करणत्वाङ्गीकाराच्च । तथा चाहुर्भामतीपतयः—"न ब्रह्मज्ञानमात्रं सांसारिकधर्मनिवृत्तिकरणमपि तु साक्षात्कारपर्यन्तं ब्रह्मसाक्षात्कारश्चान्तःकरणवृत्तिभेदः श्रवणमननादिजनितसंस्कारसचिवमनोजन्मा षड्जादिभेदसाक्षात्कार इव गान्धर्वशास्त्रश्रवणाभ्याससंस्कृतमनोयोनिः" इति । हन्त भो विचित्रं ते स्वसिद्धान्ते स्वान्तस्थैर्यं यतः पूर्वं नानाविधश्रुतिस्मृतीतिहासपुराणैः प्रमाणितमपि प्रसंख्यानमधुना स्वयमेव दूषितमिव परिहाय तत्स्थाने च बुद्धौ वा मनसि वा चित्ते वा अन्तःकरणे वा ब्रह्मात्मसाक्षात्कारकरणतां व्यवस्थापयसि । अत्रापि च श्रुतिस्मृतिसहकृतं भामतीकृद्वचनं प्रमाणत्वेनोपन्यस्यन् श्रुतिस्मृतीनां भामतीकाराणाञ्च स्वात्मन इवानवस्थितसिद्धान्तमेवार्थयसे । किञ्च प्रसंख्यानसहकृतान्तःकरणस्य ब्रह्मसाक्षात्कारे करणत्वं बुद्धित्वेन वा मनस्त्वेन वा चेतस्त्वेन वा वाच्यं तच्च न संघटते जडाया बुद्धेः स्वयं स्फुरणरूपब्रह्म विषयीकर्तुमशक्यत्वात् प्रत्युत 'बुद्धेर्द्रष्टा बुद्धेः साक्षी' इत्यादि श्रुत्या ब्रह्मण एव बुद्ध्यादिजडवर्गावभासकत्वं श्रूयते अत एव मनस्त्वेन चेतस्त्वेन वा अन्तःकरणस्य ब्रह्मसाक्षात्कारकरणत्वमपि मनोरथ-

मात्रं न हि स्वरूपतो जडीभूतं वस्तु स्वाभाविकप्रकाशस्वरूपं पदार्थं प्रकाशयितुमलं श्रुत्यर्थश्चान्यथाप्युपपद्यत इति कृतं क्लिष्टकल्पनया । अपिच कमपि सिद्धान्तमनवलम्ब्य शास्त्रमात्रं मिश्रीकुर्वन्निव लेखने प्रवृत्तो भवानत्र प्रष्टव्यो यत्कस्य सिद्धान्ते महावाक्यविचाराधिगतब्रह्मात्मैक्यावगतिमूलकप्रसंख्यानसहकृतमन्तःकरणमेव ब्रह्मसाक्षात्कारे करणं सत्कैवल्यहेतुरिति, न तावत्सांख्यस्य । तत्सिद्धान्त एतादृशपरिभाषाया अप्यप्रचारात् । अत एव न कणादगोतमपतञ्जल्यादीनां निरूपणीयविषयप्रक्रियाभेदेन तेषां सिद्धान्तेऽप्येतादृशपरिभाषाया अनुल्लेखात् । परिशिष्टाश्च वेदान्तास्तत्र च न मनोबुद्ध्यादीनां शब्दानां पर्यायार्थकत्वम् किन्तु—

"मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।
संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥ १ ॥"

इत्यादिप्राचीनोक्त्याऽन्तःकरणावस्थाविशेषवाचकत्वमेव वाच्यम् । तत्रापि ब्रह्मणो मनोमात्रगोचरत्वस्वीकारे तदवगाहिज्ञानं संशयात्मकमेव स्यात् । तथा च पुनरपि ब्रह्मसाक्षात्कारार्थं करणान्तरमपेक्षणीयमवशिष्यते । यदि च वेदान्तेऽपि बहुधा मनःशब्दोऽन्तःकरणपर्यायार्थको दृश्यतेऽतस्तदभिप्रायेणैवैष वाग्जालविस्तर इति, तदा तत्रापि वाच्यं किं मनसोऽनिन्द्रियत्वेन ब्रह्मसाक्षात्कारे करणत्वमिन्द्रियत्वेन वा । नाद्यः अनिन्द्रियजन्यज्ञानस्य साक्षात्कारत्वाभावात् । तथैव त्वयाऽप्यभ्युपगमाच्च । नापि द्वितीयः, 'कस्यैष खल्वीदृशो महिमाऽतीन्द्रियभूतस्य' 'अतीन्द्रियं गुणातीतम्' 'बुद्धिग्राह्यमतीन्द्रियम्' इत्यदिश्रुतिस्मृतिविरोधेन वृथाप्रयासमात्रत्वात् । बुद्धेश्चेन्द्रियत्वाभावेऽपि यथा तद्ग्राह्यत्वं वेदान्तेषु तत्र तत्रोक्तं तत्तत एव परिश्रमेणानुसन्धेयमित्युपरम्यते ग्रन्थभूयस्त्वभीत्येति ॥

अपिच भूरिपरिश्रमेण मनस इन्द्रियत्वं वदन् भवानत्र प्रष्टव्यः । किं व्युत्पत्तिनिमित्तान्मनस इन्द्रियत्वमुत प्रवृत्तिनिमित्तात् आहोस्वित्स्मृत्यादिप्रमाणात् अथवा ब्रह्मसूत्रकृताङ्गीकृतत्वात् यद्वा शङ्कराचार्याद्यभिमतत्वात् बाधकासद्भावाद्वा जैनबौद्धाद्युद्बोधनाद्वा । न तावदाद्यः, इन्द्रलिङ्गस्वरूपव्युत्पत्त्या मनस इन्द्रियत्वसाधने महदहङ्कारयोरपीन्द्रियत्वप्रसङ्गात् । न हि वस्तुतोऽतथाभूतेष्वर्थेषु व्युत्पत्तिमात्रेण ताद्रूप्यं व्यवस्थापयितुं शक्यते । अन्यथा इन्द्रदृष्टेषु विषयेष्विन्द्रजुष्टेषु भोग्येष्विन्द्रसृष्टेषु घटादिष्विन्द्रदत्तेषु ग्रामादिषु चेन्द्रियत्वव्यवहारप्रसङ्गात् । नापि द्वितीयः । तत्रापि सांख्याद्यभिमतस्य सात्त्विकाहङ्कारोपादानकत्वमात्रस्येन्द्रियत्वप्रवृत्तिनिमित्तस्य स्वीकारे तेषां परस्परं वैलक्षण्येऽपि किञ्चिन्नियामकं वाच्यं कार्य्यविचित्रतायां च कारणवैचित्र्यस्यावश्यमपेक्षणीयत्वादतस्तदनभिधानात् प्रतिज्ञामात्रमेतत्सांख्यानां; न त्विन्द्रियत्वप्रवृत्तिनिमित्ताभिधानमिति स्वयमेव विचारयन्तु विद्वांसः । अपिच 'उभयात्मकमत्र मनः' इति सांख्योक्त्या मनसि ज्ञानेन्द्रियत्वकर्मेन्द्रियत्वरूपधर्मद्वयस्य समावेशो वाच्यस्तथा चैवमपि न भवत्समीहितसिद्धिः, न हि विशेषतो ज्ञानेन्द्रियेण सम्पाद्यमंशतो ज्ञानेन्द्रियेण सम्पाद्यं भवति । अन्यथा वानरोऽपि पठनपाठनादिव्यवहारार्हः स्यात् । अन्तःकरणत्वेन चेत् तथापि सांख्य-

मतेन वक्तव्ये सङ्कल्प एव मनसो व्यापारो वाच्यो न चासौ ब्रह्मसाक्षात्कारात्मकोऽतः सांख्यसिद्धान्तेन मनस इन्द्रियत्वसाधनेऽपि विफलः प्रयास एव भवताम्। एवमेव 'भौतिक-सात्त्विकांशोपादानकत्वमिन्द्रियत्वमित्यपि स्वकपोलकल्पनामात्रं न तु वेदान्तेषु कुत्राप्येवमुप-दिश्यते। ज्ञानेन्द्रियत्वसामान्ये प्रवृत्तिनिमित्तमिदमिति चेत् तदपि व्यस्ततत्तद्भौतिकसात्त्विकांशोपादा-नकत्वं वा समस्तसात्त्विकांशोपादानकत्वं वेति वाच्यम्, आद्ये मनस्यव्याप्तिः। द्वितीये श्रोत्रादा-वव्याप्तिः। अन्यतरत्वस्यान्यतरस्मिन्नभावेन तन्निवेशोऽपि न दोषोद्धारको बुद्ध्यादावतिव्याप्तिश्चातो वेदान्तसिद्धान्ते मनस इन्द्रियत्वसाधनं मनोरथमात्रमेवावशिष्टं तच्च न कश्चिद्वारयितुं क्षम इत्यु-परम्यते। एवं तार्किकाद्यभिमतेन मनस इन्द्रियत्वसाधनमप्यबोधविजृम्भणं शब्देतरोद्भूतविशेष-गुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वस्य मनस्यभावात्। न हि स्वस्मिन् स्वस्य संयोग इति विदुषामनुभवः। प्रतियोगित्वेनेति चेच्छ्रोत्रादावव्याप्तिः अन्यतरत्वस्यान्यतरस्मिन्नभावात्तन्नि-वेशोऽपि निरर्थक एव तर्कविद्भिः कुत्राप्यकृतत्वाच्च। अपिच प्रतियोगित्वेन स्वसंयोगाश्रयं मन इति बुद्ध्या मनसीन्द्रियलक्षणसमन्वयं मन्यमानो भवान् तार्किकशैलीमपि किञ्चित्परिशीलयतु न हि ते तत्तत्पदार्थनिर्वचनं प्रकुर्वन्तस्तं तं पदार्थं केनापि रूपेण नाम्नाऽपि निर्वचनान्तः संगृह्णन्ति यथा गन्धवत्त्वमित्यत्र पृथिवीं शृङ्गसास्नादिमत्त्वमित्यत्र गां वा, प्रत्युत निर्वचनीयपदार्थस्य निर्वचनेंऽशतोऽप्युपस्थितावन्योऽन्याश्रयत्वेन तन्निर्वचनमेव दूषयन्ति तथैव प्रकृतेऽपि निर्वचने मनःसन्निवेशात् मनो वाऽनिन्द्रियं निर्वचनं वा दुष्टमिति द्वयोरेकं वाच्यं निर्वचनं च तार्किकाणां मनसीन्द्रियत्वं च भवतामित्युभयत्रैव प्रबलः पक्षोऽतो न वयं कमपि पक्षं कक्षीकुर्मः। प्रयो-गादपि मनो नेन्द्रियं शब्देतरोद्भूतविशेषगुणानाश्रयत्वविशिष्टज्ञानकारणीभूतस्वसंयोगानाश्रयत्वात् कालवत्। मनो नेन्द्रियं ज्ञानसामान्ये कारणत्वात् आत्मवत्। मनो नेन्द्रियं बाह्यविषयेष्वस्वतन्त्र-त्वात् यन्नैवं तन्नैवं यथा श्रोत्रादि। इन्द्रियाणां बाह्यविषयत्वमेवेति तु 'पराञ्चि खानि व्यतृणत्स्व-यम्भूस्तस्मात्पराक् पश्यति नान्तरात्मन्' इति श्रुतेः। एवं मनो नेन्द्रियमभौतिकत्वात् यन्नैवं तन्नैवं यथा घ्राणादि। घ्राणादीनां भौतिकत्वञ्च 'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः॥ १२॥' इति गौतमीयसूत्रे स्पष्टम्। तार्किकमते घ्राणादिपञ्चस्वेवेन्द्रियत्वमित्यप्येतत्सूत्रेणैव स्पष्टम्। एवमार्ष-ग्रन्थेषु कुत्रापि मनस इन्द्रियत्वानिरूपणात् प्रत्युत 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्॥ १६॥' इति सूत्रस्य भाष्ये 'अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्ति' इत्यादिवात्स्या-यनोक्त्या मनसोऽनिन्द्रियत्वनिरूपणाच्च तार्किकमतेन मनस इन्द्रियत्वानिरूपणं न तत्सिद्धान्तग्रन्थापरि-शीलनमन्तरा किञ्चिदन्यत्सूचकमिति नूनं निश्चीयते। एवं स्मृत्यादिप्रमाणादिति तृतीयपक्षोऽपि न क्षोदक्षमः "दशेन्द्रियाणि" महा० उप०॥ "नासिका लोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि च॥" याज्ञ०॥ "पञ्चकर्मेन्द्रियाण्यत्र पञ्चबुद्धीन्द्रियाणि च"॥ अग्निपु०॥ इत्यादिश्रुतिस्मृतीतिहास-पुराणेषु मनस इन्द्रियत्वानिरूपणात्। न च 'इन्द्रियाणां मनश्चास्मि' 'इन्द्रियाणि दशैकं च' इत्यादिभगवद्गीतावचनैर्मनस इन्द्रियत्वसिद्धिरिति वाच्यम् 'भूतानामस्मि चेतना' इतिवत् सम्बन्धे नक्षत्राणामहं शशी' इतिवत् किञ्चिदुभयवृत्तिज्ञानकरणत्वादिधर्ममादाय निर्द्धारणे वा षष्ठ्युपपत्तेः।

'इन्द्रियाणि दशैकं च' इत्यस्य शाङ्करभाष्यं च 'इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वाद् बुद्धीन्द्रियाणि वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात् कर्मेन्द्रियाणि तानि दश एकञ्च किं तन्मनः' इत्याकारकम्। तथा च कथमनेन मनस इन्द्रियत्वाभिधानमिति सुविचारयन्तु सुधियः। नापि चतुर्थः पक्षः, ब्रह्मसूत्रकृद्भिर्मनसः कुत्रापीन्द्रियत्वानभिधानात्। न च 'त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ ७ ॥' अ० २ ॥ पा० ४ ॥ शा० ॥ इति सूत्रेणैकादशेन्द्रियाणामभिधानमिति वाच्यम्, सूत्रार्थापरिज्ञानात्। स च 'ते वागादयः श्रेष्ठादन्यत्र श्रेष्ठात्प्राणादन्ये तत्त्वान्तराणीति प्रतिज्ञा तद्व्यपदेशादित्यस्य उत्पत्तिव्यपदेशात्। उत्पत्तिव्यपदेशः प्राणेऽप्यस्तीति व्यभिचारवारणाय श्रेष्ठादन्यत्रेति हेतावपि विशेषणम्, इन्द्रियाणीति 'मनः सर्वेन्द्रियाणि च' इत्येतच्छ्रुतिगतशब्दानुकरणम्' इत्येवंरूपः परिमलोक्तो बोध्यस्तथा च कथमनेन सूत्रेण मनस इन्द्रियत्वाभिधानं न हीन्द्रियाणां मनसश्च प्राणतस्तत्त्वान्तराभिधाने मनसोऽपीन्द्रियत्वं बलादायाति। नापि पञ्चमः, उक्तसूत्रभाष्ये शङ्कराचार्यादिभिः सांख्यस्मृत्यभिप्रायेण मनस इन्द्रियत्वाभिधानात्। तेषां स्वसिद्धान्तश्च 'इन्द्रियाणि श्रोत्रादीनि पञ्च ॥ अ० ३-४२ ॥' इत्यादि गीताभाष्येऽवलोकनीयः। नापि षष्ठः 'इन्द्रियेभ्यः परं मनः' 'इन्द्रियाणि हयानाहुः' कठोप० ॥ 'आत्मेन्द्रियमनोयुक्तम् ॥' कठोप० ॥ 'हृदीन्द्रियाणि मनसा सन्निवेश्य ॥' श्वेताश्व० ॥ 'एकत्वं प्राणमनसोरिन्द्रियाणां तथैव च ॥' ऐतरेयोपनि० ॥' 'इन्द्रियैर्मनसि सम्पद्यमानैः' 'इन्द्रियं मनोऽन्नम् ॥ प्रश्न० ॥' 'यस्त्विन्द्रियाणि मनसा' इन्द्रियाणि मनो बुद्धिः' ॥ गीता० ॥ इत्यादिवाक्यानां मनसः पृथङ् निर्देशेन बाधकत्वात्। नापि सप्तमः, 'अनिन्द्रियं तु मनः' इति न्यायदीपिकायां धर्मभूषणाख्येन जैनेन 'मनोविज्ञानं सर्वम्' इति न्यायबिन्दुटीकायां धर्मोत्तराख्येन बौद्धेन च मनस इन्द्रियत्वास्वीकारात्। एवं गोबलीवर्दन्यायेन मनसीन्द्रियत्वाभिधानमपि कुशकाशावलम्बनम्। व्याप्यवृत्तिधर्मेण तत्तद्व्यवहारनिर्वाहे व्यापकवृत्तिधर्मोपस्थितेरन्यथासिद्धत्वात्। अपि च वाचस्पतिमिश्रेण स्वयमेव गोबलीवर्दन्यायमनादृत्य 'मनो नेन्द्रियं त्रैकाल्यगोचरत्वात् यन्नैवं तन्नैवं यथा श्रोत्रादि' इत्यनुमानेन मनस इन्द्रियत्वं निरस्तम्। तथा च कथं तेषां मते मनस इन्द्रियत्वमित्यभ्रान्तो ब्रूयात्। एवं मनस इन्द्रियत्वे निरस्ते तज्जन्यज्ञानमपि न साक्षात्कारात्मकमिति सुस्थितम्। तर्हि कथं ब्रह्मात्मसाक्षात्कार इति चेत् 'तद्धाऽस्य विजज्ञौ' 'तमसः पारं दर्शयति' 'आचार्यवान् पुरुषो वेद' 'तस्य तावदेव चिरम्' इत्यादिश्रुतिष्वाचार्योपदेशानन्तरमेव ब्रह्मसाक्षात्कारोदये जीवन्मुक्तिश्रवणात् 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति ध्यानान्तरनैराकाङ्क्ष्यश्रवणात् 'तं त्वौपनिषदं पुरुषम्' इति ब्रह्मण उपनिषदेकगम्यत्वश्रवणाच्च औपनिषदं महावाक्यमेव ब्रह्मसाक्षात्कारे करणं न मनः 'यन्मनसा न मनुते' इति तस्य ब्रह्मसाक्षात्कारकरणत्वनिषेधात्। न चापकमनोविषयमिदं येनाहुर्मनो मतमिति वाक्यशेषे मनोमात्रग्रहणात्। न चैवं 'यद्वाचाऽनभ्युदितम्' इति शब्दस्यापि तत्करणत्वं निषिध्यत इति शङ्क्यम्, मनःकरणत्ववादिनामपि शब्दस्य निर्विशेषे परोक्षज्ञानकरणत्वस्याभ्युपगतत्वेन तस्य 'यतो वाचो निवर्तन्ते

अप्राप्य मनसा सह' इति श्रुत्यनुरोधेन शब्दार्थप्राप्तिरूपशक्तिमुखेन शब्दस्य तत्करणत्वनिषेधे तात्पर्यस्य वक्तव्यतया शक्यसम्बन्धरूपलक्षणामुखेन तस्य तत्करणत्वाविरोधात्। न च 'मनसै-वानुद्रष्टव्यम्' इति श्रुतिसिद्धं मनसोऽपि तत्करणत्वं न पराकर्तुं शक्यमिति वाच्यम्, शाब्द-साक्षात्कारजननेऽपि तदैकाग्र्यस्यापेक्षितत्वेन हेतुत्वमात्रेण तृतीयोपपत्तेः 'मनसा ह्येष पश्यति मनसा शृणोति' इत्यादौ तथा दर्शनात्। इत्थं च कृतं समाधिना अलं वा प्रसंख्यानसहकृतेन मनसा शब्दादेवापरोक्षज्ञानस्य सिद्धत्वात्। तथा चोक्तं नारदीये। "तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्।" इति। अत एव वाक्यजन्यया दृष्ट्या आत्मानं परब्रह्मत्वेन पश्यन् सन्निन्द्रो नाम देवता मामेव विजानीहीति प्रतर्दनं प्रत्युपदिशतीत्यर्थकं 'शास्त्रदृष्ट्या तूपदेशो वामदेवादिवत्॥ ३१॥' अ० १॥ पा० १॥ शा०॥ इति ब्रह्मसूत्रमपि संगच्छते। न च सुखादिसाक्षात्कारे मनसः करणत्वाभावेऽपि 'अहमेवेदं सर्वं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः' इति श्रुत्युक्ते स्वप्ने ब्रह्मसाक्षात्कारे गर्भस्थवामदेवसाक्षात्कारे च करणान्तरासम्भवेन मनस एव करणत्वमिति वाच्यम्, स्वाप्निकब्रह्मसाक्षात्काराभिधानेन तत्त्वविदो जाग्रत्संस्कारदार्ढ्याभि-प्रायवती श्रुतिः न स्वप्ने ब्रह्मसाक्षात्कारं ब्रूते अन्यथा निद्रादोषसहकृतजाग्रत्संस्कारजः प्रत्ययः स्वप्न इति निर्वचनमेव भज्येत मनसः साक्षात्कारकरणत्वनिराकरणात्। स्वप्नेऽहमेवेदं सर्वमित्यादिज्ञानस्य साक्षिभास्यात्मकत्वाच्च न मनसः संकल्पविकल्पप्रत्ययं विहायान्यत्रोप-योगः। अत एव पूर्वजन्मन्येव साधनसंपत्तिसहकृतमहावाक्यश्रवणमात्रेण कृतब्रह्मात्मसाक्षा-त्कारवतोऽदृष्टविशेषप्रतिबन्धवशात् गर्भे शयानस्य वामदेवस्यापि 'अहमेव मनुरभवं सूर्यश्च' इत्यादिप्रत्यय उपपद्यते। नायं मानसिकः किंत्वन्तःकरणवृत्तिविशेषात्मको यथा चायं तथोपपा-दयिष्यते अधस्तात्। यत्तु शब्दो नापरोक्षधीहेतुः शब्दत्वात् स्वर्गापूर्वबोधकशब्दवदित्य-नुमानेन शब्देऽपरोक्षधीहेतुत्वाभावसाधनं तदपि शब्दोऽपरोक्षधीहेतुः इन्द्रियग्राह्यत्वात् आलो-कवत् इत्यनुमानेन सत्प्रतिपक्षितत्वाद्दशमस्त्वमसि इत्यादौ व्यभिचारादयोग्यविषयत्वस्योपाधित्वाच्च कल्पनामात्रम्। न च दशमस्त्वमसीत्यत्रापि नेदं शाब्दं ज्ञानं किन्तु शब्दस्य सहकारित्वेनेन्द्रिय-स्यैव साक्षात्कारकरणत्वाभ्युपगमाच्चाक्षुषमिति वाच्यम्, बहुलतमे तमसि लोचनहीनस्यापि तद्वाक्या-दपरोक्षभ्रमनिवर्त्तकस्य दशमोऽस्मीत्यपरोक्षज्ञानस्य दर्शनान्नेन्द्रियकरणकं तत्। न च तादृशस्थले भ्रमस्यैवाभावाद् भ्रमसत्त्वेऽपि निश्चयाभावेनातस्य दशमस्त्वमसीत्युपदेशे प्रवृत्तेरसम्भवाच्च परि-शेषाच्चाक्षुषमेवेति वाच्यम्। तादृशस्थले भ्रम एव न संभवति भ्रमसत्त्वेऽपीत्याद्युक्त्या मन-स्यैव पूर्वपक्षं सिद्धान्तं च कुर्वाणो भवानत्र समाहितो भवतु, मध्याह्ने स्वकीयग्रामाद्दशममन्धं समादाय गच्छतां कुविन्दानां गाढतमिस्रायां च ग्रामान्तरे प्राप्तानाम् 'नद्यां ममार दशमः' इति भवति भ्रमोऽन्धस्यापि संख्याग्रहणे समर्थत्वात्। अत एव "नवसंख्याहतज्ञानो दशमो विभ्रमात्तदा। न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव॥ १॥" इति वृद्धवाक्य-मप्युपपद्यते। यच्च भ्रमसत्त्वेऽपि निश्चयाभावाभिधानं तदपि किमातस्य निश्चयाभावो भ्रमवतो

वा । नाद्यः, बहुलतमेऽपि तमसि तेषां भिन्नभिन्नस्वश्रवणमात्रेण वा त्वाचस्पर्शेन वा 'इमे दश' इति निश्चयस्य सम्भवात् । नापि द्वितीयः, आप्तोपदेशमात्रेणान्धस्यापि दशमोऽहमस्मीति प्रत्ययात् । न च न हि दशमस्त्वमसीति श्रवणमात्रेण दशमोऽस्मीत्यभिमन्यतेऽपितु वक्तुराप्तत्वनिश्चयायेतरान् सर्वान् परिगणय्यात्मानं दशमत्वेन प्रत्येति । इत्थं प्रसंख्यानापरपर्यायं गणनमेव दशमप्रत्यक्षहेतुः शब्दस्तु सहकारिमात्रमिति न शब्दस्य प्रत्यक्षकरणत्वोक्तिसम्भव इति वाच्यम्, निवृत्तोऽपि विवादो दशमप्रत्यक्षे गणनस्य वा हेतुता शब्दस्य वेत्येतावानवशिष्टः । तत्राप्येवं विचार्यं यदाप्तोपदेशात् प्राग् भ्रान्तैः शतधा परस्परं कृतमपि परिगणनं न दशमसाक्षात्कारायालं पश्चाद्दशमोऽस्तीत्याप्तोपदेशेन जातेऽपि परोक्षज्ञाने तत्साक्षात्काराय पुनः परिगणने नवगणनानन्तरं दशमस्त्वमसीति पुनराप्तोक्त्या तमन्धं प्रमुखीकृत्य प्रभवति सर्वेषां वयं दश इत्यप्रतिहतसाक्षात्कारः । तथा चात्र शब्दसहकृतं गणनं वा गणनासहकृतः शब्दो वा हेतुरिति स्वयमेव चिन्तयन्तु षट्शास्त्रनिष्णाता भवन्तोऽतो न वयमत्राधिकं वक्तुमीहामहे । किन्तु 'न स्मृतो दशमोऽस्तीति श्रुत्वाऽऽप्तवचनं तदा । परोक्षत्वेन दशमं वेत्ति स्वर्गादिलोकवत् ॥" "त्वमेव दशमोऽसीति गणयित्वा प्रदर्शितः । अपरोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति ॥" इत्यादिवृद्धवाक्यानि तात्पर्यरूपेण भवत्स्वान्ते संस्फुरन्त्विति समीहामहे । अथ यदि हि तत्त्वमसीति सकृदेवोच्यमाने तद्धास्य विजज्ञाविति श्रुत्याऽऽम्नायेत स्यादपि तदा शब्दापरोक्षवादिनां मनोरथपूरणं तदेव तु न नवकृत्व उपदेशानन्तरं विजज्ञावित्याम्नातवती श्रुतिः एवञ्चात्राप्यर्थतः प्रसंख्यानापरपर्यायोऽभ्यास एव श्रुत्याऽऽदृत इति भातीति न सा श्रुतिरपि शब्दकरणकब्रह्मसाक्षात्कारतात्पर्यवतीति वाच्यम्, न वयं भवदीयश्रुतेरार्थिकतात्पर्यं निर्मूलयामः, किन्तु 'अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥' यो० सू० ॥ 'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते' इत्यादिप्रमाणैर्विवेकस्रोतउद्घाटनाय विवेकदर्शनाभ्यासं विषयस्रोतःखिलीकरणाय वैराग्यं च समर्थयामः । तत्रैतावान् विशेषो यदभ्यासवैराग्योभयाधीनमनोवृत्तिनिरोधे यत्नशीलस्याधिकारिणो गुरुमुखान्महावाक्यश्रवणमात्रेण ब्रह्मात्मसाक्षात्कारो भवतीत्यसकृदवोचाम । अत एव पूर्वजन्माभ्यस्तयोगेनास्मिन् जन्मनि तदनुष्ठानं विनैव जनकादीनां ज्ञानोत्पादः, योगादिना स्वान्तसंशुद्धौ गुरुमुखान्निर्गतमहावाक्यश्रवणमात्रस्याविशिष्टत्वात् । अत एवाज्ञानबहुलान् जन्ममरणशीलान् जीवान् 'यं यं वापि स्मरन् भावम्' 'प्रयाणकाले मनसाऽचलेन' इत्याद्यभ्यासयोगगर्भितवचनैरुपदिदेश भगवान् वासुदेवः । आत्मज्ञानिनां सद्गतिं च 'ज्ञानी त्वात्मैव मे मतम् ।' इत्युक्त्वा पश्चात् बहूनां जन्मनां किञ्चित्किञ्चित्पुण्योपचयहेतूनामन्ते चरमे जन्मनि सर्वसुकृतविपाकरूपे वासुदेवः सर्वमिति ज्ञानवान् सन् मां निरुपाधिप्रेमास्पदं प्रपद्यते सर्वदा समस्तप्रेमविषयत्वेन "सकलमिदमहं च वासुदेवः" इति दृष्ट्या भजते स एवंविधो महात्माऽत्यन्तशुद्धान्तःकरणत्वात् जीवन्मुक्तः सर्वोत्कृष्टो न तत्समोऽन्योऽस्ति अत एव स सुदुर्लभः । इत्येवंविधस्फुटार्थकैः "आस्थितः स हि युक्तात्मा मामेवानुत्तमां

गतिम्। बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥ १ ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥" इत्यादिपूज्यवाक्यैर्बोधयामास । अत एव स्वात्मब्रह्मव्यतिरेकेण वस्तुमात्रं तुच्छं विन्दन् विद्वान् मरणसमयेऽपि न कदाचिद्विकलतां भजते न ह्यलातचक्रं वा गन्धर्वनगरं वा स्वाप्निकपदार्थान् वा नभोनैल्यं वा विकलोऽपि कश्चियाथातथ्येन निश्चिनोति किमु प्रबुद्धः। यत्तु "पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयाऽपि यथा। न फलाय भर्छुविषया भवति श्रुतिसम्भवाऽपि च तथाऽऽत्मनि धीः ॥ १ ॥" इत्यादिसर्वज्ञमुनिवाक्येन विपरीतभावनापनोदनाय ध्रुवायाः स्मृतेरावश्यकत्वाभिधानं तदपि तुच्छं न हि दशमोऽहमस्मीति ज्ञाने जातेऽन्धोऽपि स्वात्मस्मरणमपेक्षते नापि पुरुषापराधेन ब्रह्मणाऽपि नाहं दशम इति विपरीतं तस्मिन् भावयितुं शक्यते निश्चितेऽपि पदार्थे समुदेति विपरीतभावना भूतप्रेतादौ विश्वासशीलानां मन्दबुद्धीनां न तु कृतधियां विपश्चितामिति सर्वं रमणीयम् ॥

एवमन्तःकरणशुद्धिद्वारा मुमुक्षोरधिकारसम्पादनमात्रे लब्धावकाशस्य योगशास्त्रस्य न वेदान्तार्थप्रतिपादकत्वमन्यथा पृथङ् निरूपणानुपपत्तेः मोक्षस्य ज्ञानैकसाध्यत्वात् प्रारब्धभोगात्मकदृष्टदुःखस्य कथमपि वारयितुमशक्यत्वात् प्रारब्धकर्मणां योगेन नाशासम्भवात् प्रत्युत ज्ञानाग्नेरेव सर्वकर्मभस्मसात् प्रतिपादनात् आधिकारिकाणां यावदधिकारं योगेनापि मुक्त्यसम्भवात् तेषामप्रतिहतस्वात्मसाक्षात्कारेण मुक्तस्वरूपत्वात् ज्ञानसप्तभूमिकालाभस्य पुरुषार्थत्वाभावात् तासां केषुचिददृष्टविशेषात्स्वतः संस्फुरणात् सिद्धसाध्ययोर्ज्ञानयोगयोः समुच्चयासम्भवाच्च न वेदान्तप्रतिपाद्येऽर्थे साक्षाद्योगस्योपयोगः । एवं करणान्तरानिरूपणात् ब्रह्मात्मसाक्षात्कारस्य महावाक्यैकजन्यत्वाच्चापरोक्षार्थविषयत्वं ज्ञानस्यापरोक्षत्वमित्यपि सुस्थितम्। अर्थापरोक्षत्वं तु नापरोक्षज्ञानविषयत्वं किन्तु तत्तत्पुरुषीयचैतन्याभिन्नत्वमतो नान्योऽन्याश्रयः। अन्तःकरणतद्धर्माणां साक्षिणि कल्पिततया तदभेदसत्त्वात् बाह्यचैतन्ये कल्पितानां घटादीनां बाह्यचैतन्ये वृत्तिकृततत्तत्पुरुषीयचैतन्याभेदाभिव्यक्त्या तदभेदसत्त्वाच्च न काप्यव्याप्तिः । एवं च सर्वदा सर्वपुरुषचैतन्याभिन्नत्वात् 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुत्यास्तत एवापरोक्षं ब्रह्मेति अपरोक्षार्थविषयत्वात् शाब्दस्यापि ब्रह्मज्ञानस्यापरोक्षत्ववाचोयुक्तिर्युक्तैव । अयं भावः। द्विविधो हि विद्याधिकारी कृतोपास्तिरकृतोपास्तिश्च । तत्र य उपास्यसाक्षात्कारपर्यन्तामुपास्तिं कृत्वा तत्त्वज्ञानाय प्रवृत्तस्तस्य वासनाक्षयमनोनाशयोर्दृढतरत्वेन ज्ञानादूर्ध्वं जीवन्मुक्तिः स्वत एव सिध्यति इदानीन्तनस्तु प्रायेणाकृतोपास्तिरेव मुमुक्षुरौत्सुक्यमात्रात् सहसा विद्यायां प्रवर्तते स चोपास्तिं विनाऽपि चिज्जडविवेकमात्रेणैव च मनोनाशवासनाक्षयौ तात्कालिकौ सम्पाद्य शमदमादिसम्पत्त्या श्रवणमनननिदिध्यासनानि सम्पादयति तेषां दृढाभ्यासानन्तरं गुरुमुखान्महावाक्यश्रवणमात्रेण सर्वबन्धविच्छेदितत्त्वज्ञानमुदेति । अविद्याग्रन्थिर ब्रह्मत्वं हृदयग्रन्थिः संशयाः कर्माणि सर्वकामत्वं मृत्युः पुनर्जन्म चेत्यनेकविधो बन्धो ज्ञानान्निवर्तते । तथा च श्रूयते । 'यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥'

मुण्ड० ॥ 'ब्रह्म वेद ब्रह्मैव भवति ॥' मुण्ड० । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व-संशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' मुण्ड० ॥ 'सत्यं ज्ञान-मनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति ॥' तैत्तिरीय० ॥ 'तमेव विदित्वातिमृत्युमेति ॥' श्वेताश्व० ॥ 'यस्तु विज्ञा-नवान् भवत्यमनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ।' कठ० ॥ 'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति ।' बृहदा० ॥ सेयं विदेहमुक्तिः सत्यपि देहे ज्ञानोत्पत्तिसमकालिका ब्रह्मण्यविद्याध्यारोपितानामुक्तबन्धानामविद्यानाशे सति निवृत्तौ पुनरुत्पत्त्यसम्भवात् अतः शैथिल्यहेत्वभावात्तत्त्वज्ञानं तस्यानुवर्त्तते · मनोनाशवासनाक्षये तु दृढाभ्यासाभावाद्भोगप्रदेन प्रारब्धेन कर्मणा बाध्यमानत्वाच्च सवातप्रदेशप्रदीपवत् सहसा निव-र्तेते अत इदानीन्तनस्य तत्त्वज्ञानिनः प्राक् सिद्धे तत्त्वज्ञाने न प्रयत्नान्तरापेक्षा किन्त्वा-देहपातं येन केनापि नटनेन 'बुध्यते कार्यमेव तत् । अज्ञप्रबोधान्नैवान्यत्कार्यमस्तीह तद्विदः' इत्यादिवृद्धोक्त्याऽज्ञप्रबोधमात्रमवशिष्यते । स च यथावत् प्रमाणप्रमेयविभागनिबन्धनः । तत्र सत्स्वपि सहस्रेषु वेदान्तप्रकरणेषु परं यथा सकलशास्त्रमर्मविच्छ्रीम**द्धर्मराजाध्वरिकृतवेदा-न्तपरिभाषा**नामकं प्रकरणं स्वकीयसद्गुणैः सर्वतो लब्धप्रतिष्ठं न तथान्यत् । अस्य खल्वष्टौ परिच्छेदाः । तत्र प्रथमे सपरिकरप्रत्यक्षनिरूपणं द्वितीयेऽनुमानं तृतीये उपमानं चतुर्थे शब्दः पञ्चमे अर्थापत्तिः षष्ठेऽनुपलब्धिः सप्तमे वेदान्तस्य विषयः अष्टमे वेदान्तप्रयोजनमिति परि-च्छेदाष्टकस्य संक्षेपतोऽभिधेयार्थनिरूपणम् । तदिदं मूलमात्रं विविधटीकासंवलितं वा बहुधा मुद्रितमपि परिशोधकानामालस्याद्वा यन्त्राधिकारिणामनपेक्षणाद्वा न स्वात्मीयां पवित्रतामानर्ज, तदिदं साधुभिः प्रार्थितैर्विद्वच्छिरोभूषणैरुदासीनवर्य्यैः शरण्यैः श्रीम**द्रमरदास**नामधेयैर्मूलकृत्त-नूज**रामकृष्ण**कृत**शिखामणि**टीकायुतं सम्यक् परिशोध्य तदुपरि **मणिप्रभाख्य**विवृत्या विभूषितम् । लब्धं च तेभ्यः प्रार्थनयाऽऽर्यजीर्णनिबन्धोद्धारकेण **क्षेमराजश्रीकृष्णदासेन** श्रेष्ठिना तेनैव प्रार्थितेन च मयाऽपि मुद्रायन्त्रे निक्षिप्तमिदं प्रकरणरत्नं भूयोऽपि यथामति परिशो-धितमिति तदवलोकयन्तोऽनन्तगुणगरीयांसो विद्वांसः पुंदोषसाधारण्यान्मत्स्खलितमपि परिशोधयन्तो जनतामुपकुर्वन्त्वनुगृह्णन्तु च मामिति मुहुः प्रार्थयते कश्चित्—

**काशीनिवासिनिर्मल पं० स्वामिगोविन्दसिंहः साधुः।**

॥ श्रीः ॥

# वेदान्तपरिभाषाया विषयानुक्रमणिका ।



इति वेदान्तपरिभाषाया विषयानुक्रमणिका समाप्ता ।



काशीनिवासी निर्मल-पं०स्वामि-श्रीगोविन्दसिंहसाधुः।



# वेदान्तपरिभाषा.

## शिखामणि-टीकया तट्टीकया मणिप्रभया चोपेता ।



**श्रीगणेशाय नमः ।**

शि० म०-नैदाघभानुकिरणेष्विव वारिपूरः सर्वो विभाति यदबोधवशात्प्रपञ्चः॥ मालाफणीव च निमीलति यत्प्रबोधात्तद्ब्रह्म नौमि सुखमद्वयमात्मरूपम् ॥ १ ॥

म० प्र०-यतः सर्वं जातं किल जगदिदं चेतनघनात्
प्रविष्टो यस्तस्मिन्नियमयति वै कार्य्यकरणम् ।
पुनश्चान्ते यस्मिन्विशति खलु भङ्गा इव तिमौ
नमामस्तं कृष्णं निखिलजनपूज्यं हृदिशयम् ॥ १ ॥
श्रीकृष्णं सुरसङ्घसेवितपदं संकल्पकल्पद्रुमं
मञ्जीरादिविभूषिताङ्घ्रियुगलं सत्पीतपट्टाम्बरम् ।
चञ्चत्काञ्चनकाञ्चिभूषितकटिं तं नौमि मेघप्रभं
विद्वज्जालविशालभालतिलकीभूता यतः सज्जनाः ॥ २ ॥
विनायकमहं वन्दे विनायकोपशान्तये ।
जनकोऽपि यमभ्यर्च्य जघान त्रिपुरं पुरा ॥ ३ ॥
श्रीनानकाख्यं प्रणमामि मार्गः स्पष्टीकृतो येन तमोविरोधी ।
यत्कीर्तिरुस्रा इव चित्रभानोर्व्याप्ता पृथिव्यां जनपापहर्त्री ॥ ४ ॥
यदुक्तिभानू रजनीमिवार्कस्तमोविनाशी कृपयोपदिष्टः ।
अगाधबोधं परमं गुरुं तं नमामि भक्त्या परमात्मरूपम् ॥ ५ ॥
येषां प्रसादादचिरं मया वै प्राप्तं दुरापं खलु शास्त्रजातम् ।
विद्वद्वरिष्ठान्प्रणमाम्यहं तान्विद्याप्रदातॄन्परमार्थनिष्ठान् ॥ ६ ॥
यदुपकारमुद्धर्तुं न शक्नोम्यब्दकोटिभिः ।
ब्रह्मविज्ञानपादांस्तान्प्रणमामि पुनः पुनः ॥ ७ ॥

---

१ तिमौ समुद्रे । "पाथोधिसिन्धुमकरालयवारिराशिगङ्गाधरेन्दुजनकास्तिमिरूर्मिमाली" इति कोशात् ॥

नाहं शक्नोमि व्याख्याने तथापीश्वरतुष्टये ।
व्याकरोमि हि वेदान्तशिखामणिं यथामति ॥ ८ ॥
विदुषोऽतिकृपाविष्टान्प्रेरयित्वा हि केशवः ।
शोधयिष्यति स्वकीयमिति मत्वा न संशयः ॥ ९ ॥

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयमिति शिष्टाचारात् "मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि च अध्येतारश्च सिद्धार्था यथा स्युः" इति महाभाष्योक्तेश्च चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तये मनसि कृतं शुद्धाद्वयसच्चिदानन्दादिलक्षणस्वेष्टपरमात्मदेवतानमस्कारात्मकं शिष्टाचारानुमितस्मृत्यनुमितश्रुतिप्रमाणकं मङ्गलं शिष्यशिक्षार्थं श्रोतृव्याख्यातॄणामनायासेन मङ्गलाचरणाय च दृष्टान्तकीर्तनपुरस्सरं प्रपञ्चस्य ब्रह्माविद्याकार्यत्वं तद्विद्यानिवर्त्यत्वं च बोधयन्निबध्नाति-**नैदाघेत्यादिना**। तत्=प्रत्यगभिन्नत्वाद्वितीयत्वादिविशेषरूपेणाज्ञातं सन्निखिलकार्यकारणं प्रत्यगभिन्नत्वाद्वितीयत्वादिविशेषरूपेण ज्ञातं सन्निखिलाज्ञानादिनिवर्तकं च ब्रह्म=त्रिविधपरिच्छेदात्यन्ताभाववद्वस्तु नौमि=नमस्करोमि। तथा च ब्रह्मकर्मकस्वापकर्षबोधनपूर्वकब्रह्मोत्कर्षबोधनानुकूलव्यापारानुकूलवर्तमानकृत्याश्रयोऽहमिति शाब्दबोधः। ननु ब्रह्मणः सुखासुखसाधनभिन्नत्वेनापुरुषार्थत्वात्कथमुत्कर्षबोधनानुकूलव्यापारः संभवतीत्यत आह-**सुखमिति**। आनन्दरूपमिति यावत्। ननु दुःखहेतोर्द्वैतस्य सत्त्वात्कथं ब्रह्मणः सुखरूपत्वमित्यत आह-**अद्वयमिति**। पारमार्थिकद्वैतात्यन्ताभाववदित्यर्थः। ननु द्वितीयस्य जीवस्य सत्त्वात्कथं ब्रह्मणोऽद्वयत्वमित्याशङ्क्याह-**आत्मरूपमिति**। शुद्धप्रत्यगभिन्नमित्यर्थः। नन्वेवमपि द्वितीयस्यानात्मरूपप्रपञ्चस्य सत्त्वात्कथमद्वितीयत्वमित्याशङ्क्य प्रपञ्चस्याविद्याप्रयुक्तत्वेन ज्ञाननिवर्त्यत्वेन च मिथ्यात्वमित्यभिप्रेत्याह-**नैदाघेति**। निदाघशब्दो हि ग्रीष्मर्तुवाचकः। निदाघे भवो नैदाघः नैदाघश्चासौ भानुर्नैदाघभानुः तस्य किरणास्तेषु नैदाघभानुकिरणेष्विव। यथा भूतलसंबद्धैर्निदाघापरपर्यायग्रीष्मर्तुकालिकसूर्यकिरणैरवच्छिन्नचैतन्ये वारिपूरो=जलसमूहो विषयतासंबन्धेन ज्ञानाश्रयस्तद्वत् यदबोधवशात् यस्य=सच्चिदानन्दलक्षणस्य ब्रह्मणो=ऽबोधोऽज्ञानं तस्य वशः=शक्तिः "वशः शक्तिप्रभुत्वयोः" इति कोशात्। तस्मात्=ब्रह्मविषयकाज्ञाननिष्ठसामर्थ्यात् सर्वो=निखिलः प्रपञ्चो=नामरूपाद्यात्मको विभाति=विषयतासंबन्धेन भानाश्रयस्तद्ब्रह्म नौमीति संबन्धः। प्रपञ्चस्य ब्रह्माज्ञानकार्यत्वमुक्त्वा तज्ज्ञाननिवर्त्यत्वमाह-**मालेति**। यथा मालोपाधिकचैतन्यज्ञानेन मालोपाधिकचैतन्याज्ञानकार्यफण्यादिकं निमीलति=नाशं प्राप्नोति पारमार्थिकत्वावच्छिन्नप्रतियोगिताकत्रैकालिकात्यन्ताभावप्रतियोगित्व-

---

१ मङ्गलानुष्ठानप्रयोजनान्याह-**मङ्गलादीनीत्यादिना**। अध्ययनस्याविच्छेदात्प्रथन्ते कृतमङ्गलशास्त्रश्रोतृणां परैरपराजयाद्वीरपुरुषाणि शास्त्रानुष्ठाने धर्म्मोपचयादायुर्वर्द्धनादायुष्मत्पुरुषाणि। इदानीं ग्रन्थे मङ्गलनिबन्धस्य फलमाह-**अध्येतारश्चेति**। सिद्धार्था अध्ययननिवृत्तिरेवाध्ययनसमाप्तिरेव तेषां सिद्धिः सिद्धिविषयोऽर्थ इत्यर्थ इति भाष्यार्थः।

प्रकारकप्रतीतिविषयो भवतीति यावत्। तद्वत् यत्प्रबोधात् यस्य सच्चिदानन्दलक्षणस्य ब्रह्मणस्तत्त्वमस्यादिवाक्यजन्याप्रतिबद्धवृत्त्यात्मकयथार्थज्ञानात्सर्वः प्रपञ्चो निमीलति पारमार्थिकत्वावच्छिन्नप्रतियोगिताकत्रैकालिकात्यन्ताभावप्रतियोगितां प्राप्नोति तद्ब्रह्म नौमीत्यर्थः ॥ १ ॥

**शि० म०**—आसेतोरासुमेरोरपि भुवि विदितान् धर्मराजाध्वरीन्द्रान् वन्देऽहं तर्कचूडामणिमणिजननक्षीरधींस्तातपादान् । यत्कारुण्यान्मयाऽभूदधिगतमधिकं दुर्ग्रहं सूक्ष्मधीकैरप्यात्तं शास्त्रजातं जगति मखकृता रामकृष्णाह्वयेन ॥ २ ॥

**म० प्र०**—"मातरं पितरं चैव साक्षात्प्रत्यक्षदेवताम्। सदा गृही निषेवेत दृढसर्वप्रयत्नतः॥ १॥ तुष्टायां मातरि शिवे तुष्टे पितरि पार्वति। तव प्रीतिर्भवेद्देवि परं ब्रह्म प्रसीदति ॥ २ ॥" इत्यादीश्वरोक्तवाक्यात्पितुः शिवात्मकत्वेन स्वाभिलषितार्थसंप्राप्तये तातनत्यात्मकं स्वहृद्याचरितमङ्गलं शिष्यशिक्षाद्युक्तप्रयोजनाय धर्मराजाध्वरीन्द्रपुत्रो रामकृष्णसंज्ञकः पितृमहत्त्वबोधनपुरस्सरमुपनिबध्नाति—**आसेतोरित्यादिना**। जगति=पृथिव्यां मखकृता=यथाधिकारं निखिलश्रौतस्मार्तकर्मकर्त्रा रामकृष्णाह्वयेन=रामकृष्णसंज्ञकेन मया अधिकं=विस्तृतं दुर्ग्रहं=बहुसाधनसंपाद्यबोधविषयीभूतं सूक्ष्मधीकैरत्यन्तसूक्ष्मार्थावगाहिबुद्धिमद्भिरात्तमपि=गृहीतमपि न तु धर्मादिवदत्यन्तायोग्यं शास्त्रजातम्=श्रुतिस्मृतिलक्षणशास्त्रप्रतिपाद्यं निखिलं वस्तु यत्कारुण्यात्=येषां धर्मराजाध्वरीन्द्रसंज्ञकपितॄणां कारुण्यात्=कृपाकटाक्षमात्रहेतुतोऽधिगतं ज्ञातमभूत्=आसीत् आसेतोरासुमेरोरपि भुवि विदितान् सेतुं=रामसेतुमा=अभिव्याप्य सुमेरुं=हेमाद्रिमा मर्यादीकृत्य, सेतुम् आ=मर्यादीकृत्य सुमेरुमभिव्याप्येति वा, सेतुमभिव्याप्य सुमेरुमभिव्याप्येति वा भुवि=पृथिव्यां विदितानपि=ज्ञातानेव तर्कचूडामणिमणिजननक्षीरधीन्=तर्कचूडामणिसंज्ञको यो ग्रन्थः स एव मणिर्मणिरिव मणिस्तस्य जननेन=जननहेतुत्वेन क्षीरधीन्=महोदधिसदृशान् तातपादान् मयूरव्यंसकादिगणस्याकृतिगणत्वात्पादशब्दस्य तदन्तर्भावसंभवेन पूर्वप्रयोगाभावसंभवात्ताताश्च ते पादाश्च पूज्यास्ते तथा तान्=पूज्यपितॄन् धर्मराजाध्वरीन्द्रान् धर्माणां=श्रुतिस्मृतिविहितानां यज्ञादीनां राजानः=अतिशयेनानुष्ठातारस्ते तथा धर्मराजाश्च तेऽध्वरीन्द्राः अध्वरिणां=यागवतां दीक्षितानामिन्द्राः=धर्मोपदेष्टारस्ते तथा तान्धर्मराजाध्वरीन्द्रसंज्ञकानहं वन्दे इत्यर्थः ॥ २ ॥

**शि० म०**—वेदान्तपरिभाषाख्यां सोऽहं तातविनिर्मिताम्।
व्याकरोमि कृतिं सर्वश्रुत्यन्तार्थप्रकाशिकाम् ॥ ३ ॥

**म० प्र०**—शिष्यावधानाय व्याख्यानकरणप्रतिज्ञां करोति—**वेदान्तेति**। सर्वश्रुत्यन्तार्थप्रकाशिकां सर्वो=निखिलो यः श्रुतेः=वेदस्यान्तार्थो=निर्णीतब्रह्मात्मैक्यादिरूपोऽर्थस्तस्य प्रकाशिकां=तद्विषयकबोधजनकां सर्ववेदस्योत्तरकाण्डात्मकवाक्यरूपो योऽन्तस्तदर्थविषयकबोधजनकामिति वा तातविनिर्मितां=तातेनोक्तनामकपित्रा विनिर्मितां=विशेषेण=सम्यग्वेदान्तार्थविचारेण रचितां वेदा-

न्तपरिभाषाख्यां=वेदान्तपरिभाषानामिकां कृतिं=शब्दराश्यात्मकव्यक्तिं व्याकरोमि=तद्घटकीभूतशब्दार्थान् प्रकटीकरोमि । एतावता सर्वोऽर्थस्तत्र वर्तते । मया तु तस्य प्रादुर्भावमात्रं क्रियत इति बोध्यत इत्यर्थः ॥ ३ ॥

**यदविद्याविलासेन भूतभौतिकसृष्टयः ।**
**तन्नौमि परमात्मानं सच्चिदानन्दविग्रहम् ॥ १ ॥**

**शि० म०**—प्रेक्षावत्प्रवृत्त्यर्थं विषयप्रयोजने निर्दिशन्निर्विघ्नपरिसमाप्तये मङ्गलमाचरितं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—**यदविद्येति** । तं परमात्मानं नौमीति संबन्धः । जीवाभिन्नं ब्रह्म शास्त्रप्रमेयमिति सूचयितुमात्मशब्दः । नन्वेवं तस्यैव तमेव प्रति उत्कर्षापकर्षाभावान्नमस्कार्यताऽनुपपत्तिरित्याशङ्क्य कल्पितभेदमादायाविद्याप्रतिबिम्बं कर्तृत्वादिविशिष्टमपकृष्टरूपं नमस्कर्तृ तद्व्यावृत्तं सर्वज्ञत्वादिविशिष्टमुत्कृष्टरूपं नमस्कार्यमित्यभिप्रेत्याह—**परमिति** ॥

**म० प्र०**—ग्रन्थस्याध्ययनाध्यापनादिरूपमेधाविप्रवृत्तिप्रयोजकीभूतविषयप्रयोजनवत्तां दर्शयन् कृतमङ्गलकत्वं बोधयति—**प्रेक्षावत्प्रवृत्त्यर्थमिति**। प्रेक्षावतां=प्रज्ञावतामध्ययनाध्यापनादिरूपा या प्रवृत्तिस्तत्सिद्ध्यर्थमित्यर्थः।ग्रन्थत इति=शब्दत इत्यर्थः।**निबध्नातीति**।अत्रायं शाब्दबोधः—मेधाविप्रवृत्तिफलकमङ्गलोपनिबन्धनकालिकविषयप्रयोजनविषयकबोधजननानुकूलव्यापारानुकूलकृत्याश्रयो निर्विघ्नग्रन्थसमाप्तिप्रयोजकीभूतातीतकालिककृतिविषयतावदभिन्नमङ्गलविषयकशिष्यशिक्षाफलकवाक्यघटकपदघटकवर्णस्मारकास्यादिसंयोगानुकूलव्यापारानुकूलकृतिमानेकत्वावलीढो ग्रन्थकार इति । ननु भवन्मते जीवब्रह्मणोरभेदेनोत्कर्षापकर्षाभावान्नमस्कर्तृनमस्कार्यताऽनुपपत्तिरित्याशङ्क्य कल्पितभेदमादाय समाधत्ते—**नन्वेवमिति** । जीवपरमात्मनोरभेदे सतीत्यर्थः । तस्यैव=जीवाभिन्नपरमात्मन एव तमेव प्रति=जीवाभिन्नपरमात्मानं प्रत्येव कल्पितभेदमौपाधिकभेदम् । अविद्याप्रतिबिम्बमिति=तमोगुणप्रधानाऽविद्याप्रतिबिम्बाभिन्नकर्तृत्वादिविशिष्टमित्यर्थः । तद्व्यावृत्तम्=कर्तृत्वादिविशिष्टापकृष्टरूपाद्भिन्नम्, एकस्यैव परमात्मनः कर्तृत्वादिविशिष्टान्तःकरणतादात्म्यापन्नत्वेन नमस्कर्तृत्वं सर्वज्ञत्वादिविशिष्टत्वेन नमस्कार्यत्वमिति भावः । न चेह परं नौमीति निर्देशात्तटस्थस्वरूपलक्षणलक्षितनिरुपाधिकपरमात्मन एव नमस्कारविषयत्वं प्रतीयतेऽतः कथं सोपाधिकस्य सर्वज्ञत्वादिविशिष्टस्य नमस्कार्यत्वं त्वयोच्यते इति वाच्यम् । "विशिष्टं शुद्धान्नातिरिच्यते" इति न्यायेन तस्य शुद्धानतिरेकादिति ॥

**शि० म०**—ननु ब्रह्मणि लक्षणप्रमाणाभावेन तस्यैवासिद्धेः कथं जीवब्रह्माभेदः शास्त्रार्थ इति चेत् । न तावत्प्रमाणाभावः भूतभौतिकोत्पत्तेरेव तत्र प्रमाणत्वात् । तथा हि "विवादविषयीभूतानि भूतभौतिकानि स्वोपादानगोचरापरोक्षज्ञानवत्प्रणीतानि कार्यत्वात् घटवत्" न च परिदृश्यमानपृथिव्यादौ प्रत्यक्षेण कार्यत्वसिद्धावप्यतीन्द्रिये तदसिद्धेर्भागासिद्धो हेतुरिति वाच्यम् । तत्रापि पृथिवीत्वादिना कार्यत्वकल्पनात् ॥

**म० प्र०**—लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायमाश्रित्याशङ्कते **नन्विति** । तस्यैव=ब्रह्मण एव असिद्धेः=अनिश्चयात्, भूतभौतिकोत्पत्तेरेव=एवशब्दस्याप्यर्थकत्वेन विवादगोचरीभूत-भूतभौतिकनिष्ठकार्यत्वरूपहेतोरपि, अपिशब्देन श्रुतिसमुच्चयः । तत्र=ब्रह्मणि प्रमाणत्वात्=प्रमिति-जनकत्वात् । विवादविषयीभूतानि=ईश्वरजन्यत्वाजन्यत्वप्रकारकविवादास्पदानि । **स्वोपादानेति** । स्वं=कार्यं तस्य यदुपादानं तद्गोचरं यदपरोक्षज्ञानं तद्वता प्रणीतानि रचितानीत्यर्थः । कार्यत्वात्=जन्यत्वात् कृतिजन्यत्वाद्वा तथा च न साध्यहेत्वोरभेद इति । न चात्र स्वोपादान-गोचरापरोक्षज्ञानवज्जन्यत्वरूपसाध्यं न संभवति कार्यमात्रं प्रत्यन्वयव्यतिरेकाभ्यां कृतेरेव हेतुत्वेने-च्छाजनकज्ञानस्य भूतभौतिकोत्पत्तावन्यथासिद्धत्वात्पक्षदृष्टान्तोभयवृत्त्येकस्वत्वस्याभावेन तद्घटितो-पादानगोचरेत्यादिसाध्यस्यासंभवाच्चेति वाच्यम् । कार्यमात्रे कृतिमद्वदन्वयव्यतिरेकाभ्यां स्वोपादान-गोचरापरोक्षज्ञानत्वेनापि हेतुत्वस्वीकारात् । पक्षदृष्टान्तान्यतरत्वरूपस्यानुगतस्वत्वस्य संभवाच्चेति । कार्यत्वहेतौ भागासिद्ध्याख्यस्वरूपासिद्धिमाशङ्क्य परिहरति—**न चेत्यादिना** । परिदृश्यमान-पृथिव्यादौ=अस्मदादिचक्षुरादिजन्यज्ञानविषयीभूतपञ्चीकृतपृथिव्यादौ, प्रत्यक्षेण=इन्द्रियस्वरूप-प्रत्यक्षप्रमाणेन, कार्यत्वसिद्धावपि=कार्यत्वविषयकनिश्चयेऽपि अतीन्द्रिये=इन्द्रियाग्राह्यपञ्चीकृतपृथि-व्यादौ, तदसिद्धेः=कार्यत्वनिश्चयाभावात् । भागासिद्धो हेतुः=पक्षस्यापञ्चीकृतपृथिव्यादिरूपैकांशेऽव-र्तमानः कार्यत्वरूपी हेतुः । न चेति निषेधप्रतिज्ञायां हेतुमाह—**तत्रापीति** । अपञ्चीकृतपृथिव्यादा-वपीत्यर्थः । **पृथिवीत्वादिनेति** । "अपञ्चीकृतपृथिवी जन्या पृथिवीत्वात् घटवत्" इति पृथिवी-त्वादिना कार्यत्वस्यानुमानादित्यर्थः ॥

**शि० म०—न चाप्रयोजकत्वं लाघवानुगृहीतेन प्रत्यक्षेण घटादौ कार्यत्वेनैव कर्तृजन्यत्वावगमात् ॥**

**म० प्र०**—ननूक्तपक्षे कार्यत्वरूपहेतुरस्तूक्तसाध्यं मा भूद्विपक्षे बाधकतर्काभाव इति कार्यत्वहेतो-र्व्यभिचारित्वेन स्वोक्तसाध्यविषयकानुमितिजननासमर्थत्वमित्याशङ्क्य निराकरोति—**न चाप्रयोजकत्वमिति** । अनुकूलतर्काभावेन कार्यत्वहेतोरुक्तसाध्याव्याप्यत्वं नेत्यर्थः । यत्र जन्यपदार्थे कार्यत्वं तत्र स्वोपादानगोचरापरोक्षज्ञानवज्जन्यत्वमिति सामान्यकार्यकारणभावस्वीकारे लाघवं यत्र घटत्वं तत्र स्वोपादानगोचरापरोक्षज्ञानवत्कुलालजन्यत्वं यत्र पटत्वं तत्र स्वोपादानगोचरापरोक्ष-ज्ञानवत्कुविन्दजन्यत्वमिति विशेषकार्यकारणभावस्वीकारे गौरवमित्यभिप्रेत्यानुकूलतर्कं सूचयन्न चेत्युक्तप्रतिज्ञायां हेतुमाह—**लाघवेति** । लाघवानुगृहीतेन=उक्तलाघवसहकृतेन प्रत्यक्षेण=इन्द्रिय-रूपप्रत्यक्षप्रमाणेन गृहीतो यो घटादिनिष्ठकार्यत्वरूपसामान्यधर्मस्तस्यैव स्वोपादानगोचरापरोक्षज्ञान-वत्कर्तृजन्यत्वनिरूपितव्याप्यत्वगमेन पक्षे कार्यत्वस्य त्वयाऽपि स्वीकारात्कार्यत्वरूपहेतुबलात्स्वो-पादानगोचरापरोक्षज्ञानवज्जन्यत्वमपि त्वया स्वीकरणीयमित्यर्थः । तथा चोक्तपक्षे यदि स्वोपादान-गोचरापरोक्षज्ञानवज्जन्यत्वरूपसाध्यं न स्यात्तर्हि कार्यत्वमपि न स्यादिति विपक्षबाधकानुकूलतर्क-सत्त्वम् । न चेष्टापत्तिः । उक्तभूतभौतिकजगन्नित्यत्वापत्त्याऽपसिद्धान्तापत्तेः । न चान्वयव्यतिरेकाभ्यां

घटत्वाद्यवच्छिन्नं प्रति स्वोपादानगोचरापरोक्षज्ञानवत्कुलालादेरेव हेतुत्वादेतादृशकार्यकारणभावे मानाभावेन कथमुक्तानिष्टापादनं संभवतीति वाच्यम्। घटत्वपटत्वादिना स्वोपादानगोचरापरोक्षज्ञानवत्कुलालत्वकुविन्दत्वादिना चानेकधर्मेणानन्तकार्यकारणभावकल्पनापेक्षया कार्यत्वावच्छिन्नकार्यं प्रति स्वोपादानगोचरापरोक्षज्ञानवत्त्वेन हेतुत्वकल्पनस्यैवोचितत्वात् "यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि स एव" इति न्यायेन जन्यपदार्थत्वस्वोपादानगोचरापरोक्षज्ञानवत्वाभ्यां सामान्यकार्यकारणभावस्यावश्यकत्वाच्च। न च तादृशन्यायो निष्प्रमाणक इति वाच्यम्। कार्यत्वावच्छिन्नाभावे स्वोपादानगोचरापरोक्षज्ञानवत्तत्तदभावकूटस्य प्रयोजकत्वकल्पनापेक्षया स्वोपादानगोचरापरोक्षज्ञानवत्त्वावच्छिन्नाभावस्यैवैकस्य प्रयोजकत्वे लाघवेनोक्तन्यायस्याप्रमाणकत्वकथनस्यात्यन्तायुक्तत्वादिति भावः॥

**शि० म०—अत एव न नाना किंचिज्ज्ञकर्तृत्तिद्ध्या अर्थान्तरं लाघवादेकस्यैव कर्तुः सर्वज्ञस्य सकर्तृकत्वानुमितौ विषयत्वात्॥**

**म० प्र०**—ननु स्वोपादानगोचरापरोक्षज्ञानवज्जन्यत्वमात्रस्योक्तपक्षे साध्यत्वेऽदृष्टद्वारा स्वोपादानगोचरापरोक्षज्ञानवदस्मदादिजन्यत्वमादायार्थान्तरसिद्धसाधने स्यातामित्याशङ्कयादृष्टाद्वारकत्वेन स्वोपादानगोचरापरोक्षज्ञानवज्जन्यताया विशेषणीयत्वं लाघवं चाभिप्रेत्याह—**अत इति**। अदृष्टाद्वारकत्वेन स्वोपादानगोचरापरोक्षज्ञानवज्जन्यताया विशेषणीयत्वाद्वक्ष्यमाणहेतोश्चेत्यर्थः। नन्वेवमप्युक्तानुमानम् "उक्तभूतभौतिकानि नोक्तकर्तृजन्यानि शरीराजन्यत्वादात्मवद्यन्नैवं तन्नैवं घटवत्" इत्यनुमानेन सत्प्रतिपक्षितम्। किंचोक्तेश्वरसाधकानुमाने शरीरजन्यत्वमुपाधिरपि संभवति। तस्य घटादौ साध्यव्यापकत्वात्पक्षे साधनाव्यापकत्वाच्च। न चेश्वरस्य मायारूपशरीरसत्त्वात्कथमुक्तोपाधेः पक्षे साधनाव्यापकत्वमिति वाच्यम्। हस्ताद्यवयवेष्वतिव्याप्तिवारणाय शरीरलक्षणेऽन्त्यावयवित्वस्यावश्यं निवेशनीयतया मायाया आकाशाद्याकारपरिणामतयाऽन्त्यावयवित्वस्यासंभवेनान्त्यावयवित्वे सति सुखदुःखादिज्ञानावच्छेदकतायोग्यतात्यन्ताभावानधिकरणत्वरूपशरीरलक्षणस्य मायायामसंभवात्। न च पक्षे स्वोपादानगोचरापरोक्षज्ञानवज्जन्यत्वरूपसाध्यसंदेहेन शरीरजन्यत्वस्य साध्यव्यापकत्वसंशयान्नोपाधित्वनिश्चय इति वाच्यम्। हेतावुपाधिनिश्चये हि हेतौ सोपाधिकत्वहेतुना व्यभिचारनिश्चय एव भवति। हेतावुपाधिसंदेहे तु हेतौ व्यभिचारसंदेह आवश्यकः व्याप्यसंदेहेन व्यापकसंदेहस्यानुभवसिद्धत्वात्। व्यभिचारज्ञानसामान्यं हि व्याप्तिज्ञानप्रतिबन्धकमिति संदिग्धोपाधेरपि दूषकत्वात्। न चोपाधेः संदेहाज्जायमानो व्यभिचारसंदेहो न घटादौ संभवति। तत्र हेतुसत्त्वेऽपि साध्योपाध्योर्द्वयोरेव निश्चितत्वेन साध्यसंदेहासंभवादपि तु पक्ष एव व्यभिचारसंदेहो वाच्यः। न च स व्याप्तिज्ञानप्रतिबन्धकः पक्षे व्यभिचारसंदेहस्य तदप्रतिबन्धकत्वादन्यथाऽनुमितेः पूर्वं सर्वत्रैव पक्षे साध्यसंदेहसंभवेन तत्र हेतोर्निश्चयादनुमानमात्रोच्छेदप्रसङ्गः स्यादिति वाच्यम्। उद्देश्यतावच्छेदकावच्छिन्नः साध्यसंदेहवांश्च पक्षः पक्षभिन्नत्वे सति साध्यसंदेहविशिष्टत्वरूपधर्मेण पक्षसमश्च तदन्यतरव्यभिचारसंशयस्यापि व्याप्तिज्ञानप्रतिबन्धकत्वात्।

न चैवमुक्तरीत्यानुऽमानमात्रोच्छेदापत्तिरिति वाच्यम्। उपाध्यनधिकरणहेतौ "धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यात्"इत्याद्यनुकूलतर्केण व्यभिचारसंदेहस्यासंभवात्॥

**शि०म०—ततश्चानुमानं जगन्निर्मातरि सर्वेश्वरे प्रमाणम्। तथा च"यतो वा इमानि भूतानि जायन्ते" "यः सर्वज्ञः स सर्ववित्" ॥**

**म० प्र०**—अत एव व्यभिचारसंशयस्यापि व्याप्तिज्ञानप्रतिबन्धकत्वादेवानुकूलतर्कविरहदशायां पक्षेतरत्वं संदिग्धोपाधिरित्यभिधानं ग्रन्थकृतां संगच्छते इति। तथा च कथमुक्तानुमानादीश्वरसिद्धिरिति चेत् न तावदस्मदीयपूर्वोक्तेश्वरसाधकानुमाने त्वदीयानुमानेन सत्प्रतिपक्षितत्वं त्वदीयानुमाने विपक्षबाधकानुकूलतर्काभावात् शरीराजन्यत्वहेतौ शरीररूपविशेषणस्यासिद्धिवारकस्यापि व्यभिचारावारकत्वेन व्यर्थतया शरीरविशेषणावच्छेदेन व्याप्तिग्रहासंभवेन व्याप्यत्वासिद्धेश्च। न च त्वदीयेश्वरसाधकानुमानेऽप्यनुकूलतर्काभाव इति वाच्यं जन्यपदार्थत्वेन स्वोपादानगोचरापरोक्षज्ञानवत्त्वेन च कार्यकारणभावबाधरूपस्यानुकूलतर्कस्य लाघवानुगृहीतेनेत्यादिवाक्ये दर्शितत्वात्। अस्मदीयानुमाने शरीरजन्यत्वरूपोपाधिरपि न संभवति। अनुकूलतर्काभावजन्यव्यभिचारसंदेहस्यैव व्याप्तिनिश्चयप्रतिबन्धकत्वेन जन्यपदार्थत्वेन स्वोपादानगोचरापरोक्षज्ञानवत्त्वेन च कार्यकारणभावप्रसिद्धिबाधरूपस्य विपक्षबाधकानुकूलतर्कस्य सत्त्वेन कार्यत्वरूपहेतोः साध्यव्याप्यत्वनिश्चयेन साध्यव्याप्याव्यापकत्वेन शरीरजन्यत्वस्य साध्याव्यापकत्वनिश्चयेन साधनाव्यापकत्वेन साध्यव्याप्याव्यापकत्वेन शरीरजन्यत्वस्य साध्यव्यापकत्वनिश्चयेन साधनाव्यपकत्वेन साध्यव्यापकत्वेन वा संदिग्धोपाधित्वासंभवादित्येतत्सर्वं हृदि निधायाह—**ततश्चेति**। सत्प्रतिपक्षितत्वादिदूषणाभावादेवेत्यर्थः। नन्वनुमानस्यैवेश्वरसाधकत्वे तत्प्रतिपादकवेदोपनिषद्भागस्याध्ययनवैफल्यमित्याशङ्क्याह—**तथा चेति**। तथैवेत्यर्थः। योऽक्षराख्यः सर्वज्ञः सामान्यरूपेण सर्वविषयकज्ञानवान्। ननु पदार्थत्वादिरूपसामान्यधर्मेण सर्वविषयकज्ञानवत्त्वं जीवानामपि संभवतीति कथमनेन वाक्येनेश्वरसिद्धिरित्याशङ्क्याह—**सर्वविदिति**। घटत्वपटत्वादिरूपतत्तद्विशेषधर्मेणापि सर्वविषयकज्ञानवानित्यर्थः। सामान्येन=समष्टिरूपेण मायाख्योपाधिना सर्वं जानातीति सर्वज्ञः विशेषेण=व्यष्टिरूपेणाविद्याख्योपाधिनाऽनन्तजीवभावमापन्नः स एव सर्वस्वोपाधिं तत्सृष्टं च वेत्तीति सर्वविदिति वा सर्वज्ञसर्ववित्पदयोरर्थः॥

**शि०म०—"यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते"इत्यादिश्रुतिश्च सर्वज्ञेश्वरे प्रमाणम्। नापि लक्षणाभावः नामरूपसृष्टिकर्तृत्वस्य नामरूपात्मकप्रपञ्चाध्यासाधिष्ठानत्वस्य वा तदाकारेण परिणममानमायाधिष्ठानत्वस्य वा ब्रह्मलक्षणत्वात्तदेतदाह—यदविद्याविलासेन भूतभौतिकसृष्टयः इति। यस्याविद्या यदविद्या षष्ठ्यर्थस्तु संबन्धमात्रम् "शेषे षष्ठी" इति संबन्धसामान्ये षष्ठीस्मरणात्॥**

**म० प्र०**—नन्वेवमपि प्रजापतिविशेषः कश्चिज्जीव एव सर्वज्ञत्वादिविशेषणवान्स्यादित्याशङ्क्याह—**यस्य ज्ञानमयं तप इति।** यस्य=भगवतः ज्ञानमयं=सत्त्वप्रधानमायायाः सृज्यमानसर्वपदार्थविषयकज्ञानाख्यविकार एव तपः न तु प्रजापतीनामिव क्लेशरूपं तस्माद्यथोक्तसर्वज्ञत्वादिविशिष्टादेतद्ब्रह्म=कार्यलक्षणहिरण्यगर्भाख्यं ब्रह्म नाम=देवदत्तयज्ञदत्तादिलक्षणं रूपं=शुक्लादिस्वरूपं तदन्यभिव्यक्तं "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्॥" इति पूर्ववाक्येऽन्नपदवेदनीयाव्यक्तनामरूपसृष्टेरभिधानात्। अन्नं च—यवव्रीह्यादिलक्षणम्। जायते=उत्पद्यते।ब्रह्मादीनामुत्पत्तिक्रमोऽन्नात्प्राण इत्यादिपूर्वमन्त्रोक्त एव द्रष्टव्यः। "यः कालकालो गुणी सर्वविद्यः" इत्यादिश्रुतय आदिपदेन ग्राह्या इत्यर्थः। ब्रह्मण्यनुमानादिप्रमाणं कथयित्वा लक्षणाभावभ्रमं निवारयति—**नापीति। नामेति।** सर्जनरूपसृष्टिकर्तृत्वं ब्रह्मणो लक्षणमित्युक्ते ब्रह्मणः स्वनिष्ठजन्यतानिरूपितजनकत्वाभावादसंभवः स्यादतो रूपेत्युक्तम्। रूपसृष्टिकर्तृत्वमित्युक्ते नाम्नः कर्तृत्वं ब्रह्मणोऽन्यस्य स्यात्तथा च सिद्धान्तहानिरतो नामेत्युक्तमिति पदयोः साफल्यमिति। ननु जीवानामपि यत्किंचिन्नामरूपकर्तृत्वस्य सत्त्वेन तत्रातिव्याप्तिरित्याशङ्क्य द्वितीयलक्षणमाह—**नामरूपात्मकेति।** अध्यासाधिष्ठानत्वमित्युक्ते ब्रह्मणः स्वान्याध्यासाधिष्ठानत्वेऽपि स्वाध्यासाधिष्ठानत्वाभावेन सामान्यतोऽध्यासाधिष्ठानत्वरूपलक्षणस्यासंभववारणाय प्रपञ्चेत्युक्तम्। प्रपञ्चशब्दस्य समुदायार्थकत्वेन ब्रह्मणोऽपि तदन्तःपातित्वात्पुनरसंभववारणाय 'नामरूपात्मकेति' प्रपञ्चविशेषणमिति। नन्वेवमपि शुक्त्यादीदमंशावच्छिन्नचैतन्यानामपि यत्किंचिन्नामरूपात्मकप्रपञ्चाध्यासाधिष्ठानत्वेनोक्तलक्षणस्य तत्रातिव्याप्तिरित्यरुच्या लक्षणान्तरमाह—**तदाकारेणेति।** निखिलनामरूपात्मकप्रपञ्चाकारेणेत्यर्थः। यद्यपि मायाध्यासाधिष्ठानत्वमित्येव लक्षणं संभवति तथापि ब्रह्मणो मायाध्यासाधिष्ठानत्वस्य सार्वदिकत्वेनोक्तलक्षणस्य स्वरूपलक्षणत्वभ्रमवारणाय नामरूपात्मकप्रपञ्चस्य ब्रह्मान्याधिष्ठानकत्वभ्रमवारणाय च तदाकारेण परिणममानेत्युक्तमिति॥

**शि० म०—तद्विशेषलाभस्त्वर्थात्। अन्यथा निर्विशेषसामान्यव्यवहारानुपपत्तेः। स च विवरणाचार्य्यमते आश्रयाश्रयिभावः। आचार्य्यवाचस्पतिमते विषयविषयिभावः। यद्वा 'यस्येति कर्मणि षष्ठी' तत्रापि तद्विधानात्। शङ्करभगवत्पादैरपि ब्रह्मजिज्ञासेत्यत्र ब्रह्मण इति कर्मणि षष्ठीत्यभिधानात्। तद्विषयत्वं चोभयसाधारणम्॥**

**म० प्र०**—ननु षष्ठ्या संबन्धसामान्यलाभेऽपि संबन्धविशेषलाभः कथमित्याशङ्क्याह—**तद्विशेषेति।** षष्ठ्यर्थसंबन्धसामान्यस्य संबन्धविशेषघटितत्वेन विशेषसंबन्धं विनाऽनुपपद्यमानत्वरूपार्थापत्तिप्रमाणात्संबन्धविशेषज्ञानं भवतीत्यर्थः। षष्ठ्यर्थसंबन्धसामान्यं विशेषसंबन्धं विनाऽनुपपद्यमानं विशेषसंबन्धं कल्पयतीति भावः। षष्ठ्यर्थसंबन्धसामान्यघटकीभूतसंबन्धविशेषानङ्गीकारे बाधकमाह—**अन्यथेति।** षष्ठ्यर्थसंबन्धसामान्यघटकीभूतसंबन्धविशेषानङ्गीकारे निर्विशेषसामान्यव्यवहारानुपपत्तेः=निर्गतो=निवृत्तो विशेषो=विशेषसंबन्धो यस्मिन्षष्ठ्यर्थसंबन्धसामान्ये तत्तथा निर्विशेषं

च तत्सामान्यं च निर्विशेषसामान्यं तस्मिन्विशेषसबन्धाघटितषष्ठ्यर्थसंबन्धसामान्ये यदविद्येत्यत्र षष्ठ्यर्थसंबन्धः क इति त्वां प्रति कस्यचित्प्रश्ने सत्यत्राश्रयाश्रयिभावरूपो विषयविषयिभावरूपो वा षष्ठ्यर्थसंबन्ध इति समाधानात्मकशब्दस्वरूपव्यवहारानुपपत्तेः। यद्वा निर्विशेषे विशेषशून्ये विशेषाघटिते निर्विशेषं न सामान्यमित्याकारको यः सामान्यप्रतियोगिकभेदविषयकव्यवहारस्तदनुपपत्तेरित्यर्थः। **स चेति।** षष्ठ्यर्थसंबन्धसामान्यघटकीभूतसंबन्धविशेष एवेत्यर्थः। अर्थापत्त्यादिप्रमाणकल्पनागौरवमभिप्रेत्याह—**यद्वेति।** तत्रापि=कर्मण्यपि तद्विधानात्=“कर्तृकर्मणोः कृति” इति सूत्रेण षष्ठीविधानात्। नन्वेवं विवरणाचार्य्यस्य ब्रह्माविद्ययोराश्रयाश्रयिभावस्वरूपसंबन्धस्याभिमतत्वेन विवरणाचार्य्यमते ब्रह्माविद्ययोर्विषयविषयिभावरूपसंबन्धो न सिध्येदित्याशङ्क्याह—**तद्विषयत्वं चेति**—ब्रह्मणोऽविद्याविषयत्वं चोभयसाधारणम्=उभयोर्विवरणाचार्य्याचार्यवाचस्पत्योरङ्गीकृतमित्यर्थः। तथा च विवरणाचार्य्यस्य ब्रह्माविद्ययोराश्रयाश्रयिभावरूपसंबन्धाभिधानस्याविद्याया जीव एवाश्रयो ब्रह्म तु विषय एवेत्याचार्य्यवाचस्पत्यभिमताविद्याया भिन्नाश्रयविषयकत्वनिरासतात्पर्य्यकत्वेन ब्रह्माविद्ययोर्विषयविषयिभावनिरासे तात्पर्य्याभावेन विवरणाचार्य्यमतेऽप्यविद्याया ब्रह्मविषयकत्वसत्त्वेन ब्रह्मणोऽविद्याविषयत्वमुभयमततुल्यमिति भावः ॥

**शि० म०—अविद्या नाम विद्यानिवर्त्या अनिर्वचनीया अनादिभावरूपेति वक्ष्यते। तद्विलासश्च तज्जनितवृत्तिविशेषः, परमेश्वरस्येक्षणसंकल्पप्रयत्नरूपः “तदैक्षत, सोऽकामयत, तन्मनोऽकुरुत” इत्यादिश्रुतिसिद्धः तेन सहकारिणा भूतानि पञ्च सूक्ष्माण्यपञ्चीकृतानि वियदादीनि भौतिकानि च तदुपादानानि पञ्चीकृतानि परिदृश्यमानपृथिव्यादीनि तेषां सृष्टयो भवन्तीत्यध्याहारः। अत्र भूतभौतिकग्रहणं नामरूपमात्रोपलक्षणार्थं सृष्टिग्रहणं च स्थितिप्रलयोपलक्षणार्थम्। अन्यथा शब्दप्रपञ्चस्य स्थितिप्रलययोश्चाग्रहणे ब्रह्मणोऽद्वितीयत्वासिद्धिप्रसङ्गः। एवं प्रमाणं तटस्थलक्षणं च प्रदर्श्य स्वरूपलक्षणमाह—सदिति। यद्यपि सदादि प्रत्येकं लक्षणं तथापि प्रयोजनसूचनार्थमानन्दग्रहणम्। न चैवं चित्पदं व्यर्थम्, आनन्दस्य पुरुषार्थत्वद्योतनाय तदुपादानात् ॥**

**म० प्र०**—ननूक्तप्रकारेण ब्रह्मणो लक्षणप्रमाणसिद्धत्वेऽप्यविद्याया लक्षणाभावेन कथं तयोर्विषयविषयिभावादिरूपसंबन्धकल्पनेत्याशङ्क्याह—**अविद्या नामेति।** भावरूपाऽविद्या इत्युक्ते घटादावतिव्याप्तिः स्यात्तद्वारणायानादीति। अनादिभावरूपाऽविद्येत्युक्ते आत्मन्यतिव्याप्तिः स्यादतोऽनिर्वचनीयेति। अविद्यासंबन्धेऽतिव्याप्तिवारणाय विद्यानिवर्त्त्येति। न चाविद्यासंबन्धस्यापि विद्यानिवर्त्यत्वादेः सत्त्वादविद्यासंबन्धेऽतिव्याप्तिः स्यादिति वाच्यम्। साक्षादित्यस्यापि निवेशादिति। **ईक्षणेति।** ईक्षणं=स्रष्टव्योत्पत्त्यनुकूलस्रष्टव्यविषयकदर्शनम्, संकल्पः=सर्जनानुकूलेच्छात्मकः, प्रयत्नः=सर्जनानुकूलकृतिरित्यर्थः। तत्=सदाख्यं ब्रह्म, ऐक्षत=स्रष्टव्योत्पत्त्यनुकूलस्रष्टव्याविषयकदर्शनं कृतवत्। सः=परमात्मा, अकामयत सूक्ष्मशरीरापेक्षया द्वितीयं मम स्थूल-

शरीरं जायेतेतीच्छां कृतवान् । तत्=स्रष्टव्यालोचनक्षमम्, मनः=मनःपदवाच्यं संकल्पादिलक्षणमकुरुत=मायाविशिष्टपरमात्मा कृतवानित्यर्थः । तदुपादानानि=अपञ्चीकृतभूतोपादानकानि । अत्र=यदविद्येत्यादिश्लोके, भूतभौतिकग्रहणम्=भूतभौतिकयोर्भूतभौतिकरूपार्थयोर्ग्रहणं=ज्ञानं यस्माद्भूतभौतिकपदात्तद्भूतभौतिकग्रहणमिति समासेन भूतभौतिकपदं नामरूपमात्रोपलक्षणार्थं लक्षणया वृत्त्या सकलनामरूपज्ञापनार्थं सृष्टिग्रहणं=सृष्टिपदं स्थितिप्रलयोपलक्षणार्थं=लक्षणया स्थितिप्रलययोर्ज्ञापनार्थम् । ननु यथाश्रुते प्रमाणान्तरविरोधाभावाद्भूतभौतिकादिशब्देन लक्षणया निखिलनामरूपादीनां ज्ञापनमयुक्तमित्याशङ्क्याह—**अन्यथेति** । भूतभौतिकशब्दस्य लक्षणया निखिलनामरूपज्ञापनार्थकत्वानङ्गीकारे सृष्टिपदस्य च लक्षणया स्थितिप्रलयज्ञापनार्थकत्वानङ्गीकारे चेत्यर्थः । ननु सदादिपदानां लक्षणया सत्यादिरूपैकब्रह्मबोधकत्वात्पौनरुक्त्यमित्याशङ्क्याह—**यद्यपीति** । एवम्=उक्तप्रकारेणानन्दसाफल्येऽपि । तदुपादानात्=चित्पदस्वीकारात् ॥

**शि० म०—ज्ञायमानानन्दस्यैव पुरुषार्थत्वात् । न चाहं जानामि सुखीत्यादिप्रत्यक्षविरोधात् "आनन्दं ब्रह्मणः" इति श्रुतिविरोधाच्च न ज्ञानादिरूपं ब्रह्मेति वाच्यम् । "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" "आनन्दो ब्रह्म" इत्यादिश्रुतेः ब्रह्मणः सच्चिदानन्दात्मकताऽवगमेन 'राहोः शिरः' 'आत्मनश्चैतन्यम्' इतिवद्भेदश्रुतिप्रत्यक्षयोरुपचरितार्थत्वात् ॥ १ ॥**

**म० प्र०**—ननु चित्पदोपादानेन कथमानन्दस्य पुरुषार्थत्वद्योतनं भवतीत्याशङ्क्याह—**ज्ञायमानेति** । न च चेतनरूपज्ञानेन चेतनरूपानन्दस्य ज्ञायमानत्वानुपपन्नत्वेनाज्ञायमानानन्दप्रसक्त्या च "ज्ञायमानानन्दस्यैव पुरुषार्थत्वात्" इत्युक्तिरयुक्तेति वाच्यम् । ज्ञायमानानन्दस्येत्यनेनापरोक्षत्वप्रकारकव्यवहारयोग्यसुखस्यैव विवक्षितत्वादुक्तव्यवहारयोग्यत्वं चानावृतचिद्रूपत्वेनानावृतचित्तादात्म्येन वेति ज्ञापनार्थत्वेन ज्ञायमाननान्दस्यैव पुरुषार्थत्वादित्युक्तेः सार्थक्यमिति । ननु ज्ञानानन्दाभ्यां ब्रह्मणो भेदस्य ब्रह्म न ज्ञानानन्दमित्याकारकप्रत्यक्षादिसिद्धत्वेन कथं ज्ञानानन्दाभ्यां ब्रह्मणोऽभेद इत्याशङ्क्य ब्रह्मणो ज्ञानानन्दाभ्यां भेदं निराकरोति—**न चेति । सच्चिदानन्दात्मकत्वावगमेनेति** । न च सत्यं ज्ञानमित्यादौ ज्ञानपदस्य "यः सर्वज्ञः" इत्यादिश्रुत्यनुरोधाज्जानातीति ज्ञानमिति कर्तृल्युडन्तत्वाङ्गीकारेण मत्वर्थीयार्शआद्यच्प्रत्ययान्तत्वेन वा ज्ञानपदेन ज्ञानाश्रय एवोक्तः । एवमानन्दमित्यस्याप्यानन्दोऽस्यास्तीत्यानन्दमिति मत्वर्थीयाच्प्रत्ययान्तत्वेनानन्दवदित्यर्थोऽन्यथाऽऽनन्दशब्दस्य नियतपुंस्त्वेन नपुंसकत्वानापत्तेरिति कथं ब्रह्मणो ज्ञानानन्दाभ्यां भेदाभाव इति वाच्यम् । "यः सर्वज्ञः" इत्यादिश्रुतेर्मायावृत्त्यात्मकसर्वविषयकज्ञानपरत्वेनाप्युपपत्त्या "केवलो निर्गुणः" इत्यादिश्रुत्यनुरोधेन ज्ञप्तिर्ज्ञानमिति ज्ञानशब्दस्य भावल्युडन्तत्वस्यैवाश्रयणादानन्दशब्दे क्लीबतायाः छान्दसत्वेनाप्युपपत्तेर्गुणगुणिभावसंपादकसमवायसंबन्धस्यासंभवाच्चेति । भेदश्रुतिप्रत्यक्षयोः=भेदविषयकोक्तश्रुतिप्रत्यक्षयोः उपचरितार्थत्वात्=उपचरित=आरोपितोऽर्थो भेदरूपो विषयो ययोस्तौ तथा तयोर्भावस्तत्त्वं तस्मात् कल्पितभेदस्वरूपार्थविषयकत्वादिति यावत् ॥ १ ॥

यदन्तेवासिपश्चास्यैर्निरस्ता भेदिवारणाः ।
तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम् ॥ २ ॥
श्रीमद्वेङ्कटनाथाख्यान् वेलाङ्गुडिनिवासिनः ।
जगद्गुरूनहं वन्दे सर्वतन्त्रप्रवर्तकान् ॥ ३ ॥

शि० म०—"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥"

इति सुबालोपनिषच्छ्रुत्या गुरुनमस्कारः कर्तव्यत्वेन समधिगतः । तत्र परमगुरून् नमस्कृत्य साक्षाद्विद्यागुरूनाचार्यान् प्रणमति—यदन्तेवासिपश्चास्यैः इत्यादि-द्वाभ्याम् ॥ २ ॥ ३ ॥

म० प्र०—प्रकाशन्ते=अपरोक्षा भवन्ति । **तत्रेति**=गुरुनमस्कारादिरूपभक्तेः कर्तव्यत्वेन समधिगतत्वे सतीत्यर्थः । परममूले **यदन्ते इति**। अन्ते=समीपे विद्याप्राप्त्याकाङ्क्षया वस्तुं शीलं येषां तेऽन्तेवासिनः=शिष्या यस्यान्तेवासिनो यदन्तेवासिनस्त एव पञ्चास्याः=सिंहाः अभयत्वातिरस्कृतत्वादिधर्मेण सिंहसदृशास्ते तथा तैर्यदन्तेवासिपञ्चास्यैर्वारणा=गजा निरस्ताः= ध्वस्ताः । ननु शिष्याणां भिक्षाचर्याद्यनुष्ठानेन कृशत्वात्कथं प्रसिद्धगजध्वंसकत्वमित्याशङ्क्य नात्र वारणपदेन प्रसिद्धगजग्रहणं किंतु भेदवादिनां गजसदृशानां ग्रहणमित्यभिप्रेत्याह—**भेदीति** । भेदवादिरूपेत्यर्थः । तं=पूर्वोक्तयच्छब्दवाच्यं यतीनां=यत्नशीलानां परमहंसपरिव्राजकानामिन्द्रं स्वामिनं नृसिंहसंज्ञकं परमं गुरुं गुरोर्गुरुं प्रणौमि=प्रकर्षेण=मनोवाक्कायप्रणिधानेन नौमि=नमस्करोमीत्यर्थः ॥ २ ॥ ३ ॥

येन चिन्तामणौ टीका दशटीकाविभञ्जिनी ।
तर्कचूडामणिर्नाम कृता विद्वन्मनोरमा ॥ ४ ॥

शि० म०—चिकीर्षितस्य ग्रन्थस्योपादेयतासिद्धये स्वकीर्त्यनुवृत्तये च स्वस्य नानाविधग्रन्थकर्तृतामाह—येनेति ॥ ४ ॥

म० प्र०—परममूले **येनेति** । येन=धर्मराजाध्वरीन्द्रेण दशटीकाविभञ्जिनी चिन्तामणिव्याख्यानभूतानां दशटीकानां दूषणबोधिका विद्वन्मनोरमा प्रेक्षावच्चित्ताह्लादकरा चिन्तामणौ टीका कृता । तेन धर्मराजाध्वरीन्द्रेण परिभाषा वितन्यते=क्रियत इत्यन्वयः ॥ ४ ॥

तेन बोधाय मन्दानां वेदान्तार्थावलम्बिनी ।
धर्मराजाध्वरीन्द्रेण परिभाषा वितन्यते ॥ ५ ॥

शि० म०—ननु मोक्षसाधनब्रह्मज्ञानस्य शारीरकमीमांसाश्रवणसाध्यत्वेन तत्रैव प्रेक्षावतां प्रवृत्त्युपपत्तेर्नैतद्ग्रन्थारम्भ इत्याशङ्क्य मेधाविनामातिविततगहन-गम्भीरेषु सूत्रभाष्यादिषु आदावेव प्रवृत्तिसम्भवेऽपि मन्दाधियां तत्र प्रवृत्त्यनुपपत्ते-स्तदनुग्रहार्थमेतद्ग्रन्थारम्भ इत्याह—तेनेति । तेन=धर्मराजाध्वरीन्द्रेण बोधाय=ब्रह्म-

बोधाय । स एव कुत इत्यत आह–**वेदान्तार्थावलम्बिनीति** । यद्यपि प्रमाणमालादौ संक्षेपतो वेदान्तार्थनिरूपणात्तेनापि मन्दानुग्रहस्तथापि न सर्वस्य वेदान्तशास्त्रार्थस्य प्रतिपादनं तत्रेति ध्येयम् ॥ ९ ॥

म० प्र०–एतद्ग्रन्थारम्भाभावे हेतुमाह–**तत्रैवेति** । शारीरकमीमांसायामेवेत्यर्थः। शारीरकमीमांसायामेव प्रवृत्त्युपपत्तौ हेतुमाह–**मोक्षसाधनेत्यादिना**। मन्दधियामनुग्रहार्थैतद्ग्रन्थारम्भे हेतुमाह–**मेधाविनामिति** । अतिविततत्वं=शब्दतो विस्तृतत्वम्, गहनत्वं=दुष्प्रवेशार्थकत्वम्, गम्भीरत्वम्=अतलस्पर्शत्वम्, अयमेवार्थस्तस्य नान्य इतीयत्ताबुद्धिविषयताशून्यत्वमिति तदर्थभेद इति । आदावेव=एतद्ग्रन्थाध्ययनात्पूर्वमेव, तत्र=सूत्रभाष्यादिषु, तदनुग्रहार्थं=मन्दबुद्ध्यनुग्रहार्थम् । तेनापि=प्रमाणमालादिनापि, तत्र=प्रमाणमालादौ ॥ ९ ॥

**इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः"न स पुनरावर्तते" इत्यादिश्रुत्या तस्य नित्यत्वावधारणात् ॥**

शि०म०–स्वकीयग्रन्थस्य निःश्रेयसप्रयोजनवच्छारीरकमीमांसया संगतिं दर्शयितुं करिष्यमाणप्रमाणनिरूपणस्य परम्परया निःश्रेयसोपयोगं दर्शयन् शास्त्रस्य प्रथमं तत्साधनतां साधयति–**इहेत्यादिना** । स चेत्यत्र वेदान्तविचारसाध्यादित्यध्याहारः । तथा च वेदान्तविचारसाध्याद्ब्रह्मज्ञानान्मोक्ष एव भवतीति प्रथमं संबन्धः । मोक्षस्य विचारफलत्वे हेतुमाह–**पुरुषार्थ इति**। पुरुषेण वेदान्तश्रवणाधिकारिणाऽर्थ्यमान इत्यर्थः । तथा च काम्यमानानिषिद्धाधिकारिविशेषणत्वान्मोक्षस्य तत्फलतेति भावः । अत्रैव कामनायां विनिगमकमाह–**परमेति** । नित्येत्यर्थः । परमते वियदादेरपि नित्यत्वात्सिद्धान्ते जीवाविद्यादेरनादित्वान्मोक्ष एवेति एवकारे तद्व्यवच्छेदाशङ्कां निराकर्तुं धर्मार्थकाममोक्षाख्येष्वित्युक्तम् । ननु मोक्षस्य विचारफलत्ववन्नित्यत्वमपि संदिग्धमित्याशङ्क्य तन्नित्यत्वस्य लोके प्रसिद्धत्वादित्याह–**इह खलु इति** । न च तत्प्रसिद्धिरपि देहात्मप्रसिद्धिवन्निर्मूलत्वादप्रमाणं श्रुतिमूलत्वादित्याह–**न स पुनरिति**। मुक्तो न पुनः संसारी भवतीत्यर्थः ॥

म०प्र०–संगतिं=शारीरकमीमांसाया यन्निःश्रेयसरूपं परमप्रयोजनं तदेव स्वकीयग्रन्थस्यापीत्येककार्य्यकारित्वरूपसंगतिम्। **दर्शयितुमिति**। एककार्य्यकारित्वरूपसंगतिविषयकदर्शनानुकूलव्यापारविषयकेच्छावानित्यर्थः । अस्य साधयतीत्यनेनान्वयः । न च "प्रयोजनं विना मन्दोऽपि न प्रवर्तते" इति न्यायेन स्वकीयग्रन्थस्य निःश्रेयसप्रयोजनवच्छारीरकमीमांसया सहैककार्य्यकारित्वरूपसंगतिविषयकदर्शनानुकूलव्यापारविषयकेच्छा व्यर्थेति वाच्यम् । निःश्रेयसप्रयोजनवच्छारीरकमीमांसया सह संगतिप्रदर्शनस्य स्वकीयग्रन्थे प्रयोजनरूपोऽनुबन्धोऽस्तीति प्रदर्शनार्थकत्वात् । न च ज्ञानद्वारा तत्त्वमस्यादिवाक्यानामेव परमनिःश्रेयसप्रयोजनकत्वाच्छारीरकमीमांसायाः परमनिःश्रेयसरूपप्रयोजनवत्त्वस्यैवासिद्धत्वात्कथ परमनिःश्रेयसरूपप्रयोजनवच्छारीरकमी मांसया सहैककार्य्य-

कारित्वरूपसंगतिप्रदर्शनेन स्वकीयग्रन्थस्य प्रयोजनरूपानुबन्धत्वं बोध्यते इति वाच्यम्। यथा प्रधानयागस्य यत्स्वर्गरूपं फलं तदेव प्रयाजाद्यङ्गानां तथा प्रधानस्य तत्त्वमस्यादिवाक्यस्य ज्ञानद्वारा यत्परमनिःश्रेयसरूपं फलं तदेव फलं तत्त्वमस्यादिमहावाक्याङ्गभूतशारीरकमीमांसाया अपीति प्रधानफलेनैवाङ्गानां फलवत्त्वादिति। ननु शारीरकमीमांसायाः प्रधानतत्त्वमस्यादिमहावाक्योपकारकत्वेन परमनिःश्रेयसप्रयोजनकत्वेऽपि त्वत्प्रणीतग्रन्थस्य प्रधानतत्त्वमस्यादिमहावाक्योपकारकत्वाभावान्न परमनिःश्रेयसप्रयोजनकत्वमित्याशङ्क्य शारीरकमीमांसावदेतस्यापि प्रधानोपकारकत्वमभिप्रेत्याह—**करिष्यमाणेति**। करिष्यमाणं प्रमाणनिरूपणं यस्मिन् ग्रन्थे स तथा तस्य प्रमाणनिरूपणाधिकरणग्रन्थस्येत्यर्थः। **परम्परयेति**=मोक्षतत्त्वज्ञानप्रपञ्चमिथ्यात्वशास्त्रप्रतिपाद्यब्रह्मप्रतिपादनद्वारा स्वकीयग्रन्थस्य प्रधानतत्त्वमस्यादिमहावाक्योपकारकत्वरूपपरम्परयेत्यर्थः। उपयोगं संबन्धम् शास्त्रस्य=शारीरकमीमांसारूपशास्त्रस्य तत्साधनतां=ज्ञानद्वारा मोक्षकारणताम्। ननु मूले शास्त्रस्य ज्ञानद्वाराऽपि मोक्षसाधनत्वं न प्रतीयत इत्यत आह—**स चेत्यत्रेति**। इत्यत ऊर्द्ध्वमित्यर्थः। **तथा चेति**=वेदान्तविचारसाध्यादित्यस्याध्याहारे कृते सतीत्यर्थः। यत्र वेदादिविहितयज्ञादिकर्माधिकारिविशेषणत्वं तत्र वेदादिविहितयज्ञादिकर्मसाध्यत्वमिति व्याप्तेः स्वर्गादौ दृष्टत्वेन वेदान्तविचाराधिकारिपुरुषेणार्थ्यमानत्वान्मोक्षस्यापि वेदान्तविचाराधिकारिपुरुषविशेषणत्वेन वेदान्तविचारसाध्यत्वमित्यभिप्रेत्याह—**मोक्षस्येति**। विचारफलत्वे=ज्ञानद्वारा विचारसाध्यत्वे। **तथा चेति**। मोक्षस्य वेदान्तश्रवणाधिकारिपुरुषेणार्थ्यमानत्वे सतीत्यर्थः। **काम्यमानेति**। काम्यमानं च तदनिषिद्धं च काम्यमानानिषिद्धं काम्यमानानिषिद्धं च तदधिकारिविशेषणं च काम्यमानानिषिद्धाधिकारिविशेषणं तस्य भावस्तत्त्वमिति समासस्तथा च काम्यमानत्वे सत्यनिषिद्धत्वे च सत्यधिकारिव्यावर्तकत्वादित्यर्थः। अनिषिद्धाधिकारिविशेषणत्वादित्युक्ते दुःखनिवृत्तिकामवेदादिविहितदुःखनिवृत्तिसाधनयज्ञादिकर्माधिकारिपुरुषनिष्ठवर्तमानदुःखेऽनिषिद्धत्वे सत्यधिकारिविशेषणत्वस्य सत्त्वेन वेदादिविहितेन साध्यत्वरूपसाध्याभावेन च दुःखे व्यभिचारवारणाय काम्यमानाधिकारिविशेषणत्वादित्युक्ते ब्राह्मणहननपापादिनिवृत्तिकामवेदादिविहितप्रायश्चित्तरूपकर्माधिकारिपुरुषविशेषणत्वेनाधिकारिपुरुषविशेषणब्राह्मणहननादौ व्यभिचारवारणायानिषिद्धेति। काम्यमानानिषिद्धत्वादित्युक्ते निष्ठीवनादौ व्यभिचारवारणायाधिकारिविशेषणेत्युक्तमिति। **तत्फलतेति**=ज्ञानद्वारा विचारफलतेत्यर्थः। यत्र काम्यमानत्वे सत्यनिषिद्धत्वे च सत्यधिकारिविशेषणत्वं तत्र वेदविहितेन साध्यत्वमिति व्याप्तेर्मोक्षस्याधिकारिविशेषणत्वादमृतत्वकामेन वेदान्तविचारः कर्तव्य इत्यर्थकं "श्रोतव्यः" "अथातो ब्रह्मजिज्ञासा" इत्यादिशास्त्रविहितेन विचारेण साध्यत्वमिति भावः। अत्रैव=मोक्षे एव। येषामाकाशादिषु पुरुषार्थत्वभ्रान्तिस्तेषामभिप्रायेणाह—**परमते इति**। **तद्व्यवच्छेदेति**=आकाशादिव्यावृत्तीत्यर्थः। नित्यत्वादाकाशादीनां पुमर्थत्वं प्रसक्तं तेषां व्यावृत्त्यर्थमेवकार इति न भ्रमितव्यम्। येषां धर्मादीनां पुरुषार्थत्वेन प्रसिद्धिस्तद्व्यवच्छेदार्थकत्वादेवकारस्येति भावः। **मोक्षस्य विचारफलत्ववदिति**। यथा लोके विचारस्य जयविजयादिफलदर्शना-

=मोक्षस्य विचारफलत्वे सन्देहस्तद्वदित्यर्थः । **तत्प्रसिद्धिरिति**=मोक्षस्य नित्यत्वप्रतीतिरित्यर्थः । **अप्रमाणमिति**=अप्रमेत्यर्थः । तस्या अप्रमात्वे हेतुमाह—**निर्मूलत्वादिति**। परममूले **इहेति** । शास्त्रे वेदे चेत्यर्थः । खलु=प्रसिद्धेषु धर्मादिषु, धर्मः=वेदविहितयागादिस्तज्जन्यपुण्याख्यादृष्टविशेषो वा, अर्थः=धनम् कामः=पाणिगृहीतस्त्रीसंभोगादिरित्यर्थः ॥

**इतरेषां त्रयाणां तु प्रत्यक्षेण "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुत्या चानित्यत्वावगमाच्च । स च ब्रह्मज्ञानात् ॥**

शि० म०—ननु काम्यमानत्वं धर्मादीनामप्यविशिष्टम् । न चानित्यत्वात्ततो विरक्तिरेवास्येति वाच्यम्, तेषामपि पुरुषार्थत्वादिना नित्यत्वानुमानादित्याशङ्क्य वह्न्यनौष्ण्यानुमानवद्बाधितविषयं तदित्याह—**इतरेषामिति** । त्रयाणां मध्ये द्वयोरर्थकामयोः प्रत्यक्षेणानित्यत्वावगमादित्यर्थः । अन्यथा धर्मस्यातीन्द्रियत्वेन त्रयाणां प्रत्यक्षेणानित्यत्वावगमादित्यनुपपत्तेः । यद्वा प्रत्यक्षेण प्रत्यक्षादिसिद्धेन कार्यत्वलिङ्गेनेत्यर्थः । तथा च कार्यत्वलिङ्गकानित्यत्वानुमानबाधितं त्रयाणां नित्यत्वानुमानमिति भावः । नन्वनुमानयोः समबलत्वान्न नित्यत्वबाध इत्याशङ्क्य श्रुतिमूलत्वात्प्रबलमनित्यत्वानुमानमित्याह—**तद्यथेति** । इह अस्मिन् लोके धर्माधर्मकर्मनिर्मितो लोक्यते इति लोको=घटादिर्यथा क्षीयते तथा लोकान्तरे पुण्यनिर्मितो लोकः स्वर्गादिर्नश्यतीत्यर्थः । ननु "अपाम सोममसृता अभूम" "अगन्म ज्योतिरविदाम देवान्" "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिश्रुत्या स्वर्गादेरपि नित्यत्वमवगम्यत इति चेन्न । यत्कृतकं तदनित्यमिति सामान्यतो दृष्टानुमानानुगृहीतं तद्यथेत्यादिश्रुतिविरोधेनाक्षय्यमित्यादिश्रुतेः प्रलयपर्यन्तस्थायिफलाभिप्रायत्वात् ॥

म० प्र०--अविशिष्टं=समानम् ततः=धर्मादिभ्यः, अस्य=मुमुक्षोः, तेषामपि=धर्मादीनामपि । **अनुमानादिति**=" धर्मादयो नित्याः पुरुषार्थत्वान्मोक्षवत् " इत्यनुमानादित्यर्थः । **तदिति**=धर्मादिषु नित्यत्वानुमानमित्यर्थः । अन्यथा=उक्तार्थानङ्गीकारे । **अनुमानेति**="धर्मादयोऽनित्याः कार्यत्वात् घटवत्" इत्यनुमानेत्यर्थः । **अपामेति** । अगन्मेत्यत्र वर्णव्यत्ययः छान्दसस्तथा चागमन्नित्यर्थः । अत्र "सोमं पीत्वाऽमृता भविष्यामस्तथा प्रकाशवन्मार्गं गत्वा देवादीन् प्राप्स्यामः" इति च वक्तव्ये भविष्यति फलादौ भूतप्रयोगः फलादेरसंदिग्धत्वज्ञापनायेति बोध्यमिति । **इति सामान्यतो दृष्टानुमानेति** " यत्कृतकं तदनित्यम् " इति वाक्यबोधितान्वयव्यतिरेक्यनुमानेत्यर्थः ॥

**इति ब्रह्म तज्ज्ञानं तत्प्रमाणं च सप्रपञ्चं निरूप्यते ॥**

शि० म०—नन्वस्तु वेदान्तविचारस्य ब्रह्मज्ञानद्वारा निःश्रेयसहेतुत्वं तथापि प्रमाणनिरूपणस्य तदुपयोगाभावान्न शास्त्रसंगतिरित्याशङ्क्य यतः शास्त्रप्रतिपाद्यं ब्रह्म

तत्प्रयोजनं च मोक्षसाधनब्रह्मज्ञानं च प्रमाणाधीनमतः परम्परया निःश्रेयसोपयोगीति प्रमाणनिरूपणं शास्त्रसंगतमित्यभिप्रायेण तन्निरूपणं शिष्यावधानाय प्रतिजानीते-इति ब्रह्मेति। तर्हि तत्प्रमाणनिरूपणमेव तदुपयोगित्वाच्छास्त्रसङ्गतं स्यादित्याशङ्क्य प्रमाणनिरूपणस्य प्रमाणसामान्यलक्षणप्रमाणेयत्तादिसापेक्षत्वात्तन्निरूपणमपि तत्परिकरत्वाच्छास्त्रसंगतमित्याह-सप्रपञ्चमिति। न च सप्रपञ्चतत्प्रमाणनिरूपणस्यैव प्रतिज्ञातत्वे सति विषयप्रयोजनयोरुत्तरत्र निरूपणमसंगतं स्यात्तयोरप्रतिज्ञातत्वादिति वाच्यम्। कृतस्य प्रमाणनिरूपणस्य शास्त्रविषयप्रयोजनोपयोगं दर्शयितुं प्रासङ्गिकतन्निरूपणसंभवात्। अत एव चिन्तामणौ प्रमाणतत्त्वप्रतिज्ञायामपि मोक्षेश्वरादिनिरूपणम् यद्वा सप्रपञ्चत्वं त्रितयविशेषणं तथा च जगदुपादानत्वसच्चिदानन्दात्मकत्वजीवाभिन्नत्वलक्षणपरिकरोपेतं ब्रह्म तज्ज्ञानं च वेदान्तजन्यत्वस्वप्रकाशकर्मनिरपेक्षमोक्षसाधनत्वादिलक्षणप्रपञ्चोपलक्षितं तत्प्रमाणमपि प्रमाणान्तरागृहीतासिद्धब्रह्मविषयापरोक्षज्ञानजनकवेदान्तत्वादिरूपपरिकरोपेतं निरूप्यत इत्यर्थः। यद्यपि प्रपञ्चशब्दान्निर्गुणत्वजीवाभेदस्वप्रकाशत्वसिद्धबोधिवेदान्तत्वादीनामेव परिकरत्वेन निर्देशे सगुणत्वजीवभेदपरप्रकाशत्वचक्षुरनुमानादीनामप्रतिज्ञाऽऽपत्तिः तथापि धर्माभासचैत्यवन्दनादिवन्निराकर्तव्यतया परिकरत्वोपपत्तिरिति द्रष्टव्यम् ॥

म० प्र०-**तथापीति**। वेदान्तविचारस्य ब्रह्मज्ञानद्वारा निःश्रेयसहेतुत्वेऽपीत्यर्थः। तदुपयोगाभावात्=निःश्रेयसे संबधाभावात्। इत्याशङ्क्येत्यभिप्रायेण तन्निरूपणं प्रतिजानीते इत्यन्वयः। अभिप्रायमेवाह-**इतीति**। अस्मादेव हेतोरित्यर्थः। हेतुमेव स्फुटीकरोति-**परम्परयेति**। शास्त्रप्रतिपाद्यब्रह्मादिप्रतिपादनरूपपरम्परयेत्यर्थः। **निःश्रेयसोपयोगीति**। प्रमाणनिरूपणमिति शेषः। प्रमाणनिरूपणस्य निःश्रेयसोपयोगित्वमेव कुत इत्याशङ्क्याह-**अत इति**। शास्त्रप्रतिपाद्यब्रह्मादीनां प्रमाणाधीनत्वादित्यर्थः। अतः शब्दार्थमेव स्फुटीकरोति-**यत इति**। यस्मात्कारणात्। शास्त्रप्रतिपाद्यब्रह्मादीनामज्ञातत्वरूपकारणादित्यर्थः। तन्निरूपणम्=प्रमाणनिरूपणम्। परममूले **इतीति**। मोक्षस्य ब्रह्मज्ञानसाध्यत्वरूपहेतोरित्यर्थः। **तर्हीति**। शास्त्रप्रतिपाद्यब्रह्मादीनां प्रमाणाधीनत्वेन शास्त्रप्रतिपाद्यब्रह्मादिप्रमाणनिरूपणस्य परम्परया निःश्रेयसोपयोगित्वात् शारीरकरूपशास्त्रसंगतत्वेऽपीत्यर्थः। **तत्प्रमाणनिरूपणमेवेति**। शास्त्रप्रतिपाद्यब्रह्मादिषु यत्प्रमाणं वेदान्तवाक्यादिरूपं प्रमाणं तन्निरूपणमेव शास्त्रसंगतं स्यान्न तु प्रमाणसामान्यलक्षणप्रमाणेयत्तादि शास्त्रसंगतमित्यर्थः। ब्रह्मादिप्रमाणनिरूपणस्य शास्त्रसंगतत्वे हेतुमाह-**तदुपयोगित्वादिति**। ब्रह्मादिप्रमाणनिरूपणस्य परम्परया निःश्रेयसे संबन्धादित्यर्थः। इत्याशङ्क्येत्याहेत्यन्वयः। इतिशब्दार्थमेवाह-**तन्निरूपणमिति**। प्रमाणसामान्यलक्षणादिनिरूपणमित्यर्थः। प्रमाणसामान्यलक्षणादिनिरूपणस्य शास्त्रसंगतत्वे हेतुमाह-**तत्परिकरत्वादिति**। प्रमाणसामान्यलक्षणादिनिरूपणस्य शास्त्रप्रतिपाद्यब्रह्मादि-

प्रमाणनिरूपणं प्रति कारणत्वादित्यर्थः। तस्य तत्परिकरत्वे हेतुमाह—**प्रमाणनिरूपणस्येत्यादिना**। शास्त्रप्रतिपाद्यब्रह्मादिप्रमाणनिरूपणस्येत्यर्थः। **तत्प्रमाणेति**=शास्त्रप्रतिपाद्यब्रह्मादिप्रमाणेत्यर्थः। **तयोरिति**=विषयप्रयोजनयोरित्यर्थः। **उपयोगं दर्शयितुमिति**। संबन्धविषयकबोधनेच्छावतेत्यर्थः। **प्रासङ्गिकेति**। प्रासङ्गिकयोः स्मृतयोस्तयोर्विषयप्रयोजनयोः प्रतिपादनस्योपपत्तेरित्यर्थः। **अत एवेति**। प्रासङ्गिकार्थनिरूपणस्यासंगतत्वासंभवादेवेत्यर्थः। चिन्तामणौ=गङ्गेशसंज्ञकोपाध्यायकृतचिन्तामण्याख्यग्रन्थे। **प्रमाणतत्त्वेति**। "तत्त्वं विलम्बिते नृत्ये स्वरूपे परमात्मनि" इति कोशात्, प्रत्यक्षादिप्रमाणस्वरूपेत्यर्थः। परिकरोपेतं=परिवारोपेतं ब्रह्मेत्यस्य निरूप्यत इत्यनेनान्वयः। **स्वप्रकाशेति**। स्वप्रकाशः=कर्मनिरपेक्षो यो ब्रह्मरूपो मोक्षस्तत्साधनत्वं तद्विषयकाज्ञाननिवृत्तिरूपप्राप्तिसाधनत्वमित्यर्थः। आदिपदेन संसर्गानवगाहित्वादीनां संग्रहः। उपलक्षितं=विशिष्टम्। अस्य तज्ज्ञानं चेत्यनेनान्वयः। वेदान्तत्वादीत्यादिपदेन संसर्गानवगाहिबोधजनकत्वादीनां संग्रहः। **स्वप्रकाशत्वेति**। स्वप्रकाशकर्मनिरपेक्षमोक्षसाधनत्वेत्यर्थः। अत्र निर्गुणत्वजीवाभेदरूपः प्रपञ्चो=ब्रह्मप्रपञ्चः। स्वप्रकाशत्वशब्दोक्तप्रपञ्चस्तु ज्ञानप्रपञ्चः। स्वप्रकाशत्वान्तो ब्रह्मप्रपञ्चो ज्ञानप्रपञ्चस्तु पूर्वोक्त एवेति वा सिद्धबोधिवेदान्तत्वादिरूपो ज्ञानकरणप्रपञ्च इति भेद इति विभावनीयमिति। **अप्रतिज्ञाऽऽपत्तिरिति**। तथा चात्मनिष्ठसगुणत्वादीनां निरूपणमसंगतमिति भावः। **चैत्यवन्दनादीति**। "चैत्यमायतने बुद्धवेद्ये चोद्देश्यपादपे" इति मेदिनीकोशादायतनादिवन्दनेत्यर्थः। **प्रमाणनिरूपणमिति**=प्रमाणत्वधर्मप्रकारकज्ञानानुकूलव्यापारमित्यर्थः॥

**तत्र प्रमाकरणं प्रमाणम्। तत्र स्मृतिव्यावृत्तं प्रमात्वम् अनधिगताबाधितार्थविषयकज्ञानत्वम्, स्मृतिसाधारणं त्वबाधितार्थविषयकज्ञानत्वम्॥**

**शि० म०**—एवं प्रमाणनिरूपणं प्रतिज्ञाय तल्लक्षणमाह—**तत्रेति**। प्रमाणे निरूपणीय इत्यर्थः। असाधारणकारणत्वे सति व्यापारवत्त्वं करणत्वं तेन लिङ्गपरामर्शादौ प्रमित्यसाधाणकारणे सव्यापारे च मनसि नातिप्रसङ्गः। ननु विषयेऽतिव्याप्तिः तस्येन्द्रियसन्निकर्षद्वारा प्रत्यक्षप्रमाऽसाधारणकारणत्वादिति चेत् न तावद्विषयः प्रत्यक्षमात्रे हेतुः तदभावेऽपि भ्रमप्रत्यक्षोदयात्। न च प्रत्यक्ष प्रमायामेकदा सुखतदाकारवृत्त्योरभ्युपगमात्। नापि बाह्यप्रत्यक्षप्रमितौ सुखादिप्रत्यक्षस्थले क्लृप्तप्रत्यक्षप्रमासामग्र्यैव तदुपपत्तेः। प्रमालक्षणमाह—**तत्रेति**। प्रमाकरणत्वावगमाय प्रमायां निरूपणीयायामित्यर्थः। न चास्य लक्षणस्य स्मृतावव्याप्तिरलक्ष्यत्वादित्याह-**स्मृतीति**। ननु स्मृतेरप्यविसंवादिप्रवृत्तिजनकत्वात्तद्व्यावृत्तप्रमालक्षणकथनमयुक्तमिति चेत् नहि प्रवृत्त्यङ्गप्रामाण्यमिह निरूपणीयं व्यावृत्तिव्यवहारान्यतरप्रयोजनाय प्रमात्वस्याभिधानात्। स्मृतावतिव्याप्तिवारणायानधिगतेति विषयविशेषणम्। अनिर्वचनीय-

विषयभ्रमेऽतिव्याप्तिवारणार्थमुक्तमबाधितेति । ज्ञानपदं स्वरूपकथनार्थम्, इच्छाकृति-संस्काराणामनधिगतपदेनैव वारणात् । यद्वा चक्षुरादीनामपि फलद्वारा घटादि-विषयत्वाभ्युपगमात्तत्रातिव्याप्तिवारणार्थमुक्तं ज्ञानेति । ज्ञप्तिश्चात्र भावव्युत्पत्त्या विवक्षिता । अतो न तत्करणे तत्रातिव्याप्तिः । स्मृतावपि यदि प्रामाण्यव्यवहारस्तदा तत्साधारणं लक्षणमाह–स्मृतीति । इच्छादावतिव्याप्तिवारणाय ज्ञानत्वमित्युक्तम् ॥

म० प्र०--परममूले करणं प्रमाणमित्युक्ते छिदादिकरणकुठारादिष्वतिव्याप्तिः स्यात्तद्वारणाय ज्ञानार्थकं 'मा' पदम् । दुष्टचक्षुरादेर्भ्रमज्ञानकरणत्वाद् दुष्टचक्षुरादावतिव्याप्तिः स्यात्तद्वारणाय 'प्र' पदम् । प्रमा प्रमाणमित्युक्तेऽसंभवः स्यादतः करणमित्युक्तमिति बोध्यम् । असाधारणकारणत्वे सतीति । कार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वे सतीत्यर्थः । तेन=करणत्वस्यो-क्तस्वरूपत्वेन । लिङ्गपरामर्शादाविति । अनुमित्यादिप्रमाऽसाधारणकारणे लिङ्गपरामर्शचक्षु-रादीन्द्रियसन्निकर्षादौ व्यापारवत्त्वोपादानेन नातिव्याप्तिः । सत्यन्तपदोपादानेन तु सव्यापारे मनसि नातिव्याप्तिरित्यर्थः । न चैवमपि मनसोऽपि जन्यज्ञानत्वरूपो यः कार्यत्वव्याप्यो धर्मस्तदवच्छिन्न-कार्यतानिरूपितकारणताशालित्वरूपासाधारणत्वस्य सत्त्वेन मनस्यतिव्याप्तिस्तदवस्थेति वाच्यम् । मनसः प्रमात्वावच्छिन्ननिखिलप्रमां प्रति कारणत्वेन प्रमाणलक्षणप्रविष्टकरणत्वघटकासाधारणत्वस्य प्रमात्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणतामात्रशालित्वरूपत्वेनोक्तासाधारणत्वस्य मनस्यभा-वादिति । तस्य=विषयस्य, प्रत्यक्षमात्रे=प्रत्यक्षत्वावच्छिन्ननिखिलप्रत्यक्षे, तदभावेऽपि=ज्ञानलक्षणादि-प्रत्यासत्तेर्निराकरिष्यमाणत्वेनेन्द्रियसन्निकृष्टविषयाभावेऽपि । अभ्युपगमादिति । तथा चाज्ञाय-मानसुखादिकं नास्त्येवेति भावः । स्थले=काले । क्लृप्तेति मनोऽदृष्टादिकं चेत्याकारिका योभय-वादिसंमतसुखादिप्रत्यक्षसामग्री तयैव बाह्यप्रत्यक्षोपपत्तेरित्यर्थः । वस्तुतस्त्वसाधारणकारणत्वे सती-त्यादिवाक्योक्तकरणलक्षणे विषयभिन्नत्वे सतीति विशेषणस्य निवेशनीयतया प्रतियोगितासंबन्धेन व्यापारवत्त्वविवक्षया वा विषये नातिव्याप्तिः संभवतीत्यपि बोध्यम् । परममूले स्मृतिव्या-वृत्तमिति=स्मृत्यवृत्तीत्यर्थः । तद्व्यावृत्तेति=स्मृत्यवृत्तीत्यर्थः । स्मृत्यवृत्तिप्रमालक्षणकथन स्यायुक्तत्वे हेतुमाह–स्मृतेरपीति । अविसंवादीति । सफलेत्यर्थः । नियतसफलप्रवृत्तित्वाव-च्छिन्नप्रवृत्तिं प्रति प्रमाज्ञानं कारणमिति प्रवृत्तिसाधनं प्रामाण्यमस्मिन् ग्रन्थे न निरूपणीयमि-त्यभिप्रेत्याह–नहीति । व्यावृत्तीति । प्रमापदवाच्या स्वेतरेभ्यो भिद्यते प्रमात्वाद्यन्नैवं तन्नैव-मित्यादीतरभेदानुमितीत्यर्थः । अनिर्वचनीयेति=अनिर्वचनीयश्चासौ विषयोऽनिर्वचनीयविषय-स्तत्र यो भ्रमस्तत्र । यद्वाऽनिर्वचनीयो विषयो यस्य स तथा स चासौ भ्रमः स तथा तत्रेत्यर्थः । न च भ्रमस्य देशान्तरवृत्तिज्ञातविषयकत्वेनानधिगतार्थविषयकत्वस्याभावात्कथं तत्रातिव्याप्तिरिति वाच्यम् । भ्रमात्पूर्वं भ्रमकालिकोत्पत्तिमदनिर्वचनीयरजतादिविषयकज्ञानाभावेन भ्रमस्य ज्ञातविषयक-त्वरूपाधिगतविषयकत्वस्याभावादनधिगतार्थविषयकत्वस्य भ्रमे सत्त्वादिति । तत्रेति । चक्षुरादा-

वित्यर्थः । अतः=ज्ञानपदेन भावव्युत्पत्त्या ज्ञप्तेर्विवक्षितत्वात्, तत्करणे=प्रमाकरणे, तत्र=चक्षुरादौ । ननु स्मृतिनिष्ठमप्रामाण्यमङ्गीकृतं चेत्तर्हि स्मृतिज्ञानानामप्रमात्वेन सफलप्रवृत्तिजनकत्वं न स्यान्न चेष्टापत्तिरिति वाच्यं स्मृतीनां सफलप्रवृत्तिजनकत्वस्य सर्वैः स्वीकृतत्वादित्याशङ्क्याह-**स्मृताव-पीति । तत्साधारणमिति**=स्मृतिवृत्तीत्यर्थः । परममूले **स्मृतिसाधारणमिति**=स्मृतिवृत्तीत्यर्थः ॥

**नीरूपस्यापि कालस्येन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिक-बुद्धेरपि पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविशिष्टविषयकत्वेन न तत्रा-तिव्याप्तिः ॥**

शि० म०-नन्वेकस्मिन् घटे प्रत्यक्षेण यदा निरन्तराणि ज्ञानान्युत्पद्यन्ते तत्र द्वितीयादिज्ञानेषु पूर्वपूर्वज्ञानविषयीकृतार्थेषु प्रमालक्षणस्याव्याप्तिरित्यत आह-**नीरूपस्येति** । ननु नीरूपस्य कालस्य कथं चाक्षुषत्वं द्रव्यचाक्षुषतायां महत्त्व-समानाधिकरणोद्भूतरूपवत्त्वस्य तन्त्रत्वादिति चेन्न "इदानीं घटो वर्तते" इति प्रतीतेः नीरूपस्यापि तस्य चाक्षुषत्वात् । अन्यथा चक्षुरवगते घटे वर्तमानतासंदेहा-पत्तेः । न चोक्तप्रयोजकाभावेन तत्तत्प्रतीतिरेवासिद्धेति वाच्यम् । अनन्यथासिद्ध-प्रतीतिबलेन तस्य कालव्यतिरिक्तद्रव्यचाक्षुषतायां प्रयोजकत्वकल्पनात् । अन्यथा प्रयोजकानुसारेण प्रतीतिकल्पने नीरूपस्य रूपस्याचाक्षुषत्वापत्तेः । नन्वेवमपि निर-न्तरोत्पन्नघटादिप्रत्यक्षे अव्याप्तिस्तदवस्थैव, तस्य तत्तत्क्षणतत्तत्संबन्धांशे अज्ञाता-र्थावगाहित्वेऽपि घटांशे तदभावादिति चेन्न इष्टापत्तेः । अत एव न शाब्दप्रमायाः पदार्थांशे प्रमात्वम् न च द्वितीयादिज्ञानस्य घटांशे प्रामाण्याभावे प्रवर्त्तकत्वानुपपत्तिः । स्मृतिवदबाधितविषयत्वेन तदुपपत्तेः । अत एवेदानीमहं सुखीत्यादिधारावाहिकबुद्धौ नाव्याप्तिः, तस्याः पूर्वपूर्वज्ञानाविषयक्षणविशेषविशिष्टत्वात् ॥

म० प्र०-प्रत्यक्षेण=इन्द्रियेण । निरन्तराणि=व्यवधानशून्यकालिकानि, तत्र=तेषु ज्ञानेषु मध्ये । **नीरूपस्य कालस्येति** । नीरूपकालनिष्ठं चाक्षुषत्वं=चक्षुर्जन्यज्ञानविषयत्वं कथम् । कथंशब्दस्याक्षेपार्थकत्वेन न कथमपीत्यर्थः।द्रव्यचाक्षुषतायां=द्रव्यनिष्ठचक्षुर्जन्यज्ञानविषयत्वरूपकार्ये, महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य तन्त्रत्वात्=महत्त्वाधिकरणधिकरणकोद्भूतरूपनिष्ठकारण-त्वात् । **इदानी घटो वर्त्तत इति प्रतीतेरिति** । मूले कालविषयकचाक्षुषप्रत्यक्षात्मक-प्रतीतेरुक्तत्वेऽपि प्रतीतितदभिलापकशब्दयोः समानविषयकत्वेन वर्त्तमानकालिकवृत्तिताश्रयो वर्त्तमानकालिको घट इत्यर्थककालविषयकचाक्षुषप्रत्यक्षात्मकप्रतीत्यभिलापकशब्दविषयसमान-विषयकप्रतीतेरित्यर्थः । तस्य=कालस्य=**अन्यथेति**। नीरूपस्य कालस्य चाक्षुषत्वानङ्गीकारे इत्यर्थः । **वर्तमानतासंदेहापत्तेरिति**==घटविषयकवर्तमानतासंदेहप्रतिबन्धकवर्तमानकालविषयक-निश्चयाभावेन वर्त्तमानकालिक'घटोऽस्ति न वा'इति घटे वर्तमानकालवृत्तित्वस्य संदेहापत्तेरित्यर्थः। उक्त-

प्रयोजकाभावेन=काले महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वरूपचाक्षुषप्रत्यक्षप्रतीतिकारणाभावेन, तत्प्रतीतिः=इदानीं घटो वर्तत इत्याकारकप्रत्यक्षप्रतीतिः । **अनन्यथासिद्धेति**=वर्तनानकालरूपविषयं विनाऽनुपपद्यमानेत्यर्थः । तस्य=महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य ॥ **कालेति**=कालव्यतिरिक्तद्रव्यनिष्ठचक्षुर्जन्यज्ञानविषयत्वरूपकार्यनिरूपितकारणत्वकल्पनादित्यर्थः । अन्यथेत्यस्यैव विवरणं प्रयोजकानुसारेण प्रतीतिकल्पने इति । **नीरूपस्येति** । यदि महत्त्वसमानाधिकरणोद्भूतरूपात्मककारणानुसारेण चाक्षुषप्रतीतिस्त्वया स्वीक्रियते तदा तव मते रूपादिषु चाक्षुषत्वाभावव्यावृत्त्यर्थं चाक्षुषप्रतीतिरूपकार्यशरीरे द्रव्यपदस्य निवेशो न स्यात् । महत्त्वसमानाधिकरणोद्भूतरूपात्मककारणानुसारेण चाक्षुषप्रत्यक्षविषयत्वं न स्यादिति भावः । एवमपि=नीरूपस्य कालस्य चक्षुर्जन्यज्ञानविषयत्वस्वीकारेऽपि,घटादिप्रत्यक्षे=घटादिप्रत्यक्षमध्ये द्वितीयादिघटादिप्रत्यक्षे । **तस्येति**=तत्तत्क्षणांशे तत्तत्क्षणसंबन्धांशे च द्वितीयादिघटादिप्रत्यक्षस्येत्यर्थः । तदभावात्=अज्ञातार्थविषयकत्वाभावात् । इष्टापत्तेः=घटांशविषयकद्वितीयघटादिज्ञानेऽप्रमात्वस्वीकारात् । अत एव=पदार्थांशे शाब्दप्रमाया अज्ञातार्थावगाहित्वाभावादेव । **न प्रमात्वमिति**=शाब्दवाक्यार्थज्ञानात्प्रागेव पदार्थांशस्य पदाधिगतत्वेन पदार्थांशे शाब्दज्ञानस्याज्ञातार्थावगाहित्वाभावेनाप्रमात्वम् । संसर्गांशे तु वाक्यजन्यज्ञानस्याज्ञातार्थावगहित्वेन प्रमात्वमिति भावः । **स्मृतिवदिति**=यथा स्मृतेरबाधितार्थविषयकत्वेन प्रवर्त्तकत्वं तद्वदित्यर्थः । तदुपपत्तेः=प्रवर्त्तकत्वोपपत्तेः । अत एव=वक्ष्यमाणहेतोरेव । धारावाहिकबुद्धौ=धारावाहिकबुद्धिघटकद्वितीयादिज्ञाने । अतःशब्दार्थमेवाह—**तस्या इति** । द्वितीयादि "इदानीमहं सुखी" इति धारावाहिकबुद्धेरित्यर्थः । **क्षणविशेषविशिष्टेति**=विलक्षणक्षणविशेषविशिष्टसुखेत्यर्थः ॥

**शि० म०—नन्वेमनुवमित्यादौ क्षणस्फुरणं स्यात् । इदानीं पर्वतो वह्निमान्, इदानीं गौरानयनसंसृष्टा, इदानीं मदीया गौरेतत्सदृशी, इदानीममुमर्थं कल्पयामि, इति सर्वज्ञानेषु कालस्यानुभूयमानत्वादिति चेत् किमनुमितौ पक्षविशेषणतया कालभानं साध्यविशेषणतया वा । नाद्यः, सन्निकृष्टपर्वते जायमानानुमितेस्तदंशे प्रत्यक्षतया तत्र तज्ज्ञानस्येष्टत्वात् । असन्निकृष्टे च तस्मिन् तत्प्रतीतेरेवासिद्धेः । न द्वितीयः, अनुमितेः साध्यांशे व्यापकावच्छेदकमात्रप्रकारकत्वेन तत्र कालप्रकारत्वायोगात् । अन्यथाऽनुमित्यनन्तरं वह्नौ द्विहस्तत्रिहस्तत्वादिप्रकारकसंशयाभावप्रसङ्गात्, तात्कालिकवह्निसिद्ध्यर्थं धूमकालस्य पक्षतावच्छेदकत्वादिप्रयासानुपपत्तेश्च ॥**

**म० प्र०**—एवं=कालस्य प्रत्यक्षनिरूपिताविषयत्वस्वीकारे । अनुमित्यादौ क्षणस्फुरणम्=अनुमित्यादिनिरूपितक्षणनिष्ठविषयत्वम् । इति सर्वज्ञानेषु कालस्यानुभूयमानत्वात्=कालस्योक्तसर्वज्ञाननिरूपितविषयत्वाश्रयत्वात् । अनुमितौ पक्षविशेषणतया कालभानम्=अनुमितिनिरूपितं पक्षनिष्ठविशेष्यतानिरूपितकालनिष्ठविशेषणताख्यविषयताऽभिन्नकालनिष्ठविषयत्वम् । तदंशे=सन्निकृष्टपर्वतांशे । तत्र=अनुमितौ, तज्ज्ञानस्येष्टत्वात्=पक्षनिष्ठविशेष्यतानिरूपित-

कालनिष्ठविशेषणताऽऽख्यविषयताऽभिन्नकालनिष्ठविषयत्वस्येष्टत्वात् । तस्मिन्=पर्वते तत्प्रतीतिरेव= कालावगाह्यनुमित्यात्मकप्रतीतिरेव । तत्र=साध्यांशविषयकानुमितौ । तत्प्रकारकत्वेति पाठे तु कालप्रकारकत्वेत्यर्थः । साध्यांशविषयकानुमितेः कालप्रकारकत्वायोगे हेतुमाह-**अनुमितेः साध्यांशे इति** । वह्न्यादिरूपसाध्यांशविषयक 'पर्वतो वह्निमान्' इत्याद्यनुमितेर्वह्नित्वादिरूप-साध्यतावच्छेदकमात्रप्रकारकत्वेनेत्यर्थः । **अन्यथेति**=वह्न्यादिरूपसाध्यांशविषयक 'पर्वतो वह्निमान्' इत्याद्यनुमितेर्वह्नित्वादिरूपसाध्यतावच्छेदकमात्रप्रकारकत्वानङ्गीकारे इत्यर्थः । **संशया-भावप्रसङ्गादिति** । वह्न्यादिसाध्यांशविषयक 'पर्वतो वह्निमान्' इत्याद्यनुमितेर्वह्नित्वादिसाध्य-तावच्छेदकमात्रप्रकारकत्वानङ्गीकर्तृमते वह्निनिष्ठद्विहस्तत्वादीनामपि साध्यांशविषयकानुमितिविषयत्व-सत्त्वादिति शेषः । **तात्कालिकेति**=धूमकालिकेत्यर्थः । **धूमकालस्येति** । धूमादिलिङ्ग-विशिष्टे पर्वतादौ धूमकालिक 'पर्वतो वह्निमान्' इत्याकारकानुमितिवादिमते धूमकालनिष्ठपक्षता-वच्छेदकत्वादिनिरूपणानुकूलप्रयासवैयर्थ्यापत्तेरित्यर्थः । वह्न्यादिसाध्यांशविषयकानुमितेर्व्यापकता-वच्छेदकातिरिक्तप्रकारकत्वाभ्युपगमेन साध्यांशे धूमकालिकत्वस्यापि भानाद्धूमकालिकवह्निसिद्ध्यर्थं धूमकालस्य पक्षतावच्छेदकत्वाय प्रयासो न कर्तव्य इति भावः ॥

शि०म०-अत एव शाब्दज्ञानादावपि न कालोल्लेखः । दशमस्त्वमसि तत्त्वमसी-त्यादिवत्सन्निकृष्टपदार्थांशे शब्दजन्यस्यापि ज्ञानस्य तत्र प्रत्यक्षतया कालस्फुरण-स्येष्टत्वात् । असन्निकृष्टे च तस्मिन् पदवाक्यार्थभिन्नस्य कालस्य भानायोगात् । नाप्युपमितौ तत्स्फुरणं सन्निकृष्टे गवि कालभानस्येष्टत्वात् । व्यवहिते च तस्मि-न्नुपमितेः कालविषयत्वे तदनन्तरं "मदीया गौरिदानीं मद्गृहे वर्त्तते न वा" इति संदेहानुपपत्तेः । अत एव नार्थापत्तौ क्षणस्फुरणाशङ्कावकाशः, तस्या अनुमिति-समानयोगक्षेमत्वेन कल्पनीयरात्रिभोजनांशे उपपादकतावच्छेदकमात्रप्रकारकतया कालविशेषणकत्वायोगात् । तदेतदाह-कालस्येन्द्रियेति । प्रत्यक्षप्रमाणजन्यानु-भवविषयत्वाभ्युपगमात् ॥

म०प्र०-अत एव=वक्ष्यमाणहेतोरेव । **शाब्दज्ञानादावपि न कलोल्लेख इति** । अत्रादिपदमापाततः प्राप्तम् । उपमित्यादिनिरूपितकालनिष्ठविषयत्वस्य वक्ष्यमाणग्रन्थे एव निरा-करणात् । तथा च शाब्दबुद्धित्वावच्छिन्नशाब्दबुद्धिसामान्यनिरूपितकालनिष्ठविषयता नेत्यर्थः। अतः-शब्दोक्तहेतुमेवाह-**दशम इति** । ज्ञानस्य प्रत्यक्षतयेत्यन्वयः। तत्र=शब्दजन्यज्ञाने, कालस्फुरणस्य= कालनिष्ठविषयत्वस्य । असन्निकृष्टे=इन्द्रियासंबद्धपदार्थे, तस्मिन्=शब्दजन्यज्ञाने, भानायोगात्= विषयत्वायोगात् । **नाप्युपमितावििति**=उपमितित्वावच्छिन्नोपमितिनिरूपितकालनिष्ठविषय-त्वापादनमपि न संभवतीत्यर्थः। **सन्निकृष्ट इति** । सन्निकृष्टगोपदार्थविशेषणीभूतकाले उपमित्या-त्मकस्फुरणस्याङ्गीकृतत्वादित्यर्थः । तस्मिन्=गोपदार्थे । अत एव=वक्ष्यमाणहेतोरेवेत्यर्थः । **नार्थापत्ताविति**=अर्थापत्तित्वावच्छिन्नार्थापत्तिनिरूपितक्षणनिष्ठविषयत्वशङ्कावसरो नेत्यर्थः ।

अतःशब्दार्थमेवाह—**तस्या इति** । कल्पनीयरात्रिभोजनांशे तस्याः=अर्थापत्तेः, कालविशेषणकत्वायोगात्=कालप्रकारकत्वायोगादित्यर्थः । तस्याः कालप्रकारकत्वायोगे हेतुमाह—**उपपादकतेति** । पीनत्वोपपादकं रात्रिभोजनमुपपादकतावच्छेदकं रात्रिभोजनत्वं तन्मात्रविशेषणकतयेत्यर्थः । रात्रिभोजनमर्थापत्त्या कल्पयामीत्याकारकाभिलापकवाक्यसत्त्वेनार्थापत्तेरुपपादकमात्रप्रकारकत्वमिति भावः । अर्थापत्तेरुपपादकतावच्छेदकमात्रप्रकारकत्वमपि कुतो ज्ञातमित्याशङ्कयाह—**अनुमितीति** । समानयोगक्षेमत्वेन=तुल्यसामग्रीकत्वेन ॥

**शि०म०—नन्वेवं शाब्दधारावाहिकद्वितीयादिज्ञानेष्वव्याप्तिः, तत्र क्षणविषयत्वानभ्युपगमादिति चेन्न, इतरसंसृष्टतया ज्ञाने तत्संसर्गानुभवाभावलक्षणाया जिज्ञासालक्षणायाश्चाकाङ्क्षायाः शाब्दज्ञानकारणस्य पदार्थज्ञानस्य चाभावेन तत्र धारावाहिकबुद्धेरेवासिद्धेः । न च प्रथमशाब्दज्ञानकारणस्य पदार्थज्ञानस्य विनाशेऽपि शब्दजनितवाक्यार्थज्ञानादेव पदार्थविषयात् द्वितीयादिशाब्दज्ञानं संभवतीति वाच्यम् । तस्य पदार्थविषयत्वेऽपि पदजन्यपदार्थस्मृतित्वाभावेनाकारणत्वात् । पदजन्यपदार्थस्मृतेरेव तत्त्वात् । अन्यथा पदलिङ्गानुमेयपदार्थस्याप्यन्वयबोधापत्तिः । न च 'घटं पटं चानय' इत्यत्रेव पदार्थस्मरणान्तरकल्पनात् द्वितीयादिज्ञानसंभव इति वाच्यम्, तथापि पदस्मृतिपदार्थस्मरणतात्पर्यज्ञानैर्वाक्यार्थज्ञानजननसमये प्रथमवाक्यार्थज्ञानस्य नष्टत्वेन तत्राव्याप्त्यनवकाशात् ॥**

**म०प्र०—एवमिति**=असन्निकृष्टार्थविषयकशब्दजन्यज्ञाननिरूपितकालनिष्ठविषयत्वानङ्गीकारे सतीत्यर्थः । **शाब्देति**=असन्निकृष्टार्थविषयकशब्दजन्येत्यर्थः । **तत्रेति**=असन्निकृष्टार्थविषयकेषु शब्दजन्यधारावाहिकद्वितीयादिज्ञानेष्वित्यर्थः । **इतरसंसृष्टतया ज्ञाने इति**=पदार्थान्तरसंसर्गावगाहिज्ञाने सतीत्यर्थः । पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षेति नैयायिकमतमनुसृत्याकाङ्क्षास्वरूपमाह—**तत्संसर्गेति** । पदार्थान्तरसंसर्गेत्यर्थः । पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षेति मूलकर्तृमतमङ्गीकृत्याकाङ्क्षास्वरूपमाह—**जिज्ञासेति** । जिज्ञासालक्षणं लक्षणघटकं यस्या आकाङ्क्षायाः सा तथा तस्या इत्यर्थः । तत्र=असन्निकृष्टपदार्थेषु, तस्य=असन्निकृष्टार्थविषयकशब्दजन्यप्रथमवाक्यार्थज्ञानस्य, तत्त्वात्=शाब्दबुद्धिं प्रति कारणत्वात् । अन्यथा=पदजन्यपदार्थस्मृतेः शाब्दबुद्धिं प्रति हेतुत्वानङ्गीकारे । **पदलिङ्गानुमेयपदार्थस्येति** । "इदं पदं मत्पुत्रोच्चरितं मत्पुत्रकृतिजन्यत्वे सति पदत्वात्, दिनान्तरीयमत्पुत्रोच्चरितपदवत्" इति पदघटितलिङ्गानुमेयपदार्थस्य । अथवा "मत्पुत्रोच्चरितपदानि नित्यानि पदत्वात्, वैदिकपदवत्" इति पदात्मकलिङ्गेनानुमेयस्य पदार्थस्य मत्पुत्रोच्चरितत्वादिरूपार्थस्यान्वयबोधापत्तिः घटमानयेत्यादिशब्दजन्यज्ञानविषयत्वापत्तिस्त्वदभिमतस्य पदजन्यपदार्थोपस्थितिभिन्नस्य पदार्थज्ञानस्य सत्त्वादित्यर्थः । **इत्यत्रेवेति** । अत्र यथाऽऽनयपदस्य पुनः स्मृतिद्वारा पुनरानयपदार्थस्मरणं तद्वदित्यर्थः । **तथापीति**=पदार्थानां स्मरणान्तरकल्पनेन द्वितीयादिशाब्दज्ञानसंभवेऽपीत्यर्थः । तत्र=द्वितीयादिशाब्दज्ञाने ॥

शि०म०-अत एव न धारावाहिकद्वितीयाद्यनुमितावव्याप्तिः अनुमित्सया द्वितीयानुमितिसंभवेऽपि अनुमितीष्टसाधनतायाः प्रकृत०प्याप्तेश्च समूहालम्बनस्मृतिस्ततोऽनुमित्सा तदुत्तरक्षणेऽनुमितिरित्यभ्युपगमेन तदा प्रथमानुमितेर्विनष्टत्वेन तस्या ज्ञातार्थविषयत्वाभावात् । ननु धारावाहिकप्रत्यक्षबुद्धावव्याप्तिरेव तत्र रूपादिरहितस्य क्षणविशेषस्याविषयत्वेनानधिगतार्थविषयत्वाभावात् । न चेदानीं काले घट इति प्रतीतिबलात्कालस्य नीरूपत्वेऽपि चाक्षुषत्वं साधितमिति वाच्यं तथा सत्याकाशे बलाका इति प्रतीत्या तस्यापि प्रत्यक्षतापत्तेः । न च प्रतीत्यनुसारेण महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य कालाकाशव्यतिरिक्तद्रव्यचाक्षुषतायामेव प्रयोजकत्वकल्पनात्तस्याप्यनुमतं चाक्षुषत्वमिति वाच्यम् । आकाशस्य प्रत्यक्षताभ्युपगतौ तत्सद्भावे शब्दलिङ्गकानुमानप्रमाणानुसरणानुपपत्तेः । अप्रत्यक्षे ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्तीति भाष्यकारवचनविरोधाच्च ॥

म०प्र०-अत एव=वक्ष्यमाणहेतोरेव। अनुमितौ=असन्निकृष्टसाध्यादिविषयकानुमितौ। अतःशब्दोक्तहेतुमेवाह-**अनुमित्सयेति**। समूहालम्बनस्मृतिः=प्रकृतानुमितिरिष्टसाधनं प्रकृतव्याप्तिश्चेत्याकारकसमूहालम्बनस्मृतिः । तदा=अनुमित्सोत्तरक्षणे, तस्याः=असन्निकृष्टसाध्यादिविषयकद्वितीयाऽनुमितेः। तत्र=धारावाहिकप्रत्यक्षबुद्धौ, तथा सति='इदानीं घटो वर्त्तते' इत्यादिप्रतीतिबलात्कालनिष्ठचाक्षुषत्वाभ्युपगमे सति, बलाका=बकपङ्क्तीः, तस्यापि=आकाशस्यापि। कालाकाशव्यतिरिक्तद्रव्यचाक्षुषतायामेव=कालाकाशव्यतिरिक्तद्रव्यनिष्ठचक्षुर्जन्यज्ञानविषयत्वरूपकार्यनिरूपितमेव। प्रयोजकत्वकल्पनात्=कारणत्वज्ञानात् । तस्यापि=आकाशस्यापि । तत्सद्भावे=आकाशसत्त्वे । **शब्दलिङ्गकानुमानेति** । "पञ्चीकृपृतथिवी आकाशवती शब्दवत्त्वाद्यन्नैवं तन्नैवमात्मवत्" इत्याकारकशब्दरूपकार्यलिङ्गकानुमानेत्यर्थः । यद्वा लक्षणया वृत्त्या शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वाद्यन्नैवं तन्नैवं रूपादिवत् इति शब्दपक्षकानुमानेत्यर्थः । **तलेति**=कटाहाकारेत्यर्थः ॥

**किंच सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः, किंतु यावद्घटस्फुरणं तावद्घटाकारान्तःकरणवृत्तिरेकैव ॥**

शि०म०-न च'सुरभि चन्दनम्' इति प्रत्यक्षे सौरभस्येवाकाशे बलाकेत्यादावाकाशस्य ज्ञानान्तरोपनीतस्य भानात्तदंशे परोक्षवृत्तेर्वाऽभ्युपगमादचाक्षुषत्वं तस्यास्त्विति वाच्यम्, तर्हि तद्वदेव सर्वप्रत्यक्षेऽपि कालभानोपपत्तेर्न चाक्षुषत्वं तस्येत्यरुचेराह-किंचेति । ननु धारावाहिकप्रत्यक्षस्थलेऽपि ज्ञानभेद एवान्यथा जागराद्यघटादिज्ञानस्य मुहूर्त्तघटिकादिपर्यन्तमवस्थानं तदनन्तरं विनाश इत्यत्र नियामकाभावेन सर्वकार्यविरोधिसुषुप्तिपर्यन्तावस्थायित्वाभ्युपगमे प्रातरनुभूतघटस्यानुभवनाशजन्यसंस्काराभावेन मध्ये स्मरणानुपपत्तिः प्रतिबन्धकसत्त्वेन घटाभावज्ञानानुपपत्तिश्चेत्याशङ्क्ते-

**किंत्विति** । किं घटादिगोचरवृत्तेरौपचारिकज्ञानस्य एकत्वं निराक्रियते किंवा चैतन्यरूपज्ञानस्य । तत्र नाद्य इत्याह—**यावदिति** । यावत्कालमस्ति प्रकाशते घट इति व्यवहारः तावत्कालं तदाकारवृत्तिरेकैव लाघवादिति भावः ॥

म० प्र० **अचाक्षुषत्वमिति** । तस्य=आकाशस्याचाक्षुषत्वं=लौकिकसन्निकर्षेण चक्षुर्जन्यज्ञानविषयत्वाभावोऽस्त्वित्यर्थः । आकाशस्य लौकिकसन्निकर्षेण चक्षुर्जन्यज्ञानविषयत्वाभावे हेतुमाह—**आकाशे इति** । उपनीतस्य—'आकाशे बलाका' इति प्रतीतितः पूर्वशब्दादिजन्यज्ञानलक्षणप्रत्यासत्तिमत आकाशस्य । **आकाशे बलाकेत्यादौ भानात्**=आकाशे बलाकेत्यादिप्रत्यक्षप्रतीतिनिरूपितविषयत्वादित्यर्थः । ननु ज्ञानलक्षणप्रत्यासत्तेर्मूले खण्डितत्वेन कथमाकाशस्य ज्ञानलक्षणप्रत्यासत्तिजन्य 'आकाशे बलाका' इत्यादिप्रत्यक्षप्रतीतिविषयत्वमुच्यते इत्यत आह—**तदंशे इति**।आकाशांशे इत्यर्थः।**परोक्षवृत्तेरिति**।बलाकाभिरिन्द्रियसन्निकर्षकाले एव स्मृत्यनुमित्याद्यात्मकपरोक्षवृत्तेर्वा स्वीकारादित्यर्थः । लौकिकसन्निकर्षजन्यज्ञानविषयत्वाभावे स्वपरयोः संमतदृष्टान्तमाह—**सुरभिचन्दनमिति प्रत्यक्षे सौरभस्येवेति** । यथाऽऽघ्रातसौरभस्य सुरभि चन्दनमिति प्रत्यक्षघटकीभूतस्मृत्यात्मकज्ञानविषयत्वमनाघ्रातसौरभस्य तु सुरभि चन्दनमिति प्रत्यक्षघटकीभूतचन्दनखण्डत्वालिङ्गजन्यानुमित्यात्मकवृत्तिविषयत्वं तद्वदित्यर्थः । **तर्हीति**=आकाशनिष्ठचाक्षुषत्वाभावेऽङ्गीकृते सतीत्यर्थः । तद्वदेव=आकाशवदेव सर्वप्रत्यक्षेऽपि कालभानोपपत्तेः'इदानीं घटो वर्त्तते' इत्यादिसर्वप्रत्यक्षघटकीभूतस्मृत्याद्यात्मकप्रतीतिनिरूपितकालनिष्ठविषयत्वोपपत्तेः । तस्य=कालस्य । परममूले **धारावाहिकबुद्धिस्थले इति**=पराभिमतधारावाहिकबुद्धिकाले उक्तबुद्धिविषये वेत्यर्थः । स्थलेऽपि=कालेऽपि घटादिविषयेऽपीति वा । अन्यथा=पराभिमतधारावाहिकप्रत्यक्षकाले ज्ञानभेदानङ्गीकारे । **जागरेति**=जागरावस्थायां प्रथमोत्पन्नघटादिज्ञानस्येत्यर्थः । **प्रतिबन्धकसत्त्वेनेति** घटाभावज्ञानस्य प्रतिबन्धकं यत् घटज्ञानं तस्य सत्त्वेनेत्यर्थः । औपचारिकज्ञानस्य=लाक्षणिकज्ञानपदेन व्यवह्रियमाणज्ञानस्य, तत्र=पक्षद्वयमध्ये, यावत्कालं=यत्परिमाणके काले, घटोऽस्ति=सत्तावान् । घटः प्रकाशते, घटः=ज्ञानविषयो घटः, तावत्कालं=तत्परिमाणके काले । **तदाकारेति**=घटाकारेत्यर्थः ॥

**न तु नाना, वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वाभ्युपगमात् ॥**

शि० म०—एवकारव्यवच्छेद्यमाह—**नत्विति** । गौरवादिति भावः । तर्हि ततोऽप्यतिलाघवात्सुषुप्तिपर्यन्तं वृत्तिरेकैव । न च मध्ये अदृष्टविशेषान्नाशः तस्य साधारणकारणत्वात् । न च वृत्तेः स्वविषयविरोधिघटाभावादिवृत्तिनाश्यत्वं स्वोत्तरपटवृत्तेरपि तन्नाशकत्वात् । नापि स्वोत्तरवृत्तेर्नाशकत्वं घटादिवृत्तेरौदासीन्यसमये नाशाभावप्रसङ्गात् इत्याशङ्क्याह—**वृत्तेरिति** । वृत्तिपदं प्रकृताभिप्रायम् । तथा च वृत्तेः स्वविरोध्युत्पत्तिपर्यन्तं स्थायित्वाभ्युपगमादित्यर्थः । तेन स्वोत्तरवृत्त्यौदासी-

न्यादीनां संग्रहः। फलबलेन सुषुप्तिवदौदासीन्यसमयस्यापि निवर्त्तकत्वात्। अन्यथा यथाश्रुतेऽखण्डाकारवृत्तेः स्वोत्तरवृत्त्यन्तराभावादविनाशप्रसङ्गः॥

**म० प्र०**—तर्हि=पराभिमतधारावाहिकबुद्धिकाले वृत्तेरेकत्वाभ्युपगमे सति। **ततोऽपीति**=पराभिमतधारावाहिकबुद्धिकाले वृत्तिनिष्ठैकत्वाभ्युपगमरूपलाघवादपीत्यर्थः। नन्वदृष्टविशेषेण तस्या नाशो भविष्यतीत्याशङ्क्य नहि वृत्तिनाशकासाधारणकारणमन्तरेण साधारणकारणादृष्टेनैव तस्या नाशो भवतीत्यभिप्रायेणाह—**न चेति**। तस्य=अदृष्टस्य। **स्वविषयेति**=स्वं घटाकारवृत्तिस्तस्या विषयो घटस्तद्विरोधी घटाभावादिस्तत्र या वृत्तिस्तया नाश्यत्वमित्यर्थः। स्वोत्तरपटवृत्तेरपि=घटाकारवृत्त्युत्तरपटाकारवृत्तेरपि। ननूत्तरवृत्तेरेव नाशकता स्यादित्याशङ्क्याह—**नापीति**। स्वोत्तरवृत्तेः=वृत्त्युत्तरवृत्तेः, नाशकत्वं=पूर्ववृत्तिनाशकत्वमपि नास्तीत्यर्थः। वृत्तिपदं=स्वविरोधिवृत्त्युत्पत्तिपर्यन्तमिति वाक्यघटकीभूतवृत्तिपदम्। **प्रकृताभिप्रायमिति**। प्रकृतं वृत्तिविरोधिनमभिप्रैति विषयीकरोतीति प्रकृताभिप्रायम्। प्रकृते वृत्तिविरोधिन्यभिप्रायस्तात्पर्यं यस्य वृत्तिपदस्य तत्तथेति वा। तथा च वृत्तिविरोध्यर्थकमेव वृत्तिपदं वृत्तिपदस्यैव व्याख्यानं स्वविरोधीति न तूत्तरवृत्तिरेव पूर्ववृत्तेर्निवर्त्तिकेत्यभिप्रायेण मूले वृत्तिपदमित्यर्थः। यद्वा प्रकृतेन वृत्तिप्रसङ्गेनाभिप्रायो मनोऽनवधानकाले मूले उल्लेखनं यस्य वृत्तिपदस्य तत्तथा व्यर्थत्वेनानुपादेयमेवेत्यर्थः। **तथा चेति**=वृत्तिपदस्यानुपादेयत्वे सतीत्यर्थः। तेन=वृत्तिपदस्यानिवेशेन, फलबलेन=औदासीन्यकाले वृत्तीनां ध्वंसरूपकार्यदर्शनान्यथानुपपत्त्या। अन्यथा=औदासीन्यसमयस्य वृत्तिनिवर्त्तकत्वानङ्गीकारे। यथाश्रुते=उत्तरवृत्तिरेव पूर्ववृत्तिनिवर्तिकेति यथाश्रुतार्थस्वीकारे अन्यथेत्यस्यैव विवरणं यथाश्रुते इतीति वा। **अखण्डाकारवृत्तेरिति**। यदाऽखण्डाकारवृत्त्युत्तरं वृत्त्यन्तरं नास्ति तदाऽखण्डाकारवृत्तेर्नाशो न स्यादुत्तरवृत्तेरेव पूर्ववृत्तिनाशकत्वाभ्युपगमान्नाशस्तु भवत्येवान्यथा द्वैतापत्तेरिति भावः॥

तथा च तत्प्रतिफलितचैतन्यरूपं घटादिज्ञानमपि तत्र तावत्कालिकमेकमेवेति नाव्याप्तिशङ्काऽपि॥

**शि० म०**—नन्वेवमपि स्वोत्तरवृत्त्यौदासीन्यसमयादीनां कथं विरोधित्वमनुगतविरोधितावच्छेदकाभावादिति चेन्न। मण्यादीनामनुगतप्रतिबन्धकतावच्छेदकाभावेऽपि मणित्वादिना दाहप्रतिबन्धकतास्वीकारात्। सर्वत्र च विरोध्यननुगमस्यादोषत्वात्। द्वितीयं निरस्यति—**तथा चेति**। यथा घटादौ तदाकारवृत्तिरेका तथा चैतन्यरूपं मुख्यज्ञानमपि यावद्घटस्फुरणं तत्रैकमित्यर्थः। ननु निरुपाधिकचैतन्यस्य स्वत एकत्वेऽपि तस्य घटज्ञानत्वाभावात् घटाकारवृत्त्युपहितस्य च तज्ज्ञानत्वेऽपि तदुपाधिभेदेन भेदावश्यंभावान्नैकत्वं युक्तमित्याशङ्क्य घटावच्छिन्नं तद्वृत्त्यवच्छिन्नमपि ज्ञानं तयोरेकदेशस्थत्वान्न भिद्यत इत्याह—**तत्प्रतिफलितेति**॥

**म० प्र०**—विरोधित्वं=पूर्ववृत्तिनाशकत्वम्, अनुगतविरोधितावच्छेदकाभावात्=परस्परविलक्षणेष्वौदासीन्यसमयादिषु संबद्धैकनिवर्तकतावच्छेदकाभावात्। **अनुगतेति**=संबद्धैकेत्यर्थः।

**मणित्वादिनेति**=दाहत्वावच्छिन्नं प्रति मणित्वेन मन्त्रत्वेन वा प्रतिबन्धकतेति मण्यादिनिष्ठ-मणित्वाद्यवच्छिन्नप्रतिबन्धकतास्वीकारादित्यर्थः । नन्वेवं दाहप्रतिबन्धकमण्यादिषु नानाप्रति-बन्धकतावच्छेदकस्वीकारे मण्यादिष्वेकदाहप्रतिबन्धकतावच्छेदकानिश्चयेन मण्यादिषु दाहप्रतिबन्ध-कताग्रहो न स्यादित्याशङ्क्याह–**सर्वत्रेति** । सर्वत्र=सर्वविरोधिषु विरोध्यननुगमस्यैकविरोधिता-वच्छेदकाभावस्य मण्यादिनिष्ठप्रतिबन्धकताग्रहप्रतिबन्धकत्वरूपदोषत्वं नास्ति किंतु नानाविरोधि-ष्वेकविरोधितावच्छेदकसंभवे नानाविरोधितावच्छेदकाभ्युपगमस्य प्रतिबन्धकताग्रहप्रतिबन्धक-त्वरूपदोषत्वमित्यर्थः । तत्र=घटादौ । ननु निरुपाधिकचैतन्यरूपस्य ज्ञानस्य किमेकत्वं त्वया-ऽभ्युपगम्यते किंवा घटाकारवृत्त्युपहितचैतन्यस्य, नाद्य इत्याह–**निरुपाधिकेति** । स्वतः= उपाधिसंपर्कादृिना, तस्य=निरुपाधिकचैतन्यस्य । **घटज्ञानत्वाभावादिति** । अस्याग्रे निरुपाधिकचैतन्यस्यैकत्वाभ्युपगमः पराभिमतधारावाहिकबुद्धिकाले द्वितीयादिघटादिज्ञानेष्वव्याप्ति-वारणेऽनुपयुक्त इति शेषः। द्वितीयं निराकरोति–**घटाकारेति** । तज्ज्ञानत्वेऽपि=घटज्ञानत्वेऽपि । **तदुपाधिभेदेनेति** । तस्य=घटादिज्ञानस्य ये उपाधयो घटादितदाकारावृत्तिरूपास्तेषां भेदेने-त्यर्थः । **तद्वृत्त्यवच्छिन्नमपीति** । अत्रापिशब्दश्चार्थे । तथा च घटावच्छिन्नं घटाकार-वृत्त्यवच्छिन्नं च चैतन्यं न भिद्यते इत्यर्थः । परममूले **तत्प्रतिफलितेति**=घटाद्याकार-वृत्तिप्रतिबिम्बितेत्यर्थः । परममूले **तत्रेति**=पराभिमतधारावाहिकबुद्धिकाले इत्यर्थः । परममूले **तावत्कालिकमिति**=वृत्तिकालिकमित्यर्थः। **एवमपीति** । पराभिमतधारावाहिकबुद्धिकाले तव मते घटादिज्ञानस्यैकत्वेन पराभिमतधारावाहिकबुद्धिकाले द्वितीयादिघटादिज्ञानेष्वव्याप्त्य-भावेऽपीत्यर्थः ॥

**शि० म०**–ननु दिनभेदेन जायमानस्य घटादिज्ञानस्य नानात्वात् तस्य च दिना-न्तरावगतघटादिविषयत्वेन तत्राव्याप्तिः । न चानधिगतपदेन स्वाव्यवहितपूर्वक्षण-वृत्तिस्वसमानाधिकरणज्ञानाविषयविषयकत्वं विवक्षितमतो नोक्तदोष इति वाच्यम्, तथापि स्मृतावतिव्याप्तेः । स्वविषयसमानविषयकज्ञानाजन्यत्वमनधिगतपदेन विवक्षितमिति चेन्न, स्वविषयसमानविषयकपदेन स्वविषयानतिरिक्तविषयत्वविव-क्षायामुपनीतभानपक्षेऽनुमितौ संशयोत्तरप्रत्यक्षे च मतान्तरे शाब्दज्ञाने अव्याप्तेः । प्रमुष्टतत्ताकस्मृतावतिव्याप्तेश्च । नापि स्वविषयान्यूनविषयकत्वं सर्वेश्वरज्ञानमादाय लक्षणस्यासंभवप्रसङ्गात् । अथ स्वविषयान्यूनानातिरिक्तविषयकत्वं तद्विवक्षितं ततश्च संशयोत्तरप्रत्यक्षानुमितिशाब्दज्ञानेषु नाव्याप्तिः ईश्वरज्ञानमादायापि नासंभवः ॥

**म० प्र०**–दिनभेदेन जायमानस्य=दिनान्तररूपदिनविशेषवृत्तिजन्याश्रयस्य नानात्वात्=पूर्व-दिनवृत्तिज्ञानाद्भिन्नत्वात्। तस्य=दिनान्तरीयघटादिज्ञानस्य। तत्र=दिनान्तरीये घटादिज्ञाने । अनधि-गतपदेन अनधिगतार्थविषयशब्देन। **स्वाव्यवहितेति**। स्वं घट इति ज्ञानं तदव्यवहितपूर्वक्षण-वृत्तियस्स्वसमानाधिकरणज्ञानं पटादिज्ञानं तदविषयविषयकत्वं घटज्ञाने इति लक्षणसमन्वयः। स्वस-

मानाधिकरणत्वं च परमते एकात्मवृत्तित्वं वेदान्तिमते त्वेकान्तःकरणवृत्तित्वरूपमिति विभागः । स्वसमानाधिकरणज्ञानाविषयकत्वमित्युक्ते अतीतादिने ज्ञातघटे 'एतत्कालिकोऽयं घटः' इति ज्ञानस्य दिनान्तरीयघटादिज्ञानविषयविषयकत्वेनातीतदिने ज्ञातघटे एतत्कालिकघटादिज्ञानेऽव्याप्तिः स्यात्तद्वारणाय स्वाव्यवहितपूर्वक्षणवृत्तीति ज्ञानविशेषणम्, स्वाव्यवहितपूर्वक्षणवृत्तिज्ञानाविषयकत्वमित्युक्तेऽयं घट इत्यादिज्ञानस्य पुरुषान्तरीय 'अयं घट' इत्यादिज्ञानविषयविषयकत्वेनेश्वरीयसकलविषयकज्ञानविषयविषयत्वेन चासंभवः स्यात्तद्वारणाय स्वसमानाधिकरणेति । अत्र सर्वत्र यस्मिल्लक्षणसमन्वयेच्छा तत्त्वशब्देन ग्राह्यमित्यपि बोध्यमिति । अतः=अनाधिगतार्थविषयशब्दस्योक्तविवक्षितार्थपरत्वात् । नोक्तदोषः=एतत्कालिकघटादिज्ञाने उक्ताव्याप्तिरूपो दोषो न । तथापि=घटादिज्ञानेऽव्याप्त्यभावेऽपि । **स्मृतावतिव्याप्तेरिति** । मात्रादिस्मृतेर्मात्रादिस्मृत्यव्यवहितपूर्वक्षणवृत्तिस्वसमानाधिकरणघटादिज्ञानाविषयकत्वादिति शेषः । **स्वविषयेति** । स्वविषयाभिन्नविषयकज्ञानाजन्यत्वमित्यर्थः । **स्वविषयानतिरिक्तेति**=स्वविषयकत्वे सति स्वविषयानतिरिक्तविषयकत्वमित्यर्थः । एवमर्थाकरणे वक्ष्यमाणोपनीतभानपक्षे इत्युक्तिरनुपपन्ना स्यादनुपनीतभानपक्षेऽप्यनुमितेः स्वविषयानतिरिक्तविषयकज्ञानाजन्यत्वाभावात् । उपनीतभानपक्षे=अलौकिकसन्निकर्षजन्यज्ञानविषयवह्न्यादिसाध्येऽनुमितिरूपभानस्यालौकिकसन्निकर्षजन्यज्ञानविषयधूमादिहेतावलौकिकसन्निकर्षजन्यज्ञानविषयवह्न्यादिसाध्यनिरूपितव्याप्तिस्मरणरूपभानस्य वा स्वीकर्तृमते । अनुमितावित्यादिसप्तम्यन्तानामव्याप्तेरित्यनेनान्वयः । तथा हि स्वं वह्निविषयकानुमितिस्तस्या यो विषयो वह्न्यादिरूपो विषयस्तस्मादनधिकविषयकं ज्ञानमनुमितिपूर्वकालिकं व्याप्तिस्मरणात्मकं ज्ञानं तज्जन्यत्वस्यानुमितित्वावच्छिन्नानुमितौ सत्त्वेनाव्याप्तिः । एवं स्वं स्थाणुरेवेत्याकारकसंशयोत्तरप्रत्यक्षं तस्य विषयः स्थाणुस्तस्मादनधिकविषयकज्ञानं वक्रकोटरादिविषयकविशेषदर्शनात्मकं ज्ञानं तज्जन्यत्वस्य संशयोत्तरप्रत्यक्षे सत्त्वादव्याप्तिरिति । **मतान्तरे शाब्दज्ञाने इति** । मूलकारमतातिरिक्तमते शाब्दज्ञानत्वावच्छिन्नशाब्दज्ञाने इत्यर्थः । मूलकारमतेऽपि व्यक्तिमात्रार्थकतत्त्वमस्यादिवाक्यातिरिक्तनीलोत्पलादिवाक्यजन्यशाब्दज्ञानेऽव्याप्त्यापादनसंभवेऽपि तत्त्वमस्यादिपदेषु लक्षणाया अस्वीकारात्तत्त्वमस्यादिवाक्यजन्यज्ञानविषयाधिकविषयकतत्त्वंपदवाच्यार्थज्ञानस्य तत्त्वमस्यादिवाक्यजन्याखण्डवस्तुविषयकशाब्दज्ञानं प्रति कारणत्वेन तत्त्वमस्यादिवाक्यजन्यज्ञाने लक्षणसत्त्वेन शाब्दज्ञानत्वावच्छिन्ने शाब्दज्ञानेऽव्याप्त्यभावेन मूलकारादन्येषामाचार्याणां मते शाब्दज्ञानत्वावच्छिन्नशाब्दज्ञानस्य शाब्दज्ञानन्यूनविषयकपदार्थोपस्थितिजन्यत्वेन शाब्दज्ञानत्वावच्छिन्नशाब्दज्ञानेऽव्याप्तिरिति भावः । स्मृतित्वेनानुभवत्वेन च स्मृत्यनुभवयोः कार्यकारणभावमभिप्रेत्य प्रमुष्टतत्ताकस्मृतावतिव्याप्तिमाह—**प्रमुष्टतत्ताकेति** । मातेत्याकारकप्रमुष्टतत्ताकस्मरणस्य प्रमुष्टतत्ताकस्मृतिविषयाधिकविषयकपूर्वानुभवजन्यत्वेऽपि प्रमुष्टतत्ताकस्मृतिविषयानधिकविषयकप्रमुष्टतत्ताकस्मृत्यजन्यत्वस्य सत्त्वात्तत्रातिव्याप्तिरिति भावः । **स्वविषयान्यूनविषयकत्वमिति** । अस्याग्रे स्वविषयसमान-

विषयकशब्देन विवक्षितमिति शेषः । तथा च स्वविषयान्यूनविषयकज्ञानाजन्यत्वमित्यर्थः । मतान्तरे शाब्दज्ञानादौ न्यूनविषयकपदार्थज्ञानादिजन्यत्वेनाव्याप्त्यभावेऽपि मूलकृन्मते तत्त्वमस्यादिवाक्यजन्यज्ञाने स्वविषयान्यूनविषयकपदार्थज्ञानजन्यत्वेनाव्याप्तिमभिप्रेत्यासंभवमेवाह—**सर्वेश्वरज्ञानमिति** । **तदिति**=स्वविषयसमानविषयकत्वमित्यर्थः । **ततश्चेति** । चशब्दस्यैवकारार्थकत्वेन स्वविषयसमानविषयकशब्दस्य स्वविषयान्यूनानतिरिक्तविषयकपरत्वादेवेत्यर्थः ॥

**शि० म०—व्याप्तिज्ञानपदार्थस्मरणयोर्न्यूनविषयत्वादीश्वरज्ञानस्य चाधिकविषयत्वादिति चेन्न । तथापि प्रमुष्टतत्ताकस्मृतावतिव्याप्तितादवस्थ्यात् । तत्त्वमसीति वाक्यजन्याभेदज्ञानस्य तत्त्वंपदलक्षितस्वरूपोपस्थितिजन्यत्वेन तत्राव्याप्तेश्च । न चानधिगतविषयपदेन संस्काराजन्यत्वं विवक्षितं स्मृतिश्च तज्जन्येति नातिव्याप्तिः । लिङ्गकरणतावादिमते संस्कारलिङ्गकानुमितौ सिद्धान्ते प्रत्यभिज्ञायामनुमितिमात्रे चाव्याप्तेः । अनधिगतपदेनैव भ्रमेऽतिप्रसङ्गनिरासेनाबाधितपदवैयर्थ्यापत्तेः । भवन्मते ब्रह्मव्यतिरिक्तसकलपदार्थज्ञानस्य भ्रमतया पूर्वपूर्वानुभवसंस्कारजन्यत्वेन तत्राव्याप्तेश्च । न च संस्कारत्वेन तदजन्यत्वं भ्रमस्तु दोषत्वेनैव तज्जन्य इति वाच्यम् । रजतादिभ्रमे चाकचिक्यादिदोषवद्ब्रह्मातिरिक्तघटादिप्रपञ्चज्ञाने मूलाविद्याया एव दोषत्वाभ्युपगमात् । तस्मादुक्तप्रमालक्षणमयुक्तमिति ॥**

**म० प्र०—न्यूनविषयत्वादिति** । पर्वतादिपक्षस्य वह्न्यादिसाध्यस्य पक्षसाध्यसंयोगादेश्चानुमितिनिरूपितविषयत्वं व्याप्तिज्ञानस्य तु साध्यविषयकत्वेऽपि पर्वताद्यविषयकत्वादनुमितिन्यूनविषयकत्वं शाब्दज्ञानस्य तु संसर्गावगाहित्वादधिकविषयकत्वेन पदार्थस्मृतेः पदार्थसंसर्गावगाहिशाब्दज्ञानन्यूनविषयकत्वेन तज्जन्यत्वेऽपि नाव्याप्तिरिति भावः । **अतिव्याप्तितादवस्थ्यादिति** । पूर्वानुभवस्य प्रमुष्टतत्ताकस्मृतिविषयाधिकविषयकत्वेन प्रमुष्टतत्ताकस्मृतिविषयान्यूनानतिरिक्तविषयकप्रमुष्टतत्ताकस्मृत्यात्मकमेव ज्ञानं ग्राह्यं तदजन्यत्वस्य प्रमुष्टतत्ताकस्मृतौ सत्त्वेनातिव्याप्तितादवस्थ्यादित्यर्थः । संस्काराजन्यत्वं संस्कारनिष्ठजनकतानिरूपितजन्यतानाश्रयत्वम् । **संस्कारलिङ्गकानुमिताविति** । "अयं पुरुषो मातृविषयकस्मृतिमान्मातृविषयकसंस्कारवत्त्वान्मद्वत्" इत्याकारकसंस्कारहेतुकानुमितावव्याप्तेरित्यर्थः । अत्र हेतुसिद्धिस्तु "अयं पुरुषो मातृविषयकसंस्कारवान्पूर्वकालिकमातृविषयकानुभववत्त्वान्मद्वत्" इत्यनुमानेन बोध्या । तत्रानुभवसिद्धिरपि "अयं पुरुषो मातृविषयकानुभववान्मातृविषयकशब्दवत्त्वात्" इत्यनुमानेन बोध्येति । **दोषत्वेनैवेति** । दोषत्वावच्छिन्ना या संस्कारनिष्ठजनकता तन्निरूपितजन्यतावान् भ्रमो न तु संस्कारत्वावच्छिन्ना या संस्कारनिष्ठजनकता तन्निरूपितजन्यतावानित्यर्थः । **चाकचिक्यादिदोषवदिति** । अत्रादिपदेन सावयवत्वदूरदेशवृत्तित्वादिकविषयनिष्ठदोषाः पित्तादिकरणनिष्ठदोषा मैत्रादेः शुक्त्यादिविशेषांशावच्छिन्नचैतन्यावरकाज्ञानरजतस्मरणं चेत्यादिप्रमातृनिष्ठदोषाश्च ग्राह्या इति । **मूलाविद्याया एवेति** । न संस्कारस्येति

शेषः । तथा च संस्कारस्य दोषत्वेन न हेतुता किंतु संस्कारत्वेनैव हेतुतेति ब्रह्मव्यतिरिक्तसकलपदार्थज्ञानेऽव्याप्तिस्तदवस्थाऽबाधितपदवैयर्थ्यं च तदवस्थमिति भावः ॥

**शि० म०—अत्र ब्रूमः । अनधिगताबाधितार्थविषयकज्ञानत्वं प्रमात्वम् । अनधिगतत्वं च स्वाव्यवहितपूर्वक्षणवृत्तिधर्माविषयविषयकत्वेन नियतत्वं तेन स्मृतेस्तादृशसंस्कारविषयविषयकत्वात्तत्र नातिव्याप्तिः ।**

**म० प्र०**—अनधिगतत्वं च=ज्ञाननिष्ठमनधिगतार्थविषयकत्वं च । **स्वाव्यवहितपूर्वक्षणवृत्तीति** । स्वाव्यवहितपूर्वक्षणवृत्तिधर्माविषयविषयकत्वनिरूपिताधिकरणतावत्त्वं तथा च स्वमयं घट इति ज्ञानं तस्मादव्यवहितपूर्वक्षणवृत्तिधर्मः पट इत्यादिज्ञानात्मको धर्मस्तस्य विषयः पटादिस्तद्भिन्नघटविषयकत्वनिरूपिताधिकरणतावत्त्वमयं घट इति ज्ञाने इति लक्षणसमन्वयः । अत्र स्वाव्यवहितपूर्वक्षणवृत्तिधर्माविषयविषयकत्वाधिकरणत्वं विहाय स्वाव्यवहितपूर्वक्षणवृत्तिधर्माविषयविषयकत्वेन नियतत्वमित्युक्तिर्यत्र स्वाव्यवहितपूर्वक्षणवृत्तिधर्माविषयविषयकत्वं तत्र स्मृतिभिन्नत्वमिति स्वाव्यवहितपूर्वक्षणवृत्तिधर्माविषयविषयकत्वस्य स्मृतिभिन्नत्वव्याप्यताबोधनार्थेति । न चेश्वरघटादिज्ञानमादाय पुरुषान्तरघटादिज्ञानमादाय च लक्षणासंभवरूपो दोष इति वाच्यम् । 'स्वसमानाधिकरणेति' धर्मविशेषणस्यापि निवेशनीयत्वात् । न चैवमीश्वरादिघटादिज्ञानमादाय लक्षणासंभवरूपदोषासंभवेन यद्वेत्यादिवक्ष्यमाणग्रन्थस्य नन्वीश्वरज्ञानमादाय इत्याद्यवतरणानुपपत्तिरिति वाच्यम् । वक्ष्यमाणावतरणस्य यथाश्रुतलक्षणाभिप्रायेणोपपत्तेः । कस्मिंश्चित्पुस्तके स्वाव्यवहितपूर्वक्षणवृत्तिधर्माविषयविषयकत्वेन नियतत्वमित्यस्य स्थाने स्वाव्यवहितपूर्वक्षणवृत्तिधर्मविषयविषयकत्वेनानियतत्वमिति पाठोऽस्ति । तस्य स्वाव्यवहितपूर्वक्षणवृत्तिधर्मविषयविषयकत्वनिरूपिताधिकरणताशून्यत्वमित्यर्थः । अत्रापि स्वाव्यवहितपूर्वक्षणवृत्तिधर्मविषयविषयकत्वाधिकरणताशून्यत्वं विहाय स्वाव्यवहितपूर्वक्षणवृत्तिधर्मविषयविषयकत्वेनानियतत्वमित्युक्तिर्यत्र स्मृतित्वं तत्र स्वाव्यवहितपूर्वक्षणवृत्तिधर्मविषयविषयकत्वमिति स्मृतित्वस्य स्वाव्यवहितपूर्वक्षणवृत्तिधर्मविषयविषयकत्वव्याप्यताबोधनार्थेति । अत्र ज्ञानपदं विहाय धर्मपदोपादानेन स्वाव्यवहितपूर्वक्षणवृत्तिधर्मशब्देन संस्कारस्यापि ग्रहणसंभवेन स्मृतौ नातिव्याप्तिरित्याह—**तेनेति** । ज्ञानपदं विहाय धर्मपदोपादानेनेत्यर्थः । **तादृशेति**=स्वाव्यवहितपूर्वक्षणवृत्तिधर्माभिन्नेत्यर्थः ॥

**शि० म०—ब्रह्मव्यतिरिक्तसकलप्रपञ्चज्ञानस्य संस्कारजन्यत्वेऽपि तादृशसंस्काराविषयविषयत्वान्नाव्याप्तिः । ननु तत्त्वमसीति—वाक्यजन्याखण्डाकारज्ञाने तथाऽप्यव्याप्तिः । तत्र लाक्षणिकतत्त्वंपदजन्याभेदोपस्थितेः स्वाव्यवहितपूर्वक्षणवृत्तित्वादिति चेत् न । साम्प्रदायिकमते प्रथमप्रमालक्षणे तस्य लक्ष्यत्वाभावेनेष्टापत्तेः । न चाप्रमात्वे तस्य भेदप्रतिभासविरोधित्वं न स्यादिति वाच्यम्, तस्याबाधितविरोध्यर्थविषयतया तन्निवर्तकत्वोपपत्तेः ॥**

म० प्र०—पूर्वोक्तां ब्रह्मव्यतिरिक्तसकलप्रपञ्चज्ञानेऽव्याप्तिं निराकरोति—**ब्रह्मव्यतिरिक्तसकलप्रपञ्चज्ञानस्येति**। अस्य नाव्याप्तिरित्यनेनान्वयः। ब्रह्मव्यतिरिक्तसकलप्रपञ्चज्ञाने नाव्याप्तिरिति प्रतिज्ञायां हेतुमाह—**संस्कारजन्यत्वेऽपीति**। ब्रह्मव्यतिरिक्तसकलपदार्थज्ञानस्य भ्रमतया वृत्त्यात्मके घटादिज्ञाने इदं ज्ञानमित्यनुभवो भवत्यहं ज्ञानमित्यनुभवः कुतो न भवति नियामकाभावादित्याकारकाशङ्कानिवृत्त्यर्थं यस्य यदाकारानुभवाहितसंस्कारसहकृताविद्याकार्यत्वं तस्य तदाकारानुभवविषयत्वमित्याकारकसमाधानविषयत्वेन च पूर्वपूर्वानुभवसंस्कारजन्यत्वेऽपीत्यर्थः। न च ब्रह्मव्यतिरिक्तसकलपदार्थज्ञानस्य स्मृतित्वापत्तिरिति वाच्यम्। संस्कारमात्राजन्यत्वाद्विषयत्वप्रतिबन्धकाभाववत्त्वभिन्नधर्मेण स्मृतिप्रागभावाजन्यत्वाच्चेति। **तादृशेति**। एतत्कल्पीयब्रह्मव्यतिरिक्ततत्तत्पदार्थविषयकज्ञानजनकीभूताः संस्काराः पूर्वकल्पीयतत्तत्पदार्थविषयका एतत्कल्पीयब्रह्मव्यतिरिक्ततत्तत्पदार्थज्ञानानि त्वेतत्कल्पीयब्रह्मव्यतिरिक्ततत्तत्पदार्थविषयकाणीति स्वाव्यवहितपूर्वक्षणवृत्तिधर्माभिन्नसंस्काराविषयविषयकत्वादित्यर्थः। **तथापीति**। ब्रह्मव्यतिरिक्तसकलपदार्थज्ञानेऽव्याप्त्यभावेऽपीत्यर्थः। **तत्रेति**=तत्त्वमस्यादिवाक्यजन्याखण्डाकारज्ञाने इत्यर्थः। **वृत्तित्वादिति**। अस्याग्रे स्वाव्यवहितपूर्वक्षणवृत्तिलाक्षणिकतत्त्वंपदजन्याभेदोपस्थितिरूपधर्मविषयविषयकत्वादिति शेषः। नेति प्रतिज्ञायां हेतुमाह—**इष्टापत्तेरिति**। इष्टापत्तौ हेतुमाह—**साम्प्रदायिकमते इति**। भाष्यकारादीनां मते इत्यर्थः। प्रथमप्रमालक्षणे=अनधिगताबाधितार्थविषयकज्ञानत्वं प्रमात्वमिति लक्षणे, तस्य=वाक्यजन्याखण्डाकारज्ञानस्य। **भेदप्रतिभासविरोधित्वं न स्यादिति**=भ्रान्तिसिद्धपारमर्थिकेशजीवभेदज्ञाननिवर्त्तकत्वं न स्यादित्यर्थः। तथा च तत्त्वमस्यादिवाक्यजन्याखण्डाकारज्ञानस्य भ्रान्तिसिद्धपारमार्थिकेशजीवादिभेदज्ञाननिवर्त्तकत्वस्वीकाररूपसिद्धान्तहानिः स्यादिति भावः। न च वाच्यमिति प्रतिज्ञायां हेतुमाह—**तन्निवर्त्तकत्वोपपत्तेरिति**। भ्रान्तिसिद्धपारमार्थिकेशजीवभेदादिप्रतिभासनाशकत्वोपपत्तेरित्यर्थः। तस्य भेदप्रतिभासनिवर्तकत्वोपपत्तौ हेतुमाह—**तस्येति**। तत्त्वमस्यादिवाक्यजन्याखण्डाकारज्ञानस्येत्यर्थः। अबाधितविरोध्यर्थविषयतया=प्रत्यक्षादिप्रमाणान्तरेणाबाधितो भेदविरोधी च योऽर्थ ऐक्यरूपोऽर्थस्तद्विषयतया॥

**शि० म०—ज्ञानस्य भेदज्ञाननिवर्तकतायां गौरवेणानधिगतविषयकत्वस्यातन्त्रत्वात्दुक्तमतवर्णके विवरणाचार्यैः तत्त्वमसीति वाक्यस्य जीवब्रह्मपदार्थप्रतीतिसमये प्रतिपन्नैक्यविषयतयाऽनुवादप्राप्तावपि भेदप्रतिभासविरोधितया प्रामाण्यमिति। ग्रन्थकृन्मते तु तत्त्वमसीतिवाक्यजन्यमभेदज्ञानं प्रथमलक्षणेऽपि लक्ष्यमेव। न चाधिगताभेदविषयत्वादव्याप्तिः। तत्त्वंपदाभ्यां शक्त्या कर्तृत्वसर्वज्ञत्वादिविशिष्टजीवब्रह्मणोरुपस्थितावपि विशिष्टयोरन्वयानुपपत्त्या विशेष्ययोरेवाभेदान्वय इति चतुर्थे ग्रन्थकृता वक्ष्यमाणत्वेन पदार्थस्मृतिसमये अभेदान्वयस्य प्रतिपत्तेः। न च शाब्दप्रमायामुपनीतभानपक्षेऽनुमितौ चाव्याप्तिः पदार्थव्याप्त्योरव्यवहितपूर्वक्षण-**

वृत्तिस्मृतिविषयत्त्वादिति वाच्यम् । तयोरज्ञातसाध्यवाक्यार्थांश एव प्रमात्वाभ्युपगमेन ज्ञातार्थांशे तदप्रमात्वस्येष्टत्वात् । यद्वा अनधिगतविषयपदेन स्वसमानविषयकसंस्काराजन्यत्वं विवक्षितम् । स्वसमानविषयत्वं स्वान्यूनविषयत्वम्, तेन प्रमुष्टतत्ताकस्मृतौ नातिव्याप्तिः । शाब्दप्रमा तु पदार्थस्मृतिजन्याऽपि न संस्कारजन्या, अनुमितिः प्रत्यभिज्ञा च न्यूनविषयतज्जन्येति नाव्याप्तिः । ब्रह्मव्यतिरिक्तघटादिसकलप्रमायाः संस्कारजन्यत्वेऽपि तस्या भिन्नविषयत्वान्नाव्याप्तिः। अथवा स्वान्यूनविषयकानुभवाजन्यत्वं विवक्षितम्, तच्च तत्त्वेन तदजन्यत्वमतः सर्वदोषनिरासः । ततश्च युक्तमिदं प्रमालक्षणमिति तदेतत्सर्वमभिसंधायाह—इति नाव्याप्तिशङ्काऽपीति ॥

म० प्र०—ननु यथार्थज्ञानस्यानधिगताबाधितभ्रान्तिसिद्धभेदविरोध्यभेदरूपार्थविषयकत्वेनैव भेदप्रतिभासनिवर्तकत्वम्, न त्वबाधितभ्रान्तिसिद्धभेदविरोध्यभेदरूपार्थविषयकत्वमात्रेण कल्पितभेदप्रतिभासनिवर्तकत्वमनधिगताबाधितभ्रान्तिसिद्धभेदविरोध्यभेदरूपार्थविषयकत्वेनैव घटादियथार्थज्ञानस्य भ्रान्तिसिद्धभेदप्रतिभासनिवर्त्तकताया दृष्टत्वात्कथं तत्त्वमस्यादिवाक्यजन्यज्ञानस्याबाधितभ्रान्तिसिद्धपारमार्थिकेशजीवभेदविरोध्यभेदरूपार्थविषयकत्वेनैव भेदप्रतिभासनिवर्त्तकत्वं त्वयोच्यते इत्यत आह—**ज्ञानस्येति** । ज्ञाननिष्ठस्यानधिगतविषयकत्वस्य=अनधिगताबाधितभेदविरोध्यर्थविषयकत्वस्य, भेदज्ञाननिवर्त्तकतायामतन्त्रत्वात्=यत्र ज्ञानेऽनधिगताबाधितभेदविरोध्यभदार्थविषयकत्वं तत्र ज्ञाने भेदप्रतिभासनिवर्तकत्वमिति भेदप्रतिभासनिवर्तकतानिरूपितव्याप्यत्वाभावात् । ननु तस्य भेदप्रतिभासनिवर्त्तकतानिरूपितव्याप्यत्वाभावः कुतो निश्चित इत्याशङ्क्य तत्र हेतुमाह—**गौरवेणेति** । ज्ञानस्याबाधितभेदविरोध्यभेदार्थविषयकत्वेन भेदप्रतिभासनिवर्तकत्वापेक्षया ज्ञानस्यानधिगताबाधितभेदविरोध्यभेदार्थविषयकत्वेन भेदप्रतिभासनिवर्त्तकतायां गौरवेणेत्यर्थः । **तत्त्वमसीतिवाक्यस्येति** । जीवब्रह्मपदार्थप्रतीतिसमये=लक्षणया वृत्त्या शुद्धपदार्थोपस्थितिसमये, तत्त्वमस्यादिवाक्यस्य निश्चितैक्यविषयकत्वेन हेतुना, अनुवादप्राप्तावपि=अप्रामाण्यप्राप्तावपि अभेदप्रतिभासविरोधिज्ञानजनकतया, प्रामाण्यं=प्रमाकरणत्वं संभवतीत्यर्थः । ननु साम्प्रदायिकमतवत्किं ग्रन्थकृन्मतेऽपि तत्त्वमस्यादिवाक्य—जन्याखण्डाकारज्ञानस्य प्रथमप्रमालक्षणालक्ष्यत्वमित्याशङ्क्याह—**ग्रन्थकृदिति** । न चेति प्रतिज्ञायां हेतुमाह—**पदार्थेति** । सर्वज्ञत्वादिविशिष्टयोस्तत्त्वंपदार्थयोः स्मृतिसमये इत्यर्थः । अभेदान्वयस्याप्रतिपत्तौ हेतुमाह—**तत्त्वंपदाभ्यामिति** । शाब्दप्रमायामित्यस्याव्याप्तिरित्यनेनान्वयः । शाब्दप्रमायामुपनीतभानपक्षे संशयोत्तरप्रत्यक्षानुमित्योश्चेत्यस्य स्थाने शाब्दप्रमायामुपनीतभानपक्षेऽनुमितौ चेति पाठः साधुः । अव्याप्तौ हेतुमाह—**पदार्थेति । स्मृतिविषयत्वादिति** । अस्याग्रे शाब्दानुमित्योः स्वाव्यवहितपूर्वक्षणवृत्तिव्याप्तिपदार्थविषयकस्मृतिरूपधर्मविषयत्रिषयकत्वाधिकरणत्वादिति शेषः ।तयोः शाब्दानुमित्योः । नन्वीश्वरज्ञानमादाय पुरुषान्तरज्ञानमादाय चोक्तानधिगतलक्षणे उक्तासंभवरूपदोषस्तदवस्थ इत्यत आह—**यद्वेति** । स्वान्यूनविषयत्वं स्वविषयविषयकत्वे सति

स्वविषयान्यूनविषयकत्वमत एव वक्ष्यमाणब्रह्मव्यतिरिक्तेत्यादिग्रन्थानुपपत्तिर्नास्ति। तेन=स्वान्यूनविषयकत्वरूपस्वसमानविषयकत्वविवक्षणेन । **न्यूनविषयकतज्जन्येति** । लिङ्गपरामर्शकरणत्वस्य निराकृतत्वेन लिङ्गपरामर्शजन्यसंस्कारस्याकारणत्वाद्व्याप्तिज्ञानजन्यसंस्कार एव ग्राह्यः । स तु स्वन्यूनविषयकस्तज्जन्यत्वेनानुमित्यादेर्नाव्याप्तिरित्यर्थः । ननु तथापि स्मृतावतिव्याप्तिः स्मृतेरपि स्मृत्यनुभवयोः स्मृतित्वेनानुभवत्वेन कार्यकारणभावस्वीकर्तृमते स्वविषयविषयकस्वविषयान्यूनविषयकतत्तत्स्मृतिजन्यसंस्काराजन्यत्वादित्यत आह—**अथवेति**। ननु सर्वज्ञानानां स्वान्यूनविषयकेश्वरज्ञानजन्यत्वेनासंभव इत्याशङ्क्याह—**तच्चेति** । स्वान्यूनविषयकानुभवाजन्यत्वं चेत्यर्थः । तच्चेन तदजन्यत्वं=स्वान्यूनविषयकानुभवत्वावच्छिन्नानुभवनिष्ठजनकतानिरूपितजन्यताऽभाववत्त्वरूपम् । अतः= ईश्वरज्ञानस्य ज्ञानत्वावच्छिन्नजनकतायाः सत्वेन पूर्वोक्ताजन्यत्वस्य सर्वज्ञानेषु सत्वात् ॥

**ननु सिद्धान्ते घटादेर्मिथ्यात्वेन बाधितत्वात्तज्ज्ञानं कथं प्रमाणम् । उच्यते ॥**

शि० म०—इदानीं लक्षणद्वयस्याव्याप्तिमाशङ्कते—**नन्विति**। **कथं प्रमाणमिति**। उक्तप्रमालक्षणवन्न भवतीत्यर्थः । यद्वा । ननु यदीदं लक्षणं सर्वमतसाधारणं तदा धारावाहिकबुद्धावव्याप्तिः, यदि सिद्धान्ते एवेदं लक्षणं तदा ब्रह्मज्ञानस्यैव प्रमात्वतया मिथ्याभूतघटादिज्ञानस्याप्रमात्वात्तत्राव्याप्तिनिराकरणानुपपत्तेः अनधिगतपदवैयर्थ्यं चेत्याशयेन शङ्कते **नन्विति** । **कथं प्रमाणमिति**। प्रमात्वेन लक्ष्यं न भवतीत्यर्थः। घटादिज्ञानमपि लक्ष्यमेव प्रमात्वव्यवहारात्तद्व्यवहारार्थमेवात्र लक्षणप्रणयनादित्याशयेनाह—**उच्यते इति** ॥

म० प्र०—परममूले **तज्ज्ञानमिति**=घटादिज्ञानमित्यर्थः । परममूले, कथं प्रमाणं=प्रमा कथम् । घटादिज्ञानस्य प्रमात्वाभावे हेतुमाह—परममूले **बाधितत्वादिति** । घटादेर्बाधितत्वे हेतुमाह—परममूले **सिद्धान्ते इति**। **उक्तेति**। उक्तं यत्प्रमालक्षणद्वयं तद्वद्घटादिज्ञानं न भवतीत्यर्थः । इदं लक्षणम्=अनधिगतपदार्थघटितप्रथमलक्षणं सर्वमतसाधारणं=सर्वनैयायिकादिमतवृत्ति सर्ववादिनां संमतमिति यावत् । धारावाहिकबुद्धौ=धारावाहिकबुद्धिघटकीभूतद्वितीयादिज्ञाने । **अव्याप्तिरिति** । परमते धारावाहिकबुद्धेः स्वीकृतत्वेन धारावाहिकबुद्धिघटकीभूतद्वितीयादिज्ञानस्याज्ञातार्थविषयकत्वाभावादिति शेषः । तदेत्यस्य तत्राव्याप्तिनिराकरणानुपपत्तिरित्यनेनान्वयः । तत्र=घटादिज्ञाने । घटादिज्ञानेऽव्याप्तिनिराकरणानुपपत्तौ हेतुमाह—**मिथ्याभूतेति** । मिथ्याभूतघटादिज्ञानस्याप्रमात्वे हेतुमाह—**ब्रह्मज्ञानस्यैवेति** । **वैयर्थ्यं चेति** । ब्रह्मव्यतिरिक्ततत्तत्पदार्थविषयकस्मृतेर्बाधितार्थविषयकत्वेन स्मृतौ लक्षणस्याप्रवृत्तेरिति शेषः । न चानधिगतविशेषणस्य ब्रह्मस्मृतौ लक्षणासंबन्धफलकत्वेन कथं वैयर्थ्यमिति वाच्यम्, ब्रह्मस्मृतौ लक्षणस्येष्टत्वात्। न च ब्रह्मस्मृतेः प्रमात्वेन तत्करणस्याप्यभ्युपेयत्वेन सप्तमप्रमाणाभ्युपगमापत्तिरिति वाच्यम्, ब्रह्मस्मृतेर्वाक्यजन्यवृत्त्यात्मककज्ञानजन्यत्वेन ब्रह्मस्मृतिजनकीभूतज्ञानरूपव्यापारद्वारा शब्दप्रमाणस्यैव

ब्रह्मस्मृतिजनकत्वेन तत्करणस्य शब्दप्रमाणे एवान्तर्भावादिति । **प्रमात्वेनेति** । प्रमात्वावच्छिन्नं यल्लक्ष्यत्वं तद्वन्न भवतीत्यर्थः । **प्रमात्वेति** । घटादिज्ञाने इति शेषः । नन्वेवं यथार्थस्मृतेरपि नियतसंवादिप्रवृत्तिजनकत्वेन प्रमात्वाल्लक्ष्यत्वेनानधिगतपदवैयर्थ्यं तदवस्थमेवेत्याशङ्क्येतरव्यावृत्तिप्रमात्वप्रकारकव्यवहारान्यतरप्रयोजनोपयोग्येव प्रामाण्यमत्र निरूपणीयं न तु संवादिप्रवृत्त्युपयुक्तप्रामाण्यमत्र निरूपणणीयमित्यनधिगतविशेषणस्य साफल्यमभिप्रेत्याह—**तद्व्यवहारार्थमेवेति**। घटादिज्ञानेष्वितरव्यावृत्तिप्रमात्वप्रमात्वप्रकारकव्यवहारान्यतरप्रयोजनार्थमेवात्र=अस्मिन् ग्रन्थे उक्तप्रमालक्षणप्रणयनान्न तु ज्ञानानां संवादिप्रवृत्तिजनकत्वबोधा लक्षणप्रणयनमित्येवकारार्थ इत्यर्थः।।

**ब्रह्मसाक्षात्कारानन्तरं हि घटादीनां बाधः । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति श्रुतेः । न तु संसारदशायां बाधः "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इति श्रुतेः । तथा चाबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति न घटादिप्रमायामव्याप्तिः ॥**

**शि० म०**—तर्हि सिद्धान्ते घटादिज्ञानस्यापि लक्ष्यत्वेन तत्राव्याप्तिर्दुर्वारा तद्विषयस्य शुक्तिरूप्यवद्बाधितत्वादित्याशङ्क्य तद्वत्संसारदशायां घटादिप्रपञ्चस्य न बाध इत्याह—**ब्रह्मेति** । घटादीनां बाधस्तु स्वोपादाननिवृत्तिरूपो ग्राह्यः । ननु "नेह नानाऽस्ति" इत्यादिश्रुत्या कालत्रये घटादेर्बाधावगतेः कथं संसारदशायामबाध इत्याशङ्क्य पारमार्थिकत्वावच्छिन्नतदत्यन्ताभावावगमेऽपि अध्यासविरोधिनः स्वोपादाननिवृत्तिलक्षणबाधस्य मुक्तिदशायामेवावगमादित्याह—**यत्रेति** । **न तु संसारदशायामिति** । स्वोपादाननिवृत्तिलक्षणो बाध इत्यनुषङ्गः। प्रपञ्चस्य संसारदशायां बाधाभावे हेतुमाह—**यत्र हीति** । नन्वेवमप्यबाधितपदेन कालत्रयाबाध्यत्वस्यार्थविशेषणत्वेनोक्तत्वात्तद्घटितलक्षणाव्याप्तिस्तदवस्थेत्यत आह—**तथा चेति** । संसारदशायामबाधितत्वे सिद्धे सतीत्यर्थः। **संसारदशायामिति**। संसारकालिकस्वोपादाननिवृत्त्यप्रतियोगित्वलक्षणमेवाबाधितत्वं लक्षणे विवक्षितमित्यर्थः ॥

**म० प्र०**—तर्हि घटादिज्ञाने प्रमात्वव्यवहारे सति अव्याप्तिर्दुर्वारेति वाक्यबोधिताव्याप्त्यंशे हेतुमाह—**घटादिज्ञानस्येति** । दुर्वारांशे हेतुमाह—**तद्विषयस्येति** । घटादिज्ञानविषयस्येत्यर्थः । तद्वत्=शुक्तिरूप्यवत्, स्वोपादाननिवृत्तिरूपः=स्वोपादानेन सह स्वनिवृत्तिरूपः, पारमार्थिकत्वावच्छिन्नतदत्यन्ताभावावगमेऽपि=पारमार्थिकत्वावच्छिन्नप्रतियोगिताकप्रपञ्चात्यन्ताभावबोधेऽपि, अध्यासविरोधिनः=प्रपञ्चतत्प्रतीतिविरोधिनः, स्वोपादाननिवृत्तिलक्षणबाधस्य=स्वोपादानेन सह स्वनिवृत्तिलक्षणबाधस्य । एवमपि=प्रपञ्चस्य संसारदशायां बाधाभावेऽपि । उक्तत्वात्=निरूपणार्हत्वात् । स्वोपादाननिवृत्त्यप्रतियोगित्वलक्षणं=स्वोपादाननाशेन सह यः स्वनाशस्तस्याप्रतियोगित्वस्वरूपम् ॥

तदुक्तम्—

देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥ १ ॥ इति।

आ आत्मनिश्चयाद्ब्रह्मसाक्षात्कारपर्यन्तमित्यर्थः। लौकिकमिति। घटादिज्ञानमित्यर्थः। तानि प्रमाणानि षट् प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदात् ॥

शि॰म॰—उक्तघटादिज्ञानप्रामाण्यमभियुक्तवचनेनापि प्रथयति—तदुक्तमिति। लौकिकप्रमाणस्यात्मनिश्चयेनानुत्पाद्यत्वादज्ञाप्यत्वाच्च पञ्चम्यनुपपत्तिरित्यत आह—आ आत्मनिश्चयादिति। ब्रह्मनिश्चयः संसारदशायामप्यस्तीत्यत उक्तम्—ब्रह्मसाक्षात्कारेति। ननु लौकिकशब्देन प्रत्यक्षादिजन्यज्ञानमात्राभिधाने स्वर्गेष्टसाधनतादिज्ञानस्यालौकिकस्य वैदिकलिङ्गादिपदजन्यस्याप्रामाण्यं सर्वदा वा प्रामाण्यं स्यादित्याशङ्क्य ब्रह्मव्यतिरिक्तवस्तुज्ञानं सर्वं तेन विवक्षितमित्याह—घटादीति। सामान्यलक्षणाधीनो विभाग इत्यतः प्रमाणं लक्षयित्वा विभजते—तानीति। प्रत्यक्षमेकं प्रमाणमिति चार्वाकाः। प्रत्यक्षानुमाने इति काणादसुगतमतानुसारिणः। शब्देन सह त्रीणि प्रमाणानीति सांख्याः। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति नैयायिकाः। अर्थापत्त्या सह प्रमाणानि पञ्चेति प्राभाकराः। एवं प्रमाणविभागमन्ये व्याचक्षते तान्प्रत्याह—षडिति ॥

म॰प्र॰—प्रथयति=बोधयति। परममूले **देहात्मप्रत्यय इति**। यद्वद्यथा देहात्मप्रत्ययः=ब्राह्मणोऽहं क्षत्रियोऽहं वैश्योऽहमित्यादिप्रत्ययः, प्रमाणत्वेन कल्पितः=प्रमात्वप्रकारकनिश्चयविषयः। यद्वा कल्पितो भ्रमोऽपि ब्राह्मणोऽहमित्यादिदेहात्मप्रत्ययो ब्राह्मणोऽहमित्यादिप्रत्ययस्य कर्मणि प्रवृत्त्यादिरूपव्यवहारसाधनतया वैदिकपुरुषैः प्रमात्वेनेष्यते तद्वत्तथेदं=साक्षिप्रत्यक्षसिद्धं लौकिकं लौकिकसामग्रीजन्यं प्रत्यक्षादिकमात्मनिश्चयात्। आ आत्मनिश्चयादित्यत्राङो मर्यादार्थकत्वेनापरोक्षयथार्थब्रह्माभिन्नात्मनिश्चयात्पूर्वस्मिन्व्यवहारकाले बाधकाभावात्प्रमाणं व्यावहारिकप्रामाण्याश्रयप्रमाणरूपमिष्यताम्। वेदान्तानां तु कालत्रयाबाध्यब्रह्माभिन्नात्मबोधकत्वात्तत्त्वावेदकप्रामाण्यमिति तु शब्दार्थः। प्रमातृत्वस्य कल्पितत्वेऽपि विषयाबाधाज्ज्ञानानां प्रामाण्यमिति भाव इत्यर्थः। **ब्रह्मनिश्चय इति**=ब्रह्मास्तीत्याकारकब्रह्मनिश्चयः। **संसारदशायामप्यस्ति**। तथा च घटादिज्ञानस्य प्रमात्वं न स्यात्। **आ आत्मनिश्चयादिति**। मर्यादाकरणादतो निश्चयपदस्य ब्रह्माभिन्नात्मसाक्षात्काररूपोऽर्थः स्वीकरणीय इत्यर्थः। **प्रत्यक्षादीति**। अत्रादिपदेन लौकिकानुमानलौकिकोपमानलौकिकशब्दादीनां ग्रहणम्। मात्रपदं त्ववधारणार्थकम्। तथा चोक्तप्रत्यक्षादिप्रमाणेभ्यो जन्यज्ञानस्यैवाभिधाने इत्यर्थः। **स्वर्गेष्टेति**। स्वर्गाभिन्नो य इष्ट इच्छाविषयस्तन्निरूपिता या यागादिनिष्ठसाधनता तदादिविषयकज्ञानस्येत्यर्थः। **आप्रमाण्यं सर्वदा वा प्रामाण्यमिति**। लौकिकपदेन वैदिकज्ञानस्यानादानादिति शेषः ॥

**तत्र प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणम् ॥**

शि० म०—अनुमानादीनां च पृथक् प्रामाण्यं तत्तन्निरूपणावसरे वक्ष्यामः। तत्र प्रत्यक्षस्य ज्येष्ठत्वात्प्रथमं तन्निरूपयति—तत्रेति। प्रमाणानां मध्ये इत्यर्थः। प्रमाकरणत्वमनुमानादावपीत्यत उक्तं प्रत्यक्षेति। तावति चोक्ते भ्रमप्रत्यक्षकरणेऽतिप्रसङ्ग इत्यत उक्तं प्रमेति।

म० प्र०— तत्र=प्रत्यक्षादिप्रमाणानां मध्ये, तावति चोक्ते=प्रत्यक्षकरणमित्येवोक्ते ।

शि० म०—नन्वयुक्तमिदं प्रत्यक्षप्रमाणलक्षणं प्रत्यक्षप्रमायाः प्रत्यक्षप्रमाणजन्यज्ञानरूपत्वेन परस्पराश्रयत्वात्, न चेन्द्रियजन्यज्ञानत्वं तथा। स्मृत्यनुमित्यादेर्मनोजन्यत्वेन प्रत्यक्षत्त्वापत्तेः, ईश्वरज्ञानस्येन्द्रियाजन्यत्वेनाप्रत्यक्षत्वापत्तेश्च। नापीन्द्रियत्वेनेन्द्रियजन्यत्वं साक्षात्त्वं, स्मृतेरनुमितेश्च मनस्त्वेन तज्जन्यत्वेन नातिव्याप्तिरिति वाच्यम्। तथापि सिद्धान्ते मनसोऽनिन्द्रियतया सुखादिप्रत्यक्षे भ्रमे चाव्याप्तेः। न च विषयजन्यज्ञानत्वम् मनोविशेष्यकानुमित्यादौ तत्प्रसङ्गात्, सुखादिप्रत्यक्षभ्रमयोरव्यापकत्वाच्च। अत एव न विषयत्वेन तज्जन्यज्ञानत्वं साक्षात्त्वम् ॥

म०प्र०**परस्पराश्रयत्वादिति**।प्रत्यक्षप्रमाणज्ञाने सति प्रत्यक्षप्रमाणजन्यज्ञानरूपप्रत्यक्षप्रमाया ज्ञानंप्रत्यक्षप्रमाज्ञाने प्रत्यक्षप्रमाघटितप्रत्यक्षप्रमाणज्ञानमित्यन्योऽन्याश्रयादित्यर्थः।तथा=प्रत्यक्षत्वम्। न चेति प्रतिज्ञायां हेतुमाह—**स्मृतीति**।**इन्द्रियत्वेनेन्द्रियजन्यत्वमिति**।इन्द्रियत्वावच्छिन्नयेन्द्रियनिष्ठा जनकता तन्निरूपितजन्यत्वमित्यर्थः।एवं च सति न स्मृत्यादावतिव्याप्तिरित्याह०**स्मृतेरिति**।तथापि=स्मृत्यादावतिव्याप्त्यभावेऽपि।**मनोविशेष्यकेति**="मन इन्द्रियं प्रत्यक्षज्ञानकरणत्वाच्चक्षुरादिवदिवत्यादिमनःपक्षकानुमितौ मनसः पक्षत्वेन मनसो विषयत्वं मनसो निखिलज्ञानं प्रति हेतुत्वेन मनोविशेष्यकानुमितेः पक्षीभूतमनोऽभिन्नविषयजन्यत्वमप्यस्ति। इतरपक्षकानुमितौ तु पक्षज्ञानस्य हेतुत्वेन न पक्षजन्यत्वमिति **मनोविशेष्यके**त्युक्तमित्यर्थः।तत्प्रसङ्गात्=प्रत्यक्षत्वप्रसङ्गात्, प्रत्यक्षप्रमालक्षणातिव्याप्तेरिति वा। **अव्यापकत्वाच्चेति**। एकदा सुखादितदाकारवृत्त्योरभ्युपगमात्प्रत्यक्षलक्षणस्य सुखादिप्रत्यक्षे वृत्तित्वाभावेनाव्याप्तेश्चेत्यर्थः। अत एव=भ्रमसुखादिप्रत्यक्षयोरव्यापकत्वादेवेत्यर्थः। यद्यपि मनसो ज्ञानत्वावच्छिन्नज्ञानं प्रति मनस्त्वेन कारणत्वादुक्तप्रत्यक्षलक्षणस्य विषयत्वावच्छिन्नजनकताघटितत्वेन मनोविशेष्यकानुमितावुक्तप्रत्यक्षलक्षणस्य नातिव्याप्तिस्तथापि सुखादिज्ञानेऽव्याप्तिरस्त्येवेति नेदं लक्षणं सम्यगिति भावः॥

शि० म०—किंच न विषयत्वं साक्षात्कारकारणतावच्छेदकं केवलविषयत्वस्यानुमेयसाधारणत्वात्। प्रत्यक्षज्ञानविषयत्वस्य तु तदपेक्षत्वेनानवच्छेदकत्वात् तत्तज्ज्ञानविषयत्वस्य च ज्ञानकालमात्रे वर्त्तमानस्य तत्तत्पूर्वभाविजनकतानवच्छेदकत्वात्। न च ज्ञानकरणाजन्यज्ञानत्वं ज्ञानाजन्यज्ञानत्वं वा ज्ञानाकरणकज्ञानत्वं वा साक्षात्त्वम्, आद्यस्य स्मृतौ लिङ्गकरणत्वनिरासेनानुमिताप्यव्यतिव्याप्तेः। द्वितीयस्य

विशेषणज्ञानकारणतावादिमते विशिष्टज्ञाने मतान्तरे प्रत्यक्षज्ञानमात्रस्यैवेश्वरज्ञानजन्यतया तत्राव्यापकत्वात्। तृतीयलक्षणस्य पूर्वानुभूतेः संस्कारोपक्षीणत्वेन स्मृत्यकरणतया तत्रातिव्याप्तेः। संस्कारद्वारा करणत्वे तु प्रत्यभिज्ञायामव्याप्तेः। न च पूर्वानुभवस्य तत्तास्मरणोपक्षीणत्वेन तत्राहेतुत्वं विशेषणज्ञानकारणत्वानभ्युपगमेन तत्तास्मरणकल्पने मानाभावात् ॥

म० प्र०–इदानीं विषयत्वस्य साक्षात्कारकारणतावच्छेदकत्वासंभवमभिप्रेत्याह–**किंचेति**। **न विषयत्वमिति**। साक्षात्काररूपं यत्कार्य्यं तन्निष्ठकार्य्यतानिरूपिता विषयनिष्ठा या कारणता तदवच्छेदकं विषयत्वं नेत्यर्थः। यत्र विषयत्वं तत्र प्रत्यक्षज्ञानजनकत्वमितीयं व्याप्तिर्न युक्ता विषयत्वस्यानुमेयवह्न्यादौ सत्त्वेऽप्यनुमेयवह्न्यादेः स्वविषयकप्रत्यक्षज्ञानाजनकत्वादित्यभिप्रेत्य नेति प्रतिज्ञायां हेतुमाह–**केवलेति**। ननु केवलविषयत्वस्य प्रत्यक्षकरणतावच्छेदकत्वासंभवेऽपि प्रत्यक्षज्ञानविषयत्वं प्रत्यक्षज्ञाननिष्ठकार्य्यतानिरूपितविषयनिष्ठकारणतावच्छेदकमस्त्विर्त्याशङ्क्य नेति पूर्वोक्तप्रतिज्ञायामेव हेतुमाह–**प्रत्यक्षज्ञानविषयत्वस्येति**। **तदपेक्षत्वेनेति**। प्रत्यक्षज्ञानापेक्षत्वेनेत्यर्थः। कार्य्योत्तरभाविधर्मस्य पूर्वभाविजनकतावच्छेदकताया अदृष्टत्वात्प्रत्यक्षज्ञानविषयत्वस्य प्रत्यक्षज्ञानोत्तरभावित्वेन प्रत्यक्षज्ञानपूर्वभाविजनकतावच्छेदकत्वं न संभवतीति भावः। नन्वेवमपि घटनिष्ठमयं घट इति ज्ञानविषयत्वं प्रत्यक्षघटज्ञाननिष्ठकार्य्यतानिरूपितघटनिष्ठकारणतावच्छेदकं पटनिष्ठमयं पट इति ज्ञानविषयत्वं प्रत्यक्षपटज्ञाननिष्ठकार्य्यतानिरूपितघटनिष्ठकारणतावच्छेदकमित्येवं तत्तज्ज्ञानविषयत्वमेव कारणतावच्छेदकमस्त्वित्याशङ्क्य पूर्वोक्तदोषस्यैव सत्त्वान्मैवमित्याह–**तत्तदिति**। ज्ञानकालमात्रे=घटादिबोधसमये एव। वादिमते=मतान्तरे विशेषणज्ञाननिष्ठकारणताऽनभ्युपगन्तृमते। तत्र=जन्यज्ञाने। **अव्यापकत्वादिति**। ईश्वरज्ञाने लक्षणसत्त्वेनाव्याप्तेरित्यर्थः। तत्र=स्मृतौ। **पूर्वानुभवस्य तत्तास्मरणोपक्षीणत्वेनेति**=पूर्वानुभवस्य तद्देशकालादिस्मरणोपक्षीणत्वेन। तत्र=प्रत्यभिज्ञायाम्, पूर्वानुभवस्य हेतुत्वं नास्तीत्यर्थः। **मानाभावादिति**। यदि विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वं स्यात्तदा पूर्वानुभवस्य संस्कारद्वारा तत्तत्स्मरणोपक्षीणत्वेनाहेतुत्वमपि स्यान्नैवमस्त्यतः संस्कारद्वारा पूर्वानुभवस्य प्रत्यभिज्ञां प्रति हेतुत्वादव्याप्तिस्तदवस्थेति भावः ॥

**प्रत्यक्षप्रमा त्वत्र चैतन्यमेव ॥**

शि० म०–"अनुमित्यादिस्सन्निहितांशे प्रत्यक्षत्वेन तत्राव्याप्तेः।" न च साक्षात्त्वं जातिः सिद्धान्ते वृत्तीनां ज्ञानत्वाभावात्। ज्ञानस्वरूपस्य ब्रह्मण एकत्वेन तस्यैकव्यक्तिकत्वेन जातित्वायोगात्। निश्चयत्वादिना साङ्कर्य्यप्रसङ्गाच्च। न च निश्चयत्वं न जातिः, वैपरीत्यापत्तेः भूतत्वमूर्त्तत्ववदुभयस्याप्यजातित्वापत्तेः। ततश्च प्रत्यक्षप्रमाणं दुर्निरूपमित्याशङ्क्याह–**प्रत्यक्षेति**। अयमर्थः। ज्ञानत्वमेव ज्ञानस्य प्रत्यक्षलक्षणम्। ज्ञानं च ब्रह्मैव 'सत्यं ज्ञानम्' इत्यादिश्रुतेः। इदं च लक्षणं ज्ञानस्य प्रत्यक्षत्वव्यवहार-

**प्रयोजकम् । तत्तद्विषयांशे ज्ञानस्य प्रत्यक्षत्वव्यवहारप्रयोजकं चानुपदमेव स्फुटीभविष्यति । चैतन्यरूपमेव ज्ञानमबाधितघटादिवृत्त्यवच्छिन्नं घटादिप्रमेत्युच्यते । अत एव विशिष्टं चैतन्यं प्रति चक्षुरादेः करणत्वाच्चक्षुरादि भवति प्रत्यक्षप्रमाणमिति॥**

म० प्र०–**साक्षात्त्वं जातिरिति** । तथा च प्रत्यक्षत्वविशिष्टप्रमाकरणं प्रत्यक्षप्रमाणमित्यर्थः । नन्वपरोक्षज्ञानवृत्तिजातिरूपं साक्षात्त्वं किं वृत्तिनिष्ठं ब्रह्मनिष्ठं वा, नाद्य इत्यभिप्रेत्य हेतुमाह–**सिद्धान्त इति** । न द्वितीय इत्यभिप्रेत्य हेतुमाह–**ज्ञानस्वरूपस्येति** । तस्य=साक्षात्त्वस्य । **साङ्कर्य्यप्रसङ्गाच्चेति** । निश्चयत्वात्यन्ताभाववति संशये साक्षात्त्वमस्ति । साक्षात्त्वात्यन्ताभाववत्यनुमित्यादौ निश्चयत्वमस्ति । उभयं त्वयं घट इत्यादिज्ञानेषु वर्त्तते इति निश्चयत्वादिना सांकर्य्यप्रसङ्गाच्चेत्यर्थः । ननु सङ्कररूपजातित्वबाधकेनैकधर्मनिष्ठजातित्वाभावबोधः क्रियते न तूभयधर्मनिष्ठजातित्वस्याभावबोधो जायते इत्यभिप्रायेणाशङ्क्य तां निषेधयति–**न चेति । उभयस्यापीति** । अपिशब्दस्य निश्चयार्थकत्वेन साक्षात्त्वनिश्चयत्वरूपोभयधर्मस्यैव संकररूपदोषेणाजातित्वापादनान्न त्वेकधर्मस्य सङ्करेणाजातित्वापादानं क्रियते इत्येवकारार्थः । कुतः इति चेत्तत्राह–**वैपरीत्यापत्तेरिति** । निश्चयत्वस्य जातित्वे संकरो बाधको न तु साक्षात्त्वस्य जातित्वे संकरो बाधक इत्यत्र विनिगमनाविरहेण साक्षात्त्वस्यैव जातित्वापत्तेरित्यर्थः । यद्यपि कारणतावच्छेदकतया जातिसिद्धिस्वीकारेण क्रियात्वावाच्छिन्नक्रियां प्रति मूर्तत्वेन कारणत्वमिति कारणतावच्छेदकतया मूर्तत्वजातिः सिध्यतीति भूतत्वमूर्तत्ववदिति दृष्टान्तानुपपत्तिस्तथाप्यसति बाधके कारणतावच्छेदकादीनां जातित्वाभ्युपगमेन संकररूपबाधकवशादुभयं न जातिरिति कस्यचिन्मताभिप्रायेण दृष्टान्तोपपत्तिरिति भावः । **ज्ञानत्वमेव ज्ञानस्येति** । ज्ञाननिष्ठज्ञानत्वमेव प्रत्यक्षलक्षणं ज्ञाननिष्ठप्रत्यक्षत्वव्यवहारप्रयोजकं ज्ञाननिष्ठप्रत्यक्षत्वप्रयोजकं चेत्यर्थः । प्रयोजकं=व्यापकम् । तत्तद्विषयांशे=घटपटादिरूपविषये, ज्ञानस्य=घटादिज्ञानस्य, अनुपदमेव=अग्रिमग्रन्थे एव, अत एव=वृत्त्यवच्छिन्नचैतन्यस्य प्रमात्वादेव ॥

**"यत्साक्षादपरोक्षात्" इति श्रुतेः । अपरोक्षादित्यस्यापरोक्षमित्यर्थः । ननु चैतन्यमनादि तत्कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्वमिति । उच्यते । चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिना जायते इति वृत्तिविशिष्टं चैतन्यमादिमदित्युच्यते ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः ॥**

शि० म०–आत्मनः प्रत्यक्षत्वे प्रमाणमाह–**यत्साक्षादिति** । ब्रह्मणः प्रमाणव्यापारद्वारकं प्रत्यक्षत्वं व्यावर्त्तयितुं श्रुतौ साक्षादिति विशेषणम् । अपरोक्षप्रमाणान्तरात्तस्योत्पत्तिज्ञप्त्योरभावादित्यत आह–**अपरोक्षादित्यस्येति** । चक्षुरादेः प्रमारूपं चैतन्यं प्रति करणत्वात् प्रामाण्यं किंवा घटादिप्रमारूपं प्रति, नाद्यः चैतन्य-

स्य स्वप्रकाशत्वेन स्वात्मनि प्रमाणव्यापारानपेक्षतया तत्करणाभावस्येष्टत्वादित्याशयेन परिहरति–**उच्यते इति**। द्वितीयं प्रत्याह–**चैतन्यस्येति**। चैतन्यस्य स्वरूपतोऽनादित्वेनेन्द्रियाजन्यत्वेऽपि वृत्तिविशिष्टचैतन्यमिन्द्रियजन्यं तदेव घटादिप्रत्यक्षप्रमेत्युच्यते इत्यन्वयः। अत एव तस्येन्द्रियजन्यत्वे हेतुमाह–**तदभिव्यञ्जकेति**। तत्प्रतिबिम्बग्राहीत्यर्थः। ननु वृत्तौ ज्ञानव्यवहारदर्शनात्स्वरूपेणेन्द्रियजन्यत्वाच्च सैव प्रत्यक्षप्रमा न वृत्तिविशिष्टं चैतन्यमित्याशङ्क्य 'सत्यं ज्ञानम्' इत्यादिश्रुत्या तस्यैव मुख्यज्ञानत्वावगमात्। वृत्तेश्च जडान्तःकारणधर्मत्वेन जडत्वात् ज्ञानव्यवहारस्य च तत्र गौणत्वेनाप्युपपत्तेर्न सा ज्ञानमित्याह–**वृत्ताविति**। उपचारे हेतुमाह–**ज्ञानेति**॥

**म० प्र०**–प्रमाणव्यापारद्वारकं=विषयचक्षुरादिप्रमाणसन्निकर्षरूपव्यापारद्वारकम्, अपरोक्षप्रमाणान्तरात्=अपरोक्षमनोरूपप्रमाणान्तरात्, तस्य=ब्रह्मणः, अभावादित्यस्याग्रे पञ्चम्यनुपपत्तिरिति शेषः। परममूले **यत्साक्षादिति**। यत्परमात्मतत्त्वं ब्रह्म बृहत्तमं साक्षात् प्रमाणं विनैवापरोक्षादपरोक्षम्, न तु घटादिवद्वृत्तिव्याप्यत्वेनेत्यर्थः। अत एव=अन्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य घटादिप्रत्यक्षप्रमारूपत्वादेव, तस्य=चैतन्यस्य, सैव=वृत्तिरेव, इत्याशङ्क्य न सा ज्ञानमित्याहेत्यन्वयः। ज्ञानशब्दस्य प्रवृत्तिनिमित्तं यज्ज्ञानत्वं तस्याभावरूपं हेतुं वृत्तावभिप्रेत्य न सा ज्ञानमिति प्रतिज्ञायां हेतुमाह–**सत्यमित्यादिना**। **तस्यैवेति**=चैतन्यस्यैवेत्यर्थः। एवकारव्यावर्त्ये वृत्तिनिष्ठज्ञानत्वाभावे हेतुमाह–**वृत्तेश्चेति**। वृत्तेस्त्वित्यर्थः। नन्वेवं वृत्तौ ज्ञानव्यवहारः कथमित्यत आह–**ज्ञानेति**। तत्र=वृत्तौ, गौणत्वेनापि=ज्ञानावच्छेदकत्वेनापि, वृत्तौ ज्ञानपदस्य लाक्षणिकत्वेनापीति वा। यद्वा ननु वृत्तौ ज्ञानव्यवहारसत्त्वान्न सा ज्ञानमिति त्वया कथमुच्यते इत्याशङ्क्योक्तप्रतिज्ञामुपपादयति। **ज्ञानेति**। ननु वृत्तौ ज्ञानव्यवहारो मुख्य एव किं न स्यादित्याशङ्क्य मैवमित्यभिप्रेत्य हेतुमाह–**वृत्तेश्चेति**। नन्वेवं क्वापि ज्ञानव्यवहारो मुख्यो न स्यादित्याशङ्क्य मैवमित्यभिप्रेत्य हेतुमाह–**तस्यैवेति**। ननु ब्रह्मणो मुख्यज्ञानत्वे प्रमाणाभाव इत्याशङ्क्य ब्रह्मणो ज्ञानत्वसत्त्वे प्रमाणमाह–**सत्यमिति**॥

**तदुक्तं विवरणे–अन्तःकरणवृत्तौ ज्ञानत्वोपचारादिति। ननु निरवयवस्यान्तःकरणस्य परिणामात्मिका वृत्तिः कथम्। इत्थम्–न तावदन्तःकरणं निरवयवं सादिद्रव्यत्वेन सावयवत्वात्। सादित्वं च "तन्मनोऽसृजत" इत्यादिश्रुतेः॥**

**शि० म०**–न चायमपसिद्धान्त इत्याह–**तदुक्तमिति**। नन्वात्माभिन्नमेव ज्ञानं तच्चेन्द्रियजन्यत्वात्प्रत्यक्षं नान्तःकरणवृत्तिविशिष्टं चैतन्यम्, अन्तःकरणपरिणामात्मिकाया वृत्तेरेवानुपपत्तेः। तथा हि "अन्तःकरणं न परिणामि निरवयवत्वादाकाशवत्" निरवयवत्वं च "सुखाद्युपलब्धिः करणजन्या इन्द्रियजन्या वा कार्यत्वात्

प्रत्यक्षज्ञानत्वाद्वा घटतज्ज्ञानवत्" इति धर्मिग्राहकानुमानाल्लाघवानुगृहीतात्सिध्यतीति न हेत्वसिद्धिरिति नैयायिकः शङ्कते-**नन्विति**। कथमित्याक्षेपः। "अन्तःकरणं परिणामि सावयवत्वान्मृद्वत्" इत्यनुमानेन बाधादपरिणामित्वानुमानं न युक्तमित्याह-**इत्थमिति**। ननु धर्मिग्राहकानुमानान्मनसो निरवयवत्वसिद्धेरसिद्धिरित्याशङ्क्याह-**न तावदिति**। अयमाशयः-न तावदुक्तानुमानात्तत्सिद्धिः शरीरप्राणसंयोगादिद्वारा तत्करणशरीरादिकमादायार्थान्तरात्। नापि द्वितीयानुमानादिन्द्रियत्वेन तत्सिद्धिः मनस इन्द्रियत्वस्य निराकरिष्यमाणत्वात्। किंच "नान्तःकरणं निरवयवं सादिद्रव्यत्वाद् घटवत्" इत्यनुमानान्निरवयवत्वासिद्धिरित्याह-**सादिद्रव्यत्वेनेति**। रूपादौ व्यभिचारवारणाय द्रव्यपदम्, गगनादौ तद्वारणाय सादीति। तव मतेऽप्यनुमानस्यैव मनसि प्रमाणत्वेनानुसरणीयतया तेन च लाघवादनादित्वेनैव सिद्धेर्विशेषणासिद्धो हेतुरित्याशङ्क्य मन्मते मनस्सिद्धौ तत्सादित्वे च श्रुतिरेव भगवती प्रमाणमित्याह-**सादित्वं चेति**। अवगम्यते इति शेषः। तथा च तद्ब्रह्म मनः असृजत इति श्रुतेरवगम्यत इति जातम्॥

म० प्र०-**लाघवानुगृहीतादिति**। मनसः सावयवत्वस्वीकारे तस्यानन्तावयवप्रागभावादिकल्पनेन गौरवं स्यादतो लाघवसहकृतानुमानादेव निरवयवत्वादिधर्मसिद्धिरित्यर्थः। **न हेत्वसिद्धिरिति**। निरवयवत्वरूपहेतोः पक्षावृत्तित्वरूपस्वरूपासिद्धिर्नास्तीत्यर्थः। धर्मिग्राहकानुमानात्="सुखाद्युपलब्धिः करणजन्या कार्यत्वात्पटादिवत्" इत्यादिधर्मिग्राहकानुमानात् असिद्धिः="अन्तःकरणं परिणामि सावयवत्वात्" इत्यनुमाने सावयवत्वरूपहेतोः पक्षावृत्तित्वरूपाऽसिद्धिः, उक्तानुमानात्=लाघवानुगृहीतात् "सुखाद्युपलब्धिः करणजन्या कार्य्यत्वात् घटवत्" इत्युक्तानुमानात्, तत्सिद्धिः=धर्मिसिद्धिद्वारा निरवयवत्वसिद्धिः। **तत्करणेति**=सुखाद्युपलब्धिकरणेत्यर्थः। अर्थान्तरात्=तवानभीष्टमनोऽतिरिक्तार्थसिद्धेः, द्वितीयानुमानात्="सुखाद्युपलब्धिरिन्द्रियजन्या प्रत्यक्षज्ञानत्वात्" इति द्वितीयानुमानात्। निरवयवत्वासिद्धिः=निरवयवत्वरूपहेतोरन्तःकरणरूपपक्षावृत्तित्वरूपस्वरूपासिद्धिः। **तद्वारणायेति**=व्यभिचारवारणायेत्यर्थः। नैयायिकमते व्यभिचारवारणमिदं स्वमते गगनादेः सावयवत्वस्याङ्गीकृतत्वेन व्यभिचाराभावात्। न च यदि स्वमते आकाशस्य निरवयवत्वं नेष्टं चेत्तर्हि 'तस्मान्निरंशं सद्यथा वियत्' इति विद्यारण्योक्तिः कथं संगच्छेत इति वाच्यम्, तयाऽपि परमताभिप्रायेणाकाशनिष्ठनिरवयवत्वबोधनादिति। तव मते=वेदान्तिनस्तव सिद्धान्ते। **तेन चेति**। अव्ययानामनेकार्थत्वेन च शब्दस्यावधारणार्थकत्वेनोक्तानुमानेनैवेत्यर्थः। विशेषणासिद्धः=सादित्वरूपविशेषणासिद्धस्वरूपासिद्धः॥

**वृत्तिरूपज्ञानस्य मनोधर्मत्वे च "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वम्मन एव" इति श्रुतिर्मानम्। धीशब्देन वृत्तिरूपज्ञानाभिधानम्। अत एव कामादे-**

**रपि मनोधर्मत्वम् । ननु कामादेरन्तःकरणधर्मत्वेऽहमिच्छाम्यहं जानाम्यहं बिभेमीत्याद्यनुभव आत्मधर्मत्वमवगाहमानः कथमुपपद्यते ॥**

शि० म०—ननु नान्तःकरणस्य सावयवत्वेन परिणामित्वम् अन्त्यावयविनि घटादौ व्यभिचारात् । न च तद्भिन्नत्वविशेषितं तत्परिणामे हेतुः अन्तःकरणस्यान्त्यावयविभिन्नत्वे प्रमाणाभावात्सादिद्रव्यत्वस्य घटादौ व्यभिचारेण तत्राप्रमाणत्वादित्यस्वरसादाह—**वृत्तिरूपज्ञानस्येति** । धीशब्दस्य ज्ञानशब्दपर्यायत्वमजानानं प्रत्याह—**धीशब्देनेति** । ननु ज्ञानं नान्तःकरणोपादानकं मानसप्रत्यक्षत्वात् कामनादिवत् ।"न च श्रुतिविरोधः मनोजन्यपरतयाऽपि तदुपपत्तेरित्याशङ्क्य मृद्घट इत्यादिवत् सामानाधिकरण्यश्रुतिरुपादानपरैवात एव दृष्टान्तः साध्यविकल इत्याह—**अत एवेति** । उक्तश्रुतेरेवेत्यर्थः । ननु न ज्ञानेच्छादेर्मनोधर्मत्वमहं जानाम्यहमिच्छामीत्यात्मधर्मत्वावगाहिप्रत्यक्षानुभवविरोधात् । कामादिश्रुतिश्च लाङ्गलं जीवनमितिवत् हेतावुपचरितार्थेत्याशङ्कते **नन्विति** ॥

म०प्र०—तद्भिन्नत्वविशेषितं तत्=अन्त्यावयविभिन्नत्वविशेषणविशिष्टं सावयवत्वम्, परिणामे=अन्तःकरणस्योपादानसमसत्ताकवृत्त्यात्मककार्य्यवत्त्वे । ननु " अन्तःकरणमन्त्यावयविभिन्नं सादिद्रव्यत्वात्कपालादिवत्" इत्यनुमानादन्त्यावयविभिन्नत्वसिद्धिरित्याशङ्क्याह—**सादिद्रव्यत्वस्येति** । तत्र=मनसोऽन्त्यावयविभिन्नत्वे । परममूले **काम इति** । कामः=स्त्र्यादिविषयसंबन्धाभिलाषः, संकल्पः=दुष्टेष्वपि विषयेष्वशोभनत्वादर्शनेन शोभनाध्यासः, विचिकित्सा=संशयज्ञानम् । श्रद्धा=अदृष्टार्थेषु कर्मसु देवतादिषु चास्तिक्यबुद्धिः,अश्रद्धा=उक्तेषु तद्विपरीतबुद्धिः, धृतिः=धारणम् देहाद्यवसादने सत्युत्तम्भनम्,अधृतिः=तद्विपर्ययः,ह्रीः=अकार्य्यप्रवृत्त्यारम्भप्रतिबन्धिका लोकलज्जा, धीः=घटाद्याकारा वृत्तिः, भीः=भयमित्यर्थः । श्रुतिविरोधः=मन एवेति श्रुतिविरोधः । **मनोजन्यपरतयाऽपीति** । मन एवेत्यस्याः श्रुतेर्मनोजन्यमेवेत्यर्थकतयाऽपीत्यर्थः । सामानाधिकरण्यश्रुतिः=इत्येतत्सर्वं मन इति सामानाधिकरण्यश्रुतिः, उपादानपरैव=मनस उपादानत्वाभिप्रायिका, अत एव=कामनादीनां मनउपादानकत्वादेव, दृष्टान्तः=कामनादिवदिति दृष्टान्तः । नन्वेवं कामादिश्रुतेः का गतिरित्यत आह—**कामादीति**। हेतावुपचरितार्था निमित्तकारणरूपहेत्वभिन्नो योऽमुख्यार्थस्तद्विषया । यद्वा कामादिश्रुतिर्हेतौ निमित्तकारणे बोधजनिका सत्युपचरितार्थेति योजना ॥

शि० म०—न चान्तःकरणधर्मस्य ज्ञानादेरात्मन्यध्यासः परस्परविरुद्धधर्मवदन्तःकरणात्मनोरैक्याध्यासाभावात्, धर्म्यैक्याध्यासस्य धर्माध्यासव्यापकत्वात् । अहमित्यन्तःकरणाभेद आत्मन्यध्यस्यते इति चेन्न । जाड्यचैतन्यादिविरुद्धधर्मवत्त्वेन भेदावगमात् । भेदाग्रहस्याध्यासहेतुत्वात् । किंच नानवगतयोस्तयोर्भेदाग्रहः, केवल-

भेदाग्रहेण सुषुप्तावध्यासादर्शनेन तस्याहेतुत्वात् । नाप्यवगतयोरात्मान्तःकरणयोर्भेदाग्रहादध्यासः, अनुमानेन 'तन्मनोऽसृजत' इत्यादिश्रुत्या च मनोऽवगमसमये तस्यात्मभिन्नत्वेनावगतेः । न च स्फटिकविवेकग्रहेऽपि लोहितः स्फटिक इति लौहित्याध्यासदर्शनात्तद्वदन्तःकरणस्यैक्याध्यासाभावेऽप्यस्तु तद्धर्माध्यास इति वाच्यम् । तत्र कुसुमच्छायाग्रहणेन तद्धर्माध्यासोपपत्तेः, धर्मिधर्म्यन्तरप्रतिबिम्बैक्याध्यासयोरन्यतरस्यैव धर्माध्यासव्यापकत्वात् ॥

म० प्र०—नन्वात्मान्तःकरणधर्मिणोरैक्याध्यासाभावेऽप्यन्तःकरणधर्मज्ञानादेरात्मन्यध्यासः स्यादित्यत आह—**धर्म्यैक्येति** । यत्र धर्माध्यासस्तत्र धर्म्यैक्याध्यास इति धर्म्यैक्याध्यासस्य धर्माध्यासव्यापकत्वादित्यर्थः । तथा चात्मनि व्यापकधर्म्यैक्याध्यासाभावेन तद्व्याप्यधर्माध्यासाभाव इति भावः । अध्यस्यते=ज्ञायते । नन्वात्मान्तःकरणयोर्भेदावगमेऽपि तयोरैक्याध्यासः स्यादित्यत आह—**भेदाग्रहस्येति** । अनवगतयोरात्मान्तःकरणयोर्भेदाग्रहोऽध्यासहेतुरुतावगतात्मान्तःकरणयोर्भेदाग्रहोऽध्यासहेतुः, नाद्य इत्याह—**नानवगतयोरिति** । केवलभेदाग्रहेण केवलोऽज्ञातधर्मिप्रतियोगिको यो भेदस्तस्याज्ञानेन। तस्य=अज्ञातधर्मिप्रतियोगिकभेदाग्रहस्य ।न द्वितीय इत्याह—**नाप्यवगतयोरिति** । अध्यासः=अन्तःकरणधर्मज्ञानादीनामात्मन्यारोपः । **अनुमानेनेति** । "सुखाद्युपलब्धिः करणजन्या कार्यत्वात् घटज्ञानादिवत्" इत्यनुमानेनेत्यर्थः । तत्=ब्रह्म संकल्पादिकार्यक्षममिति वा । अस्मिन्पक्षे तदिति मनोविशेषणं मनःसर्जनकर्तुर्ब्रह्मणोऽध्याहारश्चेति बोध्यम् । तस्य=अन्तःकरणस्य, स्फटिकविवेकग्रहेऽपि=स्फटिकानुयोगिकजपाकुसुमप्रतियोगिको यो विवेको भेदस्तस्य ज्ञानेऽपि । तद्वदन्तःकरणस्य आत्मसंबद्धान्तःकरणस्य । यद्वा तद्वदित्यस्य स्फटिके लौहित्याध्यासवदित्यर्थः । अस्मिन्पक्षे दृष्टान्तोपपादनार्थं स्फटिकविवेकग्रहेऽपीत्यादि पञ्चम्यन्तमिति । तत्र कुसुमच्छायाग्रहणेन=स्फटिके कुसुमप्रतिबिम्बग्रहणेन, तद्धर्माध्यासोपपत्तेः=कुसुमधर्मलौहित्याध्यासोपपत्तेः। ननु धर्माध्यासव्यापकस्य धर्म्यैक्याध्यासस्याभावात्कथं स्फटिके कुसुमधर्मलौहित्यादिज्ञानोपपत्तिरित्याशङ्क्योपपत्तिमेव हेतुनोपपादयति—**धर्मिधर्म्यन्तरप्रतिबिम्बैक्याध्यासयोरिति** । धर्मिणोर्द्वयोर्य ऐक्याध्यासो धर्म्यन्तरप्रतिबिम्बस्य धर्मिणा सह य ऐक्याध्यासश्च तयोरित्यर्थः ॥

उच्यते ॥

शि० म०—न चात्मा मनःप्रतिबिम्बग्राही नीरूपत्वात्, किंच नाहमित्यध्यास इदं रजतमितिवत् द्वैरूप्यावभासाभावात्; तस्मादध्यासव्यापकाभावादात्मन्तःकरणयोर्न तादात्म्याध्यासः । ततश्च सुतरां न तद्धर्माध्यास इति परिहराति—**उच्यते इति** । अयं भावः—न तावद्विवेकग्रहादध्यासाभावः आत्मान्तःकरणयोरागमानुमानादिना परोक्षविवेकग्रहेऽप्यपरोक्षविवेकग्रहाभावात् । नापि द्वैरूप्यावभासाभावः, अयःपिण्डे अयो विह्निरिति द्वैरूप्यावभासा-

भावेऽपि अयो दहतीति द्वैरूप्यावभासवदयमात्माऽहं मन इति द्वैरूप्यानवभासेऽप्यहमुपलभे दुःखीत्युपलब्धृत्वदुःखित्वादिरूपेणात्मान्तःकरणयोर्द्वैरूप्यावभासदर्शनादिति ॥

म० प्र०—ननु यथा स्फटिकः कुसुमप्रतिबिम्बग्राही तथाऽत्माऽपि मनःप्रतिबिम्बग्राह्यस्तु तथा चात्मनि मनःप्रतिबिम्बैक्याध्याससत्त्वेन धर्माध्यासव्यापकप्रतिबिम्बैक्याध्याससत्त्वादात्मनि ज्ञानादिमनोधर्माध्यासोपपत्तिरित्यभिप्रायेणाशङ्क्य निराकरोति—**न चेति**। **नाहमित्यध्यास इति**=अहमित्यध्यासो नेत्यन्वयः। द्वैरूप्यावभासस्य धर्म्यध्यासव्यापकत्वमभिप्रेत्याहमित्यध्यासो नेति प्रतिज्ञायां हेतुमाह=**इदमिति**। तस्मात्=द्वैरूप्यावभासाभावात्, ततश्च=द्विविधधर्माध्यासव्यापकादेव, इति=इत्याशङ्क्य, विवेकग्रहात्=आत्मान्तःकरणयोर्भेदज्ञानात्, विवेकग्रहेऽपि=भेदज्ञानेऽपि। **अयःपिण्डे इति**। यथा यस्यायो वह्निरित्याकारकस्य वह्नित्वप्रकारकस्य वह्निप्रकारकस्य वा भानस्याभावेऽप्ययो दहतीत्याकारकमयसोऽयस्त्वेन भानं वह्नेर्दहनक्रियाकर्तृत्वेन भानमभ्युपेयते तथाऽयमात्माऽतिसन्निहितात्मस्वरूपोऽहं मनो भवामीत्याकारकानुभवस्य मनस्त्वप्रकारकस्य मनःप्रकारकस्य वाऽभावेऽप्यहमुपलभे दुःखी उपलम्भाश्रयोऽहं दुःखविशिष्ट इत्याकारकमात्मन उपलम्भाश्रयत्वेनान्तःकरणस्य दुःखित्वेन भानं भवत्येवेत्यर्थः। अत एव शारीरकप्रथमसूत्रभाष्यस्य रत्नप्रभाख्यायां टीकायां कार्याध्यासेष्वहमिति प्रथमाध्यासः। न च द्वैरूप्यावभासाभावादहमिति नाध्यास इति वाच्यम्, अयो दहतीतिवदहमुपलभ इति द्वयांशभानादित्युक्तम्। गुरुचरणास्तु—यत्र पदद्वयोपस्थाप्यार्थयोर्भेदव्यवहारस्तत्र पदद्वयोपस्थाप्यांशद्वयभानम्, यत्र त्वेकपदोपस्थाप्यांशद्वयव्यवहारस्तत्रैकपदोपस्थाप्यांशद्वयभानमिति नियमसत्त्वेनाहमित्यत्राप्यन्तःकरणरूपारोपितांशस्य सद्रूपाधिष्ठानांशस्य च भानं संभवतीत्याहुः॥

**अयःपिण्डस्य दग्धृत्वाभावेऽपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासाद्यथाऽयो दहतीति व्यवहारस्तथा सुखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासादहं सुखी अहं दुःखीत्यादिव्यवहारो जायते ॥**

शि० म०—नन्वेवमप्यहं मन इत्यभेदव्यवहाराभावान्न तादात्म्याध्यास इत्याशङ्क्याहं दुःखी सुखीत्यादिव्यवहारोऽप्ययो दहतीतिवत्तादात्म्यव्यवहारत्वात्तादात्म्याध्यासपूर्वक एव, अन्यथा तादात्म्यव्यवहारानुपपत्तेरित्याह-**अयःपिण्डस्येति**। नन्वयःपिण्डव्यतिरेकेण वह्नेर्दहनक्रियाश्रयत्ववत्मनस आत्मव्यतिरेकेण दुःखाद्याश्रयत्वादर्शनान्नाध्यासावकाश इति चेत्, न, श्रुतिस्मृतिन्यायैरात्मान्तःकरणयोर्भेदेन प्रसिद्धत्वात्। तथा हि आत्माज्ञानरूपः स्वयंप्रकाशः सर्वगतः "अत्रायं पुरुषः स्वयंज्योतिराकाशवत्सर्वगतश्च नित्यः" इत्यादि श्रुतिसिद्धः, अहङ्कारभिन्नश्च। 'स एवाधस्तात्स उपरिष्टात्' इति भूमाख्यब्रह्मणस्सर्वात्मत्वमभिधाय 'अथातोऽहङ्कारादेशः' इति अहङ्कारस्यापि सार्वात्म्यमुक्त्वा 'अथात आत्मादेशः' इत्यात्मनोऽहङ्काराद्भेदेन निर्देशादहङ्कारस्तु जडाविद्योपादानत्वाज्जडः परप्रकाश्यः मध्यमपरिमाणः। "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" इति श्रुतेः। तथा क्रियाश्रयो विद्यानिवर्त्यश्च। "विज्ञानं यज्ञं तनुते। सधीः स्वप्नो भूत्वेमं लोकमनुसंचरति।"

"यदा पञ्चैव लीयन्ते ज्ञानानि मनसा सह।
बुद्धिश्च नेङ्गते तत्र परमात्मानमश्नुते ॥ १ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ २ ॥"

**इत्यादिवचनसिद्धः, तथाऽहङ्कारोऽहमिति व्यावृत्तः, आत्मा च सन्निति सर्वविषयानुवृत्तः तथा चात्माऽहङ्काराद्भिद्यते अनुवृत्तत्वात्, यदनुवृत्तं तद्व्यावृत्ताद्भिन्नं यथा कुसुमेभ्यः सूत्रमिति, ततश्च श्रुतिस्मृतिन्यायसिद्धोऽयमात्माहङ्कारयोर्भेदः ॥**

**म० प्र०**—एवमपि=आत्मान्तःकरणयोरहमुपलभे दुःखीत्युपलब्धृत्वदुःखित्वादिरूपेण द्वैरूप्यावभासदर्शनेऽपि, न तादात्म्याध्यासः=आत्मान्तःकरणयोरैक्याध्यासो न, अन्यथा=आत्मान्तःकरणयोरभेदाध्यासानङ्गीकारे, तादात्म्यव्यवहारानुपपत्तेः=अहं सुखी दुःखीत्याद्यैक्यविषयकशब्दात्मकव्यवहारासिद्धेः, अयःपिण्डव्यतिरेकेण वह्नेः=महानसादावयःपिण्डतादात्म्याभावविशिष्टवह्नेः,मनस आत्मव्यतिरेकेण=आत्मप्रतियोगिकभेदविशिष्टस्य मनसः आत्मतादात्म्याभावविशिष्टमनस इति यावत्। आत्मनो ज्ञानादिरूपत्वे श्रुतिरूपं प्रमाणमाह—**अत्रेति** स्वप्नावस्थायामित्यर्थः। अहङ्कारभिन्नश्च=अहङ्कारप्रतियोगिकभेदाश्रयश्चात्मा, स एवेति=भूमैवेत्यर्थः। "स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वम्" इति भूमवाक्यं भूमव्यतिरिक्तं किमपि वस्तु नास्तीति प्रतिपादयद्यदिवा न महिम्नीति पूर्वप्रतिज्ञातार्थे हेतुत्वेनोक्तम्। यत्र नान्यत्पश्यतीत्यधिकरणाधिकर्तव्यनिर्देशात्स एवेति परोक्षनिर्देशाच्च द्रष्टुर्जीवादन्यो भूमेति शङ्कावारणाय भूमानमेवाहमात्मना निर्दिशति—**अथात इति**। अथात इत्यव्ययसमुदायस्यानन्तर्यमर्थः। तथा च भूम्नो निर्देशानन्तरमहङ्कारादेशः। भूमैवाहमित्येवमाकारेणादिश्यते इत्यहङ्कारादेश इत्यर्थः। अहङ्कारस्यापि=अहम्प्रत्ययविषयस्य जीवस्यापि। अविवेकिभिर्देहाहङ्कारादिसंघातोऽप्यहमिति निर्दिश्यतेऽतस्तस्यात्मत्वशङ्कां वारयितुमाह—**अथात इति**। भूम्नोऽहम्प्रत्ययविषयस्वरूपेण निर्देशानन्तरम्। आत्मादेशः=आत्मनैव केवलेन सत्स्वरूपेण शुद्धेनादिश्यते इत्यात्मादेश इत्ययमर्थो भाष्यकारादिमार्गेण। मूलकारेण तु अथातोऽहङ्कारादेश इत्यादिवाक्यमहङ्काररूपमनःपरम्। तस्य सर्वरूपत्वकथनमुपासनार्थमित्यभिप्रायेणाथातोऽहङ्कारादेश इति वाक्यमुक्तमित्यर्थः। बुद्ध्यपरपर्यायाहंकारस्य मध्यमपरिमाणकत्वे हेतुमाह—**बुद्धेर्गुणेनेति**। सूक्ष्मत्वादिरूपेण बुद्धिधर्मेण आराग्रमात्रः=सूक्ष्मः, दृष्टः=ज्ञातः, आत्मगुणेन=स्वरूपभूतगुणेन, शुद्धत्वविभुत्वादिरूपेण, अवरो=न वरः श्रेष्ठो यस्मात्स तथा दृष्ट इत्यर्थः। क्रियाश्रयो विद्यानिवर्त्यश्चेत्यस्येत्यादिवचनसिद्ध इत्यनेनान्वयः। वचनान्येवाह—**विज्ञानमित्यादिना**। विज्ञानं=बुद्ध्यात्मकाहंकारः, यज्ञं=वैदिकं कर्म, तनुते=करोति, सधीः—धिया विशिष्टः, स्वप्नो भूत्वा=स्वप्नाकारेण परिणतायाधियोऽवभासकत्वेन स्वप्नाकारो भूत्वा इमं लोकं जागरितलक्षणं कार्यकरणसंघातमकम्, अनुसंचरति=प्राप्नोति। यदा=यस्मिन्विद्याकाले, ज्ञानानि=ज्ञानसाधनानीन्द्रियाणि, नेङ्गते=न चेष्टते, लीयते इति यावत्। तत्र=तस्मिन्

ज्ञानकाले। **भिद्यते इति**। तस्मिन्=परब्रह्मणि। कथंभूते परब्रह्मणि परावरे, परं=कारणञ्च तच्चावरं=कार्य्यं तत्परावरम्। यद्वा परे=हिरण्यगर्भादयोऽवरा=निकृष्टा यस्मात्तत्परावरं तस्मिन्, दृष्टे=साक्षात्कृते सति, हृदयग्रन्थिः=अविद्याऽहङ्कारो वा, भिद्यते=नश्यति। सर्वसंशयाः-प्रमाणप्रमेयगोचरा निखिलसंशयाः, छिद्यन्ते=नश्यन्ति। अस्य=विदुषः, कर्माणि=प्रारब्धव्यतिरिक्तकर्माणि, क्षीयन्ते नश्यन्तीत्यर्थः। अहमितिव्यावृत्तः=अहमिति वृत्तिप्रतिबिम्बितचिद्विषयत्वात्परिच्छिन्नस्वरूपः, सन्निति सर्वविषयानुवृत्तः=घटः सन् पटः सन्नित्यादिप्रत्ययविषयसर्वविषयसंबद्धस्वरूपः॥

**नन्वन्तःकरणस्येन्द्रियतयाऽतीन्द्रियत्वात्कथं प्रत्यक्षविषयतेति॥**

**शि० म०**—नन्वेवमपि नाहंकारमिश्रस्यात्मनः अहंप्रत्ययविषयत्वं तस्येन्द्रियत्वेनातीन्द्रियत्वादिति चोदयति—**नन्विति**॥

**म० प्र०**—एवमपि=आत्माहंकारयोर्भेदेऽपि, अहंकारमिश्रस्य=अहङ्कारविशिष्टस्य, अहङ्कारविशिष्टस्यात्मनोऽपरोक्षाहंप्रत्ययविषयत्वे विशिष्टवृत्तिधर्मस्य विशेषणवृत्तित्वनियम इति न्यायेनाहङ्कारस्यापि प्रत्यक्षत्वं वक्तुं त्वया नहि शक्यते इत्याशयेन हेतुमाह—**तस्येति**। अहङ्कारस्येत्यर्थः॥

**उच्यते। न तावदन्तःकरणमिन्द्रियमित्यत्र मानमस्ति। मनःषष्ठानीन्द्रियाणीति भगवद्गीतावचनं प्रमाणमिति चेत्, न, अनिन्द्रियेणापि मनसा षट्त्वसंख्यापूरणाविरोधात्॥**

**शि०म०**—इन्द्रियत्वे प्रमाणाभावेनातीन्द्रियत्वासिद्धेः प्रत्यक्षोऽहङ्कार इत्याह—**उच्यते इति**। अस्तीन्द्रियत्वे प्रमाणमिति चेत्किं मनस इन्द्रियत्वे श्रुतिः प्रमाणम्, उत स्मृतिः, अनुमानं वा। नाद्यः तथाविधश्रुतेरनुपलम्भादित्याह—**न तावदिति**। द्वितीयपक्षमुत्थापयति—**मनःषष्ठानीति**। उक्तस्मृतेर्मनस इन्द्रियगतषट्त्वसंख्यापूरकत्वे प्रमाणत्वान्न सा तदिन्द्रियत्वे प्रमाणमित्याह—**नेति**। ननु इन्द्रियसंख्यापूरणेन मनसोऽपीन्द्रियत्वमनुमीयते इति तृतीयं पक्षमाशङ्क्याप्रयोजकत्वादनुमानं न युक्तमित्याह—**अनिन्द्रियेणेति**॥

**म० प्र०**—**इन्द्रियत्वे प्रमाणाभावेनेति**=मनस इन्द्रियत्वे प्रमाणाभावेनेत्यर्थः। न च 'इन्द्रियाणां मनश्चास्मि' इति वाक्यं मनस इन्द्रियत्वे प्रमाणं स्यादिति वाच्यम्। 'नक्षत्राणामहं शशी' इति वाक्यस्य शशिनो नक्षत्रतायामप्रामाण्यवत् 'इन्द्रियाणां मनश्चास्मि' इति वाक्यस्यापि मनस इन्द्रियत्वेऽप्रमाणत्वादिति भावः। तथाविधश्रुतेः=मनस इन्द्रियत्वबोधकश्रुतेः। द्वितीयपक्षं=मनस इन्द्रियत्वे स्मृतिः प्रमाणमित्याकारकपक्षम्। उक्तस्मृतेः=मनःषष्ठानीन्द्रियाणीति स्मृतेः। सा=मनःषष्ठानीन्द्रियाणीति स्मृतिः, तदिन्द्रियत्वे=मनस इन्द्रियत्वे, इन्द्रियसंख्यापूरणेन=मनस इन्द्रिय-

निष्ठषट्त्वसंख्यापूरकत्वेन, अनुमीयते="मन इन्द्रियमिन्द्रियगतषट्त्वसंख्यापूरकत्वात्" इत्यनुमीयते । **अप्रयोजकत्वादिति**। पक्षे साध्याभावेऽपि हेतुमत्त्वे बाधकतर्कासत्त्वादिन्द्रियगतषट्त्वसंख्यापूरकत्वरूपहेतोरिन्द्रियत्वरूपसाध्यनिरूपितव्याप्तिशून्यत्वादिति यावत् । न च यदि मनस इन्द्रियत्वं न स्यात्तर्हि मनस इन्द्रियगतषट्त्वसंख्यापूरकत्वमपि न स्यादिति विपक्षबाधकतर्कसत्त्वेन कथं विपक्षबाधकतर्कासत्त्वमिति वाच्यम् । मनसीन्द्रियत्वाभावेऽपि मनस इन्द्रियनिष्ठषट्त्वसंख्यापूरकत्वाभ्युपगमेन यत्रेन्द्रियत्वाभावस्तत्रेन्द्रियगतषट्त्वसंख्यापूरकत्वाभाव इति व्याप्त्यसिद्धेर्विपक्षबाधकतर्कानुदयादित्यर्थः ॥

**नहीन्द्रियगतसंख्यापूरणमिन्द्रियेणैवेति नियमः । "यजमानपञ्चमा इडां भक्षयन्ति" इत्यत्र ऋत्विग्गतपञ्चत्वसंख्याया अनृत्विजाऽपि यजमानेन पूरणदर्शनात् ॥**

**शि० म०-किंच "मनः इन्द्रियम् इन्द्रियगतषट्त्वसंख्यापूरकत्वात्" इत्यनुमाने विशेषव्याप्तिर्मूलमुत सामान्यव्याप्तिर्वा, नाद्यः दृष्टान्ताभावादित्याह-नहीति । ननु यद्यद्गतसंख्यापूरकं तत्तज्जातीयं यथा पशौ प्रतिप्रस्थातृषष्ठा ऋत्विज इत्यत्र ऋत्विग्गतसंख्यापूरकः प्रतिप्रस्थाता ऋत्विग्जातीय इति सामान्यव्याप्तिपक्षमाशङ्क्य निराकरोति-यजमानेति । अनृत्विजापीति । ननु यजमानस्य ब्राह्मणत्वेन ऋत्विक्साजात्यमस्तीति न व्यभिचार इति चेत्, न, यद्यत्पदावगतयद्गतसंख्यापूरकं तत्तत्पदार्थतावच्छेदकेन रूपेण तज्जातीयमिति व्याप्तेर्विवक्षितत्वात् ब्राह्मणत्वस्य चापदार्थतावच्छेदकत्वात् । न चात्र ऋत्विक्पदाश्रवणाद्ब्राह्मणपदाध्याहारेणाप्यन्वयसंभवात् ब्राह्मणत्वं पदार्थतावच्छेदकमिति वाच्यम्। चत्वार ऋत्विज इत्यृत्विक्पदस्य श्रुतत्वेन तस्यैवानुषङ्गाद्ब्राह्मणपदाध्याहारे नियमाभावाच्च ॥**

**म० प्र०**-अनुमाने=अनुमानरूपवाक्येऽनुमितौ वा, विशेषव्याप्तिः=यत्रेन्द्रियनिष्ठषट्त्वसंख्यापूरकत्वं तत्रेन्द्रियत्वमिति विशेषव्याप्तिः । **दृष्टान्ताभावादिति**। पक्षीभूतमनस एवेन्द्रियनिष्ठषट्त्वसंख्यापूरकत्वेन दृष्टान्ताभावादित्यर्थः । न च चक्षुरादिर्दृष्टान्तोऽस्त्विति वाच्यम्, चक्षुःषष्ठानीन्द्रियाणीत्यादिप्रमाणभूतवचनाभावेन चक्षुरादेरदृष्टान्तत्वात् । न च "मन इन्द्रियमिन्द्रियनिष्ठषट्त्वसंख्यापूरकत्वाद्यन्नैवं तन्नैवमात्मवत्" इति व्यतिरेकिदृष्टान्तोऽस्त्विति वाच्यम्, व्यतिरेकव्याप्तेः साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगादिति परममूलवाक्येन खण्डितत्वादिति । **यद्यद्गतेति** यत्=यादृशं वस्तु, यद्गतसंख्यापूरकं=यादृशवस्तुनिष्ठसंख्यापूरकम्, तत्=तादृशं वस्तु, तज्जातीयम्=तादृशवस्तुनिष्ठधर्मवत्, पशौ=पशुयागे, प्रतिप्रस्थातृषष्ठाः=प्रतिप्रस्थाता प्रतिप्रस्थातृसंज्ञकः ऋत्विक् षष्ठः=षट्त्वसंख्यापूरको येषु ऋत्विक्पदवाच्येषु ते तथेत्यर्थः । न व्यभिचारः=यजमाने व्यभिचाराभावः । **यद्यत्पदावगतयद्गतेति**। यत्प्रकृते प्रतिप्रस्थातृसंज्ञकं वस्तु, यत्पदावगतयद्गतसंख्यापूरकम्=ऋत्विक्पदावगतऋत्विग्निष्ठसंख्यापूरकम्, तत्=प्रति-

प्रस्थातृसंज्ञकं वस्तु, तत्पदार्थतावच्छेदकेन=ऋत्विक्पदार्थतावच्छेदकेन रूपेण, ऋत्विक्त्वधर्मेण तज्जातीयम्=ऋत्विक्सजातीयमित्यर्थः। ननु यद्यत्पदावगतयद्धतसंख्यापूरकं तत्तत्पदार्थतावच्छेदकरूपेण तज्जातीयमिति व्याप्तेर्विवक्षितत्वेऽपि यजमाने ब्राह्मणत्वेन ऋत्विक्साजात्याद्यजमाने व्यभिचाराभावोऽस्त्येवेत्यापातत आशङ्क्याह–**ब्राह्मणत्वस्य चेति**। अत्र चकारस्य पञ्चम्यन्तेनान्वयः। तथा च प्रतिप्रस्थातारि मनुष्यत्वादिना ऋत्विक्साजात्यवारणाय यद्यद्धतसंख्यापूरकं तत्तज्जातीयमिति व्याप्तिस्थाने यद्यत्पदावगतयद्धतेत्यादिवाक्यबोधितव्याप्तेस्तत्रापि विवक्षितत्वेन यजमानपञ्चमा इडां भक्षयन्तीत्यत्र यजमानस्य ऋत्विक्पदार्थतावच्छेदकऋत्विक्त्वाभावाद्यजमाने व्यभिचारस्तदवस्थ इति भावः। अत्र=यजमानपञ्चमा इडां भक्षयन्तीत्यस्मिन्वाक्ये,अन्वयसंभवात्=यजमानपञ्चमा इत्यस्य ब्राह्मणपदार्थेनान्वयसंभवात्। उक्तान्वयव्याप्तेः संभवादिति वा॥

**'वेदानध्यापयामास महाभारतपञ्चमान्' इत्यादौ वेदगतपञ्चत्वसंख्याया अवेदेनापि भारतेन पूरणदर्शनात्। 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।' इत्यादिश्रुत्या मनसोऽनिन्द्रियत्वापत्तेश्च॥**

शि० म०–नन्वर्थाध्याहारवादिमते यजमानपञ्चमा इडां भक्षयन्तीत्यत्र यजमाने हेतोरेवाभावान्न व्यभिचार इत्याशङ्क्याऽसंदिग्धव्यभिचारमाह–**वेदानिति**। नहि पौरुषेये पुराणत्वेन प्रसिद्धे भारते वेदत्वशङ्कापीति भावः। ननु "मन इन्द्रियं तत्त्वे बाधकाभावाच्चक्षुर्वदित्यनुमानं मानम्" इत्याशङ्क्य हेत्वसिद्ध्या दूषयति–**इन्द्रियेभ्य इति**। यद्यप्यर्थेभ्यः परं मन इत्यर्थाद्भिन्नं मनोऽवगतं तथापि चकारादिन्द्रियभेदसिद्धिः। "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इत्यादिश्रुतिरादिपदग्राह्या। चकारो भिन्नक्रमः। स च श्रुत्येत्यनेन संबध्यते। तथा च श्रुत्या

"त्रिविधोऽयमहंकारो महत्तत्त्वाद्धि जायते।"
"इन्द्रियाणां ततः सृष्टिर्गुणद्वारा महामुने।"

इत्यादिपुराणवचनैश्च मनसोऽनिन्द्रियत्वावगमादित्यर्थः॥

म० प्र०–यजमाने=तत्पदार्थतावच्छेदकधर्मेण तज्जातीयस्वरूपसाध्यशून्ये यजमाने, हेतोरेव=यत्पदावगतयद्धतसंख्यापूरकत्वरूपहेतोरेव। परममूले **पूरणदर्शनादिति**। यद्यत्पदावगतयद्धतेत्यादिव्याप्तेर्विवक्षितत्वेन न मनस इन्द्रियत्वसिद्धिरिति भावः। **पुराणत्वेन प्रसिद्धे इति**। यद्यपि लोके भारतस्येतिहासत्वेन प्रसिद्धिर्न पुराणत्वेन तथापि–

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्॥"

इति पुराणलक्षणस्य भारते सत्त्वाद्भारतस्य पुराणत्वेनापि प्रसिद्धिरिति भावः। यस्य यद्रूपत्वे बाधकाभावस्तस्य तद्रूपत्वमितिव्याप्तिमभिप्रेत्य हेतुमाह-**तत्त्वे बाधकाभावादिति**। मनस इन्द्रि-

यत्वे बाधकाभावादित्यर्थः । मानम्=मनस इन्द्रियत्वे प्रमाणम्, हेत्वसिद्ध्या=तत्त्वे बाधकाभावादिति हेतोः पक्षावृत्तित्वरूपस्वरूपासिद्ध्या, दूषयतीत्यतः पूर्वमनुमानमिति शेषः । अर्थात्=अर्थेभ्यः । **मनोऽवगतमिति** । अस्याग्रे न त्विन्द्रियेभ्यो भिन्नं मनोऽवगतमिति शेषः । चकारात्=अर्थेभ्यश्चेत्यत्र चकारात् । **इन्द्रियभेदसिद्धिरिति**। चकारस्येन्द्रियसमुच्चायकत्वेनार्थेन्द्रियेभ्यो मनः परं भिन्नमुत्कृष्टं चेत्यर्थकरणेन मनोनिष्ठेन्द्रियप्रतियोगिकभेदनिश्चय इत्यर्थः । चकारः=अवगमाश्चेत्यत्र चकारः । भिन्नक्रमः=स्वस्थानभिन्नस्थानकः । स च=चकारश्च, तथा चेत्यस्येत्यर्थ इत्यनेनान्वयः । गुणद्वारा त्रिविधः सत्त्वादिगुणैः सात्त्विकराजसतामसात्मकः । न च सांख्यशास्त्रे मनस इन्द्रियेषु परिगणनसत्त्वात्कथमेतद्वाक्यान्मनसोऽनिन्द्रियत्वसिद्धिरिति वाच्यम् । यस्य पुराणस्येदं वाक्यमस्ति तस्मिन्पुराणेऽहङ्कारपदेन मनसो ग्रहणेनेन्द्रियेषु मनसोऽपरिगणनादिति ॥

**न चैवं मनसोऽनिन्द्रियत्वे सुखादिप्रत्यक्षस्य साक्षात्कारत्वं न स्यादिन्द्रियाजन्यत्वादिति वाच्यम् । न हीन्द्रियजन्यत्वेन ज्ञानस्य साक्षात्त्वमनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्तेः । ईश्वरज्ञानस्यानिन्द्रियजन्यस्य साक्षात्त्वानापत्तेश्च ॥**

**शि० म०**–ननु सुखाद्युपलब्धिरिन्द्रियजन्या प्रत्यक्षत्वाद्रूपादिप्रत्यक्षवदित्यनुमानं मनस इन्द्रियत्वे प्रमाणम्, अन्यथा सुखादिज्ञानस्य साक्षात्त्वं न स्यादित्याशङ्क्य निराकरोति–**न चैवमिति** । किमिन्द्रियजन्यत्वे प्रत्यक्षत्वमात्रं हेतुरुत प्रत्यक्षज्ञानत्वम्, आद्ये घटादौ व्यभिचार इत्यभिप्रेत्य द्वितीये हेतोरप्रयोजकत्वमाह–**नहीति** । **अनुमित्यादेरिति** । तव मत इति शेषः । नन्विन्द्रियत्वेन तज्जन्यत्वमेव साक्षात्त्वप्रयोजकम्, अनुमित्यादेश्च मनस्त्वेन तज्जन्यत्वान्नातिप्रसङ्ग इत्यत आह–**ईश्वरज्ञानस्येति** ॥

**म० प्र०**–प्रत्यक्षत्वात्=अपरोक्षज्ञानत्वात् । अन्यथा=मनस इन्द्रियत्वानङ्गीकारे । परममूले **एवमिति**=श्रुत्यादिभिरित्यर्थः । प्रत्यक्षत्वमात्रम्=अपरोक्षत्वमेव, हेतुः=ज्ञापकम् । **अप्रयोजकत्वमाहेति** । ईश्वरज्ञाने इन्द्रियजन्यत्वाभावेऽपि प्रत्यक्षत्वस्य सत्त्वेन प्रत्यक्षत्वं नेन्द्रियजन्यत्वव्याप्यमित्यप्रयोजकत्वमभिप्रेत्याहेत्यर्थः । न च यदि सुखादिज्ञानस्येन्द्रियजन्यत्वं न स्यात्तर्हि सुखादिज्ञानस्यापरोक्षज्ञानत्वमपि न स्यादित्यनुकूलतर्कसत्त्वेन कथं हेतोरप्रयोजकत्वकथनमिति वाच्यम्, ईश्वरीयज्ञानस्येन्द्रियजन्यत्वाभावेऽप्यपरोक्षज्ञानत्वस्य सत्त्वेन व्यतिरेकव्याप्त्यसिद्ध्या तर्कानुदयादिति । परममूले **नहीति** । हि यस्मादिन्द्रियजन्यत्वव्याप्यं ज्ञानस्य प्रत्यक्षत्वं न भवति तस्मादिन्द्रियाजन्यत्वेन सुखादिज्ञानेऽप्रत्यक्षत्वं नापादनीयमित्यर्थः । यद्वा हि यस्मात् ज्ञानस्येन्द्रियजन्यत्वाभिन्नं साक्षात्त्वं न भवति तस्मादिन्द्रियाजन्यत्वेन सुखादिज्ञानेऽप्रत्यक्षत्वं नापादनीयमित्यर्थः । इन्द्रियजन्यत्वस्य ज्ञाननिष्ठप्रत्यक्षत्वव्यापकत्वे ज्ञानगतेन्द्रियजन्यत्वाभिन्नप्रत्यक्षत्वाभ्युपगमे वा किं बाधकमित्याशङ्क्य नेति प्रतिज्ञायां हेतुमाह–परममूले **अनुमित्यादेरिति** । इन्द्रियत्वेन तज्जन्यत्वम् इन्द्रियत्वावच्छिन्नेन्द्रियनिष्ठजनकतानिरूपितजन्यत्वम् । तज्जन्यत्वात्=मनोजन्यत्वात्, नातिप्रसङ्गः=अनिष्टापादनं न संभवति ॥

**सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमिति चेत् ॥**

**शि० म०**–ननूक्तं ज्ञानस्य प्रत्यक्षलक्षणं ज्ञानत्वं न, प्रत्यक्षप्रमाणलक्षणोपयोगिचक्षुरादेश्चैतन्यरूपप्रत्यक्षप्रमाकरणत्वाभावात् । वृत्तिविशिष्टचैतन्यरूपप्रमाकरणत्वस्य प्रत्यक्षप्रमाणलक्षणत्वे सति व्याप्तिज्ञानादेरप्यबाधितवह्न्यादिवृत्तिविशिष्टचैतन्यरूपप्रमाकरणत्वेन प्रत्यक्षप्रमाणत्वापत्तेः । न चान्यज्ज्ञानस्य तत्तद्विषयांशे प्रत्यक्षत्वव्यवहारप्रयोजकमस्ति, इन्द्रियजन्यत्वादेस्त्वयैव निराकृतत्वात् । विषयावच्छिन्नचैतत्याभिन्नत्वस्य च प्रत्यक्षविषयाव्यापकत्वेन प्रत्यक्षत्वमात्रप्रयोजकत्वाभावादित्याशयेनाक्षिपति–**सिद्धान्त इति** । न तावज्ज्ञानगतं प्रत्यक्षलक्षणं विषयव्यावृत्तत्वान्न प्रत्यक्षत्वव्यवहारप्रयोजकमित्याक्षेपः । सर्वमतेऽप्युभयसाधारणस्य प्रत्यक्षलक्षणस्य वक्तुमशक्यत्वेन तद्व्यावृत्तेरदोषत्वात् ॥

**म० प्र०–ज्ञानस्येति** । ज्ञाननिष्ठं ज्ञानत्वं चित्त्वं तदभिन्नं यत्प्रत्यक्षलक्षणमुक्तं तत्प्रत्यक्षप्रमाणलक्षणोपयोगि न भवति । यद्वा चेतनापरपर्य्यायज्ञानाभिन्नं यत्प्रत्यक्षं तस्य लक्षणमसाधारणो धर्मो ज्ञानत्वं चित्त्वमुक्तं तत्प्रत्यक्षप्रमाणलक्षणज्ञानोपयोगि न भवतीत्यर्थः । तस्य प्रत्यक्षप्रमाणलक्षणोपयोगित्वाभावे हेतुमाह–**चक्षुरादेरिति** । अन्यत्=चित्त्वादन्यत् । **ज्ञानस्येति** । ज्ञाननिष्ठस्तत्तद्विषयाभिन्नांशनिरूपितो यः प्रत्यक्षत्वप्रकारकव्यवहारस्तद्व्याप्यं तद्व्यापकं चेत्यर्थः । ननु प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वं प्रत्यक्षत्वस्य प्रत्यक्षत्वप्रकारकव्यवहारस्य च व्याप्यं व्यापकं चास्त्वित्याशङ्क्य मैवमित्यभिप्रेत्य हेतुमाह–**विषयेति** । इतः पूर्वं प्रमाणचैतन्यस्येति शेषः । प्रत्यक्षविषयाव्यापकत्वेन=प्रत्यक्षो यो घटादिविषयस्तदवृत्तित्वेन । **प्रत्यक्षत्वमात्रेति** । ज्ञानघटादिविषये तदुभयवृत्तिप्रत्यक्षत्वस्य प्रत्यक्षत्वप्रकारकव्यवहारत्वावच्छिन्ननिखिलव्यवहारस्य च प्रयोजकत्वाभावादित्यर्थः । आक्षिपति=पूर्वपक्षं करोति, प्रश्नं करोतीति यावत् । परममूले **प्रत्यक्षत्वप्रयोजकमिति**=प्रत्यक्षत्वप्रत्यक्षत्वप्रकारकव्यवहारव्याप्यं तद्व्यापकं चेत्यर्थः । **न तावदिति** । न तावदित्याक्षेप इत्यन्वयः । तथा च विषयव्यावृत्तत्वात्=चित्त्वस्य घटादिविषयेष्ववर्तमानत्वात्, चित्त्वरूपं ज्ञानगतं=ज्ञाननिष्ठं यत्प्रत्यक्षलक्षणं तज्ज्ञानविषयगतप्रत्यक्षत्वप्रकारकव्यवहारप्रयोजकं न भवतीत्याक्षेपः=प्रश्नस्तावन्न संभवतीत्यर्थः । उभयसाधारणस्य घटादिज्ञानतद्विषयोभयवर्त्तमानस्य, प्रत्यक्षलक्षणस्य=प्रत्यक्षत्वप्रत्यक्षत्वप्रकारकव्यवहारप्रयोजकस्य तद्व्यावृत्तेः=ज्ञानगतप्रत्यक्षलक्षणस्य प्रत्यक्षघटादिविषयेष्वसत्त्वस्य ॥

**किं ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि किं वा विषयगतस्य । आद्ये प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेद इति ब्रूमः । तथा हि त्रिविधं चैतन्यम्–विषयचैतन्यं प्रमाणचैतन्यं प्रमातृचैतन्यं चेति । तत्र घटाद्यवच्छिन्नचैतन्यं विषयचैतन्यम् ॥**

**शि० म०**–आक्षेप्त्रा ज्ञानगतं विषयगतं वाऽनुमितितद्विषयादावतिव्याप्तत्वान्न प्रत्यक्षलक्षणमित्येवाक्षेप्तव्यम्, यद्येवमाक्षिपसि तदा ज्ञानविषयगतयोः प्रत्यक्षलक्षणयो-

रनतिप्रसक्तयोर्निरुच्यमानत्वान्नायमाक्षेपो युक्त इत्याह–**ज्ञानगतस्येत्यादिना** । **आद्ये इति**। ज्ञानगततत्तद्विषयप्रत्यक्षत्वप्रयोजकस्यैव प्रत्यक्षप्रमाणलक्षणोपयोगित्वेन प्रधानत्वाद्विषयप्रत्यक्षलक्षणस्य च विषये प्रत्यक्षत्वव्यवहारस्य प्रयोजकान्तरेणैवोपपत्ते-स्तस्यालक्ष्यत्वमित्येतल्लक्षणाव्याप्तिनिरासार्थत्वात्प्रथमं तन्निरूपणमिति ध्येयम् । नन्वद्वितीयचैतन्यस्य कुतः प्रमाणता कुतो वा प्रमाणस्य सतस्तस्य विषय-चैतन्याभेद इत्याशङ्क्य प्रथममद्वितीये ब्रह्मण्यौपाधिकं प्रमाणप्रमेयादिभेदमुपपाद-यति–**तथा हीति** ॥

म० प्र०–आक्षेप्त्रा=प्रश्नकर्त्रा । **ज्ञानगतमिति** । ज्ञानगतं चित्त्वं न प्रत्यक्षलक्षणं= ज्ञाननिष्ठप्रत्यक्षत्वस्य ज्ञाननिष्ठप्रत्यक्षत्वप्रकारकव्यवहारस्य च व्याप्यं व्यापकं च न संभवतीत्यर्थः। **विषयगतं वेति** । विषयनिष्ठं चैतन्याश्रितत्वं न प्रत्यक्षलक्षणं=विषयनिष्ठप्रत्यक्षत्वविषय-निष्ठप्रत्यक्षत्वप्रकारकव्यवहारप्रयोजकं न संभवतीत्यर्थः । इत्येवाक्षेप्तव्यमित्याकारकप्रश्नः कर्त्तव्यः। प्रत्यक्षलक्षणयोः=प्रत्यक्षत्वप्रयोजकयोः प्रत्यक्षत्वप्रकारकव्यवहारप्रयोजकयोर्वा । ननु विषयगत-प्रत्यक्षत्वस्य विषयनिष्ठप्रत्यक्षत्वप्रकारकव्यवहारस्य वा प्रयोजकं विहाय ज्ञानगतप्रत्यक्षत्वस्य ज्ञाननिष्ठ-प्रत्यक्षत्वप्रकारकव्यवहारस्य वा प्रयोजकस्यादौ निरूपणं कस्माद्धेतोर्मूलकृता कृतमित्याशङ्क्याह= **ज्ञानगततत्तद्विषयप्रत्यक्षत्वप्रयोजकस्यैवेति** । ज्ञानगतं यद्विषयनिरूपितं प्रत्यक्षत्वं प्रत्यक्षप्रकारकव्यवहारो वा तस्य यत्प्रयोजकं प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वरूपं तस्यैव प्रधानत्वा-त्प्रथमं तन्निरूपणमित्यन्वयः ।तस्य प्राधान्ये हेतुमाह–**प्रत्यक्षप्रमाणलक्षणोपयोगित्वे-नेति**। ज्ञानगततत्तद्विषयनिरूपितप्रत्यक्षत्वस्य प्राधान्ये एव हेत्वन्तरं चाह–**विषयप्रत्यक्षलक्ष-णस्य चेति**। अत्र चकारः स्वस्थानभिन्नस्थानकः, स च निरासार्थत्वादित्यनेन संबध्यते। तथा च एतल्लक्षणस्य प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमित्याकारस्य ज्ञानगतप्रत्यक्षत्वज्ञापकस्य या प्रत्यक्षघटादिविषयेऽव्याप्तिस्तस्या इति=एवंप्रकारेण यो निरासस्तदर्थकत्वात्तच्छेषत्वाच्च विषयप्रत्यक्ष-लक्षणस्येत्यर्थः । इतिशब्दोक्तनिरासप्रकारमेवाह–**तस्येति** । प्रत्यक्षघटादिविषयस्येत्यर्थः। तस्यालक्ष्यत्वे हेतुमाह–**विषये इति** । प्रयोजकान्तरेण=प्रमातृचैतन्याभिन्नत्वरूपेण विषयनिष्ठ-प्रत्यक्षत्वप्रत्यक्षत्वप्रकारकव्यवहारव्याप्येन तयोर्व्यापकेन च। **कुतः प्रमाणतेति** । प्रमाणत्वस्य वृत्तिघटितत्वेनाद्वितीये ब्रह्मणि वृत्त्यभावेन तस्य प्रमाणत्वं न संभवतीति भावः। प्रथमम्=आदौ ॥

**अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम् । अन्तःकरणाव-च्छिन्नं प्रमातृचैतन्यम् ॥**

शि०म०–नन्वेकस्य क्रियाकर्मत्वाविरोधात्कथं प्रमाणप्रमेयभाव इत्याशङ्क्य चैत-न्यस्य कर्तृरूपान्तःकरणावच्छिन्नत्वेन प्रमातृत्ववत्तद्वृत्तिलक्षणक्रियातत्कर्मघटाद्यव-च्छिन्नत्वात्प्रमाणप्रमेयभाव इति दर्शयितुं प्रमातृचैतन्यस्वरूपमाह–**अन्तःकरणेति**।

यद्वा प्रकृतज्ञानप्रत्यक्षलक्षणोपयोगित्वात्प्रथमं प्रमाणविषयचैतन्यस्वरूपमभिधाय वक्ष्यमाणविषयप्रत्यक्षत्वनिरूपकं प्रमातृचैतन्यं लक्षयति—**अन्तःकरणेति** ॥

म०प्र०—वृत्तौ क्रियात्वेन वृत्तिविशिष्टे क्रियात्वमारोप्य शङ्कते—**नन्वेकस्येति**। अद्वितीय-ब्रह्मण इत्यर्थः। **प्रकृतज्ञानप्रत्यक्षलक्षणेति**। प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्या-भिन्नत्वरूपं यत्प्रकृतं ज्ञानप्रत्यक्षलक्षणं ज्ञाननिष्ठप्रत्यक्षप्रयोजकं ज्ञाननिष्ठप्रत्यक्षत्वप्रकारकव्यवहार-प्रयोजकं वा तत्रोपयोगित्वादित्यर्थः ॥

**तत्र यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते स एव परिणामो वृत्तिरित्युच्यते ॥**

शि० म०—नन्वस्त्वन्तःकरणमनिन्द्रियतया प्रत्यक्षं तथाप्यान्तरस्य बहिर्निर्ग-मनाभावेन कथं परिणामात्मिका वृत्तिः। न चादित्यादिपर्यन्तं दीर्घप्रभाकारेण परिणामदर्शनात्तद्वृत्तिरुपपन्नेति वाच्यम्, अन्तःकरणस्याचाक्षुषत्वात् सौरालोकस्यैव नयनरश्मिसंपृक्तस्य दीर्घप्रभाकारेण प्रतिभानात्। किंचान्तःकरणस्याणुत्वे तस्य प्राणनक्रियाश्रयस्य दूरवर्तिध्रुवादिपर्यन्तं गमने तदवच्छिन्नजीवस्यापि गतत्वेन देहस्य निर्जीवत्वापत्तिः, विभुत्वे निष्क्रियत्वापत्तिः, मध्यमपरिमाणत्वे देहानु-रूपपरिमाणस्य तस्य देहवन्मन्दगामित्वेन झटिति विषयप्रतिभासानुपपत्तिः। किंच चक्षुरादिसंयुक्तस्य घटादेश्चैतन्यप्रकाशेनैव स्फुरणोपपत्तौ अन्तःकरण-वृत्तिवैफल्यं ततश्च नान्तःकरणवृत्त्यवच्छिन्नं प्रमाणचैतन्यमिति। उच्यते, मनो मध्यमपरिमाणमेव न सर्वगतम् अनित्यत्वात्। प्राणनशक्त्याश्रयस्य तस्यैवो-त्क्रान्तिगत्यादिश्रवणाच्च। न चाणु देहव्यापिसुखाद्युपलब्धेः। न चान्त-रस्य तस्य बहिर्निर्गमनाभावान्न वृत्त्युपादानत्वम्, स्वतो बहिर्निर्गमनाभावेऽपि चक्षुरादिद्वारा ध्रुवादिविषयदेशगमनोपपत्तेः। न च स्वतो गमनशीलस्य सहायानपेक्षेति साम्प्रतम्, तडागोदकस्य कुल्याद्वारा केदारप्रवेशदर्शनात्। न चास्य मध्यमपरिमाणत्वे झटिति ध्रुवादिप्रतिभासानुपपत्तिः, अतिस्वच्छवि-रलतैजसद्रव्यत्वेन सवितृकिरणवच्छीघ्रप्रसरोपपत्तेः। तद्वृत्तिश्च विषयानुरूपपरिमाणा तडागोदके चतुष्कोणकेदारानुरूपपरिमाणस्य कृशानौ चायःपिण्डपरिमाणस्य दर्शनेनान्तःकरणस्य विषयानुरूपपरिमाणवृत्तिजनकत्वात्। अत एव सा द्रव्यं न, गुणः परिमाणवत्त्वात्। न चान्तःकरणस्य निःस्पर्शत्वादनारम्भकत्वम्, द्रव्यारम्भ-कतायां सावयवस्यैव प्रयोजकत्वात्। न चान्तःकरणनिर्गमने देहस्य निर्जीवत्वम्, चक्षुरादेरिवान्तःकरणस्य ध्रुवादिपर्यन्तगमनेऽपि देहसंबन्धाविरोधात्। यथा च सप्र-योजना वृत्तिस्तथाऽग्रे वक्ष्यते। ततश्चान्तःकरणवृत्त्यवच्छिन्नचैतन्यं प्रमाणचैतन्यमिति तदेतदभिप्रेत्याह—**तत्र यथेत्यादिना** ॥

म०प्र०–अन्तःकरणं प्रत्यक्षमस्त्वित्यन्वयः। परिणामदर्शनात्=अन्तःकरणस्य परिणामदर्शनात्। **तद्वृत्तिरिति**=अन्तःकरणवृत्तिरित्यर्थः। तथा चान्तःकरणस्यादित्यादिपर्य्यन्तदीर्घप्रभाकारपरिणामं दृष्टान्तीकृत्यान्तःकरणस्य वृत्तिरपि कल्पनीयेति भावः। आदित्यादिपर्य्यन्तदीर्घप्रभाकारस्य चाक्षुषत्वमभिप्रेत्य न चेति प्रतिज्ञायां हेतुमाह–**अन्तःकरणस्येति**। ननु तर्हि कस्यादित्यादिपर्य्यन्तदीर्घप्रभाकारेण परिणामः स्यादित्याशङ्क्याह–**सौरेति**। सूर्य्यसंबन्धीत्यर्थः। संपृक्तस्य=संबद्धस्य, प्रतिभानात्=चक्षुषा ज्ञानात्, तस्य=अन्तःकरणस्य।प्राणनक्रियाश्रयस्य=प्राणव्यापाररूपक्रियाश्रयस्य। **तदवच्छिन्नेति**=अन्तःकरणावच्छिन्नेत्यर्थः। देहानुरूपपरिमाणस्य=देहपरिमाणतुल्यपरिमाणस्य, चैतन्यप्रकाशेनैव=चैतन्याभिन्नज्ञानेनैव,स्फुरणोपपत्तौ=घटोऽस्तीत्यादिव्यवहारोपपत्तौ, ततश्च=अन्तःकरणवृत्तेर्वैयर्थ्याच्च,प्राणनशक्त्याश्रयस्य=प्राणव्यापारानुकूलशक्त्याश्रयस्य, तस्य=अन्तःकरणस्य, स्वतः=चक्षुरादिसहकारिणं विना, अस्य=अन्तःकरणस्य। **विरलेति**=अघनीभूतेत्यर्थः। केदारानुरूपपरिमाणस्य=केदारपरिमाणतुल्यपरिमाणस्य, कृशानौ=वह्नौ, अयःपिण्डपरिमाणस्य=अयःपिण्डपरिमाणतुल्यपरिमाणस्य। **विषयानुरूपपरिमाणेति**=विषयपरिमाणतुल्यपरिमाणकेत्यर्थः। अत एव=वक्ष्यमाणहेतोरेव। यत्र निःस्पर्शत्वं तत्र द्रव्यानारम्भकत्वमिति व्याप्त्या निःस्पर्शत्वेन हेतुनान्तःकरणस्य द्रव्यानारम्भकतास्वीकारे द्रव्यारम्भकतायां स्पर्शवत्त्वस्यैव प्रयोजकत्वं वाच्यम्, तदनुपपन्नमेकस्मिन्नपि परमाणौ स्पर्शवत्त्वस्य विद्यमानत्वेनैकस्यापि परमाणोर्द्व्यणुकद्रव्यारम्भकतापत्तेरतो न स्पर्शवत्त्वं द्रव्यारम्भकताया ज्ञापकमित्यभिप्रेत्याह–**द्रव्येति**। सावयवत्वस्यैव=अन्त्यावयविभिन्नत्वे सति सावयवत्वस्यैव, प्रयोजकत्वात्=द्रव्यारम्भकताज्ञापकत्वात्॥

**अनुमित्यादिस्थले तु नान्तःकरणस्य वह्न्यादिदेशगमनम्, वह्न्यादेश्चक्षुराद्यसन्निकर्षात्। तथा चायं घट इत्यादिप्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहिरेकत्र देशे समवधानात्तदुभयावच्छिन्नं चैतन्यमेकमेव, विभाजकयोरप्यन्तःकरणवृत्तिघटादिविषययोरेकदेशस्थत्वेन भेदाजनकत्वात्॥**

**शि० म०**–ननु चक्षुरादीन्द्रियद्वारा पर्वतादावन्तःकरणनिर्गमनेन तद्वृत्तेर्विषयसंबन्धितया तदवच्छिन्नचैतन्यस्य विषयचैतन्याभेदादुक्तलक्षणस्य तत्रातिव्याप्तिरित्यत आह–**अनुमित्यादिस्थले इति**। नन्ववच्छिन्नपदेनोपलक्षितोक्तौ उक्तस्थलेऽतिव्याप्तिः, विशिष्टाभिधाने च वृत्तिविषययोर्भेदेन तद्विशिष्टयोरपि चैतन्ययोर्भेदादुक्तलक्षणस्य घटादिप्रत्यक्षलक्षणाव्याप्तिरित्याशङ्क्योपहितस्य तेन विवक्षितत्वान्न दोष इत्याह–**तथा चेति**। चक्षुरादिसन्निकर्षस्थले मनोनिर्गमने सिद्धे सतीत्यर्थः। तदुभयावच्छिन्नं=विषयवृत्त्युपहितम्, उपाधिविशेषणयोर्भेदो वक्ष्यते इति भावः। ननूपाधिविशेषणयोरीषद्भेदेऽपि तयोः समानयोगक्षेमत्वेन तदुपहितयोरपि भेद

एवेत्याशङ्क्य न हि विशेषणयोरिवोपाध्योस्स्वरूपेण भेदकत्वं किंतु भिन्नदेशस्थत्वेनेत्याह—**विभाजकयोरपीति**। भिन्नदेशस्थत्वेनोपधेयभेदप्रयोजकयोरित्यर्थः॥

**म० प्र०**—तद्वृत्तेः=अन्तःकरणवृत्तेः, विषयसंबन्धितया=वह्न्यादिरूपविषयसंबद्धत्वेन, तदवच्छिन्नचैतन्यस्य=वृत्त्यवच्छिन्नचैतन्यस्य, उक्तलक्षणस्य=प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वरूपलक्षणस्य, तत्र=अनुमित्यात्मकवह्न्यादिज्ञाने । परममूले **अनुमित्यादिस्थले इति**। अनुमित्यादेः स्थलमधिकरणं कालस्तस्मिन्ननुमित्यादिकाले इत्यर्थः । उक्तस्थले=अनुमित्याद्यात्मकवह्न्यादिज्ञाने । **अतिव्याप्तिरिति**। शुद्धचैतन्यस्य कदाचिद्वृत्तिविषयाभ्यामुपलक्षितत्वसंभवादतिव्याप्तिरित्यर्थः । विशिष्टाभिधाने=वृत्तिरूपविशेषणविशिष्टविषयरूपविशेषणविशिष्टचैतन्याभिधाने, तद्विशिष्टयोः=वृत्तिविषयरूपविशेषणविशिष्टयोः, उक्तलक्षणस्य=प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वरूपलक्षणस्य, घटादिप्रत्यक्षलक्षणाव्याप्तिः=घटादिप्रत्यक्षस्वरूपज्ञाने असंभवः । तेन=अवच्छिन्नपदेन । ननूपाधिविशेषणयोः को भेद इत्याशङ्क्याह—**उपाधिविशेषणयोरिति**। ईषद्भेदेऽपि=कार्यानन्वयित्वेन कार्यान्वयित्वेन च स्वल्पभेदेऽपि, समानयोगक्षेमत्वेन=कार्यान्वयित्वकार्यानन्वयित्वेतरसमानलक्षणकत्वेन, तदुपहितयोः=वृत्तिविषयोपहितयोः, भेद एव=वृत्तिविशिष्टचैतन्ययोरिव भेद एव। **उपधेयभेदप्रयोजकयोरिति**। उपधीयते उपाधिना पृथक् क्रियते यत्तदुपधेयमुपहितं तथा चोपहितभेदज्ञापकयोरित्यर्थः । परममूले **एकदेशस्थत्वेनेति**। घटाद्युपहितचैतन्यरूपैकदेशस्थत्वेनेत्यर्थः ॥

**अत एव मठान्तर्वर्त्तिघटावच्छिन्नाकाशो न मठावच्छिन्नाकाशाद्भिद्यते । तथा चायं घट इति प्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य चाभिन्नतया तत्र घटज्ञानस्य घटाकारांशे प्रत्यक्षत्वं सुखदुःखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य च नियमेनैकदेशस्थितोपाधिद्वयावच्छिन्नत्वान्नियमेनाहं सुखी दुःखीत्यादिज्ञानस्य प्रत्यक्षत्वम् । नन्वेवं स्ववृत्तिसुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षतापत्तिरिति चेत्, न ॥**

**शि० म०**—ननूपाध्योरपि स्वरूपेणैव भेदकत्वं लाघवादित्यत आह—**अत एवेति**। तथा च प्रामाणिकत्वाद्गौरवं न दोष इति भावः। **तथा चेति**। एकदेशस्थत्वेनोपाध्योरभेदकत्वे सिद्ध इत्यर्थः। ननु सुखादिप्रत्यक्षस्थले चक्षुरादिसन्निकर्षस्यान्तःकरणवृत्तिहेतोरभावेन सुखादिवृत्त्यनुदयात्कथं चैतन्यस्य तदंशे प्रत्यक्षत्वमित्याशङ्क्य तस्य बाह्यविषयवृत्तावेवेन्द्रियापेक्षा, सुखादिवृत्तिस्तु स्वत एवेत्याह—**सुखेति**। **प्रत्यक्षत्वमिति**। सुखाद्यंश इति शेषः। ननूपाध्योः स्वरूपेणैव भेदकत्वं युक्तमन्यथा तदाऽहं सुखीत्यादिस्मृतावतिव्याप्तिरिति चोदयति—**नन्विति** ॥

म० प्र०—स्वरूपेणैव भेदकत्वं=स्वगतासाधारणधर्मावच्छिन्नमेव भेदबुद्धिजनकत्वम्, लाघवात्=उपाध्योर्भिन्नदेशस्थत्वेन भेदकत्वापेक्षया स्वरूपेण भेदकत्वे लाघवात्। परममूले **अत एवेति**। उपाध्योरेकदेशस्थत्वेन भेदबुद्ध्यजनकत्वादेवेत्यर्थः। तथा च एकदेशस्थत्वेनोपाध्योरभेदकत्वे सिद्धे सति, प्रामाणिकत्वात्=उपाध्योर्भिन्नदेशस्थत्वेन भेदकत्वस्य आप्तवाक्यार्थापत्तिरूपप्रमाणसिद्धत्वात्। परममूले **तद्वृत्तीति**। घटाकारवृत्तीत्यर्थः। परममूले **तत्रेति**। अयं घट इति प्रत्यक्ष-काले इत्यर्थः। चैतन्यस्य सुखादिज्ञानात्मकचैतन्यस्य, तदंशे प्रत्यक्षत्वं सुखाद्यंशनिरूपितप्रत्य-क्षत्वम्, तस्य=अन्तःकरणस्य। स्वतः=चक्षुरादीन्द्रियसन्निकर्षं विना। परममूले **एकदेश-स्थितोपाधिद्वयावच्छिन्नत्वादिति**। एकस्मिन्नन्तःकरणस्वरूपदेशे स्थितं यदुपाधि-द्वयं सुखादि तदाकारवृत्तिश्च तदवच्छिन्नत्वादित्यर्थः। अन्यथा=भिन्नदेशस्थत्वेन भेदकत्वस्वीकारे सति। तदा=पूर्वकाले॥

**तत्र स्मर्यमाणसुखस्यातीतत्वेन स्मृतिरूपान्तःकरणवृत्तेर्वर्त-मानत्वेन तत्रोपाध्योर्भिन्नकालिकतया तत्तदवच्छिन्नचैतन्ययो-र्भेदादुपाध्योरेकदेशस्थत्वे सति एककालिकत्वस्यैवोपधेयाभे-दप्रयोजकत्वात्। यदि चैकदेशस्थत्वमात्रमुपधेयाभेदप्रयोजकं तदा पूर्वमहं सुखीत्यादिस्मृतावतिव्याप्तिवारणाय वर्त्तमानत्वं विषयविशेषणं देयम्॥**

शि० म०—ननूपाध्योरेककालिकत्वं नोपधेयाभेदप्रयोजकं भिन्नकालिकयो-रेकदेशस्थयोर्घटमठयोर्भेदकत्वप्रसङ्गात्। न चोपधेयाभेदसमये तयोः समकालत्वं विवक्षितमिति वाच्यम्। उपधेयाभेदसिद्धावेककालिकोपाधिद्वयावच्छेदस्तस्मा-च्चोपधेयाभेद इति परस्पराश्रयत्वाल्लाघवेनैकदेशस्थत्वस्यैवाभेदप्रयोजकत्वाच्चेत्यरुच्या पक्षान्तरमाह—**यदि चेति**। तथा च स्मर्य्यमाणसुखादेरवर्त्तमानत्वेन तद्वृत्त्यवच्छि-न्नचैतन्यस्य वर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वरूपलक्षणाभावान्नातिव्याप्तिरिति भावः। यद्वा विषये वर्तमानत्वाभिधानं तस्योपलक्षणत्वशङ्कानिरासार्थं न तद्घटित-लक्षणाभिप्रायम्। अवर्त्तमानस्यानुपाधित्वेन विषयोपहितचैतन्येनैवोक्तातिव्याप्ति-निराकरणात्। अत एव वक्ष्यति। उपाधिस्तु कार्य्यानन्वयी व्यावर्त्तको वर्तमान इति॥

म० प्र०—परममूले **तत्र स्मर्य्यमाणेति**। स्ववृत्तिसुखादिस्मरणेऽन्तःकरणे वा, प्रथमपक्षेऽभेदो निरूपितत्वं वा सप्तम्यर्थः। प्रथमपक्षे स्मर्य्यमाणपदार्थैकदेशस्मृतावभेदान्वयः। प्रथमपक्षद्वितीयपक्षयोः स्मर्य्यमाणपदं विषयतावत्परमित्यर्थः। परममूले **तत्रोपाध्यो-रिति**। तत्र=अन्तःकरणे, उपाध्योः=सुखादितद्विषयकस्मृत्यात्मकवृत्तिरूपोपाध्योरित्यर्थः। एककालिकत्वम्=एककालवृत्तित्वम्, नोपधेयाभेदप्रयोजकम्=उपहिताभेदसंपादकं न।

**भेदकत्वप्रसङ्गादिति** । ययोरुपाध्योरेकदेशस्थत्वे सति भिन्नकालिकत्वं तयोरुपाध्यो-रुपहितभेदकत्वं सुखादि=तदाऽहं सुखीत्यादिसुखादिविषयकस्मृत्यात्मकवृत्तिरूपोपाधिवत्तथा च घटमठ-निष्ठैककालिकत्ववत् घटमठनिष्ठभिन्नकालिकत्वस्यापि सत्त्वात्, घटमठयोर्भेदकत्वप्रसङ्गः स्यादिति भावः । यद्वैककालिकत्वस्येत्यस्यैककालोत्पत्तिमत्त्वमेककालिकत्वमित्यर्थं ज्ञात्वेयमा-शङ्का बोध्येति । **उपधेयाभेदसमये तयोः समकालत्वमिति** । तयोरुपाध्योरुपहिता-भेदसमयाभिन्नो यः समकालस्तद्वृत्तित्वमेककालिकत्वशब्देन विवक्षितमित्यर्थः । उपधेयाभेदसिद्धौ=उपहिताभेदज्ञाने सति, एककालिकोपाधिद्वयावच्छेदः=एककालवृत्त्युपाधिद्वयनिश्चयः, तस्मात्=एक-कालिकोपाधिद्वयज्ञानात्, उपधेयाभेदः=उपहिताभेदज्ञानम्. लाघवेन=उपाध्योरेकदेशस्थत्वे सत्येक-कालिकत्वापेक्षयैकदेशस्थत्वे लाघवेन । **अभेदप्रयोजकत्वाच्चेति**। तथा च तदाऽहं सुखीत्यादि-स्मृतावतिव्याप्तिस्तदवस्थेति भावः । परममूले **एकदेशस्थत्वमात्रमिति** । उपाध्योरेकदेश-वृत्तित्वमात्रमित्यर्थः। तथा च=विषयविशेषणत्वेन वर्तमानत्वस्य निवेशे सति, नातिव्याप्तिः=तदाऽहं सुखीत्यादिस्मृतावतिव्याप्त्यभावः । तस्य=विषयस्य । **निरासार्थमिति** । वस्तुतस्तु अवच्छिन्नपदेनोपहितस्याभिधानाद्विषयनिष्ठोपलक्षणत्वशङ्काऽनुदयेन वर्तमानत्वं विषयविशेषणं व्यर्थ-मेवेति भावः । न तद्घटितलक्षणाभिप्रायम्=विषयविशेषणत्वेन वर्तमानत्वाभिधानं वर्तमानत्व-घटितं प्रत्यक्षज्ञानलक्षणमित्यभिप्रायकं न । **उक्तातिव्याप्तीति** । तदाऽहं सुखीत्यादि-स्मृतावुक्तातिव्याप्तीत्यर्थः । अत एव=अवर्तमानविषयादेरनुपाधित्वादेव । **वक्ष्यति** । मूलकार इति शेषः । कार्य्यानन्वयी=विधेयानन्वयी ॥

**नन्वेवं स्वकीयधर्माधर्मौ वर्तमानौ यदा शब्दादिना ज्ञायेते तदा तादृशशाब्दज्ञानादावतिव्याप्तिः ॥**

**शि० म०**–नन्वेवं सुखादिस्मृतावतिव्याप्त्यभावेऽपि धार्मिको भवानधार्मिकस्त्व-मित्यादिवाक्यजन्यवृत्त्यवच्छिन्नचैतन्यं प्रति धर्माधर्मयोर्वर्तमानत्वेनोपाधितया तस्य तदुपहितचैतन्याभिन्नतया तत्रातिव्याप्तिः । अहमदृष्टवान् भोगवत्त्वादित्य-नुमानजन्यज्ञाने चातिव्याप्तिरिति शङ्कते–**नन्वेवमिति** । पुण्यकर्माऽय-मित्यादौ धर्मादेर्वर्तमानत्वेऽपि भिन्नदेशस्थत्वादनुपाधित्वमित्यत उक्तं **स्वकीयेति** ॥

**म० प्र०**–**धार्मिको भवानिति** । सुखवत्त्वदुःखवत्त्वाभ्यां हेतुभ्यां धार्मिकत्वा-धार्मिकत्वज्ञानम् । मुखप्रसादमालिन्याभ्यां तु सुखित्वदुःखित्वज्ञानम् । मुखप्रसादमालिन्ययोस्तु मुखावयवविकाससंकोचयोरन्तर्भावः। तथा च-धार्मिको भवानित्यादिवाक्यानुपपत्तिर्नास्तीति भावः । वृत्त्यवच्छिन्नचैतन्यं प्रति धर्माधर्मयोः=वृत्त्यवच्छिन्नचैतन्यविषययोर्धर्माधर्मयोः, उपाधितया=धर्मा-द्यवच्छिन्नचैतन्योपाधितया, तस्य=धर्माधर्मादिविषयकवाक्यजन्यवृत्त्यवच्छिन्नचैतन्यस्य, तदुपहित-चैतन्याभिन्नतया=धर्माधर्मोपहितचैतन्याभिन्नतया, तत्र=धार्मिको भवानित्यादिवाक्यजन्यज्ञाने, अनु-पाधित्वम्=उपधेयाभेदप्रयोजकोपाधित्वात्यन्ताभावः ॥

तत्र धर्माद्यवच्छिन्नचैतन्यतद्वृत्त्यवच्छिन्नचैतन्ययोरैकत्वादिति चेत्, न, योग्यत्वस्यापि विषयविशेषणत्वात् । अन्तःकरणधर्मत्वाविशेषेऽपि किंचिद्योग्यं किंचिदयोग्यमित्यत्र फलबलकल्प्यः स्वभाव एव शरणम् । अन्यथा न्यायमतेऽप्यात्मधर्मत्वाविशेषेऽपि सुखादिवद्धर्मादेः प्रत्यक्षत्वापत्तिर्दुर्वारा। न चैवमपि सुखस्य वर्तमानतादशायां त्वं सुखीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षता स्यादिति वाच्यम् इष्टत्वात् ॥

शि० म०—योग्यविषयावच्छिन्नचैतन्याभिन्नत्वं प्रमाणचैतन्यस्य विषयांशे प्रत्यक्षत्वप्रयोजकमिह विवक्षितं धर्मादिज्ञाने चायोग्यविषयत्वान्नातिव्याप्तिरित्याह-**नेति । योग्त्वस्येति** । प्रत्यक्षयोग्यत्वस्येत्यर्थः । क्वचिदपि स्वभावानाश्रयबाधकमाह-**अन्यथेति** । ननु योग्यत्वविशेषणदानेऽपि सुखवर्तमानतासमये त्वं सुखीत्यादिवाक्यजन्यज्ञानस्य तादृशचैतन्याभिन्नत्वात्तत्रातिव्याप्तिः । न च पदज्ञानपदार्थस्मरणादिना सुखस्य विनष्टत्वाच्छाब्दज्ञानसमये तन्निवर्तते इति वाच्यम् । चन्दनादिविषयजन्यसुखस्य यावद्विषयमनुवर्तमानत्वाभ्युपगमादित्याशङ्क्य तस्यापि प्रत्यक्षज्ञानत्वेन लक्ष्यत्वाभ्युपगमान्न दोष इत्याह-**नचैवमिति** ॥

म० प्र०—परममूले **तत्रेति** । धार्मिको भवानित्यादिवाक्यजन्यज्ञानादावित्यर्थः । **योग्येति** । प्रमाणचैतन्यस्य योग्यविषयावच्छिन्नचैतन्याभिन्नत्वमित्यन्वयः । विषयांशे प्रत्यक्षत्वप्रयोजकं=घटादिज्ञाननिष्ठघटादिविषयाभिन्नांशनिरूपितप्रत्यक्षत्वप्रयोजकम्, इह=प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वमिति वाक्ये, प्रत्यक्षयोग्यत्वस्य=तत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्यतरयोग्यत्वस्य । ननु सुखादेर्धर्मादेश्चान्तःकरणधर्मत्वाविशेषात्कस्यचिद्योग्यत्वं कस्यचिन्न योग्यत्वमित्यत्र किं नियामकमिति तत्राह-परममूले **अन्तःकरणेति** । परममूले **फलबलकल्प्य इति**। केषु चित्पदार्थेषु प्रत्यक्षरूपकार्य्यसत्त्वासत्त्वकल्प्य इत्यर्थः। परममूले **अन्यथेति**। पदार्थानां कार्य्यानुपपत्तिकल्प्यस्वभावविशेषस्यानङ्गीकारे इत्यर्थः । वाक्यजन्यज्ञानस्य=अहं सुखीत्याकारकज्ञानस्य, तादृशचैतन्याभिन्नत्वात्=योग्यसुखरूपविषयावच्छिन्नचैतन्याभिन्नत्वात्, तत्र=त्वं सुखीत्यादिवाक्यजन्यज्ञाने । **विनष्टत्वादिति** । नैयायिकस्य तव मते योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वनियमादिति शेषः । तत्=सुखम्, निवर्तते=नास्ति। यावद्विषयं=चन्दनादिविषयैः सहेन्द्रियसंबन्धसत्त्वपर्य्यन्तम्। **अभ्युपगमादिति**। वेदान्तिना त्वयेति शेषः। तस्यापि=सुखस्य वर्त्तमानदशायां त्वं सुखीत्यादिवाक्यजन्यज्ञानस्यापि । **न दोष इति** । सुखस्य वर्तमानतादशायां त्वं सुखीत्यादिवाक्यजन्येऽहं सुख्यस्मीति ज्ञानेऽतिव्याप्तिरूपो दोषो नास्तीत्यर्थः ॥

दशमस्त्वमसीत्यादौ सन्निकृष्टविषये शब्दादप्यपरोक्षज्ञानाभ्युपगमात् ॥

शि०म०—ननु त्वं सुखीत्यादिवाक्यात्कथमपरोक्षज्ञानं वाक्यस्य ज्योतिःष्टोमादिवाक्यवत्परोक्षज्ञानजनकत्वात्, अन्यथा कलमबीजादपि यवाङ्कुरोत्पत्त्यापत्तेरित्याशङ्क्याह—**दशमस्त्वमसीति**। अयमाशयः—न तावत्त्वं सुखीत्यादिवाक्यं न स्वविषयापरोक्षज्ञानजनकं वाक्यत्वात् ज्योतिःष्टोमादिवाक्यवदित्यनुमानादस्यापरोक्षज्ञानाहेतुत्वम् अयोग्यविषयत्वस्य तत्रोपाधित्वात्, दशमस्त्वमसि तत्त्वमसीत्यादिवाक्ये व्यभिचाराच्च। न च तज्जन्यमपि दशमत्वादिज्ञानमिन्द्रियाद्यजन्यत्वान्न प्रत्यक्षमिति न व्यभिचार इति वाच्यम्, इन्द्रियजन्यत्वस्य विषयजन्यत्वस्य च प्रत्यक्षलक्षणस्य दूषितत्वात्। न चैवमपि दशमस्त्वमसीत्यत्रेन्द्रियमेवापरोक्षज्ञानमुत्पादयति निमीलितनयनस्यापि त्वगिन्द्रियव्यापारसंभवात्। तत्त्वमसीत्यत्र चान्तःकरणमेव श्रवणादिना निरस्तासंभावनाशङ्कं ब्रह्मापरोक्षज्ञानं जनयतीति साम्प्रतमिन्द्रियाद्दशमत्वज्ञाने तच्छब्दश्रवणात्प्रागपि तत्र तत्प्रसङ्गात्। न च शब्दसहकृतमिन्द्रियं तत्र करणमिति वाच्यम्। इन्द्रियस्य घटादिप्रत्यक्षे तदनपेक्षणात्। प्रत्यक्षविशेषे च तदपेक्षत्वे मानाभावात्। न च तत्र परोक्षज्ञानमेव शब्दादुत्पद्यते इति युक्तमपरोक्षभ्रमाज्ञानयोरनिवृत्तिप्रसङ्गात्। अत एव तत्त्वमसीत्यत्र न परोक्षज्ञानशङ्कावकाशः, अविद्यातन्मूलसंसारानिवृत्तिप्रसङ्गात्। शब्दजन्यस्यैव ज्ञानस्य तत्त्वमस्यादिवाक्योत्थमित्यादि नारदीयवचनेनाविद्यातन्मूलसंसारनिवर्त्तकत्वावगमादिति॥

म० प्र०—अन्यजनकपदार्थादन्योत्पत्तिस्वीकारे दोषमाह—**अन्यथेति**। अन्यजनकादन्योत्पत्तिस्वीकारे इत्यर्थः। **कलमबीजादिति**। "कलमः पुंसि लेखन्यां शालौ पाटच्चरेऽपि च" इति मेदिनीकोशाल्लेखनीबीजाद्व्रीहिबीजाद्वेत्यर्थः। तस्य=त्वं सुखीत्यादिवाक्यस्य, **तत्रेति**=वाक्यत्वरूपहेतावित्यर्थः। वाक्यत्वरूपहेतोः स्वरूपसंबन्धेनायोग्यविषयकत्वरूपोपाधिमत्त्वमिति भावः। न च प्रत्यक्षयोग्यवह्न्यादिविषयकानुमानादिप्रमाणेषु स्वविषयापरोक्षज्ञानजनकत्वाभावरूपसाध्यसत्त्वेऽप्ययोग्यविषयकत्वरूपोपाधेरभावेन कथमुक्तोपाधेः साध्यव्यापकत्वमिति वाच्यम्। ज्ञानत्वानधिकरणत्वादिरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वस्य विवक्षितत्वात्। दशमस्त्वमसीत्यादिवाक्यजन्यज्ञाने इन्द्रियजन्यत्वादिरूपापरोक्षत्वस्याभावान्न दशमस्त्वमसीत्यादिवाक्ये व्यभिचार इत्यभिप्रायेणाशङ्कते—**तज्जन्यमपीति**। दशमस्त्वमसीत्यादिवाक्यजन्यमपीत्यर्थः। **इन्द्रियादीति**। अत्रादिशब्दार्थो विषय इति। प्रत्यक्षलक्षणस्य=प्रत्यक्षत्वस्य प्रत्यक्षत्वप्रकारकव्यवहारव्यापकस्य वा। एवमपि=इन्द्रियजन्यत्वादेः प्रत्यक्षलक्षणस्य दूषितत्वेऽपि। **इत्यत्रेति**। इत्यादिवाक्यविषये दशमे इत्यर्थः। नन्वन्धादेर्दशमे चक्षुषः सन्निकर्षासंभवात्कथमिन्द्रियस्य दशमे ज्ञानजनकत्वमित्याशङ्क्योत्पादयतीति शब्दोक्तप्रतिज्ञायां हेतुमाह—**निमीलितेति**। नन्वेवमपि तत्त्वमस्यादिवाक्यविषये कथं चक्षुरादीन्द्रियं ज्ञानमुत्पादयतीत्याशङ्क्य तत्त्वंपदार्थाभेदादौ चक्षुरादेर्ज्ञानाजनकत्वेऽपि तत्र श्रवणादिसहकृतमनस एव ज्ञानजनकत्वसंभवान्नैवमित्यभिप्रेत्याह—**तत्त्वमसीत्यत्रेति**। इत्यादिवाक्यविषये इत्यर्थः। तच्छब्दति=दशमस्त्वमसीत्यादिशब्द इत्यर्थः। तत्र=दशमे, तत्प्रसङ्गात्=प्रत्यक्ष-

ज्ञानप्रसङ्गात्। तत्र=दशमविषयकज्ञाने, तदनपेक्षणात्=शब्दानपेक्षणात्। नन्विन्द्रियं दशमादिप्रत्यक्षविशेषे शब्दमपेक्षते न तु प्रत्यक्षत्वावच्छिन्नप्रत्यक्षजनन इत्याशङ्क्य मैवमित्यभिप्रेत्य हेतुमाह—**प्रत्यक्षविशेष इति**। तदपेक्षत्वे=इन्द्रियस्य, शब्दापेक्षत्वे तत्र=दशमे। **अपरोक्षभ्रमाज्ञानयोरिति**। अत्रापरोक्षे च ते भ्रमाज्ञाने—अपरोक्षभ्रमज्ञाने, तयोरिति समासः। तथा चापरोक्षज्ञानस्यैवापरोक्षभ्रमादिनिवर्त्तकत्वेन दशमे दशमं न जानामीत्याकारकं यदपरोक्षाज्ञानं दशमो मृत इत्याद्यपरोक्षभ्रमश्च तयोरनिवृत्तिप्रसङ्गादित्यर्थः। अत एव=वक्ष्यमाणहेतोरेव, इत्यत्र=इत्यादिवाक्यविषये। कुतोऽनिवृत्तिप्रसङ्ग इत्याशङ्क्यानिवृत्तिप्रसङ्गे हेतुमाह—**शब्दजन्यस्यैवेति**। शब्दजन्यापरोक्षज्ञानस्यैवेत्यर्थः॥

**अत एव पर्वतो वह्निमानित्यादिज्ञानमपि वह्न्यंशे परोक्षम्, पर्वतांशेऽपरोक्षम्। पर्वताद्यवच्छिन्नचैतन्यस्य बहिर्निःसृतान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य च परस्परं भेदाभावात्। वह्न्यंशे त्वन्तःकरणवृत्तिनिर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमाणचैतन्यस्य च परस्परं भेदात्॥**

**शि० म०**—ननु तत्त्वमसि त्वं सुखीत्यादिवाक्यजन्यज्ञानस्येन्द्रियाजन्यस्यापि योग्यवर्तमानविषयत्वमात्रेण प्रत्यक्षत्वाभ्युपगमे पर्वतो वह्निमानित्याद्यनुमितेरपि प्रत्यक्षत्वापत्तिरित्याशङ्क्य किमिन्द्रियसन्निकृष्टे जायमानानुमितेः प्रत्यक्षत्वमापाद्यते, असंनिकृष्टे वा। आद्येऽपि किं पर्वतांशे तदापादनं वह्न्यंशे वा, नाद्य इष्टत्वादित्याह—**अत एवेति**। विषयचैतन्याभिन्नज्ञानस्य योग्यवर्तमानविषयस्य प्रत्यक्षत्वाभ्युपगमादित्यर्थः। पर्वतो वह्निमानित्यादिज्ञानमपि त्वं सुखीत्यादिज्ञानवत् सन्निकृष्टपर्वतांशे प्रत्यक्षत्वेनेष्टमित्युक्तं तत्र हेतुमाह—**पर्वतावच्छिन्नेति**। आद्ये द्वितीयं दूषयति—**वह्न्यंशे इति**। न चैवं तज्ज्ञानस्य वह्न्यंशप्रत्यक्षत्वाभावेन तत्र दृढा लक्षणातिव्याप्तिः। योग्यवर्तमानविषयत्वेऽपि वृत्तिविशिष्टचैतन्यस्य विषयचैतन्यभेदादित्याह—**वह्न्यंशेत्विति**॥

**म० प्र०**—अभिन्नज्ञानस्य=प्रमाणचैतन्यरूपज्ञानस्य, योग्यवर्तमानविषयस्य=तत्तदिन्द्रियतत्तत्साक्ष्यन्यतरयोग्यवर्त्तमानघटादिविषयकस्य, द्वितीयं=वह्न्यंशे पर्वतो वह्निमानिति ज्ञानस्य प्रत्यक्षत्वापादनमिति द्वितीयपक्षम्। एवं वह्न्यंशे पर्वतो वह्निमानिति ज्ञानस्य परोक्षत्वस्वीकारे सति, तज्ज्ञानस्य=पर्वतो वह्निमानिति ज्ञानस्य, तत्र=पर्वतो वह्निमानिति ज्ञाने। **लक्षणेति**=प्रत्यक्षलक्षणेत्यर्थः॥

**तथा चानुभवः पर्वतं पश्यामि वह्निमनुमिनोमीति। न्यायमते च पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः॥**

**शि० म०**—नन्वनुमित्यादिसाधारणं प्रत्यक्षलक्षणं परिकल्प्य पर्वतो वह्निमानित्यादिज्ञानस्य प्रसिद्धानुमितिभावस्य लक्षणेन प्रत्यक्षत्ववर्णनं न युक्तम्। उक्तं भट्टपादैः।—

"सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्त्तनम् ॥ १ ॥"

इत्याशङ्क्य सा प्रसिद्धिर्वह्न्यंशे न पर्वतांशे इत्याह—**तथा चेति** । यथा पर्वतो वह्निमानिति ज्ञानस्य निरुक्तप्रयोजकं तदभावश्च प्रत्यक्षत्वाप्रत्यक्षत्वयोः प्रमाणम्, तथा पर्वतं पश्यामि वह्निमनुमिनोमीत्यनुभवोऽपीत्यर्थः । न केवलं तज्ज्ञानस्य साधकसत्त्वात्पर्वतांशे प्रत्यक्षत्वम् । अपितु बाधकादपीत्याह—**न्यायमते इति** । यद्वा तथाऽनुभवस्तत्प्रकारकानुभवः यत्साधितं ज्ञानस्य परोक्षत्वमपरोक्षत्वं चांशभेदेन स च पर्वतं पश्यामि वह्निमनुमिनोमीत्यादिरूपः । अयमपि तदा संगच्छते यद्यस्यांशभेदेन परोक्षत्वापरोक्षत्वे स्यातामन्यथा पर्वतांशेऽप्यनुमितिरिति वदतो नैयायिकस्य मते पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिरित्यर्थः ॥

**म० प्र०**—प्रसिद्धानुमितिभावस्य=प्रसिद्धो नैयायिकानां निश्चितोऽनुमितिभावोऽनुमितित्वं यस्मिन्पर्वतो वह्निमानित्यादिज्ञाने तत्तथा तस्य नैयायिकादिनिश्चितानुमितित्वस्येति यावत् । लक्षणेन=ज्ञानप्रत्यक्षत्वादिप्रयोजकेन, प्रत्यक्षत्ववर्णनं=पर्वतांशनिरूपितप्रत्यक्षत्वकथनम्, सिद्धानुगममात्रम्=लोकप्रसिद्धप्रत्यक्षत्वानुमितित्वादिपदार्थस्याज्ञानिजनबोधाय वाक्येन प्रतिपादनमेव, परीक्षकैः=शास्त्रार्थनिरूपणकुशलैः, सा प्रसिद्धिः=पर्वतो वह्निमानिति ज्ञानमनुमितिरित्याकारिका-लौकिकी बुद्धिः, वह्न्यंशे=वह्न्यंशविषयक'पर्वतो वह्निमान्' इति ज्ञाने। वह्न्यंशनिरूपितानुमितित्वप्रकारिका वा। न पर्वतांशे=पर्वतांशविषयक 'पर्वतो वह्निमान्' इति ज्ञाने, सा प्रसिद्धिर्नास्ति=पर्वतांशनिरूपितानुमितित्वप्रकारिका 'पर्वतो वह्निमान्' इति ज्ञाने प्रसिद्धिर्नास्तीति वा । यत्र ज्ञाने प्रमाणचैतन्यस्य योग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्र ज्ञाने प्रत्यक्षत्वं यत्र ज्ञाने प्रमाणचैतन्यस्य योग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वाभावस्तत्र ज्ञाने विषयांशनिरूपितपरोक्षत्वमिति व्याप्तिमाश्रित्याह—**यथेत्यादिना** । पर्वतो वह्निमानिति ज्ञानस्य निरुक्तप्रयोजकं=प्रमाणचैतन्यस्य योग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वरूपम, तदभावश्च=निरुक्तप्रयोजकाभावश्च, पर्वतो वह्निमानिति ज्ञानस्य पर्वतांशनिरूपितप्रत्यक्षत्ववह्न्यंशनिरूपिताप्रत्यक्षत्वयोर्यथा प्रमाणमनुमितिरूपप्रमितिजनकमित्यर्थः । तथाचानुभव इत्यत्र चकारः समुच्चयार्थकापिशब्दार्थकोऽनुभवपदोत्तररूपभिन्नस्थानकश्चेत्यभिप्रेत्य दार्ष्टान्तिकमाह—**तथेति** । अनुभवोऽपीत्यस्य पर्वतो वह्निमानिति ज्ञानस्य प्रत्यक्षत्वाप्रत्यक्षत्वयोः प्रमाणमित्यनेनान्वयः । **न केवलमिति** । तज्ज्ञानस्य पर्वतो वह्निमानिति ज्ञानस्य, केवलं साधकसत्त्वात्=पर्वतांशनिरूपितप्रत्यक्षत्वस्य निरुक्तप्रयोजकरूपसाधकसत्त्वादेव न प्रत्यक्षत्वम् । अपितु=किंतु, बाधकादपि=पर्वतो वह्निमानिति ज्ञानस्य पर्वतांशनिरूपितप्रत्यक्षत्वास्वीकारे पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिरूपबाधकादपि प्रत्यक्षत्वमित्यर्थः । **तत्प्रकारकानुभव इति** । ज्ञानस्य=पर्वतो वह्निमानिति ज्ञानस्य, अंशभेदेन वह्न्याद्यंशविशेषनिरूपितं यत्परोक्षत्वमपरोक्षत्वं साधितं तत्प्रकारका-

नुभव इत्यर्थः । पर्वतो वह्निमानिति ज्ञानस्यांशभेदेन परोक्षत्वापरोक्षत्वसाधकानुभवमेव दर्शयति—**स चेति** । पर्वतो वह्निमानिति ज्ञानस्य पर्वताद्यंशनिरूपितापरोक्षत्वानुमितित्वसाधक एवेत्यर्थः । अस्य=पर्वतो वह्निमानिति ज्ञानस्य । **अंशभेदेनेति**=पर्वताद्यंशनिरूपितेत्यर्थः । अन्यथा=पर्वतांशे पर्वतो वह्निमानिति ज्ञानस्यानुमितित्वस्वीकारे ॥

**असन्निकृष्टपक्षकानुमितौ तु सर्वांशेऽपि ज्ञानं परोक्षम्, सुरभि चन्दनमित्यादिज्ञानमपि चन्दनखण्डांशेऽपरोक्षम्, सौरभांशे परोक्षम्, सौरभ्यस्य चक्षुरिन्द्रियायोग्यतया योग्यत्वघटितस्य निरुक्तलक्षणस्याभावात् ॥**

**शि०म०**—द्वितीयं दूषयति—**असन्निकृष्टेति** । असन्निकृष्टपक्षकानुमितिस्थले वह्न्यंश इव तदितरसर्वांशेऽपि तज्ज्ञानं परोक्षमित्यर्थः । नन्वेवमपि सुरभि चन्दनमिति ज्ञानस्य चन्दनांश इव सौरभ्यांशे प्रत्यक्षत्वाभावेन तत्र योग्यत्वघटितलक्षणातिव्याप्तिर्दुर्वारा इति चेत्सत्यं तज्ज्ञानं चन्दनखण्डांशे प्रत्यक्षम्, सौरभ्यांशे परोक्षमिति, तथापि तत्तदिन्द्रियघटितयोग्यत्वघटितस्य विवक्षितस्य लक्षणस्य तत्राभावान्न दोष इत्याह—**सुरभीति** । **परोक्षमिति** । आघ्रातपूर्वे तस्मिन् तज्ज्ञानं स्मृतिः । अनाघ्रातपूर्वे तु चन्दनखण्डत्वादिलिङ्गकानुमितिरित्यर्थः ॥

**म०प्र०**—द्वितीयम्=इन्द्रियासन्निकृष्टपक्षकानुमितौ प्रत्यक्षत्वमापाद्यते इति द्वितीयपक्षम् । परममूले **असन्निकृष्टपक्षकानुमिताविति** । असन्निकृष्टपक्षक 'पर्वतो वह्निमान्' इत्याकारकान्तःकरणवृत्तिरूपानुमितौ, ज्ञानं=प्रतिबिम्बितं चैतन्यरूपं ज्ञानम्, असन्निकृष्टपक्षक 'पर्वतो वह्निमान्' इत्यनुमितिघटकीभूतचैतन्यरूपं ज्ञानं वा । सर्वांशेऽपि परोक्षं पक्षसाध्यादिनिखिलांशनिरूपितपरोक्षत्वविशिष्टमित्यर्थः । अत्र ज्ञानपदाभावे तु परोक्षमित्यस्य परोक्षत्वमित्यर्थो बोद्धव्य इति । असन्निकृष्टपक्षकानुमितिस्थले=पर्वतो वह्निमानित्याद्याकारकासन्निकृष्टपर्वतपक्षकानुमितिरूपाधिकरणे, वह्न्यंशे इव=वह्न्यंशनिरूपितपरोक्षत्वमिव, तदितरसर्वांशेऽपि=वह्नीतरपर्वतादिनिखिलांशेऽपि । तज्ज्ञानम्=असन्निकृष्टपक्षक 'पर्वतो वह्निमान्' इति ज्ञानम् । एवमपि=पर्वतो वह्निमानित्याद्यनुमितावतिव्याप्त्यभावेऽपि । **चन्दनांशे इव**=चन्दनांशनिरूपितप्रत्यक्षत्वमिव । सौरभ्यांशे प्रत्यक्षत्वाभावेन=वेदान्तिमते सुरभि चन्दनमिति ज्ञानस्य सौरभ्यांशे स्मृत्याद्यात्मकत्वेन सौरभ्यांशनिरूपितप्रत्यक्षत्वाभावेन । तत्र=सौरभ्यांशविषयक 'सुरभि चन्दनम्' इति ज्ञाने, अतिव्याप्तिः=वृत्तिसौरभ्यांशरूपोपाध्योरेकदेशस्थत्वात्सौरभ्यस्य योग्यविषयत्वाच्चातिव्याप्तिः । तज्ज्ञानं=सुरभि चन्दनमिति ज्ञानम्, चन्दखण्डांशे प्रत्यक्षम्=चन्दनखण्डांशनिरूपितप्रत्यक्षत्वविशिष्टम् । सौरभ्यांशे परोक्षम्=सौरभ्यांशनिरूपितपरोक्षत्वविशिष्टम् । इतिशब्दस्य सत्यमित्यनेनान्वयः । तथापि सौरभ्यांशविषयक 'सुरभि चन्दनम्' इति ज्ञानस्य परोक्षत्वेऽपि तत्र सौरभ्यांशविषयक-'सुरभि चन्दनम्' इति ज्ञाने न दोषः । ज्ञानप्रत्यक्षत्वादिप्रयोजकस्यातिव्याप्तिरूपदोषो नास्ति ।

परममूले-**इत्यादिज्ञानमिति**। अत्र मधुरमाम्रफलमित्यादिज्ञानमादिपदार्थ इति। आघ्रात-पूर्वे तस्मिन्=पूर्वमाघ्रात आघ्रातपूर्वस्तस्मिन्नाघ्रातपूर्वे चन्दनखण्डे, तज्ज्ञानं-सुरभि चन्दनमित्याकारकसौरभ्यांशविषयकज्ञानम्। अनाघ्रातपूर्वे=पूर्वमनाघ्रातः अनाघ्रातपूर्वस्तस्मिन्ननाघ्रातपूर्वे, अस्य तज्ज्ञानमित्यनेनान्वयः॥

**न चैवमेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयोर्जातित्वं न स्यादिति वाच्यमिष्टत्वात्॥**

**शि० म०**-ननु पर्वतो वह्निमानित्यादि ज्ञानं सन्निकृष्टपर्वतांशेऽपि न प्रत्यक्षम्। तत्त्वे बाधकसत्त्वात् असन्निकृष्टविषयानुमितिवत्। न च हेत्वसिद्धिः परोक्षेऽपि ज्ञाने तदभ्युपगमे जातिसांकर्यप्रसङ्गेन प्रसिद्धजातिभावस्य तत्र जातित्वानुपपत्तेरेव बाधकत्वात्। न च तवापि ज्ञानस्य परोक्षत्वे पर्वतं पश्यामीत्यनुभवानुपपत्तिः, तस्य पर्वतगोचरलिङ्गपरामर्शादिप्रत्यक्षविषयत्वात्। ततश्च तज्ज्ञाने प्रत्यक्षलक्षणातिव्याप्तिरित्याशङ्क्य निराकरोति-**न चैवमिति**। एवंशब्दार्थमाह-**एकत्रेति**। साक्षात्त्वादेर्जातित्वाभ्युपगमे हि तदनुपपत्तिर्बाधिका स्यात्तदेव नास्ति, जात्युपाध्युदासीनस्य धर्ममात्रस्यैव तस्याभ्युपगमादित्याह-**इष्टत्वादिति**॥

**म० प्र०**-तत्त्वे=सन्निकृष्टपर्वतादिविषयक 'पर्वतो वह्निमान्' इत्यादिज्ञानस्य प्रत्यक्षत्वे। यत्र यस्य धर्मस्य बाधकसत्त्वं तत्र तस्य धर्मस्याभाव इति व्याप्तिमभिप्रेत्य हेतुमाह-**बाधकसत्त्वादिति**। **असन्निकृष्टविषयानुमितिवदिति**। असन्निकृष्टपर्वतादिविषयक 'पर्वतो वह्निमान्' इत्याद्यनुमितिनिष्ठपर्वतादिपक्षाद्यपरोक्षतायाः पर्वतादिभिः साकं सन्निकर्षाभावरूपबाधकसत्त्ववदित्यर्थः। परोक्षेऽपि ज्ञाने=सन्निकृष्टपर्वताद्यंशेऽपि परोक्षे 'पर्वतो वह्निमान्' इत्यादिज्ञाने, तदभ्युपगमे=सन्निकृष्टपर्वतादिविषयकत्वावच्छेदेनापरोक्षत्वाभ्युपगमे, जातिसांकर्य्यप्रसङ्गेन=परस्परात्यन्ताभावसमानाधिकरणप्रत्यक्षत्वानुमितित्वरूपधर्मयोरेकत्र समावेशरूपसांकर्य्यप्राप्त्या। **प्रसिद्धजातिभावस्येति**। प्रसिद्धः शास्त्रार्थनिपुणपुरुषैर्निश्चितो जातिभावो जातित्वं यस्मिन्ननुमितित्वे तत्तथा तस्य, प्रसिद्धजातित्वानुमितित्वस्य जातित्वानुपपत्तेरेव, तत्र=सन्निकृष्टपर्वतादिविषयक-'पर्वतो वह्निमान्' इत्यादिज्ञानप्रत्यक्षत्वे, बाधकत्वादित्यर्थः। तवापि=नैयायिकस्य तवापि, ज्ञानस्य=सन्निकृष्टपर्वतादिविषयक 'पर्वतो वह्निमान्' इत्यादिज्ञानस्य। न चेति प्रतिज्ञायां हेतुमाह-**तस्येति**। पर्वतं पश्यामीत्यनुभवात्मकानुव्यवसायस्यानुमितित्वनिष्ठजातित्वानुपपत्तिरूपबाधकवशादनुमितिघटकसन्निकृष्टपर्वतादिविषयक 'पर्वत' इति ज्ञानविषयत्वाभावेनानुमितेः पूर्वं जायमानप्रत्यक्षात्मकलिङ्गपरामर्शादिघटकपर्वतविषयकप्रत्यक्षात्मकज्ञानविषयकत्वादित्यर्थः। ततश्च=उक्तानुमानादेव, तज्ज्ञाने=सन्निकृष्टपर्वतादिविषयक 'पर्वतो वह्निमान्' इति ज्ञाने, प्रत्यक्षलक्षणातिव्याप्तिः=प्रत्यक्षलक्षणस्य प्रमाणचैतन्ययोग्यवर्त्तमानविषयचैतन्ययोरभेदरूपस्यातिव्याप्तिः।

१ स्वाश्रयाश्रयत्वसंबन्धेन हेतोर्वृत्तिर्बोध्या। स्वं सांकर्य्यं तदाश्रयः परोक्षत्वापरोक्षत्वे तयोराश्रयो ज्ञानमिति।

तदनुपपत्तिः=प्रत्यक्षत्वादेर्जातित्वानुपपत्तिः, बाधिका=सन्निकृष्टपर्वतादिविषयक 'पर्वतो वह्निमान्' इत्यादिज्ञानस्य प्रत्यक्षत्वादिबाधिका, तदेव=प्रत्यक्षत्वादेर्जातित्वमेव, जात्युपाध्युदासीनस्य=जातित्वोपाधित्वरहितस्य, धर्ममात्रस्यैव=धर्मस्वरूपस्यैव, तस्य=प्रत्यक्षत्वादेः ॥

**जातित्वोपाधित्वपरिभाषायाः सकलप्रमाणागोचरतयाऽप्रामाणिकत्वात्। घटोऽयमित्यादिप्रत्यक्षं हि घटत्वादिसद्भावे मानम्, न तु तस्य जातित्वेऽपि ॥**

**शि० म०**–ननु घटत्वादिवत्परोक्षत्वापरोक्षत्वयोरपि जातित्वप्रसिद्धेरवश्यं तदुपेयमित्याशङ्क्य घटत्वादावपि लोके न तत्प्रसिद्धिः। शास्त्रे च तत्प्रसिद्धिः शब्दगतवृद्ध्यादिसंज्ञावत्परिभाषामात्रत्वात् न स्वार्थे प्रमाणम्, न चैषा यूपाहवनीयादिप्रसिद्धिवत् प्रमाणमूला येन परिभाषाऽपि स्वार्थं साधयेदित्याह–**जातित्वेति**। ननु नीलघटत्वादावुपाधित्वप्रसिद्धिवत् घटत्वादौ जातित्वप्रसिद्धिरपि स्वार्थे प्रमाणमित्याशङ्क्य साऽपि निर्मूलत्वादप्रमाणमित्याह–**उपाधित्वेति**। ननु घटत्वनीलघटत्वादौ जातित्वोपाधित्वयोः प्रमाणसिद्धत्वात् तत्प्रसिद्धेः प्रमाणमूलत्वाभावोऽसिद्ध इत्यत आह–**सकलेति**। घटत्वनीलघटत्वयोर्जातित्वोपाधित्वयोरिति शेषः। अत एव घटत्वादेर्जातित्वे प्रमाणमाशङ्क्य निरस्यति–**घटोऽयमिति** ॥

**म० प्र०**–तदुपेयम्=परोक्षत्वापरोक्षत्वनिष्ठजातित्वमुपेयम्, न तत्प्रसिद्धिः=जातित्वप्रसिद्ध्यत्यन्ताभावः। **शास्त्रे च तत्प्रसिद्धिरिति**। शास्त्रजन्यघटत्वादिविषयकजातित्वप्रकारकप्रसिद्धिः। स्वार्थे=घटत्वादिनिष्ठजातित्वरूपविषये, न प्रमाणमित्यर्थः। तस्याः स्वविषये प्रमाणत्वाभावे हेतुमाह–**परिभाषामात्रत्वादिति**। घटत्वादिकं जातिरिति प्रसिद्धेः सङ्केतमात्रत्वादित्यर्थः। प्रसिद्धेः सङ्केतमात्रत्वेन स्वविषये प्रमाणत्वाभावे दृष्टान्तमाह–**शब्देति**। एषा–घटत्वं जातिरित्याद्याकारा घटत्वादिविषयकजातित्वप्रकारकप्रसिद्धिः। **यूपेति**। दृष्टादृष्टसंस्कारवान् काष्ठविशेषो यूपः, होमाधारसंस्कृताग्निराहवनीय इत्यादिप्रसिद्धिवदित्यर्थः। येन=प्रमाणमूलकत्वहेतुना, परिभाषा=सङ्केतः, स्वार्थं=स्वविषयम्, साऽपि नीलघटत्वादावुपाधित्वप्रसिद्धिरपि। तत्प्रसिद्धेः=घटत्वादौ जातित्वादिप्रसिद्धेः। घटत्वनीलघटत्वादौ जातित्वोपाधित्वप्रसिद्धेः प्रमाणमूलकत्वाभावस्यासिद्धत्वे हेतुमाह–**घटत्वेति**। प्रमाणसिद्धत्वात्=घटोऽयं घटोऽयमित्यादिप्रमाणसिद्धत्वात्। अत एव=प्रमाणाभावादेव ॥

**जातित्वरूपसाध्याप्रसिद्धौ तत्साधकानुमानस्याप्यनवकाशत्वात् ॥**

**शि० म०**–घटत्वादेर्जातित्वे किं प्रत्यक्षमनुमानं वा मानं तत्राद्यं निरस्य द्वितीयं निरस्यति–**जातित्वेति**। घटत्वादिकं जातिः उपाधिभिन्नसामान्यधर्मत्वात्सत्तावत् इत्यनुमानं न तज्जातित्वे मानं नित्यैकानेकसमवेतत्वलक्षणजातित्वाप्रसिद्धौ तन्निरूपितव्याप्त्यादिज्ञानाभावेन तत्साध्यकानुमानायोगादित्यर्थः।

ननु नित्यत्वादिघटितजातित्वाप्रसिद्धावपि तद्घटकनित्यत्वैकत्वानेकसमवेतत्वानामात्माकाशघटादिषु प्रसिद्धत्वात् घटत्वादौ नित्यत्वसंशयानन्तरं तद्विशिष्टे तत्रैकत्वसंशयः, ततस्तदुभयविशिष्टे अनेकसमवेतत्वसंशय इति संशयरूपसाध्यप्रसिद्धेः पूर्वपूर्वस्योत्तरोत्तरानुमाने पक्षतावच्छेदकत्वेन निश्चयरूपविशिष्टसाध्यप्रसिद्धेर्वा संभवात्तत्साध्यकानुमानं संभवतीति चेन्न नित्यत्वैकत्वप्रसिद्धावपि समवायस्याप्रामाणिकत्वेन तद्घटितसाध्याप्रसिद्धेः। न च रूपी घट इति ज्ञानं संबन्धविषयकं विशिष्टज्ञानत्वाद्दण्डी पुरुष इति ज्ञानवदित्यनुमानं समवाये मानमिति वाच्यम्, घटाभाववद्भूतलमिति ज्ञानवत्स्वरूपसंबन्धमादायापि तदुपपत्तेः । इह तन्तुषु पटसमवाय इति प्रत्यक्षं तन्तुषु पटसंबन्धे प्रमाणम्, न तु नित्यसंबन्धत्वलक्षणसमवायेऽपि ब्रह्मभिन्ननिखिलप्रपञ्चस्यानित्यत्वावगमेन तादृशनित्यसंबन्धासिद्धेरिति ॥

म० प्र०—तत्र=घटत्वादेर्जातित्वे किं प्रत्यक्षमनुमानं वा मानमिति, पक्षद्वयमध्ये आद्यं=घटत्वादेर्जातित्वे प्रत्यक्षं मानमिति पक्षम् द्वितीयं=घटत्वादेर्जातित्वेऽनुमानं मानमिति द्वितीयपक्षम्, जातिः=जातित्ववत् । **उपाधिभिन्नेति** । अनिर्वचनीयबहुपदार्थघटितधर्मान्यतरधर्मरूपोपाधिभिन्नत्वे सति नित्यत्वे सत्यनेकव्यक्तिवृत्तिधर्मत्वादित्यर्थः । घटादौ व्यभिचारनिरासाय नित्यत्वे सतीत्युक्तम् । अखण्डोपाधिरूपाभाववादौ व्यभिचारनिरासायोपाधिभिन्नत्वे सतीति, जलपरमाणुरूपादौ व्यभिचारनिवृत्तयेऽनेकव्यक्तिवृत्तित्वमिति । तज्जातित्वे=घटत्वादिनिष्ठजातित्वे । **तन्निरूपितेति**=जातित्वनिरूपितेत्यर्थः । नित्यत्वादिघटितजातित्वाप्रसिद्धावपि तत्साधकानुमानं संभवतीत्यन्वयः । **तत्साध्यकेति**=घटत्वादेर्जातित्वसाधकेत्यर्थः । कुतः संभवतीत्याशङ्क्याह—**इति संशयरूपसाध्यप्रसिद्धेरिति** । इतिशब्दोक्तप्रकारमेवाह—**घटत्वादाविति** । नित्यत्वसंशयानन्तरं घटत्वं नित्यं घटत्वमनित्यमितिवादिविप्रतिपत्तेर्घटत्वं नित्यं न वेति नित्यत्वसंशयानन्तरं तद्विशिष्टे तत्र=अनित्यत्वविशिष्टे घटत्वे, एकत्वसंशयः=नित्यत्वविशिष्टं घटत्वमेकं न वेत्येकत्वसंशयः । तदुभयविशिष्टे=नित्यत्वैकत्वविशिष्टे घटत्वे, अनेकसमवेतत्वसंशयः=नित्यत्वैकत्वविशिष्टं घटत्वमनेकसमवेतं न वेत्यनेकसमवेतत्वसंशयः । ननु नित्यत्वादीनामप्रसिद्धत्वात्संशयरूपसाध्यप्रसिद्ध्यभाव इत्याशङ्क्य मैवमित्यभिप्रेत्य संशयरूपसाध्यप्रसिद्धिसत्त्वे हेतुमाह—**तद्घटकेति** । जातित्वघटकेत्यर्थः । अनुमानं संभवतीति प्रतिज्ञायामेव हेत्वन्तरमाह—**निश्चयेति** । कुतः निश्चयरूपविशिष्टसाध्यप्रसिद्धिसत्त्वमित्याशङ्क्याह—**पूर्वपूर्वस्येति** । घटत्वं नित्यं गुणकर्माभावभिन्नत्वे सति निरवयवत्वादात्मवत्, नित्यघटत्वमेकं नित्यत्वे सति समवायेनानेकवृत्तित्वात्सत्तावत्, नित्यैकघटत्वमनेकसमवेतमुपाधिभिन्नसामान्यधर्मत्वात्सत्तावदिति पूर्वपूर्वस्योत्तरोत्तरानुमाने पक्षतावच्छेदकत्वेनेत्यर्थः । **तद्घटितेति** । समवायघटितेत्यर्थः । **स्वरूपसंबन्धमिति** । स्वरूपसंबन्धश्च संबन्धिद्वयसत्त्वं सम्बन्धिद्वयं च रूपं घटश्च । रूपस्य रूपत्वेन संबन्धित्वं स्वरूपेण संबन्धित्वमिति भावः । तदुपपत्तेः=रूपी घट इति ज्ञानोपपत्तेः । **तादृशेति**=समवायाभिन्नेत्यर्थः ॥

**समवायासिद्ध्या ब्रह्मभिन्नसकलप्रपञ्चस्यानित्यतया च नित्यत्वसमवेतत्वघटितजातित्वस्य घटत्वादावसिद्धेश्च । एवमेवोपाधित्वं निरसनीयम् ॥**

**शि० म०**—ननु संयोगभिन्नसाक्षात्संबन्धत्वं समवायत्वम्, तत्र नित्यत्वाप्रवेशेन तन्तुषु पटसमवायाभ्युपगमेऽपि न प्रपञ्चानित्यत्वश्रुतिविरोधः । ततश्चानेकसमवेतत्वघटितसाध्यप्रसिद्धिरपि सुसंपादेति यदि ब्रूयात्तदाऽभ्युपेत्यान्यत्र समवायं प्रकृते तदभावेन तद्घटितसाध्यस्य बाधितत्वान्नानुमानावकाश इत्याह—**समवायासिद्ध्येति**। इह तन्तुषु पटसमवाय इति प्रत्यक्षेणान्यत्र समवायसिद्धावपि इह घटत्वमिति प्रतीतेः सत्त्वे सत्त्वमितिवत्स्वरूपसंबन्धेनाप्युपपत्तेर्न घटत्वादौ समवायसिद्धिरिति भावः । **अनित्यतयेति** । सृष्टिवाक्यावगतकार्यत्वस्य निखिलप्रपञ्चस्य कृतकत्वानुमानेन तद्यथेहेत्यादिश्रुत्या चानित्यत्वावगमादिति भावः । **असिद्धेरिति**। बाधादित्यर्थः। उक्तदूषणमुपाधित्वेऽप्यतिदिशति-**एवमिति**। नीलघटत्वादेरुपाधित्वे प्रमाणाभावादित्यर्थः ॥

**म० प्र०**—**संयोगभिन्नेति**। न च स्वरूपसंबन्धस्य संयोगभिन्नसाक्षात्संबन्धत्वेन स्वरूपसंबन्धेऽतिव्याप्तिरिति वाच्यम् । संयोगभिन्नेत्यनेन संयोगस्वरूपसम्बन्धभिन्नत्यस्य विवक्षितत्वादिति, तत्र=संयोगभिन्नसाक्षात्संबन्धत्वरूपसमवायत्वे, ततश्च=समवायसिद्धेरेव । अन्यत्र=घटत्वादिजात्यतिरिक्ततन्तुषु, । प्रकृते=घटत्वादौ, इह=एषु, अन्यत्र=घटत्वादिजात्यतिरिक्ततन्तुषु, इह=घटे सत्त्वे=सत्तायाम्, सृष्टिवाक्यावगतकार्यत्वस्य=सृष्टिवाक्यैरवगतं कार्यत्वं यस्मिन्प्रपञ्चे स तथा तस्य कार्यत्वाश्रयस्यपरममूले **एवमिति** । नीलघटत्वादेरुपाधित्वपरिभाषा न प्रामाणिकी नीलोऽयं घट इत्यादिप्रत्यक्षस्य नीलघटत्वादिसद्भावे मानतया नीलघटत्वादेरुपाधित्वेऽमानत्वादुपाधित्वरूपसाध्याप्रसिद्ध्या तत्साधकानुमानानवकाशादित्यादिरीत्या निरसनीयमित्यर्थः ॥

**पर्वतो वह्निमानित्यादौ पर्वतांशे वह्न्यंशे चान्तःकरणवृत्तिभेदाङ्गीकारेण तत्तद्रूयवच्छेदकभेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये वृत्तौ न कश्चिद्विरोधः ॥**

**शि० म०**—ननु परोक्षत्वापरोक्षत्वयोर्जातित्वाभावेऽपि विरुद्धयोः कथमेकत्र ज्ञाने वृत्तिरित्याशङ्क्य किं वृत्तौ तयोर्वृत्त्यनुपपत्तिश्चैतन्ये वा। आद्ये तदाश्रयवृत्त्योर्भेदान्न विरोध इत्यभिप्रेत्य द्वितीये संयोगतदत्यन्ताभाववदवच्छेदकभेदेन चैतन्ये वृत्त्यभ्युपगमान्न विरोध इत्याह—**पर्वत इति** ॥

**म० प्र०**—विरुद्धयोः एककाले एकाधिकरणे संबन्धशून्ययोः परोक्षत्वापरोक्षत्वयोः । वृत्तिः= संबन्धः । वृत्तौ=वृत्त्यात्मकज्ञाने । तयोः=परोक्षत्वापरोक्षत्वयोः । वृत्त्यनुपपत्तिः=संबन्धानुपपत्तिः । तदाश्रयवृत्त्योः=परोक्षत्वापरोक्षत्वाश्रयवृत्त्यात्मकज्ञानयोः, न विरोधः=एकज्ञाने परोक्षत्वापरोक्षत्वयोः

संबन्धानुपपत्तिर्न भवति । अवच्छेदकभेदेन=अन्तःकरणपरिणामरूपवृत्त्यभिन्नावच्छेदकभेदेन । वृत्त्यभ्युपगमात्=संबन्धाभ्युपगमात् । परममूले **चैतन्य इति** । पर्वतादिषु प्रमातृकचैतन्ये इत्यर्थः ॥

**शि० म०**—ननु घटाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य तद्गतपरिमाणाद्यवच्छिन्नचैतन्याभिन्नतया तस्य तदंशेऽपि प्रत्यक्षत्वापत्तिः । न च स्वाकारान्तःकरणवृत्त्युपहितत्वस्यापि विषयविशेषणत्वान्नातिप्रसङ्ग इति वाच्यम्, शुक्तिरूप्यादेरविद्यावृत्त्युपहितस्यान्तःकरणवृत्त्युपहितत्वाभावेन भ्रमप्रत्यक्षाव्याप्तेः । सर्वेश्वरज्ञानस्य मायावृत्तिरूपत्वेन तदवच्छिन्नचैतन्यस्य प्रपञ्चाकारान्तःकरणवृत्त्युपहितविषयचैतन्याभिन्नत्वाभावेन तत्राव्याप्तेश्च । न च तदाकारवृत्त्युपहितत्वं विषयविशेषणं सा च क्वचिन्मायावृत्तिः क्वचिदन्तःकरणवृत्तिरिति परमेश्वरज्ञानादौ नाव्याप्तिरिति वाच्यम्, अस्मदादेर्घटज्ञानसमये परिमाणादेः सर्वगतपरमेश्वरीयमायावृत्तिगोचरत्वेन तदंशे तत्प्रसङ्गतादवस्थ्यात् । किंच सुरभि चन्दनमिति ज्ञाने सौरभांशे प्रत्यक्षता स्यादेव स्वाकारवृत्त्युपहितयोग्यविषयचैतन्याभिन्नत्वात् ॥

**म० प्र०**—**तद्गतेति**=घटादिगतेत्यर्थः । तस्य=घटज्ञानस्य, तदंशे=परिमाणाद्यंशे वृत्त्युपहितत्वस्य=वृत्तिप्रतिबिम्बितत्वस्य वृत्तिविषयत्वस्य वा । **तदवच्छिन्नेति**=मायावृत्त्यवच्छिन्नेत्यर्थः । **प्रपञ्चाकारेति**=निखिलवस्त्वाकारेत्यर्थः । तत्र=सर्वेश्वरज्ञाने । **तदाकारेति**=विषयाकारेत्यर्थः । सा च=वृत्तिः । **परमेश्वरज्ञानादाविति**। अत्र भ्रमप्रत्यक्षमादिशब्दार्थः । तदंशे=परिमाणाद्यंशे । **तत्प्रसङ्गेति**=घटज्ञानस्य प्रत्यक्षत्वप्रसङ्गेत्यर्थः । **स्वाकारेति**=सौरभाकारेत्यर्थः ॥

**शि० म०**—न च तत्तदिन्द्रिययोग्यत्वं योग्यपदेन विवक्षितम्, तथा सति शुक्तिरूप्यभ्रमे स्वाप्नगजादिभ्रमे चाव्याप्तेः । अन्तःकरणतद्धर्माणामिन्द्रियायोग्यत्वेन तज्ज्ञानेष्वव्याप्तेश्च । ननु तत्तदिन्द्रियसाक्ष्यन्यतरयोग्यत्वमिह विषयविशेषणं विवक्षितमन्तःकरणतद्धर्माणां साक्षियोग्यत्वान्न दोष इति चेत्, न, धर्म्मादेरपि प्रमाणव्यापारद्वारा साक्षिवेद्यत्वेन तज्ज्ञानेऽतिव्याप्तेः, केवलसाक्षियोग्यत्वविवक्षायां च साक्षिपदेनान्तःकरणोपहितचैतन्याभिधाने जीवसाक्ष्ययोग्यधर्माधर्मादिगोचरेश्वरप्रत्यक्षे तथाप्यव्याप्तिः केवलसाक्षियोग्यत्वमत्र विवक्षितम्, तच्चोभयसाक्षियोग्यसाधारणमिति परमेश्वरज्ञाने नाव्याप्तिरिति चेत् न, जीवेश्वरसाक्षिसाधारणस्य साक्षित्वस्यानिर्वचनात् । निर्वचने वा धर्मादावीश्वरसाक्षियोग्यत्वमादाय तज्ज्ञानेऽतिव्याप्तिस्तादवस्थ्यात्, न च जीवसाक्षियोग्यत्वघटितमेवेह प्रयोजकं विवक्षितं जीवप्रत्यक्षस्यैव लक्ष्यत्वान्नेश्वरप्रत्यक्षेऽव्याप्तिर्दोष इति वाच्यम्, तदन्यस्य प्रत्यक्षसामान्यलक्षणस्याभावात् । तदुक्तं प्रत्यलक्षणं न युक्तमिति ॥

म० प्र०- तथा सति=योग्यपदेन तत्तदिन्द्रिययोग्यत्वस्य विवक्षितत्वे सति । **अव्याप्तेरिति** । शुक्तिरूप्यभ्रमादिविषयाणां तत्तदिन्द्रिययोग्यत्वाभावादिति शेषः। इह=ज्ञानप्रत्यक्षत्वादिप्रयोजके, न दोषः=अव्याप्तिरूपदोषात्यन्ताभावः। **प्रमाणव्यापारद्वारेति** । प्रमाणं व्याप्तिज्ञानादिकं तेषां व्यापारः तत्संस्कारादिरूपः तद्द्वाराऽहं धर्मवान् सुखित्वादिति साक्षिवेद्यत्वेन अथवा प्रमाणं व्याप्तिज्ञानादिकं तेषां व्यापारकार्य्यमनुमित्यादिकं तद्द्वारा साक्षिवेद्यत्वेनेत्यर्थः। केवलसाक्षियोग्यत्वविवक्षायाम्=प्रामाण्यव्यापाराद्वारकसाक्षियोग्यत्वविवक्षायाम् । अत्र=ज्ञानप्रत्यक्षत्वादिप्रयोजके । तच्च=केवलसाक्षियोग्यत्वं च, उभयसाक्षियोग्यसाधारणम्=जीवेश्वरसाक्षियोग्येषु पदार्थेषु वृत्तिमत् । साधारणस्य=वृत्तिमतः निर्वचने=मायान्तःकरणान्यतरोपहितत्वं जीवेश्वरसाक्षित्वमिति निर्वचने, तज्ज्ञाने=धर्मादिज्ञाने, इह=ज्ञानप्रत्यक्षत्वादौ, एतदन्यस्य=प्रमाणचैतन्यस्य तत्तदिन्द्रियतत्तज्जीवसाक्ष्यन्यतरयोग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वरूपलक्षणाद्भिन्नस्य प्रत्यक्षसामान्यलक्षणस्य=जीवेश्वरप्रत्यक्षवृत्तिप्रत्यक्षत्वादिप्रयोजकस्य, तत्=तस्माज्जीवेश्वरप्रत्यक्षवृत्त्येकप्रत्यक्षत्वादिप्रयोजकाभावात् ॥

**तथा च तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम् ॥**

शि० म०-उच्यते। तत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्यतरयोग्यतत्तत्साक्षिजन्यतत्तदाकारवृत्त्युपहितविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तत्साक्षिजन्यतत्तदाकारवृत्त्यवच्छिन्नचैतन्यस्य तत्तद्विषयांशे प्रत्यक्षत्वं साक्षी च ज्ञानोपादानोपहितं चैतन्यं वृत्तिलक्षणज्ञानोपादानं च मायाऽन्तःकरणमिति तदुपहितयोर्जीवेश्वरयोस्साक्षिणोर्न लक्षणाव्याप्तिः। तथा च घटज्ञानस्य न तद्गतपरिमाणांशे प्रत्यक्षत्वं तस्य तदा परमेश्वरीयसाक्षिजन्यवृत्तिगोचरत्वेऽपि तद्वृत्तेरस्मदादिसाक्ष्यजन्यत्वेन तत्साक्षिजन्यस्वाकारवृत्त्युपहितविषयचैतन्याभिन्नत्वाभावात् नापि धर्मादिज्ञानेऽतिव्याप्तिः। तस्यास्मदादिसाक्षियोग्यत्वाभावात्तदेतत्सर्वमभिप्रेत्याह-**तथा चेति**। लक्षणप्रविष्टविशेषणानां प्रयोजने सिद्धे सतीत्यर्थः। ननूक्तप्रत्यक्षलक्षणस्य घटादावतिव्याप्तिरित्याशङ्क्य तादृशवृत्त्यवच्छिन्नचैतन्यस्यैवात्र लक्ष्यत्वात्तद्व्यावृत्तिर्न दोष इत्याह **तत्तदाकारेति** ॥

म० प्र०- **तत्तदिन्द्रियेति** । तत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्यतरयोग्यश्चासौ तत्तत्साक्षिजन्यतत्तदाकारवृत्त्युपहितविषयस्तदवच्छिन्नचैतन्यनिरूपिताभेदवत्त्वं तत्तत्साक्षिजन्यतत्तदाकारवृत्त्यवच्छिन्नचैतन्यस्य घटपटादिविषयाभिन्नांशनिरूपितप्रत्यक्षत्वमित्यर्थः। वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वमित्युक्तेऽयं घट इत्यादिज्ञानस्य परिमाणाद्यंशे प्रत्यक्षत्वं स्यात्तद्वारणाय तत्तदाकारवृत्त्युपहितेति विषयविशेषणम्। यद्विषयनिरूपितं ज्ञाननिष्ठं प्रत्यक्षत्वं विवक्षितं तत्तदाकारवृत्त्युपहितत्वमपि विषयस्यापेक्षितमिति तदर्थः। परिमाणाद्याकारेश्वरवृत्त्युपहितत्वस्य परिमाणादिविषयेषु सत्त्वेन पुनरयं घट इत्यादिज्ञानेष्वतिव्याप्तेः सत्त्वात्तद्वारणाय तत्तत्साक्षिजन्येति वृत्तिविशेषणम्।

वृत्तिं प्रत्युपाधेः कारणत्वेनोपहिते आरोपाच्चैतन्यस्य विवर्तकारणत्वस्वीकाराद्वा यद्यत्साक्षिज्ञानस्यापरोक्षत्वमपेक्षितं तत्तत्साक्षिजन्यत्वं वृत्तेर्विवक्षितमिति तदर्थः । धार्मिकोऽहमित्यादौ प्रमाणद्वारा धर्मादिज्ञानेऽतिव्याप्तिनिरासाय तत्तत्केवलसाक्षियोग्येति विषयविशेषणम् । जीवस्य घटादिप्रत्यक्षेऽव्याप्तिवारणायेन्द्रियेति, सौरभांशविषयक'सुरभि' चन्दनम् इति ज्ञानेऽतिव्याप्तिवारणाय तत्तदितीन्द्रियविशेषणम् । यद्यदिन्द्रियजन्यज्ञानेऽपरोक्षत्वमपेक्षितं तत्तदिन्द्रिययोग्यत्वं विवक्षितमिति तदर्थः । असंभववारणायान्यतरेति । साक्षिण एव स्वविषयकव्यवहारजनकत्वेन साक्षिणः केवलसाक्षियोग्यत्वान्न तत्त्वमस्यादिवाक्यजन्यज्ञानेऽव्याप्तिः । अयं घटः इत्यादिज्ञानेषु परिमाणाद्यंशनिरूपितप्रत्यक्षत्वापत्तिवारणाय विषयोपाधिवृत्तेस्तत्तत्साक्षिजन्यत्वस्य तत्तदाकारत्वस्य च कीर्तनाच्चैतन्योपाधिवृत्तेस्तत्तत्साक्षिजन्यत्वस्य तत्तदाकारत्वस्य च वारयितुमशक्यत्वेन चैतन्योपाधिवृत्तेस्तत्तत्साक्षिजन्यत्वस्य तत्तदाकारत्वस्य च कीर्तनम्, न त्वतिव्याप्त्यादिनिरासार्थमिति ध्येयमिति । **लक्षणेति**=ज्ञानप्रत्यक्षत्वादिप्रयोजकेत्यर्थः । उक्तप्रत्यक्षलक्षणस्य=उक्तप्रत्यक्षत्वप्रकारकव्यवहारप्रयोजकस्य । **तादृशेति**=तत्तत्साक्षिजन्यतत्तदाकारेत्यर्थः । अत्र=उक्तप्रत्यक्षलक्षणे, तद्व्यावृत्तिः=उक्तलक्षणस्य घटादिष्ववृत्तित्वम् ॥

**द्वितीये घटादेर्विषयस्य प्रत्यक्षत्वं तु प्रमात्रभिन्नत्वम् ॥**

**शि० म०**—विषयस्य प्रत्यक्षत्वे प्रयोजकान्तरानिरूपणात्सोऽप्यत्र लक्ष्य एवेत्याशङ्क्य तत्रान्यत्प्रयोजकमस्तीत्याह—**घटादेरिति**। तुशब्दो लक्षणान्तरव्यावृत्त्यर्थः । इन्द्रियजन्यज्ञानविषयत्वं स्वज्ञानजनकेन्द्रियसन्निकर्षाश्रयत्वमन्यद्वा विषयप्रत्यक्षलक्षणं न भवतीत्यर्थः । न्यायमते अनुमितेर्मनइन्द्रियजन्यत्वेन तद्विषयपरमाण्वादावुक्तलक्षणस्यातिव्यापकत्वादन्तःकरणतद्धर्म्मादिष्वव्यापकत्वाच्चेति भावः । **प्रमात्रभिन्नत्वमिति** । यद्यपि प्रत्यक्षज्ञानविषयत्वं विषयस्य प्रत्यक्षत्वं ज्ञाने च प्रत्यक्षत्वं पूर्वोक्तविषयचैतन्याभिन्नत्वं विवक्षितमिति स्वांशे प्रत्यक्षमनुमित्यादिज्ञानमादायानुमेयादौ नातिप्रसङ्गः । तद्विषयत्वं च तादृशवृत्त्यवच्छिन्नचैतन्यस्य यद्विषयांशे प्रत्यक्षत्वं तत्त्वमिति न सौरभादौ तत्प्रसङ्गः । यद्वा योग्यत्वे सति विषयचैतन्याभिन्नप्रमाणचैतन्यविषयत्वं घटादेर्विषयस्य प्रत्यक्षत्वं तथापि विषयस्यापरोक्षत्वं संविदभेदादिति विवरणे तत्र तत्र च सांप्रदायिकैः प्रमात्रभेदस्यैव वियषप्रत्यक्षलक्षणत्वेनाभिधानादेवमुक्तम् । न च विज्ञानवादापत्तिः, यत्किंचित्साम्यस्य सर्वसिद्धान्तेऽपि तुल्यत्वात् । विषयस्य संविदभेदेऽपि विज्ञानक्षणिकत्वविषयासत्त्वानभ्युपगमेन सर्वसाम्याभावात् ॥

**म० प्र०**—सोऽपि=घटादिविषयोऽपि, अत्र=उक्तलक्षणे, तत्र=घटादिनिष्ठप्रत्यक्षत्वादौ । **लक्षणान्तरव्यावृत्त्यर्थ इति** । तुशब्दस्य भिन्नस्थानकत्वेन प्रमात्रभिन्नत्वमेव घटादिविषयस्य प्रत्यक्षत्वं न त्वन्यदिति लक्षणान्तरव्यावृत्त्यर्थ इत्यर्थः । एतदेव दर्शयति--

**इन्द्रियजन्येति** । **स्वज्ञानेति**=घटादिविषयज्ञानेत्यर्थः । अन्यद्वा=ज्ञानाकरणकज्ञानविषयत्वमित्यादि वा । **परमाण्वादाविति** । अत्रेन्द्रियादिरादिपदार्थः । **अतिव्यापकत्वादिति**=अतिव्याप्तिग्रस्तत्वादित्यर्थः । **अव्यापकत्वादिति**=द्विविधलक्षणस्याव्याप्तिग्रस्तत्वादित्यर्थः । इति=अस्माद्धेतोः । स्वांशे प्रत्यक्षम्=अनुमित्याद्यंशे चित्स्वरूपप्रत्यक्षत्ववत्, अनुमित्यादिज्ञानम्=अनुमित्यादिरूपं ज्ञानमनुमिनोमीत्याद्यनुव्यवसायरूपानुमित्यादिविषयकज्ञानं वा । नातिप्रसङ्गः=नातिव्याप्तिः । तद्विषयत्वं=पूर्वोक्तापरोक्षज्ञानविषयत्वम् । **तादृशवृत्तीति**=तत्तत्साक्षिजन्यतत्तदाकारवृत्तीत्यर्थः। **यद्विषयांश इति**=यद्विषयाभिन्नांशनिरूपितेत्यर्थः । तत्त्वं=तादृशविषयनिष्ठविषयत्वम् । इति=अस्माद्धेतोः, न सौरभादौ तत्प्रसङ्गः=चन्दनाकारवृत्त्यवच्छिन्नचैतन्यनिष्ठसौरभांशनिरूपितप्रत्यक्षत्वाभावेन सुरभि चन्दनमिति ज्ञाने सति न सौरभादौ प्रत्यक्षत्वप्रसक्तिः । तथापि=घटादिविषयनिष्ठपूर्वोक्तप्रत्यक्षत्वसंभवेऽपि, संविदभेदात्—प्रमातृरूपचैतन्याभेदात्, इति विवरणेऽभिधानादित्यन्वयः । तत्र तत्र=तस्मिन् तस्मिन्वेदान्तग्रन्थे, एवमुक्तम्=घटादिविषयस्य प्रमात्रभिन्नत्वघटादिविषयस्यापरोक्षत्वमुक्तम् । विज्ञानवादापत्तिः=बौद्धमतप्रवेशः । **तुल्यत्वादिति** । यथा नैयायिकमते घटादीनामनित्यत्वादिकं तथा मम नयेऽपि घटादीनामनित्यत्वादिकमित्यादिरीत्या यत्किंचित्साम्यस्य तुल्यत्वादित्यर्थः । ननु तव मते बौद्धमतसर्वसाम्येन बौद्धमतप्रवेशस्तदवस्थ इत्याशङ्क्य, मैवमित्यभिप्रेत्य हेतुमाह—**सर्वसाम्याभावादिति** । स्वमते बौद्धमतसर्वसाम्याभावे हेतुमाह—**विषयस्येति** ।

**ननु कथं घटादेरन्तःकरणावच्छिन्नचैतन्याभेदः, अहमिदं पश्यामीति भेदानुभवविरोधादिति चेत् ॥**

**शि० म०—ननु प्रमात्रभेदो ह्यन्तःकरणविशिष्टचैतन्याभेदः, स च न विषयस्य प्रत्यक्षत्वव्यवहारप्रयोजकः, जडस्य घटादेस्तदभेदायोगात् । न च प्रमात्रभेदज्ञानविषयत्वं विषयस्य प्रत्यक्षत्वमन्तःकरणस्येन्द्रियद्वारा घटादिदेशनिर्गमनेन तदवच्छिन्नस्य प्रमातुर्विषयचैतन्याभिन्नतया घटस्सन्निति विषयचैतन्याभेदप्रत्ययस्य तदभेदप्रत्ययत्वात् । अप्रमित्यादिस्थले च प्रमातुर्विषयचैतन्याद्भिन्नतया वह्न्यादौ तदभेदप्रत्ययस्य प्रमात्रभेदप्रत्ययत्वाभावान्नातिव्याप्तिरिति वाच्यम् । विषयचैतन्यस्य तदा प्रमात्रभेदेऽप्यहं मनुष्य इतिवदहं घट इति प्रतीत्यापत्त्या अहमिमं पश्यामीति प्रमातृभेदप्रत्यक्षविरोधेन च घटस्सन्नित्यादिप्रतीतेस्तदभेदविषयत्वाभावात्, ततश्च न युक्तमिदं लक्षणमिति चोदयति—नन्विति ॥**

**म० प्र०**—तदभेदायोगात्=अन्तःकरणविशिष्टचैतन्याभेदायोगात् । प्रमातृभेदज्ञानविषयत्वं=घटादिविषयस्य प्रमात्रा सह यदभेदज्ञानं घटः सन्नित्यादिज्ञानं तद्विषयत्वम् । ननु सन् घट इति ज्ञानस्य विषयचैतन्याभेदप्रत्ययत्वेन प्रमात्रभेदज्ञानत्वाभावात्कथं प्रमात्रभेदज्ञानविषयत्वं विषयस्य प्रत्य-

क्षत्वमित्याशङ्क्य, उक्तप्रतिज्ञायां हेतुमाह—**घटः सन्निति**। विषयचैतन्याभेदप्रत्ययस्य=विषयचैतन्येन साकं यो घटादीनामभेदप्रत्ययस्तस्य, तदभेदप्रत्ययत्वात्=प्रमात्रभेदप्रत्ययत्वात्। उक्तप्रत्ययस्य प्रमात्रभेदप्रत्ययत्वे हेतुमाह—**अन्तःकरणस्येत्यादिना**। नन्वेवमनुमेयवह्न्यादेरपि वह्निः सन्नित्यादिप्रत्ययविषयत्वादनुमेयवह्न्यादावतिव्याप्तिरित्याशङ्क्याह—**अनुमित्यादिस्थले इति**। अनुमित्यादिकाले इत्यर्थः। वह्न्यादौ=अनुमेयवह्न्यादौ, अस्य नातिव्याप्तिरित्यनेनान्वयः। अनुमेयवह्न्यादावतिव्याप्त्यभावे हेतुमाह—**तदभेदप्रत्ययस्येति**। वह्निः सन्नित्यादिविषयचैतन्याभेदप्रत्ययस्येत्यर्थः। तदभेदप्रत्ययस्य प्रमातृचैतन्याभेदप्रत्ययत्वाभावे हेतुमाह—**प्रमातुरिति**। न च वाच्यमिति प्रतिज्ञायां हेतुमाह—**घटः सन्नित्यादिप्रतीतेरिति**। **तदभेदेति**=प्रमातृचैतन्याभेदेत्यर्थः। घटस्सन्नित्यादिप्रत्ययस्य प्रमातृचैतन्याभेदविषयत्वाभावे हेतुद्वयमाह—**विषयचैतन्यस्येत्यादिना**। तदा=अयं घट इति ज्ञानकाले। ततश्च=प्रमात्रभेदज्ञानविषयत्वासंभवाच्च॥

**उच्यते। प्रमात्रभेदो नाम न तावदैक्यं किंतु प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः। तथा च घटादेः स्वावच्छिन्नचैतन्याध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अनङ्गीकारात्। विषयचैतन्यं च पूर्वोक्तप्रकारेण प्रमातृचैतन्यमेवेति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता नान्येति सिद्धं घटादेरपरोक्षत्वम्॥**

शि० म०—सिद्धान्तवादी तु प्रमात्रभिन्नत्वं नाम न तावदैक्यं न वा तदभेदभ्रमविषयत्वं किंत्वन्यदेव तद्विवक्षितमित्याह—**उच्यते इति**। ननु प्रमातृप्रमेयनिष्ठसत्ताजातेरेकत्वेन तन्निष्ठसत्तातिरिक्तसत्ताया अप्रसिद्धिः; प्रसिद्धौ वा वह्न्यादेरनुमेयस्यापि प्रमातृनिष्ठसत्तावत्त्वेनातिव्याप्तिः; प्रमातृरूपत्वविवक्षायां घटस्सन्नित्यादिप्रतीतिसिद्धाया घटादिसत्तायाः प्रमातृलक्षणसत्तातिरिक्तत्वेन तत्र लक्षणाऽव्याप्तिरित्यत आह—**तथा चेति**। प्रमातृलक्षणसत्तातिरिक्तसत्ताकत्वाभावे लक्षणे विवक्षिते सति। घटादेरपरोक्षत्वं सिद्धमिति संबन्धः। किं घटादेरतिरिक्तसत्ताजातिमत्त्वात् तत्राव्याप्तिः, अबाधितत्वलक्षणसत्ताधर्मवत्त्वाद्वा, प्रमातृव्यतिरिक्तविषयचैतन्यलक्षणसत्तावत्त्वाद्वा। तत्राद्यमतिरिक्तसत्ताजात्यनभ्युपगमान्निराकृत्य द्वितीयं निरस्यति—**घटादेरिति**। ननु घटादेरपि घटः सन्नित्यादिप्रतीतिबलादस्त्वतिरिक्तं सत्त्वं न चासौ भ्रमः तथाऽप्यनिर्वचनीयसत्त्वधर्मसंभवादित्यत आह—**अधिष्ठानेति**। तत्प्रतीतेरधिष्ठानसत्ताविषयत्वेन तदंशे अन्यथाख्यातित्वान्नानिर्वचनीयसत्त्वसिद्धिरिति भावः। तृतीयं निराचष्टे—**विषयेति**॥

म० प्र०—तत्=प्रमात्रभिन्नत्वम् । **तन्निष्ठेति**=प्रमातृचैतन्यनिष्ठेत्यर्थः । **अप्रसिद्धिरिति** । तथा च प्रतियोगिज्ञानाभावान्नाभावज्ञानमिति भावः । प्रसिद्धौ वा=प्रमातृप्रमेयचैतन्यनिष्ठा या सत्तारूपा जातिस्तदतिरिक्ताऽपि कचित्काचित्सत्ताऽस्तीत्यङ्गीकारे । अतिव्याप्तौ हेतुमाह—**वह्न्यादेरिति** । प्रमातृरूपत्वविवक्षायाम्=प्रमातृसत्ताशब्देन प्रमातृचैतन्याभिन्नसत्ताविवक्षायाम्, तत्र=घटादौ, तत्राद्यं=पक्षत्रये आद्यम् । तत्प्रतीतेः=घटः सन्नित्यादिप्रतीतेः । तदंशे=सत्तांशविषयक 'घटः सन्' इत्यादिज्ञाने । **सिद्धिरिति** । घटादाविति शेषः । परममूले पूर्वोक्तेति । यथा तडागोदकं छिद्रान्निर्गत्येत्यादिवाक्योक्तेत्यर्थः । परममूले **प्रमातृसत्तैवेति**=प्रमातृचैतन्याभिन्नसत्तैवेत्यर्थः ॥

**अनुमित्यादिस्थलेऽन्तःकरणस्य वह्न्यादिदेशनिर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यानात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति नातिव्याप्तिः । नन्वेवमपि धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माधर्मयोः प्रत्यक्षत्वापत्तिः धर्माद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मादिसत्तायाः प्रमातृसत्ताऽनतिरेकादिति चेत् न, योग्यत्वस्यापि विषयविशेषणत्वात् । नन्वेवमपि रूपी घट इति प्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः, रूपावच्छिन्नचैतन्यस्य परिमाणाद्यवच्छिन्नचैतन्यस्य चैकतया रूपावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदे परिमाणाद्यवच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया परिमाणादिसत्तायाः प्रमातृसत्तातिरिक्तत्वाभावादिति चेत्, न तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात् । रूपाकारवृत्तिदशायां परिमाणाद्याकारवृत्त्यभावेन परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वाभावेनातिव्याप्त्यभावात् ॥**

शि० म०—ननु चैतन्यसत्तातिरिक्तसत्ताकत्वाभाव एव लक्षणमस्तु तस्य घटादावपि सत्त्वाल्लाघवाच्चेत्याशङ्क्य प्रमातृविशेषणव्यावर्त्यमाह—**अनुमित्यादीति** । ननु प्रमातृत्वघटितलक्षणस्य वह्न्यादावतिव्याप्त्यभावेऽपि स्ववृत्तिधर्मादावतिव्याप्तिर्दुर्वारा इति शङ्कते—**नन्वेवमपीति । योग्यत्वस्येति** । तत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्तरयोग्यत्वस्येत्यर्थः ॥

म० प्र०—चैतन्यसत्ता=चैतन्याभिन्नसत्ता, लक्षणम्=घटादिनिष्ठं प्रत्यक्षत्वं घटादिनिष्ठप्रत्यक्षत्वप्रकारकव्यवहारप्रयोजकं वा । **तस्येति** । घटादावपीत्यपिशब्दस्य तस्येत्यनेनान्वयः । तथा च चैतन्याभिन्नसत्तातिरिक्तसत्ताकत्वाभावरूपविषयप्रत्यक्षलक्षणस्यापीत्यर्थः । लाघवाच्च=

अन्तःकरणविशिष्टचैतन्यरूपप्रमातृचैतन्यनिवेशाभावेनास्मिँल्लक्षणे लाघवाच्च । परममूले **नन्वेवमपि रूपीति ।** योग्यत्वे सति प्रमातृचैतन्यसत्तातिरिक्तसत्ताशून्यत्वमिति घटादिविषयनिष्टप्रत्यक्षत्वनिर्वचनेन धर्मादावतिव्याप्त्यभावेऽपीत्यर्थः । परममूले **तत्तदाकारवृत्तीति**=तत्तद्विषयकवृत्तीत्यर्थः ॥

**नन्वेवं वृत्तावव्याप्तिः अनवस्थाभिया वृत्तिगोचरवृत्त्यनङ्गीकारेण तत्र स्वाकारवृत्त्युपहितत्वघटितोक्तलक्षणाभावादिति चेत् ॥**

**शि० म०**—नन्वेवं वृत्तावव्याप्तिः, तस्याः स्वगोचरत्वे मानाभावात्, वृत्त्यन्तराभ्युपगमे अनवस्थानाच्च तत्र स्वाकारवृत्त्युपहितत्त्वघटितलक्षणाभावात् । न च वृत्तिः स्वविषया ज्ञानत्वाद्ब्रह्मस्वरूपनित्यज्ञानवदित्यनुमानं तत्र मानमिति वाच्यम्, वृत्तौ ज्ञानत्वाभावेन हेतोः स्वरूपासिद्धत्वात्, वृत्तिलक्षणज्ञानत्वविवक्षायां दृष्टान्ते साधनवैकल्यात्, उभयसाधारणस्य च ज्ञानत्वस्याभावात् । ज्ञानपदवाच्यत्वमुभयसाधारणमिति चेत् न, चक्षुरादेरपि करणव्युत्पत्त्या तत्पदवाच्यत्वेन व्यभिचारात् । वृत्तौ ज्ञानपदस्य गौणत्वेन तत्पदवाच्यत्वाभावात् आत्मत्वस्योपाधित्वात् । वृत्तिर्न स्वविषया, जडत्वात्, घटवदित्यनुमानेन प्रतिरोधाच्च । किंच वृत्तेः स्वविषयत्वे आत्मवत्स्वप्रकाशत्वापत्तिः, न चेष्टापत्तिः, आत्मैव स्वप्रकाश इति सिद्धान्तभङ्गापत्तेः । न च वृत्तिरपि स्वप्रकाशा स्वसत्तायां प्रकाशाव्यभिचारित्वावगमात् आत्मवदिति वाच्यम्, सुखादौ व्यभिचारात् । न च तत्रापीष्टं स्वप्रकाशत्वम्, तत्र तदाकारवृत्त्यभ्युपगमात् स्वप्रकाशात्मसंबन्धेनैवान्येषां प्रकाशोपपत्तावनेकस्वप्रकाशत्वकल्पने गौरवात् । आत्मैवास्य ज्योतिरिति श्रुतिविरोधाच्च । तस्मान्न युक्तं वृत्तेः स्वविषयत्वम् । ततश्च दृढा तत्र लक्षणाव्याप्तिरिति शङ्कते—**नन्वेवमिति ।** स्वाकारवृत्त्युपहितत्वस्य प्रमातृविशेषणत्वे इत्यर्थः ॥

**म० प्र०**—एवं=तत्तदाकारवृत्त्युपहितत्वस्य प्रमातृविशेषणत्वे । ननु वृत्तावव्याप्त्यभिधानमनुपपन्नमित्याशङ्क्याव्याप्तौ हेतुमाह—**तत्रेति ।** वृत्तावित्यर्थः । वृत्तौ लक्षणाभावे हेतुद्वयमाह—**तस्या इत्यादिना ।** तस्याः=वृत्तेरित्यर्थः । **नित्यज्ञानवदिति ।** न च चितः स्वविषयत्वे जडत्वापत्तिरिति वाच्यम्, स्वभिन्नचिद्विषयत्वस्य जडत्वप्रयोजकत्वादिति । तत्र=वृत्तिनिष्ठस्वविषयकत्वे । तत्पदवाच्यत्वेन=ज्ञानपदवाच्यत्वेन । ज्ञानपदवाच्यत्वरूपहेतोः स्वरूपासिद्धिमप्याह—**तत्पदवाच्यत्वाभावादिति ।** ज्ञानपदवाच्यत्वाभावादित्यर्थः । वृत्तौ ज्ञानपदवाच्यत्वाभावे हेतुमाह—**वृत्ताविति ।** गौणत्वेन=लाक्षणिकत्वेन । वृत्तावमुख्यज्ञानत्वमादाय हेतावुपाधिमप्याह—**आत्मत्वस्येति ।** प्रतिरोधाच्च=बाधाच्च, सत्प्रतिपक्षितत्वाच्च वा । स्वसत्तायाम्=स्वनिष्ठविद्यमानत्वे सति । **प्रकाशाव्यभिचारित्वेति**=ज्ञानाव्यभिचारि-

त्वेत्यर्थः । **सुखादौ व्यभिचारादिति** । सुखादौ स्वप्रकाशत्वरूपसाध्याभावेऽपि सुखादेर्ज्ञातसत्ताकत्वाद्यदा सुखादिकं भवति तदैव सुखादिज्ञानसत्त्वेन सुखादेः स्वसत्तायां प्रकाशव्यभिचारित्वसत्त्वादित्यर्थः। तत्रापि=सुखादावपि। **अस्येति**=कार्य्यकरणसंघातरूपदृश्यस्येत्यर्थः ॥

**न, अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृचैतन्यसत्ताभिन्नसत्ताकत्वस्य तत्रापि संभवात् ॥**

**शि० म०**—परिहरति—**नानवस्थेति**। इदमत्राकूतमस्ति। तावद्वृत्तिगोचरानुभवः घटमहं जनामीति, स च न वृत्त्यन्तरम् । तत्रापि वृत्त्यन्तराभ्युपगतावनवस्थानात्। न च चैतन्यमेव तदनुभवस्तथा सति व्यवहितपदार्थस्यापि तेन भानप्रसङ्गात्। सन्निहितप्रकाशकत्वे च घटज्ञानसमये तद्गतपरिमाणादेरपि तत्प्रसङ्गात्। स्वसत्तायां प्रकाशव्यभिचारादावरणभङ्गार्थं परिमाणादौ वृत्त्यभ्युपगम इति चेत्, तर्हि सुखादेर्वृत्तिं विनाऽपि चैतन्येन प्रकाशप्रसङ्गात्। यदि च प्रत्यक्षत्वसिद्धये चैतन्यलक्षणानुभवस्याविनाशिनस्संस्कारजनकत्वाभावेन स्मरणोपपत्तये च सुखादौ तदाकारवृत्त्यभ्युपगम इति, तदा प्रकृतेऽपि तुल्यम्। एवं च वृत्तिः स्वविषया अन्याप्रकाश्यत्वे सति प्रकाश्यमानत्वादात्मवदित्यनुमानं वृत्तेः स्वविषयत्वे प्रमाणम् । न चात्मत्वमुपाधिः सर्वं ज्ञानं गुण इत्यनुमितेन्र्यायमतेऽपि स्वविषयत्वाभ्युपगमेन तत्र व्यभिचारेणोपाधेस्साध्याव्यापकत्वात्। अत एव न स्वविषयत्वाभावसाधकेन जडत्वेनास्य प्रतिरोधः उक्तानुमितौ व्यभिचारात् । न च वृत्तेः स्वविषयत्वे स्वप्रकाशत्वापत्तिः, जडत्वेन तस्याः। स्वावच्छिन्नचैतन्यप्रकाश्यत्वाभ्युपगमादिति ॥

**म० प्र०**—तदनुभवः=वृत्तिविषयकानुभवः । तथा सति=चैतन्यस्य वृत्तिविषयकानुभवरूपत्वाङ्गीकारे सति, तेन=चैतन्येन । ननु चैतन्यस्य सन्निहितपदार्थप्रकाशकत्वमेव न तु व्यवहितप्रकाशकत्वं तथा च व्यवहितभानापत्तिर्न दोष इत्याशङ्क्याह—**सन्निहितेति** । **तद्गतेति**=घटगतेत्यर्थः । **स्वसत्तायामिति** । यत्र स्वसत्तायां प्रकाशव्यभिचारित्वं तत्रावरणभङ्गार्थं वृत्त्यभ्युपगम इति व्याप्त्या घटगतपरिमाणादौ वृत्तेरावश्यकत्वेन घटज्ञानसमये परिमाणादिविषयकवृत्तिं विना चैतन्येन घटगतपरिमाणादेर्भानापत्तिर्नेति भावः । तर्हि=आवरणभङ्गार्थं वृत्त्यभ्युपगमे । **प्रकाशप्रसङ्गादिति** । सुखादीनां प्रकाशाव्यभिचारित्वेनावरणाभावादिति शेषः । प्रकृतेऽपि=वृत्तिरूपज्ञानेऽपि, तुल्यं=वृत्तौ वृत्त्यन्तराभ्युपगमेऽनवस्थाभिया वृत्तावपि प्रत्यक्षत्वसिद्धये स्मरणोपपत्तये च स्वविषयकत्वं स्वीकरणीयमिति तुल्यम्। एवं च=वृत्तेः प्रत्यक्षत्वादिसिद्धये स्वविषयकत्वे आवश्यके च सति, अन्याप्रकाश्यत्वे सति=स्वसजातीयान्याविषयत्वे सति, प्रकाश्यमानत्वात्=चिद्दृश्यत्वात्, घटादौ व्यभिचारवारणाय सत्यन्तम्। तुच्छे व्यभिचारवारणाय प्रकाश्यमानत्वादित्युक्तम् ।

**स्वविषयत्वे प्रमाणमिति**। न चैत्रमेकस्यैकदा कर्तृकर्मत्वविरोध इति वाच्यम्, नैयायिकमते सर्वं ज्ञानं गुण इत्यनुमितिवदनुव्यवसायवच्च वृत्तेः स्वविषयत्वाभ्युपगमे विरोधाभावादिति। न चेति प्रतिज्ञायां हेतुमाह-**उपाधेरिति**। उपाधिनिष्ठसाध्याव्यापकत्वे हेतुमाह-**तत्र व्यभिचारेणेति**। सर्वं ज्ञानं गुणः गुणत्वव्याप्यजातिमत्त्वादित्यनुमानजन्यानुमितौ व्यापकीभूतोपाध्यभावे सति स्वविषयत्वरूपसाध्यस्य सत्त्वेनेत्यर्थः। व्यभिचारसत्त्वे हेतुमाह-**सर्वमित्यादिना। स्वविषयत्वाभ्युपगमेनेति**। सर्वं ज्ञानं गुण इत्यनुमितेः सर्वज्ञानवृत्तिगुणत्वविषयकत्वेन स्वस्या अपि सर्वान्तःपातित्वादिति शेषः। अत एव=वक्ष्यमाणहेतोरेव, अस्य=वृत्तिः स्वविषयेत्यादिनोक्तानुमानस्य, प्रतिरोधः=बाधितत्वं सत्प्रतिपक्षितत्वं वा। वक्ष्यमाणहेतुमाह-**उक्तानुमिताविति**॥

**एवं चान्तःकरणतद्धर्मादीनां केवलसाक्षिविषयत्वेऽपि तत्तदाकारवृत्त्यभ्युपगमेनोक्तलक्षणस्य तत्रापि सत्त्वात् नाव्याप्तिः। न चान्तःकरणतद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिवेद्यत्वाभ्युपगमविरोध इति वाच्यम्, न हि वृत्तिं विना साक्षिविषयत्वं केवलसाक्षिवेद्यत्वं किंत्विन्द्रियानुमानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वम्॥**

**शि० म०**-एवं वृत्तावव्याप्तिं निराकृत्य प्रातिभासिकरजतादावन्तःकरणे तद्धर्मेषु च कामादिषु नाव्याप्तिरित्याह-**एवं चेति**। उक्तन्यायेनान्तःकरणादावपि स्वाकारवृत्तिविषयत्वे सिद्धे इत्यर्थः। तर्हि कथमन्तःकरणादेः केवलसाक्षिवेद्यत्वप्रवाद इत्याशङ्क्य प्रमाणव्यापारानपेक्षसाक्षिविषयत्वं केवलसाक्षिवेद्यत्वं ततो न विरोध इत्याशयवानाह-**केवलेति**। इममाशयमजानानस्यापसिद्धान्तशङ्कां निराकरोति-**न चेति**। स्वाशयमुद्घाटयति-**न हीति**॥

**म० प्र०**-ननु प्रातिभासिकरजतस्यान्तःकरणतद्धर्मकामादेश्च केवलसाक्षिविषयत्वेन वृत्तिविषयत्वाभावात्प्रातिभासिकरजतादावव्याप्तिरित्याशङ्कां मनसि निधायाह-**एवमित्यादिना**। उक्तन्यायेन=इदमत्राकूतमित्यादिवाक्यसंदर्भोक्तन्यायेन, तर्हि=अन्तःकरणादीनां वृत्तिविषयत्वाभ्युपगमे सति। ततः=केवलसाक्षिवेद्यत्वस्य प्रमाणव्यापारमन्तरेण साक्षिविषयत्वरूपत्वात्, न विरोधः=अन्तःकरणादिषु केवलसाक्षिवेद्यत्वस्यानुपपत्तिर्नास्ति॥

**अत एवाहङ्कारटीकायामाचार्यैरहमाकारान्तःकरणवृत्तिरङ्गीकृता। अत एव च प्रातिभासिकरजतस्थले रजताकारा विद्यावृत्तिः साम्प्रदायिकैरङ्गीकृता। तथा चान्तःकरणतद्धर्मादिषु केवलसाक्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्त्वान्नाव्याप्तिः॥**

**शि० म०**—न चायमपराद्धान्त इत्याह—**अत एवेति** । अहंवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यस्य विषयभावमापद्यते इत्यहङ्कारटीकाविवरण इत्यर्थः । अव्याप्तिनिराकरणमुपसंहरति—**तथा चेति** । आदिपदाच्छुक्तिरूप्यादिपरिग्रहः ॥

**म० प्र०**—अयम्=अन्तःकरणादिषु वृत्तिविषयत्वाभ्युपगमः, अपराद्धान्तः=भाष्यकारादीनामसंमतः । परममूले **अत एवेति** । यतो न वृत्तेः केवलपदव्यावर्त्यत्वमत एवाहंवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यविषयभावमापद्यते इत्यहङ्कारटीकायामाचार्यैरहमित्याकारान्तःकरणविषया वृत्तिरङ्गीकृतेत्यर्थः । अहंवृत्त्यवच्छिन्नम्=अहवृत्तिविशिष्टम्, चैतन्यस्य विषयभावं=चैतन्यनिरूपितविषयत्वम्, अहङ्कारटीकाविवरणे=चतुःसूत्र्या यद्भाष्यं तदुपरि पञ्चपादिकाख्या टीका तत्रस्थोऽहङ्कारनिरूपणपरो ग्रन्थस्तदुपरि यद्विवरणं तस्मिन् । परममूले **साम्प्रदायिकैरिति**=सर्वज्ञमुनिप्रमुखैरित्यर्थः । परममूले—**तथा चेति**=अन्तःकरणादीनां वृत्तिविषयत्वे निर्विवादे सतीत्यर्थः ॥

**शि० म०**—ननु ब्रह्मणो ज्ञानरूपत्वेनात्रालक्ष्यतया तत्रातिव्याप्तिः, तस्य प्रमातृसत्तारूपत्वेन तदतिरिक्तसत्ताशून्यत्वात् । घटादेश्च प्रमातृसत्तातिरिक्तव्यावहारिकसत्ताकत्वेन तत्राव्याप्तिः । अन्यथा तत्र संसारकालिकबाधाभावलक्षणव्यावहारिकसत्तानभ्युपगमे घटादिज्ञाने पूर्वोक्तप्रमालक्षणस्याव्याप्तिप्रसङ्गः । न चान्तःकरणविशिष्टचैतन्यस्य प्रमातृचैतन्यशब्दार्थतया तन्निष्ठसत्ताया व्यावहारिकसत्तारूपत्वाद्ब्रह्मणश्च तद्व्यतिरिक्तपारमार्थिकसत्ताकत्वेन तत्र नातिव्याप्तिः, अत एव घटादौ नाव्याप्तिः, तस्य प्रमातृनिष्ठव्यावहारिकसत्ताश्रयत्वादिति वाच्यम् ॥

**म० प्र०**—अत्र=विषयप्रत्यक्षलक्षणे । तत्र=ब्रह्मणि, तस्य=ब्रह्मणः, प्रमातृसत्तारूपत्वेन=प्रमातुः या सत्ता स्वरूपं पारमार्थिकी सत्ता वा तद्रूपत्वेन, तत्र=घटादिषु, अव्याप्तिः=असंभवः । यदि प्रातिभासिकशुक्तिरजतादीनामधिष्ठानसत्तातिरिक्तसत्ताकत्वाभावोऽङ्गीक्रियते तर्हि तेषु लक्षणसत्त्वादव्याप्तिपदस्याव्याप्तिरूप एवार्थो ग्राह्य इति । अन्यथेत्यस्यैवार्थमाह—**तत्रेत्यादिना** । घटादिष्वित्यर्थः । **संसारकालिकबाधाभावलक्षणेति**=संसारकालिकबाधाप्रतियोगित्वलक्षणेत्यर्थः । पूर्वोक्तप्रमालक्षणस्य=अबाधितार्थविषयकज्ञानत्वरूपपूर्वोक्तप्रमालक्षणस्य । **तन्निष्ठेति**=प्रमातृचैतन्यनिष्ठेत्यर्थः । तत्र=ब्रह्मणि, अत एव=प्रमातृसत्तायाः व्यावहारिकसत्तारूपत्वादेव, वक्ष्यमाणहेतोरेवेति वा । तस्य=घटादेः ॥

**शि० म०**—तथापि व्यावहारिकसत्तायास्सर्वत्रैकत्वेन वह्न्यादावतिव्याप्तेः । शुक्तिरूप्यादेस्तूलाविद्याकार्यत्वपक्षे तदतिरिक्तप्रातिभासिकसत्ताश्रयत्वेन तत्राव्याप्तेश्च । किंच नेदं विषयस्य प्रत्यक्षसामान्यलक्षणम् । योग्यत्वस्यैवातीन्द्रियधर्मादिव्यावृत्तस्य सामान्यलक्षणत्वोपपत्तौ विशेषणवैयर्थ्यात् । ननु प्रमातृचैतन्याध्यस्तत्वमेव प्रमातृभिन्नत्वमिह विवक्षितम्, तेन पारमार्थिके ब्रह्मणि नातिव्याप्तिः, घटादेश्च स्वज्ञानसमये प्रमातृचैतन्याध्यस्ततया नाव्याप्तिः, वह्न्याद्यधिष्ठानचैतन्यस्यानुमितिदशायां

प्रमातृव्यतिरिक्ततया तद्विषयवह्न्यादौ नातिव्याप्तिरिति चेत्, न, प्रमातृशब्देनान्तः-करणोपलक्षितचैतन्याभिधाने वह्न्यादेरपि तदुपलक्षितचैतन्याध्यस्तत्वेन तत्रातिव्याप्तेस्तादवस्थ्यात्। विशिष्टाभिधाने च घटादिज्ञाने तदधिष्ठानचैतन्यस्यान्तःकरणोपहितचैतन्याभेदेऽपि विशिष्टं प्रत्यभेदाभावेन तत्राव्याप्तेः, प्रातिभासिकरजतस्य शुक्त्यवच्छिन्नचैतन्याध्यस्तस्य स्वप्नाद्युपलब्धगजादेश्च मायापरिणामत्वपक्षे तदवच्छिन्नचैतन्याध्यस्तस्य प्रमातृचैतन्याध्यस्तत्वाभावेन तत्राव्याप्तेश्च ॥

म० प्र०—तथापि=घटादीनां प्रमातृचैतन्यनिष्ठव्यावहारिकसत्ताश्रयत्वेऽपि। **तदतिरिक्तेति**=प्रमातृचैतन्यनिष्ठसंसारकालिकबाधाभावलक्षणव्यावहारिकसत्तातिरिक्तेत्यर्थः। शुक्तिरजतादेर्मूलाविद्याकार्यत्वपक्षे प्रमातृचैतन्यनिष्ठसंसारकालिकबाधाप्रतियोगित्वलक्षणव्यावहारिकसत्तावत्त्वेन शुक्तिरजतादौ लक्षणसत्त्वमभिप्रेत्याह—**मूलाविद्येति**। इदं=स्वाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वे सति योग्यत्वम्। प्रत्यक्षसामान्यलक्षणं=प्रत्यक्षत्वस्वरूपं प्रत्यक्षत्वप्रयोजकं वा प्रत्यक्षत्वप्रकारकव्यवहारप्रयोजकं वा, योग्यत्वस्यैव=तत्तदिन्द्रियसन्निकर्षकालिकतत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्यतरविषयत्वयोग्यत्वस्यैव। **विशेषणेति**=स्वाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वरूपविशेषणेत्यर्थः। स्वोक्तविषयप्रत्यक्षलक्षणमुपपादयितुं शङ्कते—**नन्वित्यादिना**। इह=उक्तविषयप्रत्यक्षलक्षणवाक्ये। **तदुपलक्षितेति**=शुद्धचैतन्यरूपान्तःकरणोपलक्षितेत्यर्थः। तत्र=अनुमेयवह्न्यादौ। **विशिष्टेति**=अन्तःकरणविशिष्टचैतन्येत्यर्थः। **घटादिज्ञाने इति**। सतीति शेषः। **तदधिष्ठानेति**=घटाद्यधिष्ठानेत्यर्थः। **विशिष्टं प्रतीति**। अन्तःकरणस्य घटादिना सहाभेदाभावेन घटादावन्तःकरणविशिष्टचैतन्यनिरूपिताभेदाभावेनेत्यर्थः। तत्र=घटादौ। **अव्याप्तेरिति**। सुखादीनामपि विशेषणीभूतान्तःकरणेऽध्यस्तत्वाभावेन सुखादावपि लक्षणासत्त्वाल्लक्षणासंभवादित्यर्थः। **तदवच्छिन्नेति**=मायावच्छिन्नेत्यर्थः। तत्र=शुक्तिरजतादौ, अव्याप्तेश्च=असंभवाच्च ॥

शि० म०—किंचैवमन्तःकरणाविद्ययोरप्रत्यक्षत्वापत्तिः, तयोर्विशिष्टचैतन्याध्यस्तत्वाभावात्, नह्यन्तःकरणविशिष्टचैतन्येऽन्तःकरणमध्यस्यते। अपिचास्मिन् पक्षे स्वाकारवृत्त्युपहितेति विशेषणवैयर्थ्यापत्तिः। घटज्ञानसमये परिमाणादेरन्तः-करणविशिष्टचैतन्याध्यस्तत्वाभावेन प्रमातृपदेनैव तत्रातिव्याप्त्यभावात्। तस्माद् दुर्घटं घटादेः प्रत्यक्षत्वमिति। उच्यते, प्रमातृचैतन्याभिन्नत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम्, प्रमात्रभिन्नत्वं चान्तःकरणावच्छिन्नचैतन्याभेदज्ञानविषयत्वमिह विवक्षितं तेन घटमहं जानामीत्यन्तःकरणविशिष्टभेदानुभवेऽपि घटसन्निति तदुपहितचैतन्याभेदज्ञाने विरोधाभावेन तत्र नाव्याप्तिः। परिमाणादेश्च तदा तदभेदज्ञानाविषयत्वान्नातिव्याप्तिः। अनुमित्यादिस्थले तु वह्न्यवच्छिन्नचैतन्यस्यान्तःकरणानुपहितत्वेन वह्न्यादेस्तदभेदज्ञानविषयत्वाभावान्न प्रत्यक्षत्वम्। अत एव शुक्तिरूप्यस्वाप्नगजादेस्साक्ष्यभेदज्ञानविषयत्वात्प्रत्यक्षत्वमेव ॥

**म०प्र०**–तयोः=अविद्यान्तःकरणयोः । **विशिष्टेति**=अन्तःकरणविशिष्टेत्यर्थः । अविद्यान्तःकरणयोरन्तःकरणविशिष्टचैतन्याध्यस्तत्वाभावमेवोपपादयति–**नहीति** । **अन्तःकरणमिति** । अविद्याऽन्तःकरणं चेत्यर्थः । अतो न व्याख्याने न्यूनतेति । **अध्यस्यते इति** । अविद्याध्यासस्य सुषुप्तावन्तःकरणाभावेऽपि सत्त्वेनान्तःकरणाध्यासात्पूर्वमन्तःकरणाभावेन चाविद्यान्तःकरणयोरध्यासेऽन्तःकरणस्य कारणत्वयोग्यत्वाभावादिति शेषः । अस्मिन्पक्षे=प्रमातृचैतन्यशब्देनान्तःकरणविशिष्टचैतन्याभिधानपक्षे । अन्तःकरणविशिष्टचैतन्याध्यस्तत्वाभावेन=विशेषणीभूतान्तःकरणे घटादिपरिमाणादेरध्यासाभावेनान्तःकरणविशिष्टचैतन्यनिरूपिताध्यस्तत्वाभावेन । तत्र=घटादिगतपरिमाणादौ । तस्मात्=उक्तदूषणकलापात् । **प्रमातृचैतन्याभिन्नत्वे सतीति** । अत्र योग्यत्वमित्यस्य प्रत्यक्षयोग्यत्वमित्यर्थे उच्यमाने आत्माश्रयसत्त्वेन प्रमातृचैतन्याभिन्नत्वसमानाधिकरणकमयं घटोऽयं पट इत्याद्याकारकव्यवहारयोग्यत्वं तत्तत्केवलसाक्षितत्तदिन्द्रियान्यतरविषयत्वयोग्यत्वं वा घटादिविषयनिष्ठप्रत्यक्षत्वमिति लक्षणवाक्यार्थस्तथा च नात्माश्रय इति भावः । **अन्तःकरणावच्छिन्नेति** । अन्तःकरणावच्छिन्नमन्तःकरणोपहितं यच्चैतन्यं तेन सह यो विषयस्याभेदो विषयनिष्ठप्रमातृसत्तातिरिक्तसत्ताकत्वाभावरूपस्तस्य यज्ज्ञानमयं घटोऽस्तीत्याद्याकारकं तद्विषयत्वमित्यर्थः। इह=उक्तलक्षणवाक्ये, तेन=प्रमात्रभिन्नत्वस्यान्तःकरणोपहितचैतन्याभेदज्ञानविषयत्वरूपतया विवक्षितत्वेन, अन्तःकरणविशिष्टभेदानुभवेऽपि=अन्तःकरणविशिष्टचैतन्याद्घटादेर्भेदज्ञानेऽपि। **तदुपहितेति**=अन्तःकरणोपहितेत्यर्थः । तत्र=घटादौ, नाव्याप्तिः=नासंभवः, तदा=अयं घटोऽस्तीत्यादिज्ञानकाले । **तदभेदज्ञानेति**=घटादिपरिमाणादिकं सदित्यन्तःकरणोपहिताभेदज्ञानेत्यर्थः । अनुमित्यादिस्थले=अनुमित्यादिविषये वह्न्यादौ, अस्य न प्रत्यक्षमित्यनेनान्वयः । **वह्न्यादेरिति**। अनुमेयवह्न्यादेः सन्वह्निरित्यादिप्रत्ययविषयत्वेऽप्यन्तःकरणोपहिताभेदप्रत्ययविषयत्वाभावादित्यर्थः । अत एव=प्रमात्रभिन्नत्वस्योक्तस्वरूपत्वादेव ॥

**शि० म०–एवमविद्यान्तःकरणयोरपि प्रत्यक्षत्वमुपपादनीयम् । इदं च लक्षणं विषयस्य तत्तत्प्रत्यक्षत्वव्यवहारप्रयोजकमिति न विशेषणवैयर्थ्यम् । सामान्यलक्षणं तु योग्यत्वमेव, तच्चेन्द्रियसाक्ष्यन्यतरयोग्यत्वम्, तत्तु फलबलकल्प्यमिति न धर्मादावतिव्याप्तिः । घटाभावादेश्चानुपलब्धस्यापि इन्द्रियसाक्ष्ययोग्यत्वात् न प्रत्यक्षत्वम्, यथा चेन्द्रियायोग्यत्वं तथाऽग्रे वक्ष्यते । विशेषलक्षणे च योग्यत्वं तत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्यतरयोग्यत्वं विवक्षितमिति न सौरभादावतिव्याप्तिः । अत एव शास्त्रप्रतिपाद्ये ब्रह्मणि न तत्प्रसङ्गः, स्वप्रकाशस्य तस्य विवक्षितयोग्यत्वाभावात् । यद्वा योग्यत्वे सति स्वाकारवृत्त्युपहितसाक्षिचैतन्याध्यस्तत्वं विषयस्य प्रत्यक्षत्वम्, तथा च घटादेः शुद्धचैतन्याध्यस्तस्यापि स्वज्ञानसमये स्वाधिष्ठानचैतन्यस्य साक्ष्यभेदेन साक्षिण्यध्यस्ततया सिद्धमपरोक्षत्वम् । प्रातिभासिकरजतस्य च साक्षिण्यध्यासान्नाव्याप्तिः । वक्ष्यति च–"विषयचैतन्ये अध्यस्तमपि रजतं साक्षिण्यध्यस्तम्" इति ।**

अत एव स्वप्नोपलब्धगजादेश्च प्रत्यक्षत्वम्, तदेन्द्रियोपरमेऽप्यन्तःकरणाङ्गीकारात्। तस्य च स्वविशिष्टाध्यासाभावेऽपि स्वोपहितचैतन्येऽध्यस्तत्वात्। अविद्यायास्तु चिन्मात्राश्रितत्वेऽपि स्वज्ञानसमये साक्षिण्यध्यासात्प्रत्यक्षत्वम्, परिमाणादेश्च घटाकारवृत्तिदशायां साक्षिण्यध्यस्तत्वेऽपि तस्य स्वाकारवृत्त्युपहितत्वाभावान्नातिव्याप्तिः ॥

म०प्र०—एवं=शुक्तिरजतादिवत्। **उपपादनीयमिति**। अन्तःकरणादेरप्यहं सन्नज्ञानं सदित्याद्यन्तःकरणोपहितचैतन्याभेदज्ञानविषयत्वादिति शेषः। **तत्तत्प्रत्यक्षत्वेति**=देवदत्तयज्ञदत्तादिसंबन्धिप्रत्यक्षत्वेत्यर्थः। **विशेषणेति**=प्रमात्रभिन्नत्वे सतीति विशेषणेत्यर्थः। सामान्यलक्षणम्=देवदत्ताद्यनिरूपितं यत्प्रत्यक्षं तन्निष्ठप्रत्यक्षत्वस्वरूपं तन्निष्ठप्रत्यक्षत्वादिप्रयोजकं वा। इन्द्रियसाक्ष्यन्यतरयोग्यत्वम्=इन्द्रियसन्निकर्षकालिकेन्द्रियकेवलसाक्ष्यन्यतरविषयत्वयोग्यत्वम्, फलबलकल्प्यम्=घटः प्रत्यक्ष इत्यादिव्यवहाररूपकार्य्यान्यथानुपपत्त्या कल्प्यम्, अनुपलब्धस्यापि=अनुपलब्धिप्रमाणगम्यस्यापि। अपिशब्देनानुमानादिप्रमाणसमुच्चयः। विशेषलक्षणे=देवदत्तादीनां घटादिषु यः प्रत्यक्षत्वप्रकारको व्यवहारस्तत्प्रयोजके प्रमातृचैतन्याभिन्नत्वे सति योग्यत्वरूपे। सौरभादावित्यत्र रसादिरादिपदार्थ इति। अत एव= वक्ष्यमाणहेतोरेव, न तत्प्रसङ्गः=विषयप्रत्यक्षलक्षणातिव्याप्तिर्न। ननु यदा घटादावयं घट इत्येव प्रत्ययो जातो न तु सन् घट इत्यादिप्रमातृचैतन्याभेदप्रत्ययो जातस्तदा घटादौ प्रमातृचैतन्याभेदप्रत्ययविषयत्वाभावेन प्रमातृचैतन्याभिन्नत्वाभावात्,घटादौ प्रत्यक्षत्वं न स्यादित्यत आह—**यद्वेति**। **स्वज्ञानेति**=घटादिज्ञानेत्यर्थः। **स्वाधिष्ठानेति**=घटाद्यधिष्ठानेत्यर्थः। अत एव= उक्तप्रत्यक्षत्वस्वीकारादेव, वक्ष्यमाणहेतोरेव वा, अन्तःकरणादेरप्युक्तप्रत्यक्षमस्तीत्याह—**तस्य चेति**। अन्तःकरणस्य चेत्यर्थः। **स्वविशिष्टेति**=अन्तःकरणविशिष्टचैतन्येत्यर्थः। अध्यस्तत्वादित्यस्य प्रत्यक्षत्वमित्यनेनान्वयः। तस्य=साक्षिचैतन्यस्य। **स्वाकारेति**=परिमाणाद्याकारेत्यर्थः॥

**तदयं निर्गलितोऽर्थः। स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम्। तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभिव्यञ्जकवृत्तिजनने विनियोगः॥**

शि० म०—तदेतत्सर्वं मनसि निधायाह—**तदयं निर्गलितोऽर्थ इति**। **प्रत्यक्षत्वमिति**। तत्तत्प्रत्यक्षत्वव्यवहारप्रयोजकमित्यर्थः। सौत्रान्तिकास्तु संवेदनगतो विषयाकारप्रतिबिम्बस्तथाविधबिम्बसन्निधानपुरःसरः प्रतिबिम्बत्वात् दर्पणादिगतमुखादिप्रतिबिम्बवदिति नित्यानुमेया विषया इत्याहुः। ततश्च विषयस्य प्रत्यक्षलक्षणकथनं न युक्तमिति चेत् न, घटमहं पश्यामीति विषयस्यापरोक्षत्वस्यानुभवसिद्धत्वात्। उक्तलिङ्गाद्यप्रतिसंधानेऽपि घटाद्यनुभवदर्शनाच्च। किंच घटादे-

र्न नित्यानुमेयत्वम्, तथा सत्यन्वयव्यतिरेकावगतज्ञानहेतुभावयोरिन्द्रियतत्सन्निकर्षयोर्वैयर्थ्यप्रसङ्गः, त्वन्मते घटादिज्ञानस्यानुमितिरूपत्वेन तत्रानुपयोगात्। तस्मात्सिद्धं घटादेरपरोक्षत्वम्। नन्विन्द्रियतत्सन्निकर्षवैयर्थ्यं सिद्धान्तेऽपि तुल्यम्, चैतन्यरूपस्य घटादिज्ञानस्येन्द्रियसन्निकर्षाजन्यत्वादित्याशङ्क्य तयोर्वृत्तिजनने विनियोगान्न वैयर्थ्यमित्याह–तत्रेति। एवं घटादेः प्रत्यक्षत्वे सिद्धे संयोगसंयुक्ततादात्म्यसंयुक्ताभिन्नतादात्म्यानामिन्द्रियसन्निकर्षाणामिन्द्रियस्य च घटतद्गतरूपतद्धर्मरूपत्वाद्यवच्छिन्नचैतन्याभिव्यञ्जकवृत्तिजनने विनियोग इत्यर्थः॥

म० प्र०–परममूले **तदयमिति**। तस्य पूर्वोक्तलक्षणस्यायं तदयम्, तस्मात्पूर्वोक्तनिवेशादयं तदयमिति वा, स चासावयं तदयमिति वा विग्रहः। परममूले। **योग्यत्वं**=तत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्यतरविषयत्वयोग्यत्वम्। तत्तदिति देवदत्तादीत्यर्थः। सौत्रान्तिकाः=सौत्रान्तिकसंज्ञका बुद्धशिष्याः। शब्दात्पक्षज्ञानमभिप्रेत्य तेऽनुमानमाहुरित्याह=**संवेदनगत इति**। बुद्धिगत इत्यर्थः। **दर्पणादीति**। घटादिषु घटादिप्रतिबिम्बे सिद्धसाधनतावारणाय दृष्टान्तासिद्धिवारणाय चेदं विशेषणमिति। **तथाविधेति**=विषयाकारप्रतिबिम्बसदृशेत्यर्थः। ततश्च=सौत्रान्तिकमते विषयाणां नित्यानुमेयत्वादेव, अप्रतिसन्धानेऽपि=अज्ञानेऽपि। तथा सति–नित्यानुमेयत्वे सति। ज्ञानहेतुभावयोः=ज्ञानहेतुत्वयोः। कुतस्तयोर्वैयर्थ्यमित्याशङ्क्य तत्र हेतुमाह–**त्वन्मते इति**। सौत्रान्तिकस्य तव मत इत्यर्थः। तत्र=घटादिज्ञाने। **अनुपयोगादिति**। न च लिङ्गादिज्ञानार्थमिन्द्रियतत्सन्निकर्षयोः स्वीकारान्न तयोरानर्थक्यमिति वाच्यम्, त्वन्मते लिङ्गादिज्ञानस्याप्यनुमित्याद्यात्मकत्वादिति। तस्मात्=इन्द्रियतत्सन्निकर्षयोर्वैयर्थ्यापत्त्यादिदोषात्, तयोः=इन्द्रियतत्सन्निकर्षयोः। **चैतन्याभिव्यञ्जकेति**। चैतन्यविषयकावरणनिवर्तिका चैतन्यप्रतिबिम्बग्राहिका वा या वृत्तिस्तज्जनने विनियोगः=संबन्धः, कारणतेत्यर्थः। तथा च सिद्धान्ते इन्द्रियादीनां न वैयर्थ्यमिति भावः॥

**सा च वृत्तिश्चतुर्विधा–संशयो निश्चयो गर्वः स्मरणमिति। एवं सति वृत्तिभेदेनैकमप्यन्तःकरणं मन इति बुद्धिरिति अहङ्कार इति चित्तमिति चाख्यायते। तदुक्तम्–"मनो बुद्धिरहङ्कारश्चित्तं करणमन्तरम्। संशयो निश्चयो गर्वः स्मरणं विषया इमे॥ १॥" तच्च प्रत्यक्षं द्विविधं–सविकल्पकनिर्विकल्पकभेदात्॥**

शि० म०–नन्वेवमपि चैतन्यस्यैव ज्ञानत्वात्तत्तत्सन्निकर्षस्य तत्रानुपयोगस्तदवस्थ इत्याशङ्क्य यथैकमप्यन्तःकरणं चतुर्विधवृत्त्यवच्छिन्नं चतुर्विधमित्युच्यते। एवमजन्यमपि चैतन्यमिन्द्रियसन्निकर्षजन्यवृत्त्यवच्छिन्नं तज्जन्यमित्याशयेनाह-सा चेति। यद्यपि वृत्तिविशिष्टं चैतन्यमादिमदित्यत्र विशिष्टचैतन्यस्येन्द्रियसन्निकर्षजन्यत्वमुक्तमेव तथापि तस्यैव दृष्टान्तमुखेनात्रोपपादनान्न पौनरुक्त्यम्, अन्यथा यथा-

श्रुते प्रत्यक्षनिरूपणप्रस्तावे अन्तःकरणचातुर्विध्यनिरूपणमसंगतं स्यादिति द्रष्टव्यम्। उक्तार्थे संमतिमाह--**तदुक्तमिति**। एवं विषयप्रत्यक्षत्वे प्रयोजकान्तरनिरूपणात्तद्व्यावृत्तमपि ज्ञानस्य प्रत्यक्षत्वप्रयोजकं निर्दुष्टमित्युक्तम्। इदानीं तद्विभजते--**तच्चेति**॥

**म० प्र०**--एवमपि=इन्द्रियतत्सन्निकर्षयोश्चैतन्याभिव्यञ्जकवृत्तिजनने उपयोगेऽपि, तत्र=चैतन्यरूपज्ञाने। **चतुर्विधमिति**। संशयाकारवृत्तिमदन्तःकरणं मनः, निश्चयाकारवृत्तिमदन्तःकरणं बुद्धिः, गर्वाकारवृत्तिमदन्तःकरणमहङ्कारः, स्मरणाकारवृत्तिमदन्तःकरणं चित्तमिति चतुर्विधमित्यर्थः। तत्=चैतन्यम्। परमूले **सा चेति**। चैतन्याभिव्यञ्जिका त्वित्यर्थः। परममूले एवं सति=वृत्तेर्नानात्वे सति। परममूले **विषया इमे इति**। इमे संशयादयो विषया अन्तःकरणे मनआदिशब्दप्रवृत्तिनिमित्ता अन्तःकरणस्य कार्य्याणीति वेत्यर्थः। ननु चैतन्यस्यानादित्वेऽपीत्यादिग्रन्थे वृत्तिविशिष्टचैतन्ये इन्द्रियजन्यत्वस्योक्तत्वात्पौनरुक्त्यमित्याशङ्क्याह--**यद्यपीति**। तस्य=वृत्तिविशिष्टचैतन्ये पूर्वोक्तेन्द्रियजन्यत्वस्यैव, दृष्टान्तमुखेन=यथैकमप्यन्तःकरणमित्यादिवाक्योक्तदृष्टान्तद्वारा। अत्र=एवं सतीत्यादिमूले। अन्यथेत्यस्यैव व्याख्यानं यथाश्रुते इति। पूर्वोक्तव्यवस्थानङ्गीकारे सतीति तदर्थः। एवम्=उक्तेन प्रकारेण। अस्येत्युक्तमित्यनेनान्वयः। प्रयोजकान्तरनिरूपणात्=ज्ञानगतप्रत्यक्षत्वप्रयोजकातिरिक्तप्रयोजककथनात्। तद्व्यावृत्तम्=प्रत्यक्षविषयावृत्ति। तत्=प्रत्यक्षम्॥

**तत्र सविकल्पकं वैशिष्ट्यावगाहि ज्ञानं यथा घटमहं जानामीत्यादि ज्ञानम्। निर्विकल्पकं तु संसर्गानवगाहि ज्ञानम्। यथा सोऽयं देवदत्तः, तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानम्॥**

**शि० म०**--सर्ववादिसंमतत्वेन सकलव्यवहारहेतुत्वेन प्रथमोद्दिष्टं सविकल्पकं प्रथमं निरूपयति--**तत्रेति**। तयोर्मध्ये इत्यर्थः। **वैशिष्ट्यावगाहीति**। न तु विशेषणज्ञानजन्यं तज्जन्यत्वस्य प्रमाणाभावेनानभ्युपगमादित्यर्थः। वैशिष्ट्यावगाहित्वमिच्छादावपीत्यत उक्तं--**ज्ञानमिति**। ज्ञानत्वं च निर्विकल्पकेऽपीति वैशिष्ट्यावगाहीत्युक्तम्। **संसर्गानवगाहीति**। ननु सविकल्पकस्य विशेषणज्ञानजन्यत्वमभ्युपगतं न वा, आद्ये तदेव सविकल्पकस्य लक्षणमस्तु न चेत्कुतो निर्विकल्पकसिद्धिः, न खलु तदनभ्युपगमे जागराद्यसविकल्पकज्ञानं स्वसमानाधिकरणविशेषणज्ञानजन्यं विशिष्टज्ञानत्वादित्यनुमानं भवति। न च पूर्वं न विवेचितमित्यनुभवो निर्विकल्पके प्रमाणमल्पविशेषणविषयत्वेनापि तदुपपत्तेः। तस्मादुदाहरणाभावान्न युक्तं निर्विकल्पकलक्षणमित्याशङ्क्य लोकवेदयोः प्रत्यक्षसिद्धं तदित्याह--**यथेति**। यद्यपि ज्ञानं स्वविषयमपि अभेदावगाहित्वे प्रमाणं तथाप्यर्थात् संसर्गानवगाहित्वसिद्धिरिति भावः। ननु सोऽयं देवदत्त इत्यैक्यप्रत्यभिज्ञयैव वाक्यप्रयोगादेशकालोप-

लक्षितदेवदत्तलक्षणाभेदविषयमिन्द्रियजन्यमप्यस्ति प्रत्यक्षमिति कथं शाब्दमेवोदाहृतमिति चेत्सत्यमभेदविषयज्ञानमिन्द्रियजन्यमिति तथापि तत्र निर्विकल्पकं सन्निकर्षवशादुपलक्षणदेशकालादेरपि तत्र भानसंभवात्, शाब्दे तु ज्ञाने तात्पर्य्यविषयस्यैव भाननियमादभेदमात्रविषयत्वमित्यतो निर्विकल्पकमिति भावः । 'प्रकृष्टप्रकाशश्चन्द्रः' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यवान्तरवाक्यमादिपदग्राह्यम् ॥

म० प्र०—सविकल्पकप्रत्यक्षस्य प्रथमोद्दिष्टत्वे हेतुमाह—**सर्ववादिसंमतत्वेनेति** । येन निर्विकल्पकज्ञानं स्वीक्रियते तस्यापि सविकल्पकज्ञानं संमतमिति भावः । सविकल्पकज्ञानस्य सर्ववादिसंमतत्वे हेतुमाह—**सकलेति** । विषयितासंबन्धेन सह विद्यमानो विकल्पो विशेष्यविशेषणयोः संसर्गो यत्र ज्ञाने तत्तथा । वैशिष्ट्यविषयकमित्यर्थमभिप्रेत्याह—परममूले **वैशिष्ट्येति**। सविकल्पकज्ञानस्य विशेषणज्ञानजन्यत्वाभावे हेतुमाह—**तज्जन्यत्वस्येति** । सविकल्पकज्ञाननिष्ठविशेषणज्ञानजन्यत्वस्यानभ्युपगमादित्यर्थः। नन्वनुमानान्निर्विकल्पज्ञानसिद्धिर्भवत्वित्याशङ्क्याह—**न खल्विति** । तदनभ्युपगमे=सविकल्पज्ञानस्य विशेषणज्ञानजन्यत्वानभ्युपगमे, जागराद्यसविकल्पकं=जागरावस्थायामादावुत्पन्नं सविकल्पकम् । सविकल्पकज्ञानजन्ये द्वितीयादिज्ञाने सिद्धसाधनतानिवृत्त्यै आद्येति विशेषणम् । स्वप्नावस्थायां संस्कारजन्ये आद्यसविकल्पकज्ञाने बाधवारणाय जागरेति। **स्वसमानाधिकरणेति**=सविकल्पकज्ञानाधिकरणवृत्तीत्यर्थः । न विवेचितम्=किंचिद्विशेषणविशिष्टत्वेन न ज्ञातम् । **अल्पविशेषणविषयत्वेनेति** । बहुभिर्विशेषणैर्न ज्ञातं किंत्वल्पविशेषणैर्ज्ञातमित्यल्पविशेषणविषयकत्वेनापि पूर्वोक्तानुभवोपपत्तेरित्यर्थः। उदाहरणाभावात्=लक्ष्याभावात् । लोकवेदयोरिति=लौकिकवैदिकवाक्यजन्यम्, प्रत्यक्षसिद्धं=साक्षिरूपप्रत्यक्षेण निश्चितम्, । तत्=निर्विकल्पकात्मकं ज्ञानमित्यर्थः। ननु वृत्तेः स्वविषयत्वाभ्युपगमेन स्वविषयक 'सोऽयं देवदत्तः' इत्यादिवाक्यजन्यज्ञानस्य देवदत्ताद्यभेदविषयकप्रमारूपत्वेऽपि तस्य संसर्गानवगाहित्वे प्रमाणाभाव इत्याशङ्क्याह—**यद्यपीति** । स्वविषयमपि=शब्देन देवदत्तादिविषयकं च ज्ञानं सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञानं यद्यप्यभेदावगाहित्वे=देवदत्ताद्यभेदे प्रमाणं=प्रमारूपमित्यर्थः । सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञानस्य संसर्गानवगाहित्वे प्रमाणाभावेन नेदं निर्विकल्पकज्ञानोदाहरणं संभवतीति भावः । अर्थात्=स्वनिष्ठाभेदावगाहित्वमनुपपन्नं सत्स्वनिष्ठसंसर्गानवगाहित्वं कल्पयतीत्यर्थापत्तिप्रमाणात् । वाक्यप्रयोगात्=सोऽयं देवदत्त इत्यादिवाक्योच्चारणात्, तत्=देवदत्तलक्षणाभेदविषयकेन्द्रिजन्यज्ञानम् । सन्निकर्षवशात्=देवदत्तशरीरेण सह यदिन्द्रियसंबन्धस्तद्बलात्, तत्र=देवदत्तशरीरे, भानसंभवात्=एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेन ज्ञानसंभवात् । ननु शाब्दज्ञानस्याप्युपलक्षणदेशकालादिविषयकत्वं कुतो न भवतीत्याशङ्क्याह—**शाब्दे त्विति** । भाननियमात्=विषयत्वस्य नियमेन सत्त्वात् , तात्पर्य्यविषयत्वस्य शाब्दबोधविषयत्वनिष्ठव्याप्तिनिरूपकत्वादिति यावत् । **निर्विकल्पकमिति** । शाब्दज्ञानमिति शेषः । इत्यवान्तरवाक्यजन्यज्ञानमादिपदग्राह्यमित्यस्य स्थाने इत्यवान्तरवाक्यमादिपदग्राह्यमिति पाठः साधुः ॥

**ननु शाब्दमिदं ज्ञानं न प्रत्यक्षमिन्द्रियाजन्यत्वादिति चेन्न ॥**

**शि० म०**—ननु सोऽयं देवदत्त इत्यादिवाक्यजन्यं ज्ञानं न प्रत्यक्षमिन्द्रियाजन्यत्वाज्ज्योतिःष्टोमादिवाक्यजन्यज्ञानवदिति चोदयति—**ननु शाब्दमिति ॥**

**म० प्र०**—**चोदयतीति** । निर्विकल्पकप्रत्यक्षलक्षणमभिधाय वाक्यजन्यज्ञानस्य तल्लक्ष्यत्वाभिधानमत्यन्तासंगतमिति शङ्काकर्तुरभिप्राय इति ॥

**न हीन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रं दूषितत्वात् । किन्तु योग्यवर्त्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमित्युक्तम् ॥**

**शि० म०**—इन्द्रियजन्यत्वस्यानुमित्यादिसाधारणत्वेन सुखादिप्रत्यक्षाव्यापकत्वेन च प्रत्यक्षत्वप्रयोजकत्वस्य निराकृतत्वात् नेदं तत्प्रयोजकमित्याह—**न हीति** । तथा च सुखादिप्रत्यक्षे व्यभिचारादप्रयोजकत्वाच्च नानुमानावतार इति भावः । ननु प्रयोजकान्तरानिरूपणादिन्द्रियत्वेन तज्जन्यत्वमेव प्रयोजकमित्याशङ्कते—**किंत्विति** । प्रयोजकान्तरमुक्तं स्मारयति—**योग्येति** । विषयस्य यदि चैतन्यं प्रत्युपलक्षणत्वं तदा सुखादिस्मरणे प्रत्यक्षत्ववारणाय वर्त्तमानपदमिति ध्येयम् । **उक्तमिति** । उक्तप्रायमित्यर्थः ॥

**म० प्र०**—**इन्द्रियजन्यत्वस्येति** । इन्द्रियजन्यत्वस्य प्रत्यक्षत्वप्रयोजकत्वस्य निराकृतत्वादित्यन्वयः । तस्य निराकृतत्वे परमतमभिसंधाय हेतुमाह—**अनुमित्यादिसाधारणत्वेनेति** । परमतेऽनुमित्यादेर्मनोरूपेन्द्रियजन्यत्वस्य सत्त्वादिति शेषः । तस्य निराकृतत्वे एव स्वमतमादाय हेत्वन्तरमाह—**सुखादीति** । अव्यापकत्वेन=अवृत्तित्वेन, प्रयोजकत्वस्य=व्याप्यत्वस्य व्यापकत्वस्य वा, इदम्=इन्द्रियजन्यत्वम्, तत्प्रयोजकम्=प्रत्यक्षत्वव्याप्यं व्यापकं वा । **सुखादिप्रत्यक्षे व्यभिचारादिति** । सुखादिप्रत्यक्षे प्रत्यक्षत्वाभावाभावरूपप्रत्यक्षत्वसत्त्वेऽपीन्द्रियाजन्यत्वसत्त्वादिति शेषः । **अप्रयोजकत्वाच्चेति**=अनुकूलतर्कविधुरत्वाच्चेत्यर्थः । न च यदि पक्षे प्रत्यक्षत्वाभावो न स्यात्तर्हीन्द्रियाजन्यत्वमपि न स्यादित्यनुकूलतर्कोऽस्तीति वाच्यम् । सुखादिप्रत्यक्षे प्रत्यक्षत्वाभावाभावसत्त्वेऽपीन्द्रियाजन्यत्वस्य सत्त्वात्तर्कमूलभूतव्यतिरेकव्याप्त्यभावेन तर्कानुदयादिति । प्रयोजकान्तरानिरूपणात् ज्ञानगतप्रत्यक्षत्वस्य प्रत्यक्षत्वव्यवहारस्य वेन्द्रियजन्यत्वातिरिक्तप्रयोजकानिरूपणात् । प्रयोजकवाक्यप्रविष्टवर्त्तमानपदतात्पर्यमाह—**विषयस्येति । उपलक्षणत्वमिति** । न तु विशेषणत्वमुपाधित्वं वेति शेषः । **उक्तप्रायमिति**=प्रायेणोक्तमित्यर्थः । यद्यपि प्रमाणचैतन्यस्य योग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं पूर्वमुक्तं तथापि प्रमाणचैतन्यस्य योग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वे योग्यवर्त्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वे चात्यन्तवैलक्षण्याभावादेवमुक्तमिति भावः ॥

तथा च सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया बहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन देवदत्तावच्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्याभेदेन सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वम्। एवं तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्यापि, तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वात्॥

शि० म०—नन्वस्त्वन्यदपि प्रत्यक्षत्वप्रयोजकं तथापि नेदं प्रत्यक्षं व्यवहितदेशकालादिविशिष्टदेवदत्ताकारवृत्त्यवच्छिन्नचैतन्यस्य विषयचैतन्यभिन्नत्वादित्याशङ्क्य, न हि देशकालादिसंसर्गविषयमिदं शाब्दज्ञानं किंत्वभेदविषयकम्। अभेदश्च देवदत्तलक्षणस्सन्निहित इति तज्ज्ञानं प्रत्यक्षमित्याह—**तथा चेति**। निरुक्तस्य प्रयोजकत्वे सिद्धे इत्यर्थः। नन्वेवमपि तत्त्वमसीत्यादिवाक्यजन्यज्ञानं कथं व्यवहितसर्वज्ञत्वादिविशिष्टविषयं प्रत्यक्षं कथं वा तज्ज्ञानं तत्पदार्थभेदविषयं नाहमीश्वर इत्यादिप्रत्यक्षविरोधादित्याशङ्क्य न हि तज्ज्ञानं कर्तृत्वसर्वज्ञत्वादिविशिष्टाभेदविषयं येन तद्विरोधः स्यात्, किंतु तत्त्वंपदलक्ष्यस्वरूपविषयं तच्च सन्निहितमेवेति तद्विषयमपि ज्ञानं प्रत्यक्षमित्याह—**एवमिति**॥

म० प्र०—अन्यत्=इन्द्रियजन्यत्वादिभ्यो भिन्नम्, इदम्=शाब्दज्ञानम्। **व्यवहितेति**। तच्छब्दज्ञानाज्जायमाना या व्यवहितदेशकालादिविशिष्टदेवदत्ताकारवृत्तिस्तदवच्छिन्नचैतन्यस्येत्यर्थः। एवमपि=पूर्वोक्तस्य प्रत्यक्षत्वादिप्रयोजकत्वेऽपि कथं प्रत्यक्षमित्यन्वयः। **व्यवहितेति**। ईश्वरस्य व्यापित्वेन तद्धर्माणां मनोरूपेन्द्रियसंबद्धत्वेनेन्द्रियासंबद्धत्वरूपव्यवहितत्वाभावेनास्मदादिप्रत्यक्षायोग्यत्वरूपव्यवहितत्ववदित्यर्थः। तज्ज्ञानम्=तत्त्वमस्यादिवाक्यजन्यज्ञानम्, येन=तत्त्वमस्यादिवाक्यजन्यज्ञानस्य कर्तृत्वादिविशिष्टविषयकत्वेन, तद्विरोधः=तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वानुपपत्तिः। तच्च=तत्त्वंपदलक्ष्यस्वरूपं च। परममूले **एवमिति**। सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञानवदित्यर्थः। परममूले ज्ञानस्यापीत्यस्य प्रत्यक्षत्वमिति पूर्वेणान्वयः। परममूले **तत्रेति**। तत्त्वमसीत्यादिवाक्यजन्यज्ञाने इत्यर्थः। परममूले **प्रमातुरेवेति**। तत्त्वंपदलक्ष्यस्यैवेत्यर्थः। परममूले **तदुभयेति**=तत्त्वंपदलक्ष्योभयेत्यर्थः। न चैवमपि तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वं न संभवति, तत्र शुद्धचैतन्यस्यैव विषयत्वेन योग्यवर्तमानविषयावच्छिन्नचैतन्याभावादिति वाच्यम्, योग्यवर्त्तमानविषयावच्छिन्नशब्देन योग्यवर्त्तमानोपाधिव्यावर्त्यचैतन्यस्य विवक्षितत्वात्, तस्य चान्तःकरणादेर्योग्यवर्त्तमानोपाधित्वेनात्रापि संभवादिति॥

ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम्। उच्यते, वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रम्। अनभिमतसंसर्गस्यापि वाक्यजन्य-

ज्ञानविषयत्वापत्तेः । किंतु तात्पर्य्यविषयत्वं प्रकृते च "सदेव सोम्येदमग्र आसीत्" इत्युपक्रम्य "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्य्यमवसितमिति कथं तात्पर्य्याविषयं संसर्गमवबोधयेत् ॥

शि० म०—नन्वेवमपि तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्य न निर्विकल्पकत्वं गामानयेत्यादौ वाक्यजन्यज्ञानवत्संसर्गावगाहित्वादित्याक्षिपति--नन्विति। गामानय दण्डेनेत्यत्र मुख्यार्थानामन्वययोग्यत्वात्तज्जन्यज्ञानस्य गोकर्मकदण्डकरणकानयनक्रियासंसर्गविषयत्वेऽपि तत्त्वमसीत्यादौ मुख्यार्थानामन्वयानुपपत्तेः लक्षितस्य च पदार्थस्यैकत्वेनेतरेतरसंसर्गाभावात्तज्ज्ञाने संसर्गावगाहित्वानुमानं बाधितमित्याह—उच्यते इति। ननु तत्त्वमसीत्यादौ न लक्षणा तत्त्वंपदार्थयोरीश्वरजीवयोः स्वामिभृत्यभावादिनैवान्वयोपपत्तेर्लक्षणाबीजाभावात्। ततश्च तज्जन्यं ज्ञानं संसर्गविषयमेवेत्याशङ्क्य, किं स्वामिभृत्यभावादेः पदार्थसंसर्गत्वाद्वाक्यगम्यत्वं तात्पर्य्यविषयत्वाद्वा, नाद्यः भोजनप्रकरणे सैन्धवमानयेत्यत्रानभिमतस्याश्वादिसंसर्गस्य, यष्टीः प्रवेशयेत्यत्र दण्डसंसर्गस्य च वाक्यजन्यज्ञानविषयत्वापत्तेरित्याह—वाक्येति । न द्वितीयः अद्वितीयस्य ब्रह्मण एव तात्पर्य्यविषयत्वादित्याह—प्रकृते चेति। अयं भावः । अद्वितीयं ब्रह्म वाक्यार्थः। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्युपक्रान्तस्य "एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति तेनैव रूपेणोपसंहृत्य "एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इति नवकृत्वोऽभ्यस्तस्य प्रमाणान्तरानवगतस्य "येनाश्रुतं श्रुतं भवति" इत्यादिवाक्यात्प्ररोचितस्य मृल्लोहतप्तपरशुग्रहणादिदृष्टान्तैरद्वितीयत्वेनोपपादितस्य ब्रह्मणो ज्ञानात् । "आचार्य्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इत्याचार्य्योपदेशजनितान्निर्विचिकित्सात् निरतिशयानन्दलक्षणमोक्षफलस्यावगतेस्तस्यैव तात्पर्यविषयत्वात् ।"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ १॥" इत्युपक्रमादेस्तात्पर्य्यग्राहकत्वाभ्युपगमात्।स्वामिभृत्यभावादिस्तु न वाक्यार्थः, तत्रोपक्रमाद्यभावेन तात्पर्य्याविषयत्वात्। किंच न तावदिदं वाक्यं राजपुरुष इत्यादिवदीश्वरजीवयोः स्वामिभृत्यभावं प्रतिपादयति, तत्त्वमसीति समानाधिकरणवाक्यात्तदप्रतीतेः, नापि मृद् घट इतिवत्तादात्म्यं जीवेश्वरयोरनादित्वेन तादात्म्यप्रयोजककार्य्यकारणभावादेरभावेन तदयोगात् । केचित्तु पदानामर्थवत्त्वाय लक्षणापरिहारार्थं च भिन्नाभिन्नं ब्रह्म वाक्यार्थ इति । तन्न, मिथ्याभेदस्य तत्त्वावेदकश्रुतिप्रतिपाद्यत्वायोगात् । किञ्च

वाक्यस्य भिन्नाभिन्नब्रह्मपरत्वे तद्रूपस्य प्रमाणसिद्धत्वान्मुक्तिदशायामपि ब्रह्मणो भिन्नाभिन्नत्वापत्तौ संसारादविशेषप्रसङ्गः। ननु "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिशास्त्रान्तरे तज्ज्ञानाद्भेदनिवृत्तिश्रवणान्मुक्तावत्यन्ताभिन्नं ब्रह्मेति चेत्, न तावद्भेदनं शाब्दज्ञानं तदभ्यासो वा श्रुतब्रह्मणः कृतश्रवणाभ्यासस्यापि यथापूर्वं संसारोपलब्धेः॥

**म० प्र०**–एवमपि=तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि, संसर्गावगाहित्वात्=पदार्थसंसर्गावगाहित्वात्, मुख्यार्थानां=शक्तिवृत्त्योपस्थितानां गवादिपदार्थानाम्, तज्जन्यज्ञानस्य=गामानयेत्यादिवाक्यजन्यज्ञानस्य। **आनयनक्रियेति**। आनयनक्रियायाः कृत्या सह यः संसर्गः कृतेर्युष्मदर्थेन यः संसर्गश्च तद्विषयत्वेऽपीत्यर्थः। मुख्यार्थानां=वाच्यार्थानाम्, तज्ज्ञाने=तत्त्वमसीत्यादिवाक्यजन्यज्ञाने, इत्यादौ=इत्यादिवाक्यघटकतत्त्वंपदादौ। तत्त्वंपदादौ लक्षणाभावे हेतुमाह–**लक्षणाबीजाभावादिति**। अन्वयानुपपत्तिरूपलक्षणाबीजाभावादित्यर्थः। उक्तलक्षणाबीजाभावे हेतुमाह–**तत्त्वंपदार्थयोरिति**। ततश्च=अन्वयानुपपत्तिरूपलक्षणाबीजाभावादेव, इत्युपक्रान्तस्य=इत्याकारकब्रह्मोपदेशाद्यारम्भविषयस्य। ऐतदात्म्यम्=एतत्सदाख्यं कारणं ब्रह्म आत्मा स्वरूपं यस्य सर्वस्य जगतस्तदेतदात्मं तस्य भाव ऐतदात्म्यं ब्रह्मात्मकम्। तेनैव रूपेण=अद्वितीयब्रह्मस्वरूपेणैव। उपसंहृत्येतस्य स्थाने उपसंहृतस्येति पाठः साधुरिति। अभ्यस्तस्य=पुनः पुनः प्रतिपादनविषयस्य। **तप्तपरशुग्रहणादिदृष्टान्तैरिति**। यथा सत्यानृतभाषिपुरुषाभ्यां तप्तपरशुग्रहणस्य तुल्यत्वेऽपि सत्याभिसंधस्य जयो नानृताभिसंधस्य जयस्तद्वत्प्रलयकाले विद्वदविद्वत्पुरुषयोर्ब्रह्मणि लयस्य समानत्वेऽप्यविदुष एव पुनर्जन्म न विदुषः पुनर्जन्मेत्येतदर्थं 'परपुरुषं सोम्योत हस्तगृहीतमानयन्ति' इत्यादिवाक्यप्रदर्शिततप्तपरशुग्रहणादिदृष्टान्तैरित्यर्थः। तस्यैव=अद्वितीयब्रह्मण एव। ननु ब्रह्मणि तात्पर्यग्राहकाभावात्कथं ब्रह्मणस्तात्पर्यविषयत्वमित्याशङ्क्य मैवमित्यभिप्रेत्य तत्र हेतुमाह–**उपक्रमेति**। तत्राज्ञातत्वमबाधितत्वं प्रयोजनवत्त्वं चेति त्रिविधं तात्पर्यलिङ्गं प्रामाण्यशरीरघटकमर्थनिष्ठमुपक्रमोपसंहारयोरैकरूप्यमभ्यासोऽर्थवादश्चेति त्रिविधं तु शब्दनिष्ठमिति विभागोऽत्र बोध्यः। तत्र=स्वामिभृत्यभावादौ, तदप्रतीतेः=स्वामिभृत्यभावाद्यप्रतीतेः, तादात्म्यं=भिन्नत्वे सत्यभिन्नसत्ताकत्वरूपम्, न तु भिन्नाभिन्नत्वरूपम्, विरुद्धयोर्भेदाभेदयोरेकत्रासंभवात्। **तादात्म्यप्रयोजकेति**=तादात्म्यव्यापकेत्यर्थः। तदयोगात्=तादात्म्यासंभवात्। **वाक्यार्थ इति**। तत्त्वमसीति वाक्यस्य भिन्नाभिन्नं ब्रह्म त्वमसीत्यर्थ इति यावत्। **तत्त्वावेदकेति**=अद्वितीयपरमात्मावेदकेत्यर्थः। तद्रूपस्य=जीवाद्भिन्नाभिन्नरूपब्रह्मणः, तज्ज्ञानात्–अद्वितीयब्रह्मज्ञानात्। शाब्दज्ञानं=शब्दजन्यपरोक्षज्ञानम्॥

**शि० म०**–नापि साक्षात्कारः, तस्य भिन्नाभिन्नब्रह्मविषयकस्य स्वविषयभेदनिवर्तकत्वायोगात्, स्वविषयाभावतया भेदनिवर्तकत्वे अभेदस्यापि तन्निवृत्ति-

प्रसङ्गात् अत्यन्ताभेदविषयक एव साक्षात्कार इति चेत्, न, भेदनिवृत्तेः पूर्वमत्यन्ताभेदाभावेन तस्यापरोक्षज्ञानविषयत्वासिद्धेः, भावे चास्मन्मतप्रवेशापत्तेः । तस्मान्न भिन्नाभिन्नं ब्रह्म वाक्यार्थः । इत्यलमतिविस्तरेण । एवं सत्यादिवाक्यजन्यज्ञानस्यापि संसर्गागोचरत्वमुपपादनीयम् । ननु सत्यादिवाक्यस्य सत्यत्वादिविशिष्टार्थबोधकत्वात्कथं तज्जन्यज्ञानस्य संसर्गागोचरत्वम् । किंच नेदं संसर्गानवगाहि, अस्य लक्षणवाक्यत्वेन लक्ष्ये लक्षणवैशिष्ट्यबोधकत्वात् । किंच नैतज्जन्यज्ञानं प्रातिपदिकार्थमात्रावगाहि सर्वत्र लक्षणस्य व्यावृत्तिव्यवहारप्रयोजनतया सत्यादिवाक्यस्यापि तत्पदवाच्यत्वेनातद्व्यावृत्तत्वेन च ब्रह्मबोधकत्वे प्रातिपदिकार्थमात्रावगाहित्वायोगात् । किंचास्य प्रातिपदिकार्थमात्रबोधकत्वमपि शक्त्या लक्षणया वा । नाद्यः, वाक्ये शक्तेरनभ्युपगमात्, सत्यादिपदानां बाधायोग्यत्वादिविशिष्टतत्तत्पदार्थशक्ततया परिपूर्णानन्दवस्तुना सामर्थ्याभावात् । अत एव न द्वितीयः, वाक्यस्य क्वचिदप्यशक्तत्वेन शक्यसंबन्धलक्षणलक्षणाऽयोगात्, पदानां च विनिगमनाविरहेण प्रत्येकलक्षकत्वायोगात्, मुख्यार्थानामन्वययोग्यत्वेनान्वयानुपपत्त्यभावाच्च । न हि तया विना लक्षणा संभवति, तथात्वे वा पदान्तरवैयर्थ्यप्रसङ्गात् । अपि च सत्यादिपदानां नैकार्थमात्रपरत्वम्, तथा सति हस्तः कर इत्यादिवत्पर्यायतापत्तेः ॥

म० प्र०—तस्य=साक्षात्कारस्य । **स्वविषयभेदेति** । वृत्त्यात्मकज्ञानस्य स्वविषयव्यतिरिक्ताज्ञानादिनिवर्तकत्वेन स्वविषयभेदनिवर्तकत्वासंभवादित्यर्थः । स्वविषयाभावतया=भेदसाक्षात्कारविषयाभेदाभावरूपतया । तन्निवृत्तिप्रसङ्गात्=अभेदस्यापि स्वविषयभेदाभावरूपतया साक्षात्कारेण नाशप्रसङ्गात् । तस्य=अत्यन्ताभेदस्य, तज्जन्यज्ञानस्य=सत्यादिवाक्यजन्यज्ञानस्य, इदं=सत्यादिवाक्यं संसर्गानवगाहिबोधजनकम्, अस्य=सत्यादिवाक्यस्य, एतज्जन्यज्ञानं=सत्यादिवाक्यजन्यज्ञानम् । **प्रातिपदिकार्थमात्रावगाहीति** । यस्मिन्प्रातिपदिके उच्चरिते सति यस्यार्थस्य नियमेनोपस्थितिः स तत्प्रातिपदिकार्थस्तदवगाहीत्यर्थः । सर्वत्र=सर्वस्य, लक्षणस्य=लक्षणवाक्यस्य, तत्पदवाच्यत्वेन=सत्यादिपदवाच्यत्वेन, अतद्व्यावृत्तत्वेन=अब्रह्मव्यावृत्तत्वेन । अस्य=सत्यादिलक्षणवाक्यादेः । **बाधायोग्यत्वादीति** । अत्रादिपदेन जडभिन्नत्वापरिच्छिन्नत्वादीनां ग्रह इति । अत एव=वक्ष्यमाणहेतोरेव । **शक्यसंबन्धलक्षणेति**=शक्यसंबन्धस्वरूपेत्यर्थः । तया विना=अन्वयानुपपत्त्या विना । तथात्वे वा=अन्वयानुपपत्त्या विना सत्यपरिपूर्णानन्दवस्तुनि लक्षणास्वीकारे वा । **पदान्तरेति**=सत्यादिवाक्यघटकलक्षणावृत्तिमत्पदातिरिक्तपदेत्यर्थः ॥

शि० म०—एवं च प्रयोगः । सत्यादिवाक्यं संसृष्टार्थबोधकं स्वोपस्थापितपदार्थान्योन्यसंसर्गबोधकं वा वाक्यत्वात्, ज्योतिःष्टोमादिवाक्यवत् । न च जरद्गवादि-

वाक्ये व्यभिचारः,तस्याकाङ्क्षादिमत्त्वाभावेन वाक्याभासत्वात्। आकाङ्क्षाऽऽसत्ति-योग्यतावन्ति पदानि वाक्यमिति हि वाक्यविदः । न च विपक्षे बाधकतर्काभावः, संसर्गाबोधकत्वे वाक्यत्वाभावप्रसङ्गस्यैव बाधकत्वात्। तस्मान्न सत्यादिवाक्यजन्य-ज्ञानं निर्विकल्पकमिति। उच्यते। सत्यादिवाक्यं संसर्गागोचरज्ञानजनकं स्वरूप-लक्षणवाक्यत्वात्, प्रातिपदिकार्थमात्रपरत्वाद्वा,प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत्। न च दृष्टान्ते साधनवैकल्यमस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रातिपदिकार्थमात्रविषय-प्रश्नदर्शनेन प्रतिवचनस्यापि तत्प्रातिपदिकार्थमात्रपरत्वात् । अन्यथा प्रतिवचनस्य प्रश्नाननुरूपत्वापत्तिः। न च प्रश्ने चन्द्रासाधारणधर्मस्यातद्व्यावृत्तेश्चन्द्रपदवाच्य-त्वस्य वा विषयत्वात् सोऽपि न तन्मात्रपर इति वाच्यम्, असाधारणधर्मस्य प्रकाश-विशेषस्य चन्द्रे प्रत्यक्षेणावगतत्वात्। अत एव नातद्व्यावृत्तिपरः प्रश्नः,चन्द्रोऽचन्द्रा-द्व्यावृत्त इति निश्चितत्वात्। नापि चन्द्रपदवाच्यत्वं तद्विषयः, चन्द्रश्चन्द्रपदवाच्य इति ज्ञातत्वात्। तर्हि कथं संशय इति चेत्, न, चन्द्रत्वस्य तद्वैशिष्ट्यस्य वा चन्द्रपदवाच्यत्वस्य ज्ञानेऽपि तत्कुत्रेत्यज्ञानेन तत्र तत्संशयसंभवात् । अत एव लोके तदनुभवः "चन्द्रश्चन्द्रपदवाच्य इति जानामि, तत्स्वरूपं तु न जानामि, तदेव किम् इति पृच्छामि" इति ॥

म०प्र०—संसृष्टार्थबोधकं=परस्परसंसर्गवदर्थविषयकबोधजनकम्। **स्वोपस्थापितेति**। स्वं सत्यादिवाक्यघटकपदानि तैरुपस्थापिताः=स्मृताः ये पदार्थास्तेषां योऽन्योन्यसंसर्गस्तद्विषयक-बोधजनकमित्यर्थः। **जरद्गववाक्ये इति**।

"जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि।
तं पृच्छति ब्राह्मणी पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थः ॥"

इति जरद्गववाक्ये इत्यर्थः । तस्य=जरद्गववाक्यस्य, विपक्षे=हेतोः साध्याप्रयोजकत्वे । **तत्प्रातिपदिकार्थेति**=चन्द्रस्वरूपप्रातिपदिकार्थेत्यर्थः । **अन्यथेति** । प्रकृष्टप्रकाश-श्चन्द्र इति वाक्यस्य चन्द्रप्रातिपदिकार्थमात्रपरत्वानङ्गीकारे, चन्द्रासाधारणधर्मस्य=प्रकाश-विशेषस्य, सोऽपि=अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्नोऽपि, तन्मात्रपरः=चन्द्रप्रातिपदिकार्थ-परः, अत एव=वक्ष्यमाणहेतोरेव, तद्विषयः=उक्तप्रश्नवाक्यविषयः, तर्हि=चन्द्रासाधारणधर्मा-दीनां ज्ञातत्वे । **चन्द्रत्वस्येति** । चन्द्रे चन्द्रपदवाच्यत्वस्य ज्ञानेऽपि तच्चन्द्रत्वं चन्द्रत्ववैशिष्ट्यं वा कुत्रेति चन्द्रत्वस्य चन्द्रत्ववैशिष्ट्यस्य वाऽज्ञानेन तत्र चन्द्रत्वे चन्द्रत्ववैशिष्ट्ये वा प्रश्नकर्तुः संशयसंभवादित्यर्थः। अत एव=चन्द्रत्वादौ संशयसंभवादेव, तदनुभवः=चन्द्रस्वरूपविषयका-ज्ञानविषयकानुभवबोधकवाक्यम्, प्रश्नकर्त्रनुभवबोधकवाक्यमिति वा ॥

**शि० म०**—न चैवमपि लक्षणवाक्यादतद्व्यावृत्तिवैशिष्ट्यप्रतीतेर्विशिष्टार्थ-परत्वात् दृष्टान्तदार्ष्टान्तिकयोस्साधनवैकल्यं साध्यबाधश्चेति युक्तम्, अतद्व्यावृत्ति-

वाचकपदाभावेन साक्षादबोधकस्य लक्षणवाक्यस्यार्थात्तद्बोधकत्वेऽपि तत्परत्वाभावात्। न हि गामानयेति वाक्यमर्थादश्वानयनव्यावृत्तिबोधकमपि तत्परं भवति, तथा चाहुः शबरस्वामिनः 'यश्चार्थादर्थो न स चोदनार्थः' इति । ब्रह्मणश्चातद्व्यावृत्तिस्वरूपत्वेन तत्र तद्वैशिष्ट्याभावात् । चन्द्रे त्वतद्व्यावृत्तेश्चन्द्रत्वस्वरूपत्वेऽपि तस्य तत्प्रातिपदिकार्थत्वेन वाक्यस्यैव प्रातिपदिकार्थमात्रपरत्वस्यानपायात् । न च लक्षणानुपपत्तिः अर्थवादवद्वाक्येऽपि लक्षणास्वीकारात्, लाघवेन ज्ञाप्यसंबन्धस्यैव लक्षणात्वात् । अथवा एकपद एव लक्षणा । न च नियामकाभावः, विशेष्यवाचकपदत्वस्य नियामकत्वात् ॥

म०प्र०—एवमपि=चन्द्रस्वरूपविषयकाज्ञानेऽपि, विशिष्टार्थपरत्वात्=लक्षणवाक्यस्यातद्व्यावृत्तिविशिष्टार्थपरत्वात् । **साधनेति** । द्वितीयहेतोरभाव इत्यर्थः । साध्यबाधश्च=साध्याभावश्च । **अतद्व्यावृत्तीति**=असदादिप्रतियोगिकभेदेत्यर्थः । साक्षात्=अर्थापत्तिप्रमाणं विना, अबोधकस्य=असदादिप्रतियोगिकभेदविषयकबोधाजनकस्य । अर्थात्=असदादिप्रतियोगिकभेदं विना सत्यत्वादिबोधनमनुपपन्नं सदसदादिप्रतियोगिकभेदं बोधयतीत्यर्थापत्तिप्रमाणात् । तद्बोधकत्वेऽपि असदादिप्रतियोगिकभेदविषयकबोधजनकत्वेऽपि, तत्परत्वाभावात्=असदादिप्रतियोगिकभेदविषयकतात्पर्याभावात् । अर्थात्=गवानयनेऽश्वानयनप्रतियोगिकभेदं विना गवानयनबोधनमनुपपन्नं सदश्वानयनप्रतियोगिकभेदं गवानयने कल्पयतीत्यर्थापत्तिप्रमाणात् । तत्परं=गवानयनेऽश्वानयनप्रतियोगिकभेदविषयकतात्पर्यवत् । अर्थादर्थः=अर्थापत्तिप्रमाणात्प्राप्तोऽर्थः, चोदनार्थः=विध्यर्थः । पक्षे दृष्टान्ते च द्वितीयसाधनवैकल्यं परिहृत्य पक्षे साध्यबाधोऽपि न युक्त इति प्रतिज्ञायां हेतुमाह—**ब्रह्मणश्चेति** । तत्र=ब्रह्मणि, तद्वैशिष्ट्याभावात्=असदादिप्रतियोगिकभेदसंसर्गाभावात् । दृष्टान्तेऽपि साध्यबाधो न युक्त इति प्रतिज्ञायां हेतुमाह—**चन्द्रे त्विति** । अतद्व्यावृत्तेः=चन्द्रभिन्नप्रतियोगिकभेदस्य । तस्य=चन्द्रत्वरूपचन्द्रभिन्नप्रतियोगिकभेदस्य, तत्प्रातिपदिकार्थत्वेन=चन्द्रप्रातिपदिकार्थत्वेन, वाक्यस्यैव=प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्यैव, वाक्येऽपि=स्वरूपलक्षणवाक्येऽपि । ननु वाक्ये शक्त्यभावाच्छक्यसंबन्धरूपलक्षणाऽनुपपत्तिरित्याशङ्क्य शक्यसंबन्धरूपलक्षणायां शक्तेरपि प्रवेशाद्गौरवमभिप्रेत्य वाक्ये लक्षणास्वीकारे हेतुमाह—**लाघवेनेति** । **ज्ञाप्येति**=स्वजन्यबोधविषयेत्यर्थः । स्वं पदं वाक्यं वा ग्राह्यमिति । **विशेष्यवाचकपदत्वस्य नियामकत्वादिति** । ननु विशेष्यवाचकपदत्वस्य लक्षणानियामकत्वं कुतोऽवगतमिति चेत् न, गम्भीरायां नद्यां घोष इत्यादिवाक्ये विशेष्यवाचकपदस्य लक्षणानङ्गीकारे विशेषणवाचकपदोत्तरश्रूयमाणविभक्तेः साधुत्वार्थकत्वेन विशेष्यवाचकपदोत्तरश्रूयमाणविभक्तेरेवाधिकरणतार्थकत्वेन प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमभङ्गापत्त्या विशेष्यवाचकपदत्वस्य लक्षणानियामकत्वस्यावगतत्वादिति ॥

**शि० म०**—न च पदान्तरवैयर्थ्यं तत्समभिव्याहारवशादेव तस्य तत्परत्वावगमात् । एतावतैव वाक्यं तत्परमित्युच्यते । अत एव गम्भीरायां नद्यां घोषः प्रति-

वसति, चित्रगुमानयेत्यत्र नदीपदगोपदयोस्तीरादिपदार्थलक्षणायामपि न पदान्तरवैयर्थ्यम्। यद्वा सर्वपदैरेव लक्षणया ज्ञानानन्दात्मकवस्तूपस्थितिः न त्वेकैकपदात्, स्वरूपलक्षणस्य सच्चिदानन्दात्मकस्यैकैकेनालाभात्। ततश्च प्रतिपदं लक्षणाभ्युपगमेऽपि न पदान्तरवैयर्थ्यम्। ननु प्रकृष्टप्रकाशादिपदेषु सत्यादिपदेषु च जहल्लक्षणायां चन्द्राद्यन्यस्य प्रतीत्यापत्तिः अजहल्लक्षणायां विशिष्टार्थप्रतिपत्तिर्दुर्वारेति चेत्, न, जहदजहल्लक्षणायां चन्द्रादेरेव वाच्यैकदेशस्योपस्थितिरिति सांप्रदायिकाः। गौरनित्येत्यादिवद्विशिष्टशक्तस्य पदस्य वाच्यैकदेशविशेष्यपरत्वेऽपि न लक्षणा शक्त्यैव तस्य स्वातन्त्र्येणोपस्थितत्वात्। स्वतन्त्रोपस्थितये हि सा। अत एव गौर्नित्येत्यत्र गोत्वस्य स्वातन्त्र्येणोपस्थितये लक्षणेत्यस्मत्पितृचरणाः। युक्तं चैतत्-अनवस्थादोषाभावात्। लक्षणापक्षे हि प्रमाणान्तरानवगतस्य ब्रह्मणः शक्यान्यरूपेण लक्षणया नोपस्थितिः, तदुपस्थितिश्च पदान्तरेणेत्यनवस्था। न चात्र पर्यायताशङ्काऽपि विशिष्टशक्त्यभ्युपगमात्। न चैवं लक्षणानभ्युपगमे शक्त्युपस्थितानां वृत्तिविशेषबाधायोग्यत्वापरिच्छिन्नत्वसर्वात्मत्वविशिष्टपदार्थानां भेदेन परस्परान्वयबोधापत्तिरिति वाच्यम्। तात्पर्यविषयाभेदस्य विशिष्टपदार्थेषु असम्भवेन प्रकाशविशेषोपलक्षितचन्द्रस्यैव सत्यज्ञानपरिपूर्णात्मकस्य तदभेदलक्षणस्य ब्रह्मणः शाब्दज्ञानविषयत्वात्। अत एव सोऽयं देवदत्तस्तत्त्वमसीत्यत्र शक्त्यादिविशिष्टपदार्थोपस्थितावपि योग्यताबलाद्विशेष्यस्वरूपमेवाभेदान्वययोग्यं बोधविषय इति चतुर्थे वक्ष्यते, ततश्च सिद्धं सत्यादिवाक्यजन्यज्ञानस्य निर्विकल्पकत्वमिति॥

**म० प्र०**—पदान्तरवैयर्थ्यम्=विशेष्यवाचकब्रह्मपदस्य लक्षणास्वीकारे सत्यादिपदानां वैयर्थ्यम्। **तत्समभिव्याहारवशादिति**। पदान्तरसमभिव्याहाराभावे विशेष्यवाचकपदस्य लक्षणानुपपत्त्या पदान्तरसमभिव्याहारबलादेव। तस्य=विशेष्यवाचकपदस्य, तत्परत्वावगमात्=सच्चित्परिपूर्णाद्यर्थपरत्वावगमादित्यर्थः। एतावता=पदान्तरसमभिव्याहारवशाद्विशेष्यवाचकपदस्य सच्चित्परिपूर्णाद्यर्थपरत्वमात्रेण। वाक्यं=सत्यादिवाक्यम्। अत एव=पदान्तरसमभिव्याहारबलाद्विशेष्यवाचकपदस्य विवक्षितार्थपरत्वावगमादेव। अजहल्लक्षणायां=प्रकृष्टपदस्य प्रकाशपदस्य वा शक्यार्थसंबन्धिनि प्रकृष्टप्रकाशविशिष्टेऽजहल्लक्षणायाम्, विशिष्टार्थप्रतिपत्तिः=प्रकृष्टप्रकाशविशिष्टश्चन्द्र इति विशिष्टार्थप्रतिपत्तिः, तस्य=विशेष्यांशस्य, स्वातन्त्र्येण=अन्याविशेषणत्वेन। अत एव=स्वातन्त्र्येणोपस्थितये लक्षणास्वीकारादेव। **शक्यान्यरूपेणेति**। शक्यभिन्नस्वरूपत्वेन लक्षणया योपस्थितिः सा न संभवति मानान्तरेण ज्ञाते हि लक्षणास्वीकारात्। ब्रह्मणस्तु मानान्तरेणाज्ञातत्वादतस्तस्य ज्ञानं लक्षणया=पदान्तरेण वाच्यमिति पदान्तरस्यापि पदान्तरापेक्षेत्यनवस्था स्यादित्यर्थः। अत्र=पितृचरणमते सत्यादिपदेषु। **वृत्तिविशेषेति**। अत्र विशिष्टपदस्य द्वन्द्वान्ते श्रूयमाणत्वेन प्रत्येकमन्वयः। तथा च वृत्तिविशेषविशिष्टचैतन्यं ज्ञानपदार्थो बाधायोग्यत्वविशिष्टं सत्यपदार्थोऽपरिच्छिन्नत्वविशिष्टमनन्तपदार्थः सर्वात्मत्वविशिष्टं ब्रह्मपदार्थ इति विभाग इत्यर्थः।

**सत्येति**। तदभेदलक्षणस्य=सत्याद्यभेदस्वरूपस्य, सत्यज्ञानपरिपूर्णाद्यात्मकब्रह्मण इत्यर्थः। अत एव=तात्पर्यविषयार्थस्यैव शाब्दबोधविषयत्वादेव। **विशिष्टेति**=तद्देशतत्कालतद्वस्त्वेतद्देशैतत्कालैतद्वस्तुविशिष्टेत्यर्थः। **विशेष्येति**=देवदत्तपिण्डमात्रेत्यर्थः। अभेदान्वययोग्यम्=अभेदेन योऽन्वयस्तद्योग्यं तद्वत्। ततश्च=सत्यादिवाक्यजन्यज्ञानस्य पदार्थसंसर्गानवगाहित्वादेव॥

**इदमेव तत्त्वमस्यादिवाक्यानामखण्डार्थत्वं यत्संसर्गानवगाहियथार्थज्ञानजनकत्वमिति॥**

शि०म०–एवं "तत्त्वमसि, अहं ब्रह्माऽस्मि, अयमात्मा ब्रह्म" इत्यादिमहावाक्यस्य सत्याद्यवान्तरवाक्यस्य च प्रातिपदिकार्थमात्रपरत्वात् तन्मात्रावगाहिज्ञानजनकत्वमुक्तम्। इदानीमखण्डार्थत्वप्रसिद्धिरपि निर्विकल्पकेहेतुत्वे प्रमाणमित्याह–इदमेवेति। यत्संसर्गानवगाहियथार्थज्ञानजनकत्वमिदमेव तत्त्वमस्यादिवाक्यानामखण्डार्थत्वम्, न तु निर्भेदवस्तुपरत्वम्, तस्य भेदाभावविशिष्टवस्तुपरत्वस्य निर्घटंभूतलमित्यादिवाक्यसाधारण्यात्प्रकृते तदभावाच्च। न चान्यदखण्डार्थत्वं तस्यानिर्वचनादिति भावः। राजपुरुष इत्यादौ संसर्गपरे वाक्ये अतिव्याप्तिवारणायोक्तं **संसर्गानवगाहीति**, तत्रैवाभेदतात्पर्यभ्रमात् पदार्थसंसर्गानवगाहितदभेदभ्रमजनके तत्प्रसङ्गवारणाय **यथार्थेति**। अत्र च स्ववाच्यार्थनिरूपितसंसर्गागोचरत्वं स्वोपस्थापितपदार्थसंसर्गागोचरत्वं वा संसर्गानवगाहिपदेन विवक्षितमिति, तेन तत्राप्राप्तयोः प्राप्तिः संयोगः नित्यः संबन्धः समवाय इत्यादौ लक्षणवाक्ये नाव्याप्तिः। विषं भुङ्क्ष्वेत्यादौ च नातिव्याप्तिः, लक्षणया तदुपस्थितशत्रुगृहभोजनादौ कर्तव्यताभावसंसर्गावगाहिज्ञानजनकत्वात्। इदं चोपलक्षणं प्रातिपदिकार्थमात्रपरत्वमखण्डार्थत्वमित्यपि द्रष्टव्यम्॥

म०प्र०–परत्वात्=तात्पर्यवत्त्वात्। **तन्मात्रेति**=प्रातिपदिकार्थमात्रेत्यर्थः। अखण्डार्थत्वप्रसिद्धिरपि=तत्त्वमस्यादिवाक्यानामखण्डार्थकत्वप्रसिद्धिरपि, निर्विकल्पकहेतुत्वे=तत्त्वमस्यादिवाक्यानां निर्विकल्पकज्ञानहेतुत्वे। **निर्भेदवस्तुपरत्वमिति**। अत्र भेदशब्दो भिद्यमानघटादिविशेषपरः। भेदस्याभावो निर्भेदं निर्गतो भेदो यस्मिन्वा तन्निर्भेदं भेदमतिक्रान्तं वस्तु निर्भेदमिति वा विग्रहस्ततो वस्तुशब्देन कर्मधारयः। तथा च घटादिविशेषप्रतियोगिकाभावरूपवस्तुपरत्वमुक्ताभावविशिष्टवस्तुपरत्वं वेत्यर्थः। **भेदाभावेति**=घटादिस्वरूपविशेषप्रतियोगिकाभावेत्यर्थः। प्रकृते=सत्यादिवाक्ये। **तदभावाच्चेति**। घटादिद्वैतरूपविशेषाभावबोधकशब्दाभावेन निर्भेदवस्तुपरत्वाभावाच्चेत्यर्थः। **अतिव्याप्तिवारणायेति**। यथार्थज्ञानजनकत्वरूपाखण्डार्थकवाक्यलक्षणातिव्याप्तिवारणायेत्यर्थः। तत्रैव राज्ञः पुरुष इत्यादिवाक्ये एव। **तदभेदेति**=राजपुरुषाभेदेत्यर्थः। **तत्प्रसङ्गेति**=लक्षणातिव्याप्तीत्यर्थः। ननु संसर्गानवगाहिशब्दस्य संसर्गावगाहिभिन्नेत्यर्थकत्वस्वीकारे अप्राप्तयोः प्राप्तिः संयोगः नित्यः संबन्धः

समवाय इत्यादिवाक्येष्वव्याप्तिस्तत्र संयोगसमवायरूपसंसर्गावगाहित्वादित्याशङ्क्याह—**अत्र चेति**। संसर्गानवगाहियथार्थज्ञानजनकत्वमित्याकारकेऽखण्डार्थकवाक्यलक्षणवाक्य इत्यर्थः । **स्ववाच्यार्थेति**। वाक्यघटकपदवाच्यार्थेत्यर्थः। ननु संसर्गानवगाहिशब्देन स्ववाच्यार्थनिरूपितसंसर्गागोचरत्वस्य विवक्षितत्वे विषं भुङ्क्ष्वेत्यादिवाक्यस्य स्ववाच्यार्थनिरूपितसंसर्गागोचरयथार्थज्ञानकत्वाद्विषं भुङ्क्ष्वेत्यादिवाक्येऽतिव्याप्तिरित्यरुच्या पक्षान्तरमाह—**स्वोपस्थापितेति** । शक्तिलक्षणान्यतरसंबन्धेन वाक्यघटकपदोपस्थापितेत्यर्थः ।**इति तेन तत्रेति** । अखण्डार्थकवाक्यलक्षण इति उक्तेन प्रकारेण तेन संसर्गानवगाहिशब्देनोक्तार्थस्य विवक्षितत्वेनेत्यर्थः । लक्षणया=वाक्यलक्षणया । **तदुपस्थितेति**=वाक्योपस्थितेत्यर्थः । अप्राप्तयोरित्यादिसंयोगादिलक्षणवाक्ययोः संयोगसमवायरूपसंबन्धस्यैव विवक्षितत्वेन पदार्थानां परस्परं संबन्धस्याविवक्षितत्वात्संयोगादिसंबन्ध एवैतयोर्वाक्ययोरर्थ इति भावः । अत एव=तत्त्वमस्यादिवाक्यानां संसर्गानवगाहियथार्थज्ञानजनकत्वाद्यखण्डार्थकत्वसंभवादेव ॥

**तदुक्तम्—**

**संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।**
**उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥ १ ॥**

**शि० म०**—अत एवोभयत्र चित्सुखाचार्यसम्मतिमाह—**तदुक्तमिति** । या संसर्गासङ्गिसम्यग्धीहेतुता इयमखण्डार्थतोक्तेति संबन्धः । लक्ष्यं निर्दिशति—**गिरामिति** । कार्यकारणभावरहितद्रव्यविषयसमानाधिकरणापर्यायशब्दानामित्यर्थः ॥

म० प्र०—उभयत्र=तत्त्वमस्यादिवाक्यानामुक्तद्विविधाखण्डार्थकत्वे । **कार्य्येति** । मृद्घट इत्यादिशब्दानां लक्ष्यत्ववारणाय **कार्य्यकारणभावरहितेति** । नीलं रूपमित्यादिशब्दानां लक्ष्यत्ववारणाय **द्रव्यविषयेति** । घटः पटश्चेत्यादिशब्दानां लक्ष्यत्ववारणाय **समानाधिकरणेति** । घटकलशादिशब्दानां लक्ष्यत्ववारणाय **अपर्यायेति** ॥

**प्रातिपदिकार्थमात्रपरत्वमखण्डार्थत्वमिति चतुर्थपादार्थः। तच्च प्रत्यक्षं पुनर्द्विविधं—जीवसाक्षि, ईश्वरसाक्षि चेति । तत्र जीवो नाम अन्तःकरणावच्छिन्नचैतन्यम्, तत्साक्षि तु अन्तःकरणोपहितचैतन्यम् । अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः ॥**

**शि०म०**—ननु तत्प्रातिपदिकार्थतेत्यस्य चतुर्थपादस्य साकाङ्क्षत्वादानर्थक्यमखण्डार्थत्वपदानुषङ्गे च, संसर्गपरे हि वाक्ये प्रातिपदिकार्थप्रतिपादकत्वसत्त्वादतिव्याप्तिरित्याशङ्क्याह—**प्रातिपदिकार्थेति** ।यस्य वाक्यस्य यत्प्रातिपदिकार्थमात्रपरत्वं तस्य तत्राखण्डार्थत्वम्, अतो नान्यत्र तत्प्रसङ्ग इति तत्पदघटितलक्षणाभिप्रायं तद्ग्रहणमिति द्रष्टव्यम् । एवं सविकल्पकनिर्विकल्पकभेदात् द्वैविध्येन निरूपितस्य

प्रत्यक्षज्ञानस्य प्रकारान्तरेण द्वैविध्यमाह—तच्चेति । द्वैविध्यप्रकारमेवाह—जीवेति । साक्षिपदं तज्जन्यपरं तथा च जीवसाक्षिजन्यमीश्वरसाक्षिजन्यमिति द्विविधमित्यर्थः । अत एवैवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यमित्युत्तरग्रन्थोऽपि सङ्गच्छते । अन्यथाऽस्य साक्षिद्वैविध्यप्रतिपादनपरत्वे प्रत्यक्षज्ञानद्वैविध्यं निरूपितमित्युत्तरग्रन्थो विरुध्येत । न च साक्षिद्वैविध्यादत्रार्थसिद्धस्य ज्ञानद्वैविध्यस्योत्तरत्रानुवादो न विरुध्यते इति युक्तम् । तथापि सविकल्पकनिर्विकल्पकभेदेन प्रत्यक्षज्ञाननिरूपणानन्तरं साक्षिद्वैविध्यनिरूपणस्यासंगत्वापत्तेः । प्रत्यक्षज्ञानद्वैविध्यं साक्षिद्वैविध्यनिरूपणाधीनमिति तन्निरूपयति—**तत्रेत्यादिना । जीवो नामेति** । यद्यपि जीवः । सप्तमे निरूपयिष्यते इति नेह तन्निरूपणं युक्तं तथापि जीवतत्साक्षिणोर्भेदं निरूपयितुं जीवस्वरूपकथनमित्यवधेयम् । अत एव व्यावर्तकान्तःकरणस्यैकत्वाज्जीवतत्साक्षिणोरभेदमाशङ्क्य निराचष्टे—**अन्तःकरणस्येति** ॥

म० प्र०—आनर्थक्यं=स्वार्थाबोधकत्वम् । वाक्ये=घटमानयेत्यादिवाक्ये । नन्वेवं तत्प्रातिपदिकार्थतेत्यत्र तत्पदस्य वैयर्थ्यं गिरामित्यस्य पूर्ववाक्ये उक्तत्वात्। किञ्च सोऽयं देवदत्त इति वाक्यीयप्रातिपदिकार्थमात्रप्रतिपादकतारूपाखण्डार्थतायास्तत्त्वमस्यादिवाक्येष्वतिप्रसङ्गः स्यात्, तत्त्वमस्यादिवाक्यीयप्रातिपदिकार्थमात्रप्रतिपादकतारूपाखण्डार्थतायाः सोऽयं देवदत्त इति वाक्येऽतिप्रसङ्गश्च स्यात् । उभयोः प्रातिपदिकार्थमात्रप्रतिपादकत्वसत्त्वादित्याशङ्क्याह—**यस्य वाक्यस्येति** । तस्य=तादृशवाक्यस्य, तत्र=तस्मिन्प्रातिपदिकार्थमात्रे, अतः=तत्त्वमस्यादिवाक्यानामुक्ताखण्डार्थकत्वात्।अन्यत्र=सोऽयं देवदत्त इति वाक्यीयाखण्डार्थताशून्ये तत्त्वमस्यादिवाक्ये तत्त्वमस्यादिवाक्यीयाखण्डार्थताशून्ये सोऽयं देवदत्त इति वाक्ये च उक्ताखण्डार्थतयोः प्रसक्तिः । **इति तत्पदघटितलक्षणाभिप्रायमिति** । इति उक्तस्वरूपे तत्पदघटितलक्षणे यस्य वाक्यस्येत्यादिपदघटितलक्षणेऽभिप्रायस्तात्पर्यं यस्य तत्प्रातिपदिकार्थतेत्यत्र गृह्यमाणतत्पदस्य तत्तथा । तद्ग्रहणम्=तत्प्रातिपदिकार्थतेत्यत्र गृह्यमाणतत्पदमित्यर्थः । भेदात्=सविकल्पकत्वादिविशेषात् । तथा च=साक्षिपदस्य साक्षिजन्यपरत्वे सति, जीवसाक्षिजन्यं=जीवस्य यः साक्षी तज्जन्यम् । ईश्वरसाक्षिजन्यम् ईश्वरस्य यः साक्षी तज्जन्यम् । अत एव=साक्षिशब्दस्य साक्षिजन्यपरत्वादेव । अत एव जीवतत्साक्षिणोर्भेदस्य निरूपणीयत्वादेव । अस्य निराचष्टे इत्यनेनान्वयः ॥

**विशेषणं च कार्य्यान्वयि व्यावर्तकम् । उपाधिश्च कार्यानन्वयी व्यावर्तको वर्तमानश्च । यथा रूपविशिष्टो घटोऽनित्य इत्यत्र रूपं विशेषणम् । कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुल्युपाधिः । अयमेवोपाधिः नैयायिकैः परिचायक इत्युच्यते । प्रकृते चान्तःकरणस्य जडतया विषयभासकत्वायोगेन विषयभासकचैतन्योपाधित्वम् ॥**

**शि०म०**—ननु विशेषणोपाध्योर्वर्तमानव्यावर्तकत्वेन भेदाभावादन्तःकरणविशिष्टतदुपहितचैतन्ययोर्जीवतत्साक्षिणोरभेद इत्यत आह—**विशेषणं चेति। कार्य्यान्वयीति**। अवच्छेद्यं यदन्वयि तदन्वयीत्यर्थः। एवमुत्तरत्रापि कार्य्यपदं व्याख्येयम्। तथा च कार्य्यान्वयित्वे सति व्यावर्तकं विशेषणं पर्यवस्यति, तेन घटपटौ पश्यति देवदत्त इत्यत्र घटपटयोरेकदर्शनक्रियान्वयित्वेऽपि अव्यावर्तकत्वान्न परस्परविशेषणत्वापत्तिरिति भावः। ननु कर्णशष्कुलिर्नोपाधिः परिचायकत्वात्तथा चोपाधिलक्षणातिव्याप्तिस्तत्रेत्याशङ्क्याह—**अयमेवेति**। नन्वेवमपि चैतन्यस्य जीवत्वान्वये तत्रान्तःकरणं विशेषणं न साक्षित्वान्वय इत्यत्र किं विनिगमकमित्याशङ्क्य तस्य कर्तृत्वादिलक्षणजीवत्वान्वयित्वाद्विशेषणत्वं विषयावभासकसाक्षित्वानन्वयित्वादुपाधित्वमित्यभिप्रेत्याह—**प्रकृते चेति**॥

**म प्र०**—वर्त्तमानव्यावर्त्तकत्वेन=वर्तमानत्वे सति व्यावर्त्तकत्वेन, अवच्छेद्यं=व्यावर्त्यम्, यदन्वयि=येन सहान्वयि। तदन्वयि=तेन सहान्वयि, उत्तरत्रापि=वक्ष्यमाणोपाधिलक्षणेऽपि, कार्यान्वयित्वे सति=अवच्छेद्यं यदन्वयि तदन्वयित्वे सति, विधेयान्वयित्वे सतीति यावत्। तेन=विशेषणलक्षणस्य व्यावर्तकघटितत्वेन, परिचायकत्वात्=कर्णशष्कुलेः परिचायकसंज्ञावत्त्वात्। तत्र=कर्णशष्कुलौ। एवमपि=कर्णशष्कुलावतिव्याप्त्यभावेऽपि, **चैतन्यस्येति**। चैतन्यनिष्ठजीवत्वान्वये सति। तत्र=चैतन्येऽन्तःकरणं विशेषणमित्यर्थः। **न साक्षित्वान्वये इति**। चैतन्यस्य साक्षित्वान्वये सत्यन्तःकरणं विशेषणं नेत्यर्थः। तस्य=अन्तःकरणस्य।

**अयं च जीवसाक्षी प्रत्यात्मं नाना, एकत्वे चैत्रावगते मैत्रस्याप्यनुसन्धानप्रसङ्गः॥**

**शि०म०**—नन्वयुक्तं जीवसाक्षिलक्षणं प्रमातृप्रमाणतत्फलव्यतिरेकेण तस्यैवासिद्धेः, न हि लक्षणेनैव तत्सिद्धिः सिद्धे एव लक्ष्ये तत्प्रणयनात्। न च प्रत्यक्षमत्र क्रमते वादिविवादाभावप्रसङ्गात्, न च विषयावभासकाभावे जगदान्ध्यप्रसङ्गाद्भासकतया तस्य सिद्धिरिति वाच्यम्, प्रमाणचैतन्यस्य विषयावभासकरूपत्वाच्चक्षुरादेस्तत्तत्करणत्वात्प्रमातुश्च तदाश्रयत्वादतिरिक्तस्य विषयावभासकस्याभावादनपेक्षितत्वाच्च, तस्मात्प्रमाणप्रयोजनयोरसंभवात्प्रमात्रतिरिक्तस्साक्षी दुर्निरूप इत्याशङ्क्याह—**अयं चेति**। अयमाशयः। जीवसाक्षी तावदङ्गीकर्त्तव्यः। अन्यथा विषयानुसंधानानुपपत्तेः। नचान्यथोपपत्तिः चक्षुरादिकरणतज्जन्यज्ञानानां नानात्वेनाननुगततया सर्वविषयानुसंधातृत्वायोगात्। प्रमातुश्चानुगतत्वेऽपि स्वानुसंधानार्थमन्यापेक्षत्वात्। साक्षिणस्तु ब्रह्माभेदेन स्वप्रकाशतया निरपेक्षस्यैव स्वपरविषयानुसंधानोपपत्तेः। ननु जीवसाक्षिणो ब्रह्माभेदेन स्वप्रकाशत्वे तद्वदेव सर्वविषयानुसंधातृत्वापत्तौ चैत्रावगते मैत्रस्याप्यनुसंधानप्रसंग इति चेत्किं मैत्रसाक्षिणश्चैत्रावगतविषयानुसंधातृत्वं

स्वप्रकाशचैतन्याभेदादापाद्यते सर्वज्ञत्वादिविशिष्टचैतन्याभेदाद्वा चैत्रोपहितचैतन्याभेदाद्वा। नाद्यः, तस्य निर्विकारित्वेन तदभेदस्य सर्वविषयानुसंधानानापादकत्वात्। न द्वितीयः, अन्तःकरणोपहितस्य जीवसाक्षिणः परमेश्वरेण मायाविशिष्टेन तदुपहितेन वाऽत्यन्तभेदाभ्युपगमात्। न तृतीयः, चैत्रमैत्रान्तःकरणयोर्भिन्नदेशस्थत्वेन तदुपहितचैतन्ययोरभेदशङ्कानवकाशात्। ततश्चानुसंधानानुपपत्तिः साक्षिणि प्रमाणं तथा "साक्षी चेता केवलो निर्गुणश्च" इत्यागमोऽपि प्रमात्राद्यतिरेकिणि साक्षिणि प्रमाणम्। न चायमीश्वरविषयः, मायाविशिष्टे तस्मिन्केवलो निर्गुण इति विशेषणानुपपत्तेः। तस्मादस्त्यतिरिक्तजीवसाक्षी स च प्रत्यात्मं नानेत्यनवद्यम्॥

**म० प्र०–तत्फलेति।** प्रमातृप्रमाणकार्येत्यर्थः। तस्यैव=जीवसाक्षिण एव, तत्सिद्धिः=जीवसाक्षिसिद्धिः, तत्प्रणयनात्–लक्षणप्रयणयनात्। प्रत्यक्षं=प्रत्यक्षप्रमाणम्, अत्र=जीवसाक्षिणि, क्रमते प्रवर्तते। **जगदान्ध्येति**=जगति भासकाभावेत्यर्थः। तस्य=जीवसाक्षिणः। ननु विषयावभासकप्रमाणचैतन्यस्य जनकतया जीवसाक्षिणः सिद्धिः स्यादित्याशङ्क्य मैवमित्यभिप्रेत्याह-**चक्षुरादेरिति**। तत्तत्करणत्वात्=चक्षुरादेस्तत्तद्वृत्तिं प्रति करणत्वेन तत्तद्वृत्तिविशिष्टचैतन्यरूपप्रमाणचैतन्यं प्रत्यपि करणत्वात्। ननु प्रमाणचैतन्याश्रयतया जीवसाक्षिणः सिद्धिः स्यादित्याशङ्क्याह–**प्रमातुरिति**। तदाश्रयत्वात्=प्रमातुः तत्तद्वृत्त्याश्रयत्वेन तत्तद्वृत्तिविशिष्टचैतन्यरूपप्रमाणचैतन्यं प्रत्यप्याश्रयत्वात्। ननु प्रमाणचैतन्यादतिरिक्त एव विषयावभासको जीवसाक्षिशब्दवाच्योऽस्तीत्याशङ्क्याह–**अतिरिक्तस्येति**। प्रमाणचैतन्यातिरिक्तस्येत्यर्थः। तस्मात्=पूर्वोक्तहेतुकलापात्। अन्यथा=जीवसाक्ष्यनङ्गीकारे, अन्यथोपपत्तिः=जीवसाक्षिव्यतिरिक्तप्रमाणचैतन्येनैव विषयज्ञानोपपत्तिः। अननुगततया=सर्वविषयासंबद्धतया, अनुगतत्वेऽपि=सर्वविषयसंबद्धत्वेऽपि, स्वानुसंधानार्थम्=प्रमातृज्ञानार्थम्, तद्वदेव=ब्रह्मवदेव, तस्य=निरुपाधिकस्वप्रकाशब्रह्मणः, तदभेदस्य=निरुपाधिकस्वप्रकाशब्रह्मणा सह मैत्रसाक्षिणोऽभेदस्य। तदुपहितेन वा=मायोपहितेन वा **तदुपहितेति**–चैत्रमैत्रान्तःकरणोपहितेत्यर्थः। ततश्च=चक्षुरादिकरणतज्जन्यज्ञानानां नानात्वेनाननुगततया सर्वविषयावभासत्वायोगादेव, अयम्=साक्षी चेता इत्याद्यागमः। तस्मात्=साक्षी चेता इत्याद्यागमप्रमाणसत्त्वात्॥

**ईश्वरसाक्षी तु मायोपहितं चैतन्यम्। तच्चैकं तदुपाधिभूतमायाया एकत्वात्॥**

**शि० म०–**नन्वस्तु जीवस्य प्रमात्रादिभावातिरेकेणान्तःकरणोपहितत्वेन रूपेण साक्षित्वं तथापि नेश्वरसाक्षित्वसिद्धिः, धर्मिग्राहकानुमानेन लाघवानुगृहीतेन नित्यज्ञानाश्रयतयैव तत्सिद्धेः, मायाविशिष्टस्य जडतया ज्ञानत्वाभावाच्च। ततश्च प्रत्यक्षज्ञानं जीवसाक्षिजन्यं तदजन्यं चेत्येव विभागो युक्त इत्याशङ्क्य न हि मायाविशिष्टचैतन्यमीश्वरसाक्षि किंतु मायोपहितम्। नचैवं धर्मिग्राहकानुमानविरोधा-

द्बाधितं तस्येश्वरसाक्षित्वम्, अनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वेन लाघवोपहितयोरपि कर्त्रैकत्वज्ञाननित्यत्वयोरनुमानाविषयत्वादित्यभिप्रेत्याह–**ईश्वरसाक्षीत्विति**। **ननु ईश्वरसाक्ष्यपि नाना साक्षित्वाज्जीवसाक्षिवत्। ततश्च तद्वदेव सकलविषयाननुसंधानोपपत्तौ सोऽपि किंचिज्ज्ञः स्यादित्याशङ्क्य किमीश्वरसाक्षिणः स्वरूपेण नानात्वमुपाधिस्थत्वेन वा। नाद्यः, एकमेवाद्वितीयमित्यादिश्रुत्या चैतन्यरूपस्य तस्यैकत्वावगमात्। न द्वितीय इत्याह–तच्चेति॥**

म०प्र०–नेश्वरसाक्षित्वसिद्धिः=ईश्वरनिष्ठज्ञानरूपत्वनिश्चयो नास्ति। **धर्मिग्राहकानुमानेनेति**। क्षित्यङ्कुरादिकं सकर्तृकं कार्य्यत्वात्, घटादिवदित्याद्याकारेणेश्वररूपधर्मिसाधकेनानुमानेन क्षित्यादिकर्तुरनेकत्वानित्यज्ञानादिमत्त्वस्वीकारे गौरवमेकत्वादिस्वीकारे लाघवमिति लाघवसहकृतेन ज्ञानाश्रयत्वेन सिद्धिः, नतु ज्ञानस्वरूपत्वेनेत्यर्थः। ईश्वरसाक्षि=ईश्वरप्रकाशकम्। **धर्मिग्राहकानुमानविरोधादिति**। मायोपहितचैतन्यस्येश्वरप्रकाशकत्वस्वीकारे क्षित्यादिकर्तुर्लाघववशादेकत्वस्वपरविषयकनित्यज्ञानाद्याश्रयत्वसाधकानुमानविरोधान्मायोपहितस्येश्वरसाक्षित्वं बाधितमित्यर्थः। **व्यापकतावच्छेदकेति**=प्रकृते कर्तृजन्यत्वरूपव्यापकतावच्छेदकेत्यर्थः। उपहितयोः=प्राप्तयोः, ततश्च=ईश्वरसाक्षिणो नानात्वादेव, तद्वदेव=जीववदेव॥

**शि० म०–**ननु केयं माया नाम, यदुपहितं चैतन्यमीश्वरसाक्षि स्यात्। न तावन्मिथ्याज्ञानतत्संस्कारकर्माणि, तेषां सादित्वेनानादीश्वरोपाधित्वाभावात्। नापि ज्ञानप्रागभावः, तस्यानादित्वेऽपि नानात्वेन तदुपाधित्वायोगात्। अन्यथेश्वरतत्साक्षिणोरप्यनेकत्वापत्तेः। अनादिभावरूपाज्ञानं मायेति चेन्न, लक्षणाभावेन तस्य दुर्निरूपत्वात्। तथा हि किं तल्लक्षणं ज्ञाननिवर्त्यत्वम्, अनादित्वे सति तत्त्वं वा, अनादिभावत्वविशेषितमेतदेव वा, अन्यद्वा। नाद्यः, प्रथमधारावाहिकबुद्धौ भ्रान्तिज्ञाने चातिव्याप्तेः। न द्वितीयः, प्रागभावेऽपि तत्सत्त्वात्। न तृतीयः, अविद्यासंबन्धादावतिव्याप्तेः। नान्त्यः, तस्यानिर्वचनात्। न च निखिलकार्योपादानत्वं तल्लक्षणमात्मनोऽपि मायावच्छिन्नस्य तव मते प्रपञ्चोपादानत्वेन तत्र तत्प्रसङ्गात्। नाप्येवंविधाज्ञाने प्रमाणं पश्यामः। न च न जानामीत्यनुभवः, तस्य मतद्वयसंमतज्ञानाभावविषयत्वेनोपपत्तेः। न च "ब्रह्मसाक्षात्कारः अज्ञाननिवर्त्तकः तत्त्वसाक्षात्कारत्वात् शुक्तितत्त्वसाक्षात्कारवत्" इत्यनुमानं मूलाज्ञाने मानमिति वाच्यम्, विवेकाग्रहस्य मिथ्याज्ञानस्य वा शुक्तित्वापरोक्षज्ञाननिवर्त्यत्वेन दृष्टान्तासंप्रतिपत्तेः, प्रागभावनिवृत्त्याऽर्थान्तराच्च। तस्माल्लक्षणप्रमाणयोरसंभवान्नास्त्यतिरिक्तमज्ञानमिति उच्यते। अनाद्युपादानत्वे सति ज्ञाननिवर्त्यमज्ञानम् न चासंभवः, प्रागभाववदनादेरप्यज्ञानस्य ज्ञाननिवर्त्यत्वे बाधकाभावात्। नाप्यतिव्याप्तिः, आत्मनोऽनाद्युपादानत्वेऽपि ज्ञानानिवर्त्यत्वात्,

तन्निवर्त्यस्य चाविद्यासंबन्धादेरनुपादानत्वात्, घटाद्युपादानस्य मृत्पिण्डादेरनादित्वाभावात् । अथवा अनादिभावत्वे सति ज्ञाननिवर्त्यत्वमज्ञानलक्षणम् । न चाविद्यासंबन्धादावतिव्याप्तिः, अज्ञानस्यैव ज्ञाननिवर्त्यतया तत्संबन्धादेस्तन्निवृत्त्यैव निवृत्त्युपपत्तेः ॥

**म० प्र०—न तावदिति** । मिथ्याज्ञानं=भ्रान्त्यात्मकं ज्ञानम्, मिथ्याज्ञानादीनां समुदायो माया नेत्यर्थः । तस्य=ज्ञानप्रागभावस्य । **तदुपाधित्वेति**=ईश्वरसाक्षिनिरूपितोपाधित्वेत्यर्थः । अन्यथा=ज्ञानप्रागभावरूपमायाया ईश्वरोपाधित्वस्वीकारे, तस्य=अनादिभावरूपाज्ञानस्य, तत्त्वं=ज्ञाननिवर्त्यत्वम् । अनादिभावत्वविशेषितमेतदेव वा अनादिभावत्वनिष्ठविशेषणतानिरूपितविशेष्यतावज्ज्ञाननिवर्त्यत्वमेव वा । प्रथमधारावाहिकबुद्धौ=अन्त्यज्ञानभिन्नधारावाहिकबुद्धिघटकप्रथमादिज्ञाने । तत्सत्त्वात्=अनादित्वे सति ज्ञाननिवर्त्यत्वस्य सत्त्वात् । तस्य=ज्ञाननिवर्त्यत्वादिभिन्नस्य मायालक्षणस्य, तल्लक्षणं=मायालक्षणम् । तत्र=आत्मनि, तत्प्रसङ्गात्=अज्ञानलक्षणातिव्याप्तेः । एवंविधाज्ञाने=ईश्वरसाक्ष्युपाधिस्वरूपाज्ञाने । **अनुभव इति** । अस्याग्रे प्रमाणमिति शेषः । तस्य=न जानामीत्यनुभवस्य । **मतद्वयेति** । संमतो यो ज्ञानाभावस्तद्विषयकत्वेनेत्यर्थः । विवेकाग्रहस्य=भेदज्ञानप्रागभावरूपस्य भेदाग्रहस्य, दृष्टान्तासंप्रतिपत्तेः=दृष्टान्ते शुक्तितत्त्वसाक्षात्कारे साध्यानिश्चयात् । **प्रागभावेति**=ज्ञानप्रागभावेत्यर्थः । अर्थान्तराच्च=अनादिभावरूपाज्ञानातिरिक्तानभीष्टार्थसिद्धेश्च, तस्मात्=पूर्वोक्तहेतुकलापात् । लाघवमाश्रित्याह—**अथवेति** ॥

**शि० म०**—नापि मिथ्याज्ञाने तत्प्रसङ्गः, उत्पन्नभ्रमनिवृत्तेर्ज्ञानं विनाऽपि भावात् सादित्वाच्च । न च प्रमाणाभावः, न जानामीत्यनुभवस्य सत्त्वात् । न चायमन्यविषयः, मिथ्याज्ञानस्य च ज्ञानत्वाधिकरणत्वात् ज्ञानात्यन्ताभावस्यात्मन्यसंभवात्, संस्कारातिरेकेण ज्ञानध्वंसाभावात् तस्यातीन्द्रियत्वात् । नापि वृत्तिज्ञानप्रागभावस्तद्विषयः, प्रतियोगिज्ञानाज्ञानाभ्यां तज्ज्ञानायोगात् । यद्विषये कदापि ज्ञानं न भविष्यति तत्रापि न जानामीत्यनुभवाच्च । तदेवं न जानामीत्यनुभवस्तथाविधाज्ञाने प्रमाणम् । अनुमानमपि । संशयविपर्यासान्यतरविषयविषयकं प्रत्यक्षज्ञानं स्वविषयावरणपूर्वकं स्वनिवर्त्यपूर्वकं वा अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे घटादिसंशयनिवर्तकप्रदीपप्रभावत् । धर्माधर्मादिगोचरशाब्दज्ञानस्य सुखादिसाक्षात्कारस्य च पक्षबहिर्भावात् नांशतो बाधासिद्धी ॥

---

१ नन्वेवमपि धर्माधर्मगोचरशाब्देऽप्रकाशितार्थप्रकाशकत्वहेतुसत्त्वेन व्यभिचार इति चेन्न । संशयविपर्यासान्यतरविषयविषयकत्वे सति अभानापादकावरणविशिष्टतदन्यतरनिवृत्तौ निरपेक्षहेतुत्वमिति हेतोर्विवक्षणात् ।

**म० प्र०**–तत्प्रसङ्गः=अज्ञानलक्षणातिव्याप्तिः, अयं=न जानामीत्यनुभवः, अन्यविषयः= अनादिभावरूपाज्ञानातिरिक्तविषयकः। न जानामीत्यनुभवस्य मिथ्याज्ञानविषयकत्वं ज्ञानात्यन्ताभावविषयकत्वं वा ज्ञानध्वंसविषयकत्वं वा ज्ञानप्रागभावविषयकत्वं वेति विकल्पान् मनसि निधाय नाद्य इत्यभिप्रेत्य च हेतुमाह–**मिथ्याज्ञानस्येति**। भ्रान्त्यात्मकज्ञानस्येत्यर्थः। न द्वितीय इत्यभिप्रेत्य हेतुमाह–**ज्ञानात्यन्ताभावस्येति। असंभवादिति।** कार्य्यसमवायिकारणे कार्य्यात्यन्ताभावस्यानङ्गीकारादिति शेषः। न तृतीय इत्यभिप्रेत्य हेतुमाह–**संस्कारातिरेकेणेति।** ज्ञानसंस्कारातिरिक्तेत्यर्थः। ननु ज्ञानसंस्कारस्यैव न जानामीत्यनुभवविषयत्वमस्त्वित्याशङ्क्य नैवमित्यभिप्रेत्याह–**तस्येति।** ज्ञानसंस्कारस्येत्यर्थः। चतुर्थं प्रत्याह–**नापीति। प्रतियोगिज्ञानाज्ञानाभ्यामिति।** यदि प्रतियोगिज्ञानमस्ति तर्हि प्रतियोगिनो ज्ञानस्य विद्यमानत्वेन निखिलज्ञानप्रागभावासंभवेन न जानामीति निखिलज्ञानप्रागभावविषयकानुभवानुपपत्तिर्यदि प्रतियोगिज्ञानं नास्ति तर्ह्यप्यभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वेन प्रतियोगिज्ञानाभावान्न जानामीति निखिलज्ञानप्रागभावज्ञानं न संभवतीत्यर्थः। प्रत्यक्षज्ञानं=प्रमात्मकापरोक्षज्ञानम्। तथा च भ्रान्तिज्ञाने पक्षैकदेशेन बाध आपादयितुं शक्य इति। स्वविषयावरणपूर्वकम्=पक्षदृष्टान्तान्यतरस्य यो विषयस्तद्विषयकाभानापादकावरणपूर्वकम्। लाघवमाश्रित्याह–**स्वनिवर्त्येति।** अभानापादकस्वनिवर्त्येत्यर्थः। अप्रकाशितार्थप्रकाशकत्वात्=अज्ञातार्थविषयकप्रकाशरूपत्वात्। **अन्धकारे इति।** अन्धकारपदानादाने हि सौर्यमण्यादिप्रकाशान्तरसमवधानकाले दीपप्रभायामुक्तसाध्याभावेनोक्तहेत्वभावेन च दृष्टान्तासिद्धिः स्यात्, अतोऽन्धकारे इत्युक्तमिति भावः। **पक्षबहिर्भावादिति।** प्रत्यक्षविशेषणेन धर्माधर्मादिगोचरशाब्दानुमित्यात्मकज्ञानस्य पक्षबहिर्भावात्। सुखादिसाक्षात्कारस्य तु संशयविपर्यासान्यतरविषयविषयकविशेषणेन पक्षबहिर्भावादित्यर्थः। वस्तुतस्त्वावरणपदेनाभानापादकावरणग्रहणे प्रत्यक्षविशेषणेन धर्मादिगोचरशाब्दज्ञानादीनां पक्षबहिर्भावकरणे च फलाभावेन प्रत्यक्षेति ज्ञानविशेषणमनुपादेयमेवेति। **नांशतो बाधासिद्धी इति।** प्रत्यक्षज्ञानमित्युक्ते पक्षैकदेशे सुखादिप्रत्यक्षज्ञाने उक्तद्विविधसाध्याभावेनाप्रकाशितार्थप्रकाशकत्वहेत्वभावेन च बाधस्वरूपासिद्धी स्याताम्, तद्वारणाय **संशयविपर्यासान्यतरविषयकेति** विशेषणम्, संशयविपर्यासान्यतरविषयविषयकं ज्ञानमित्युक्ते हि द्विविधसाध्यस्य पक्षैकदेशे धर्मादिगोचरशाब्दादिज्ञाने बाधः स्यात्, अतः **प्रत्यक्षेति** विशेषणमिति बाधस्वरूपासिद्धी न भवत इत्यर्थः। न च सुखादिसाक्षात्कारधर्माधर्मशाब्दज्ञानादौ बाधाद्यभावेऽपीश्वरज्ञाने बाधादिकमस्त्येवेश्वरस्य संशयाद्यभावेऽपि सर्वविषयकेश्वरज्ञानस्य जीववृत्तिसंशयविपर्य्यासान्यतरविषयविषयकत्वस्यापि सत्वेन पक्षत्वेन ग्रहादिति वाच्यम्, संशयविपर्यासशब्देन प्रत्यक्षसमानाधिकरणसंशयविपर्यासयोर्विवक्षितत्वात्। अत एव तत्त्वमस्यादिवाक्यजन्यब्रह्मविषयकापरोक्षज्ञानवतः पुरुषस्य पुनःश्रुततत्त्वमस्यादिवाक्यजन्यज्ञाने न बाधस्वरूपासिद्धी इति॥

शि० म०—न च वृत्तिज्ञानप्रागभावेनार्थान्तरम्, तस्य ज्ञानस्य निवृत्तिस्वरूपत्वात् । अभावत्वेन नानात्वेन च गौरवात् अनुमानविषयत्वायोगात् । अत एव समवायसाधकमीश्वरसाधकं चानुमानं लाघवादेकमेव समवायमीश्वरं च साधयतीति परसिद्धान्तः । अत एव विषयगततया आत्मगतादृष्टेन भ्रान्तिज्ञानेन वा तत्संस्कारेण वा नार्थान्तरम्, लाघवसहकृतानुमानेन एकस्य भावरूपस्य तस्य सिद्धेः । अत एवान्धकारेण नार्थान्तरम्, तस्य घटाद्यावरकत्वेऽपि विषयचैतन्यावरकत्वायोगाच्च । न च द्वितीयसाध्ये इच्छाप्रागभावेनार्थान्तरता, तत्र ज्ञानस्य प्रकाशत्वेनानिवर्तकत्वात् ॥

म० प्र०—स्वनिवर्त्यपूर्वकमिति द्वितीयसाध्यस्वीकारपक्षे वृत्तिज्ञानप्रगभावभिन्नार्थान्तरमाशङ्क्य निषेधति—**न चेत्यादिना । तस्येति ।** ज्ञानस्य तस्य निवृत्तिस्वरूपत्वादित्यन्वयः । तस्य=वृत्तिज्ञानप्रागभावस्य । तथा च वृत्तिज्ञाननिष्ठवृत्तिज्ञानप्रागभावप्रतियोगिकध्वंसस्वरूपत्वादित्यर्थः । न च वृत्तिज्ञानप्रगभावध्वंसरूपाभावस्य वृत्तिज्ञानरूपभावरूपत्वं कथमिति वाच्यम्, अभावाभावस्य प्रतियोगिस्वरूपत्वाभ्युपगमेनादोषादिति भावः । **अभावत्वेनेति ।** भावभिन्नत्वमभावत्वमित्यभावस्य भावघटिताभावत्वेन नानास्वरूपत्वेन चेत्यर्थः । **अत एवेति ।** गुरुभूतार्थेऽनुमानविषयत्वायोगादेवेत्यर्थः । समवायसाधकं=गुणी क्रियावानित्यादिविशिष्टबुद्धिर्विशेषणविशेष्यसंबन्धविषया विशिष्टबुद्धित्वाद्दण्डी पुरुष इति विशिष्टबुद्धिवदित्याकारकम् । अत एव=वक्ष्यमाणहेतोरेव, विषयगततया=अदृष्टादीनां विषयतासंबन्धेन घटादिविषयप्राप्ततया । **आत्मगतादृष्टेनेति ।** अन्तःकरणविशिष्टात्मगतादृष्टाद्यभिन्नार्थान्तरं नेत्यर्थः । तस्य=अज्ञानस्य । अत एव=गुरुभूतार्थेऽनुमानविषयत्वायोगादेव, तस्य=अन्धकारस्य । **द्वितीयसाध्ये इति ।** द्वितीयं च तत्साध्यं तत्तथा तस्मिन्स्वीकृते सति । यद्वा द्वितीयं साध्यं यस्मिन् पञ्चावयववाक्ये तत्तथा तस्मिन् । तथा चादौ जानाति तत इच्छतीति क्रमाज्ज्ञानस्येच्छोत्पादकत्वेनेच्छाप्रागभावस्य ज्ञाननिवर्त्यत्वाद्द्वितीयसाध्याभ्युपगमोत्तरकालिकेच्छाप्रागभावाभिन्नमर्थान्तरम् । यद्वा द्वितीयसाध्यकपञ्चावयववाक्यप्रवृत्त्युत्तरकालिकेच्छाप्रागभावाभिन्नार्थान्तरमित्यर्थः । तत्र=इच्छाप्रागभावे, ज्ञानस्य प्रकाशत्वेनानिवर्तकत्वात्=ज्ञानस्येच्छोत्पादकत्वावच्छिन्नेच्छाप्रागभावनिवर्तकत्वेन ज्ञानत्वरूपप्रकाशत्वावच्छिन्नेच्छाप्रागभावनिवर्तकत्वाभावात् ॥

शि० म०—तत्त्वेन तन्निवर्त्यस्यैवेह साध्यस्य विवक्षितत्वात् । संशयविपर्यासान्यतरविषयविषयकत्वे सति तदन्यतरनिवृत्तौ निरपेक्षहेतुत्वम् अप्रकाशितार्थप्रकाशकत्वेन विवक्षितम्, तच्च प्रदीपप्रभायामभिव्यञ्जकाभावप्रयुक्तसंशयाद्युत्तरप्रत्यक्षजनिकायामस्तीति न साधनवैकल्यम्, न च सा प्रत्यक्षज्ञानसापेक्षेति तद्वैकल्यं तादवस्थ्यं तस्यास्संशयादिनिवृत्तौ ज्ञानप्रकाशसापेक्षत्वेऽपि सजातीयबाह्यप्रकाशानपेक्षत्वात् । निरपेक्षपदेन सजातीयप्रकाशनिरपेक्षत्वस्य विवक्षितत्वात् । न चैवं घटादिप्रत्यक्षज्ञानस्य

संशयादिनिवृत्तौ प्रामाण्यनिश्चयसापेक्षत्वात् स्वरूपासिद्धो हेतुरिति वाच्यम्। सिद्धान्ते स्वाश्रयज्ञानस्यैव प्रमात्वनिश्चयरूपत्वात्। नाप्यनैकान्तिको हेतुः, विपर्यासादेस्तदन्यतरविषयकत्वेऽपि तन्निवृत्तौ सजातीयबाधज्ञानसापेक्षत्वात् ॥

**म० प्र०**—ननु ज्ञानस्य प्रकाशत्वेनेच्छाप्रागभावानिवर्त्तकत्वेऽपि कुतस्तेन नार्थान्तरमित्याशङ्क्याह—**तत्त्वेनेति**। प्रकाशत्वेनेत्यर्थः। तन्निवर्त्यस्य=ज्ञाननिवर्त्यत्वस्य, इह=उक्तानुमाने। नन्वप्रकाशितार्थप्रकाशकत्वादित्यत्र प्रकाशकत्वशब्देन ज्ञानत्वरूपप्रकाशत्वं विवक्षितम्, किंवा भौतिकदीपादिरूपप्रकाशनिष्ठप्रकाशत्वं विवक्षितम्। नाद्यः, दृष्टान्ते हेत्वभावापत्तेः। न द्वितीयः, हेतोः स्वरूपासिद्धत्वापत्तेरित्याशङ्कामभिप्रेत्याह—**संशयेति**। संशयविपर्यासान्यतरविषयविषयकत्वसमानाधिकरणकसंशयविपर्यासान्यतरध्वंसानुत्पादान्यतररूपनिवृत्तिनिरूपितनिरपेक्षकारणत्वमित्यर्थः। सुखादिज्ञानेऽपि तदन्यतरध्वंसानुत्पादान्यतररूपनिवृत्तिनिरूपितनिरपेक्षकारणत्वसत्त्वेन सुखादिज्ञाने व्यभिचारवारणाय सत्यन्तमिति, विपर्ययोत्तरसंशये संशयोत्तरविपर्य्यये च व्यभिचारवारणाय तदन्यतरनिवृत्तौ निरपेक्षहेतुत्वमिति, इच्छादृष्टौ व्यभिचारवारणाय निरपेक्षेति। तच्च=संशयविपर्य्यासान्यतरविषयविषयकत्वे सति तदन्यतरनिवृत्तौ निरपेक्षहेतुत्वं च। साधनवैकल्यं=दृष्टान्ते साधनाभावः, सा=दृष्टान्तरूपदीपप्रभा, तद्वैकल्यं=दृष्टान्ते साधनाभावः। तादवस्थ्यम्=तदवस्थः, तस्याः=दृष्टान्तरूपदीपप्रभायाः। **ज्ञानप्रकाशेति**=ज्ञानाभिन्नप्रकाशेत्यर्थः। ननु दृष्टान्तभिन्नदीपप्रभायाः संशयादिनिवृत्तौ सजातीयबाह्यप्रकाशापेक्षाभावेऽपि कथं तस्यां साधनवैकल्यपरिहारोऽस्तीत्याशङ्कां मनसि निधाय मैवमित्यभिप्रेत्य हेतुमाह—**निरपेक्षपदेनेति**। एवं=निरपेक्षशब्दस्य सजातीयप्रकाशनिरपेक्षपरत्वस्वीकारे। **सापेक्षत्वादिति**। अस्याग्रे तदन्यतरनिवृत्तौ निरपेक्षहेतुत्वाभावेनेत्यस्य शेषः कर्तव्यः। **स्वाश्रयज्ञानस्यैवेति**। स्वं=प्रमात्वं तदाश्रयज्ञानं वृत्त्यात्मकं ज्ञानं तद्विषयकं विजातीयं तादृशवृत्त्युपहितं साक्षिरूपं ज्ञानं तस्यैव प्रमात्वप्रकारकनिश्चयरूपत्वादित्यर्थः। अत एव स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानमित्याद्युत्तरग्रन्थविरोधोऽपि नास्ति। तथा च घटादिज्ञानस्य स्वनिष्ठप्रामाण्यनिश्चयाय स्वसजातीयप्रकाशापेक्षाभावान्न स्वरूपासिद्धो हेतुरिति भावः। अनैकान्तिकः=विपर्य्ययादौ व्यभिचारी। **बाधज्ञानसापेक्षत्वादिति**। न च विपर्य्यासादेः संशयाद्यन्यतरनिवृत्तौ हेतुत्वमेव नास्तीति कथं निरपेक्षहेतुत्वं नास्तीत्युच्यते इति वाच्यम्, घटध्वंसं प्रति घटस्वरूपप्रतियोगिनोऽपि हेतुत्वेन प्रतियोगिविधया स्वनिवृत्तिं प्रति स्वस्य हेतुत्वादिति ॥

**शि० म०**—सुखादिसाक्षात्कारस्य च निरपेक्षस्य संशयादिनिवर्त्तकत्वेऽपि तदन्यतरविषयविषयकत्वाभावात्। न च धारावाहिकद्वितीयादिबुद्धौ व्यभिचारः, तत्रैकज्ञानत्वाभ्युपगमात्। अत एव न द्वितीयादिप्रभादौ व्यभिचारः, तत्राप्येतन्न्यायेन स्वविरोधिप्रभापर्य्यन्तं स्थायित्वाभ्युपगमात्। मन्दामन्दप्रभयोश्च वैलक्षण्येऽपि मन्दप्रभानन्तरभाविप्रौढप्रभायाः स्वविषयकेशरेखादिसूक्ष्मपदार्थावरणभञ्जकत्वात्।

अतिप्रौढप्रभानन्तरभाविन्याश्च मन्दप्रभायाः स्वविषयावरणपूर्वकत्वाभावेऽपि तन्निवृत्तिस्वरूपयोग्यत्वात्, सूक्ष्मतमवस्तुसंशयादिनिवर्त्तकत्वाभावाच्च न व्यभिचारः। न चाप्रयोजकत्वे प्रदीपप्रभादौ लाघवेन प्रकाशत्वेनैव स्वविषयावरणनिवर्तकत्वस्य ग्रहात् ॥

म० प्र०—सुखादावपि हेतोर्व्यभिचारो नास्तीत्यभिप्रेत्य हेतुमाह—**सुखादीति** । अत्र चकारस्याभावादित्यस्याग्रे संबन्धः। निरपेक्षस्य=संशयादिनिवर्तने स्वसजातीयप्रकाशापेक्षारहितस्य। **व्यभिचार इति**। न च धारावाहिकद्वितीयादिबुद्धौ प्रथमसाध्याभावेऽपि हेतुघटकसप्तम्यन्तार्थस्याभावेन हेतोरप्यभावान्न व्यभिचार इति वाच्यम्, धारावाहिकद्वितीयादिबुद्धेः पूर्वं घटादिषु संशयाद्यभावेऽपि यदाकदा घटादीनां संशयादिविषयत्वसंभवेन व्यभिचारस्य निवारयितुमशक्यत्वादिति । तत्र=नैयायिकादिपराभिमतद्वितीयादिधारावाहिकबुद्धौ । **अभ्युपगमादिति** । लाघवेनास्माभिरिति शेषः। अत एव=वक्ष्यमाणहेतोरेव । **द्वितीयादिप्रभादाविति**। सर्वे भावाः क्षणपरिणामिनः ऋते चिच्छक्तेरित्यभियुक्तोक्त्या प्रभायाः क्षणिकत्वेन द्वितीयादिप्रभादावित्युक्तिरित्यर्थः। तत्रापि=द्वितीयादिप्रभादावपि, एतन्न्यानेन=लाघवेन हेतुना । **स्वेति**=द्वितीयादिप्रभेत्यर्थः। ननु मन्दामन्दप्रभयोरेकत्वाभावात्तत्र व्यभिचारः स्यादित्याशङ्क्याह—**मन्दामन्दप्रभयोश्चेति**। अस्य न व्यभिचार इत्यनेनान्वयः । तत्र मन्दप्रभानन्तरप्रौढप्रभायां व्यभिचाराभावे हेतुमाह—**वैलक्षण्येऽपीत्यादिना**। अतिप्रौढप्रभानन्तरभाविन्यां मन्दप्रभायां व्यभिचाराभावे हेतुमाह—**अतिप्रौढेति। तन्निवृत्तिस्वरूपयोग्यत्वादिति**। मन्दप्रभायां निवृत्तिस्वरूपयोग्यपूर्वकत्वात् । तथा चातिप्रौढप्रभानन्तरभाविन्यां मन्दप्रभायां हेतुस्वीकारे साध्यस्यापि सत्त्वमिति भावः। वस्तुतस्त्वतिप्रौढप्रभानन्तरभाविन्यां मन्दप्रभायां हेतुरेव नास्तीत्याह—**सूक्ष्मतमवस्त्विति**। केशरेखादिवस्त्वित्यर्थः। **न व्यभिचार इति**। न चैवमपि पक्षभिन्ने धर्मादिशाब्दज्ञानादौ व्यभिचारस्तत्रोक्तसाध्याभावेऽप्युक्तहेतोः सत्त्वादिति वाच्यम्, हेतुबोधकवाक्ये तदन्यतरशब्देनाभानापादकावरणप्रयुक्तसंशयविपर्यासयोर्विवक्षितत्वादिति । **प्रदीपप्रभादाविति**। स्वविषयावरणनिवृत्तिं प्रति दीपप्रभात्वेन सूर्य्यप्रभात्वेन चन्द्रप्रभात्वेन हेतुत्वस्वीकारे गौरवेणावरणनिवृत्तित्वावच्छिन्नावरणनिवृत्तिं प्रति प्रकाशत्वेनैव हेतुत्वेन यत्र प्रकाशत्वं तत्र स्वविषयावरणपूर्वकत्वं स्वनिवर्त्यपूर्वकत्वं वेति व्याप्तेर्ज्ञानेऽपि प्रकाशत्वस्य सत्त्वेन स्वविषयावरणपूर्वकत्वादेरवश्यं स्वीकर्तव्यत्वात् । यदि पक्षे स्वविषयावरणपूर्वकत्वादिकं न स्यात्तर्हि पक्षे प्रकाशत्वमेव न स्यादिति बाधकतर्कसत्त्वाच्च न हेतोरप्रयोजकत्वम्। न च तव मते सुखादिसाक्षात्कारे प्रकाशत्वसत्त्वेऽपि स्वविषयावरणपूर्वकत्वादेरभावान्नेदमनिष्टापादनं संभवतीति वाच्यम्, यत्र स्वविषयावरणपूर्वकत्वाद्यभावस्तत्र प्रकाशत्वाभाव इति व्याप्तेर्घटादौ गृहीतत्वेन पक्ष एवोक्तानिष्टापादनसंभवात् । तव मते सुखादीनामज्ञातसत्ताकत्वेन सुखादावावरणस्याप्यवश्यं स्वीकर्तव्यत्वेन त्वां प्रत्युक्तानिष्टापादनसंभवाच्चेति भावः ॥

शि० म०—अत एवेश्वरानुमाने घटादौ लाघवेन कार्य्यत्वेनैव कर्तृजन्यत्वग्रहा-

न्नाप्रयोजकत्वमिति परस्यापि सिद्धान्तः, तदेवं लाघवसहकृतानुमानं पक्षधर्मताबलादनाद्येकभावरूपाज्ञानलक्षणावरणे प्रमाणम्। तथा मिथ्यार्थतज्ज्ञानलक्षणाध्यासानुपपत्तिस्तत्र प्रमाणम्। तथा हि अस्ति तावच्छुक्तौ रजतज्ञानाद्रजतार्थिप्रवृत्तिः सामानाधिकरण्यव्यपदेशश्चेति सर्वजनसिद्धम्, तज्ज्ञानं तु तदवबोधेन नेदं रजतमिति बाधकज्ञानोदयान्मिथ्या, तन्मिथ्यात्वं च स्वरूपतो बाधाभावात् मिथ्यार्थविषयत्वेनैव, मिथ्यात्वं चार्थस्य प्रतिपन्नोपाधौ पारमार्थिकत्वावच्छिन्नतदभावानुभवादित्यग्रे स्फुटम्। न चैवमपि मिथ्यार्थतदवभासयोरात्मतत्त्वज्ञानाभावाभ्यामेवोपादाननिमित्तकारणाभ्यामुपपत्तेः तत्कारणतया नाज्ञानसिद्धिरिति वाच्यम्, दोषघटितभ्रान्तिज्ञानपुष्कलकारणे सति तत्त्वज्ञानाभावविलम्बात्। तद्विलम्बाभावेन तस्य कारणत्वायोगात्॥

**म० प्र०**—अत एव=लाघवस्य हेतुनिष्ठाप्रयोजकत्वशङ्कानिवारकत्वस्वीकारादेव, अस्येति परस्यापि सिद्धान्त इत्यनेनान्वयः। ईश्वरानुमाने=क्षित्यङ्कुरादिकं सकर्तृकमित्यादीश्वरसाधकानुमाने, अस्य न्नाप्रयोजकत्वमित्यनेनान्वयः। **कार्य्यत्वेनैवेति**। अत्र व्यापकत्वं ज्ञाप्यत्वं वा तृतीयार्थस्तथा च कार्य्यत्वज्ञाप्यकर्तृजन्यत्वस्य कार्य्यत्वव्यापककर्तृजन्यत्वस्य वा ग्रहणादित्यर्थः। **अध्यासेति**=कार्य्येत्यर्थः। तत्र=भावरूपाज्ञाने। **सामानाधिकरण्यव्यपदेशश्चेति**। इदंरजतशब्दयोः समानविभक्तिकत्वे सति भिन्नप्रवृत्तिनिमित्तकत्वे च सत्येकार्थबोधकत्वरूपसामानाधिकरण्यबोधक 'इदं रजतम्' इति शब्दप्रयोगश्चेत्यर्थः। तज्ज्ञानं=इदं रजतमिति ज्ञानम्, तदवबोधेन=शुक्त्यवबोधेन, तन्मिथ्यात्वं च=इदं रजतमिति ज्ञानमिथ्यात्वं च। **स्वरूपत इति**। मन्मते चैतन्यस्यैव रजतादिवस्तुज्ञानत्वेन चैतन्यस्य नित्यत्वेन च ज्ञानस्वरूपस्य बाधाभावादित्यर्थः। प्रतिपन्नोपाधौ=अध्यस्तस्याधारत्वेन भासमानशुक्त्यादिसामान्यांशेऽध्यस्तस्याधारत्वेन भासमानशुक्त्यादिसामान्यांशावच्छिन्नचैतन्यरूपे वाऽऽधारे। एवमपि=मिथ्यार्थतदवभासयोर्मिथ्यात्वेऽपि। **आत्मतत्त्वज्ञानाभावाभ्यामिति**। आत्मा तत्त्वज्ञानाभावश्चेत्युभाभ्यामित्यर्थः। उपादाननिमित्तकारणाभ्याम्=आत्मा हि मिथ्यार्थतज्ज्ञानयोरुभयोरुपादानकारणं यथार्थज्ञानाभावश्च तयोर्निमित्तकारणमित्युपादाननिमित्तकारणाभ्याम्। तत्कारणतया=मिथ्यार्थतदवभासकारणतया शुक्त्यादियथार्थज्ञानाभावस्य मिथ्यार्थतदवभासहेतुत्वाभावे हेतुमाह—**तस्येति**। शुक्त्यादियथार्थज्ञानाभावस्येत्यर्थः। शुक्त्यादियथार्थज्ञानाभावस्य मिथ्यार्थतदवभासनिरूपितकारणतायोग्यत्वे हेतुमाह—**दोषेत्यादिना**। **तत्त्वज्ञानाभावविलम्बादिति**। भ्रान्तिज्ञानात्पूर्वं शुक्त्यादिसामान्यांशयथार्थज्ञानकाले शुक्त्यादियथार्थज्ञानाभावाभावप्रयोज्यमिथ्यार्थतदवभासाभावाभावेनेत्यर्थः॥

**शि० म०**—आत्मनश्चापरिणामित्वेनानुपादानत्वात्। अन्यथाऽध्यासस्यापि सत्यत्वापत्तिः, तस्मान्मिथ्यार्थतदवभासानुपपत्तिस्तदुपादानमिथ्याज्ञाने प्रमाणम्।

तच्च तत्तज्जडावच्छिन्नचैतन्यावरणतत्तद्गतविक्षेपहेतुत्वात् तत्तवदच्छिन्नचैतन्यविषयम्, न शुक्त्यादिविषयम् । प्रमाणवैकल्यादेव तदग्रहणसिद्धौ तत्रावरणाभावात् । तदेवं प्रत्यक्षानुमानार्थापत्तयस्तत्तच्चैतन्यविषयाज्ञाने प्रमाणम्, शुद्धचैतन्यविषयमूलाज्ञाने तु प्रयुज्यते । ब्रह्मसाक्षात्कारः अनादिभावनिवर्त्तकः भ्रमोपादाननिवर्त्तको वा तत्त्वसाक्षात्कारत्वात् शुक्त्यपरोक्षज्ञानवदिति । नन्वनुमानादिप्रमाणेन मूलाज्ञानावगमेऽपि न मायासिद्धिः मायाऽविद्ययोर्लोके प्रसिद्धभेदत्वात् । न हि मिथ्यारजतोपादानाविद्याश्रये मन्त्रौषधादिना मायामयहस्त्यश्वरथादिनिर्मातरीव मायाशब्दं प्रयुञ्जते । न च मायाविनिर्मितानिर्वचनीयरथादिदृष्टान्तेन प्रमाणान्तरेणैव जगतो मायोपादानत्वं साध्यते इति वाच्यम्, कल्पताज्ञानोपादानस्य मायोपादानत्वायोगात् । मायाया एव तदुपादानत्वे लोकसिद्धमायावत्तस्या अपि स्वाश्रयाव्यामोहकत्वतत्त्वज्ञानानिवर्त्त्यत्वापत्तौ मायाप्रयुक्तो बन्धः तत्त्वज्ञानात्तन्निवृत्तिरिति सिद्धान्तव्याकोपप्रसङ्गात् । ततश्च प्रमाणाभावान्न मूलमायासिद्धिरिति । मैवम्, लोकेऽपि मायाऽविद्ययोर्भेदासिद्धेः ॥

म० प्र०—आत्मनो मिथ्यार्थतदवभासयोरुपादानत्वाभावे हेतुमाह—**आत्मन इति** । अनुपादानत्वात्=उपादानत्वायोग्यत्वात् । अन्यथा=आत्मनो मिथ्यार्थतदवभासयोरुपादानत्वस्वीकारे, अध्यासस्य=मिथ्यार्थतदवभासलक्षणाध्यस्तस्य, तस्मात्=आत्मतत्त्वज्ञानाभावयोरुपादाननिमित्तकारणत्वासंभवात् । अज्ञानस्य प्रमाणसिद्धत्वेन सत्यत्वशङ्कां वारयितुमाह—**मिथ्येति**। तच्च=उक्ताज्ञानं च । **विक्षेपेति**=कार्य्येत्यर्थः । वैकल्यात्=असंबन्धात् । **तदग्रहणेति**=शुक्त्यादिपदार्थाग्रहणेत्यर्थः । तत्र=शुक्त्यादिपदार्थेषु । **आवरणाभावादिति** । यदा येन पदार्थेन सह प्रमाणस्य संबन्धस्तदा तदवच्छिन्नचैतन्यनिष्ठावरणनिवृत्त्या तेनैव चैतन्येन तस्य पदार्थस्य स्फुरणं भवति नान्यथेति शुक्त्यादिपदार्थेष्वावरणाङ्गीकरणं व्यर्थमिति भावः । **तदेवमिति** । अतीतग्रन्थे उक्तेन प्रकारेणेत्यर्थः । प्रयुज्यते=अनुमानवाक्यप्रयोगः क्रियते । **अनादीति** । ब्रह्मसाक्षात्कारस्य ब्रह्म क्षणिकं ब्रह्म न जगत्कारणमित्यादिभ्रमनिवर्तकत्वेन सिद्धसाधनतावारणाय **अनादीति** । ब्रह्मसाक्षात्कारस्य स्वप्रागभावनिवर्तकत्वेन सिद्धसाधनतावारणाय **भावेति** । तत्तदवच्छिन्नचैतन्यविषयकाज्ञानमादाय दृष्टान्ते साध्यसमन्वयः कार्य्य इति । **तत्त्वेति**=यथार्थेत्यर्थः । **अविद्याश्रये इति** । प्रमातरीति शेषः । अस्य मायाशब्दं प्रयुञ्जते इत्यनेनान्वयः । **निर्मातरीति** । देवदत्तादाविति शेषः । **प्रमाणान्तरेणेति** । व्यावहारिकं जगन्मायोपादानकमनिर्वचनीयत्वान्मायाविनिर्मितानिर्वचनीयरथादिवदित्यनुमानादिप्रमाणान्तरेणेत्यर्थः । **उपादानस्येति** । प्रपञ्चस्येति शेषः । तदुपादानत्वे=जगदुपादानत्वे । तस्या अपि=व्यावहारिकजगदुपादानमायाया अपि । **ज्ञानानिवर्त्यत्वापत्ताविति** । स्वाश्रयव्यामोहकस्यैव ज्ञानेन निवृत्तिरिति भावः । ततश्च=उक्तदोषसमुदायादेव ॥

शि०म०-तथा हि न तावल्लक्षणतो लोके मायाऽविद्ययोर्भेदः, अनाद्यनिर्वचनीयत्वस्य विपर्य्ययोपादानत्वस्य च लक्षणस्य मायाऽविद्ययोरविशेषात्। ननु मन्त्रौषधादिसत्यवस्त्वेव माया नानिर्वचनीयेति चेन्न। तत्रापि शुक्तिरूप्याद्यध्यासोपादानवदनाद्यनुगतस्यानिर्वचनीयाज्ञानस्यैव लाघवेनोपादानत्वकल्पनात्। अन्यथा मन्त्राद्युपादानत्वेन मायाविनिर्मितहस्त्यादेरपि सत्यत्वापत्तेः, मन्त्राद्यनुविधानस्य च काचाद्यनुविधानवन्निमित्तकारणविषयतयाऽप्युपपत्तेः। नापि व्यवहारभेदाद्भेदः, आवरणविक्षेपोभयशक्तिविशिष्टायामेकस्यामेवावरणशक्तिप्राधान्यविवक्षया अविद्या-विक्षेपशक्तिप्राधान्यविवक्षया मायेति व्यवहारभेदोपपत्तेः। तदुक्तं विवरणाचार्य्यैः, एकस्मिन्नपि वस्तुनि विक्षेपशक्तिप्राधान्येन माया आच्छादनशक्तिप्राधान्येनाविद्येति व्यवहारभेद इति। केचित्तु माया परमेश्वरनिष्ठा वियदादिप्रपञ्चहेतुः। अविद्या जीवनिष्ठा स्वप्नरूप्यादिभ्रमहेतुः। अत एवाज्ञो जीवः, परमेश्वरस्तु मायावीति व्यपदिश्यते, न वैपरीत्येन ब्रह्मसाक्षात्कारेण च जीवगताज्ञानं निवर्त्तते। "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥" इति वचनात्। न माया। "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।" इति मायायाः सेतुवत्तर्तव्यत्वमात्रप्रतिपादनात्। अत एवैकमुक्तावपि अन्येषां प्रपञ्चोपलम्भः, वियदादिप्रपञ्चोपादानमायाया अनिवृत्तेः। न चैवं मुक्तस्यापि प्रपञ्चोपलम्भापत्तिः, प्रपञ्चदर्शनहेत्वविद्याया विच्छेदात्। न हि चक्षुष्मता रूपं गृह्यत इत्यन्धेनापि तदालोक्यते, तस्मादस्ति मायाऽविद्ययोर्भेद इति तन्न। मायायाः सत्यत्वे अद्वैतहानात्, मिथ्यात्वे च ज्ञाननिवर्त्यत्वमज्ञानत्वात्। 'मायामेतां तरन्ति ते' इत्यादौ तरणं विनाश एव, अन्यथा 'भूयश्चान्ते विश्वमायानिवृत्तिः' इत्यादिश्रुतिविरोधात्। तस्मात् मूलाज्ञानस्यैव मायात्वात् सुष्ठूक्तं मायोपहितं चैतन्यमीश्वरसाक्षि इति॥

म० प्र०-अनिर्वचनीया=मिथ्या। तत्रापि=मन्त्रादिभिर्निर्मितवस्तुन्यपि, अनुगतस्य=मन्त्रादिभिर्वस्तुनिर्माणस्थले प्राप्तस्य। अज्ञानस्यैव=द्रष्टॄणामज्ञानस्यैव। न चाधिष्ठानाभाव इति वाच्यम्, मायाव्यधिकरणभूम्यवच्छिन्नचैतन्यस्यैवाधिष्ठानत्वात्। न च मायाविनोऽज्ञानाभावेन मन्त्रादिभिर्निर्मितपदार्थानां तस्य प्रत्यक्षं न स्यादिति वाच्यम्। यथेश्वरो जीवानामज्ञानमाश्रित्याकाशादि कार्यं करोत्याकाशादीनां प्रत्यक्षमपीश्वरस्य भवति तथा सर्वस्योपपत्तेरिति। अन्यथा=हस्त्यादिकं प्रति मन्त्रादिरूपमायाया उपादानत्वस्वीकारे। **मन्त्रादीति**=सत्यमन्त्रादीत्यर्थः। अनुविधानस्य=उत्तरकाले सत्त्वस्य काचाद्यनुविधानवत् पीतः शङ्ख इत्यादिभ्रमस्य चक्षुरादिगतकाचादिदोषानुसत्त्ववत्। व्यवहारभेदात्=इयं मायेयमविद्येति व्यवहारभेदात्। वस्तुनि=अज्ञानरूपे वस्तुनि, अत एव=जीवस्याविद्याश्रयत्वादेव। वैपरीत्येन=ईश्वरोऽज्ञो जीवो मायावीति वैपरीत्येन।

**न मायेति**। निवर्तते इति पूर्वानुषङ्गः। अत एव=वक्ष्यमाणहेतोरेव, अन्यथा=मायानाशानङ्गीकारे, अन्ते=प्रारब्धकर्मक्षये, विश्वमायानिवृत्तिः=निखिलमायानाशः। तस्मात्=मायानाशसंभवात् ॥

**"इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतौ मायाभिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया चोपपत्तेः।**

**"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥"**

**"तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।**
**योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥"**

**"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।**
**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः"**

**इत्यादिषु श्रुतिषु एकवचनबलेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते ॥**

शि० म०—नन्वस्तु मूलाज्ञानं माया, तथापि न तदैक्यसिद्धिः, इन्द्रो मायाभिरिति बहुवचनश्रुतिविरोधेन लाघवानुगृहीतस्याप्यनुमानस्य मायैकत्वे प्रमाणत्वायोगादित्याशङ्क्य, मायागतशक्तिभेदविषयतया तद्गतगुणभेदविषयतया वा, बहुवचनोपपत्तेर्न विरोध इत्याह—**इन्द्र इति**। **शक्तिविशेषेति**। एकत्वेऽपि वह्नेर्दाहप्रकाशनादिशक्तिभेदवन्मायैकत्वेऽपि प्रपञ्चवैचित्र्यदर्शनेन तदनुकूलनानाशक्त्यभ्युपगमादिति भावः। ननु मायाभिरिति बहुवचनस्यासत्यपि मुख्यार्थत्यागकारणे शक्तिगुणभेदविषयत्वाभिधानमयुक्तमित्याशङ्क्य मायैकत्वश्रुतिस्मृतीनामनेकत्वेन तद्विरोधादेका बहुवचनश्रुतिरेवान्यपरा कल्प्यते इत्याह—**मायां त्वित्यादिना एकत्वं निश्चीयते इत्यन्तेन**। अत्र मायाभेदं वदन् वादी प्रष्टव्यः। किं मायाभिरिति बहुवचनान्मायाभेदोऽभिप्रेतः मायाऽविद्याभेदो वा, नाद्य इत्याह—**मायामिति**। न द्वितीय इत्याह—**तरतीति**। निवृत्तिरेवात्र तरणम्, तरति ब्रह्महत्यामित्यादौ निवृत्तौ तच्छब्दप्रयोगात्। नद्यादेरिव लङ्घनस्याभावात्। तथा च मायामविद्यां तरतीति सामानाधिकरण्येन ज्ञाननिवर्त्यत्वनिर्देशान्न माया अविद्यातो भिद्यत इति भावः। ननु मायाभिरिति बहुवचनश्रुतिर्मायाभेदविषयैव, न तु तद्गतगुणभेदाभिप्राया, तत्र प्रमाणाभावात्। एकवचनस्य ग्रहसंमार्जनवदुपपत्तेरित्यत आह—**अजामिति**। 'नासदासीन्नो सदासीत्तम आसीत्' 'अविद्यायामन्तरे वर्त्तमानाः' 'नान्यच्छ्रेयो वेदयन्त' इत्यादिश्रुतयः आदिपदग्राह्याः। ननु श्रुतिबहुत्वमात्रान्न मायैकत्वसिद्धिः। एकेनापि बलवता बहूनां बाधदर्शनादित्याशङ्क्य लाघवानुग्रहादेकत्वश्रुतीनामेव प्राबल्यमित्याह—**लाघवेति** ॥

म०प्र०—तथापि=मूलाज्ञानस्यमायात्वेऽपि। **तदैक्येति**=मूलाज्ञानरूपमायैक्येत्यर्थः। **मायागतेति**=इतः पूर्वं मायाभिरिति बहुवचनस्येति शेषः। परममूले **इन्द्र इति**। इन्द्रो=निरङ्कुशैश्वर्यः परमात्मा, पुरुरूपः=बहुरूपः, ईयते=प्रतीयते, चेष्टते वेत्यर्थः। परममूले **मायाभिरिति**। शुद्धसत्त्वप्रधानरूपां मायामित्यर्थः। **तदनुकूलेति**=प्रपञ्चवैचित्र्यानुकूलेत्यर्थः। अत्र=तरत्यविद्यामित्यादिवाक्ये। तथा च=तरणस्याविद्यानिवृत्तिस्वरूपत्वे सति। **तद्गतेति**=मायागतगुणाद्यभिप्रायिका नेत्यर्थः। तत्र=मायाभिरिति बहुवचनश्रुतेर्मायागतगुणादिभेदाभिप्रायकत्वे। ननु तर्ह्येकवचनस्य कथमुपपत्तिरित्यत आह—**एकवचनस्येति**। **ग्रहसंमार्जनवदिति**। यथा ग्रहं संमार्ष्टीत्यत्र सोमपात्रवाचकग्रहशब्दोत्तरद्वितीयाविभक्त्यैकत्वमविवक्षितं तद्वन्मायामित्यादिवाक्येष्वप्येकत्वस्याविवक्षितत्वेनोपपत्तिरित्यर्थः। **इत्यत इति**। इति शङ्कात एकपदरूपश्रुतिमाहेत्यर्थः। परममूले **अजामिति**। अजां=जन्मशून्याम्, एकां=स्वसमानजातीयेतरप्रकृतिरहिताम्, लोहितशुक्लकृष्णां=रजःसत्त्वतमोमयीम्, सरूपाः=त्रिगुणात्मकत्वेन समानरूपाः, बह्वीः=नानाविधाः, प्रजाः=जनिमतीर्व्यक्तीः, सृजमानामेकोऽजोऽज्ञो जीवो जुषमाणः=सेवमानः, अनुशेते=तत्कार्य्यतादात्म्यापन्नो भवति। भुक्तभोगां=भुक्ता भोगा यया एतादृशीम्, एनामजाम्, अन्यो=विवेकख्यातिमान्, जहाति=तत्कार्य्यतादात्म्यापन्नो न भवतीत्यर्थः। असत्=सूक्ष्मम्, सत्=स्थूलम्, तमः=अज्ञानम्, अविद्यायामन्तरे वर्त्तमानाः=अविद्यानिरूपितसंबन्धवन्तः॥

**ततश्च तदुपहितं चैतन्यमीश्वरसाक्षि, तच्चानादि तदुपाधेर्मायाया अनादित्वात्। मायावच्छिन्नं चैतन्यं परमेश्वरः। मायाया विशेषणत्वे ईश्वरत्वमुपाधित्वे साक्षित्वमितीश्वरत्वसाक्षित्वयोर्भेदः, न तु धर्मिणोरीश्वरसाक्षिणोर्भेदः॥**

शि०म०—प्रकृतमीश्वरसाक्ष्येकत्वमुपसंहरति—ततश्चेति। उपाधिभूतमायाया एकत्वादित्यर्थः। न केवलमेकमीश्वरसाक्षि किंत्वनादि चेत्याह—तच्चेति। ईश्वरसाक्षिणः परमेश्वराद्भेदं दर्शयितुं तत्स्वरूपमाह मायेति। मायाविशिष्टं चैतन्यमीश्वर इत्यर्थः॥

म० प्र०—परममूले **ततश्चेति**। मायाया एकत्वस्य श्रुतिभिर्निश्चितत्वादेवेत्यर्थः। यथा लोके पाचकपाठकदेवदत्तस्य भेदो नास्ति किंत्वेकदेवदत्तनिष्ठपाचकत्वपाठकत्वयोर्भेदस्तद्वन्नेश्वरतत्साक्षिणोर्भेदोऽपित्वेकचैतन्यनिष्ठेश्वरत्वतत्साक्षित्वयोर्भेद इत्यभिप्रेत्याह—परममूले **मायाया विशेषणत्वे इति**। तत्स्वरूपं=परमेश्वरस्वरूपम्॥

**स च परमेश्वर एकोऽपि स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां भजते। ननु**

ईश्वरसाक्षिणोऽनादित्वे "तदैक्षत बहुस्यां प्रजायेयेति" इत्यादिना सृष्टिपूर्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते ॥

शि० म०–ननु मायाया एकत्वेन तद्विशिष्टस्य परमेश्वरस्यापि तथात्वाद्भेदेन ब्रह्मविष्णुमहेश्वरव्यपदेशानुपपत्तिरित्याशङ्क्य किं ब्रह्मविष्णुमहेश्वरत्वानां स्वरूपतोऽनुपपत्तिः परमार्थतो वा, नान्त्य इष्टत्वात्। नाद्य इत्याह–स चेति। ईश्वरचैतन्यमेवोद्भूतसत्त्वगुणमायावच्छिन्नं पालयितृ विष्णुरिति व्यपदिश्यते। तदेवाविर्भूतरजोगुणमायाक्रान्तं स्रष्टृ ब्रह्मेति गीयते। अतिरोहिततमोगुणमायावच्छिन्नं संहर्तृ चैतन्यं महेश्वरशब्दवाच्यतां भजते। "अथ यो ह खलु वावास्य राजसोंऽशोऽसौ सः योऽयं ब्रह्मा अथ यो ह खलु वावास्य तामसोंऽशोऽसौ सः योऽयं रुद्रोऽथ यो ह खलु वावास्य सात्त्विकोंऽशोऽसौ सः योऽयं विष्णुः।" इति मैत्रेयोपनिषदि तथैवावगतेः। तथा च ब्राह्मादीनां मायावच्छिन्नत्वलक्षणपरमेश्वरत्वेनाभेदेऽपि तत्तद्गुणविशिष्टमायाया भिन्नत्वाद्ब्रह्मत्वादीनां परस्परं भेदो युज्यते इति भावः। ईश्वरसाक्षिणोऽनादित्वे बाधकमाशङ्कते–नन्विति॥

म० प्र०–परममूले **स्वोपाधिभूतेति**=परमेश्वरशब्दवाच्यार्थविशेषणीभूतेत्यर्थः। तद्विशिष्टस्य=मायाविशिष्टस्य, तथात्वात्=एकत्वात्। **भेदेनेति**=भेदविशिष्टेत्यर्थः। स्वरूपतः=स्वरूपस्य, परमार्थतः=सत्यत्वेन, तदेव=ईश्वरचैतन्यमेव। **अथेति**। अत्राथशब्दः ब्रह्मा क इत्येवमादिप्रकारेण प्रश्नार्थकः, आनन्तर्यार्थको वा " मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ " इत्यमरकोशात्। ह प्रसिद्धम्। खल्विति वाक्यालङ्कारे। "निषेधवाक्यालङ्कारजिज्ञासानुनये खलु", इत्यमरकोशात्। उदाहरणानि तु निषेधे यथा–खलु रुदित्वा देहि। वाक्यालङ्कारे यथा–एतत्खल्वाहुः। जिज्ञासायां यथा–खलु जानासि। अनुनये यथा–देहि खलु वाचकमित्यादीनि। वावेति निश्चयार्थे। अस्य=चैतन्यस्य, राजसांशः=आविर्भूतरजोगुणमायाविशिष्टस्वरूपम्, एवमग्रेऽप्यव्ययानामर्थो बोध्यः। अस्य चैतन्यस्य, तामसांशः=आविर्भूततमोगुणमायाविशिष्टस्वरूपम्। अस्य=चैतन्यस्य, सात्विकांशः=आविर्भूतसत्त्वगुणमायाविशिष्टस्वरूपम्। तथैवावगतेः=ब्रह्मादीनामुक्तस्वरूपनिश्चयात्। तथा च=ब्रह्मादीनां परमेश्वरत्वे निश्चिते सति॥

उच्यते। यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते, तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतमायाया वृत्तिविशेषाः 'इदमिदानीं स्रष्टव्यमिदमिदानीं पालयितव्यमिदमिदानीं संहर्तव्यम्' इत्याकारा जायन्ते। तासां च वृत्तीनां सादित्वात्तत्प्रतिबिम्बितचैतन्यमपि सादीत्युच्यते। एवं साक्षिद्वैविध्येन

**प्रत्यक्षज्ञानद्वैविध्यम्। प्रत्यक्षत्वं च ज्ञेयगतं ज्ञप्तिगतं च निरूपितं तत्र ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वमेव। पर्वतो वह्निमानित्यादावपि वह्न्याद्याकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वात्। तत्तद्विषयांशे प्रत्यक्षत्वं तु पूर्वोक्तमेव॥**

**शि० म०**—साक्षिणः स्वरूपेणानादित्वेऽपि सादिमायावृत्तिविशिष्टतया सादित्वमुपपद्यत इत्याह—**उच्यते इति**। एवं साक्षिद्वैविध्यनिरूपणाज्जीवेश्वरसाक्षिजन्यभेदेन प्रत्यक्षज्ञानस्य द्वैविध्यं सिद्धमित्याह—**एवमिति**। नन्वेवमपि शुक्तिरूप्यादिभ्रमे प्रत्यक्षलणस्यातिव्याप्तिरिति चेन्न तावद्विषयप्रत्यक्षलक्षणस्य तद्विषयेऽतिव्याप्तिः, तस्य केवलसाक्षिवेद्यत्वाभ्युपगमात् नापि ज्ञप्तिप्रत्यक्षप्रमालक्षणस्य तत्रातिप्रसङ्गः, भ्रमस्यापि स्वांशे प्रत्यक्षप्रमाणतया सामान्यलक्षणस्य लक्ष्यत्वादतो विशेषलक्षणस्यैव सा वाच्या, साऽपि न संभवतीति वृत्तानुवादपुरःसरमाह—**प्रत्यक्षत्वं चेति**॥

**म० प्र०**—परममूले **जीवोपाध्यन्तःकरणस्येति**। जीवशब्दवाच्यविशेषणान्तःकरणस्येत्यर्थः। परममूले=**उपाधिभूतेति**—विशेषणीभूतेत्यर्थः। एवमपि=साक्षिद्वैविध्येन द्विविधसाक्षिजन्यप्रत्यक्षज्ञानस्य द्वैविध्येऽपि। भ्रमे इति=भ्रमे तद्विषये चेत्यर्थः। प्रत्यक्षलक्षणस्य=प्रत्यक्षलक्षणत्वावच्छिन्नप्रत्यक्षलक्षणस्य, अतिव्याप्तिः=प्रत्यक्षप्रमातद्विषययोर्निरूपणाय प्रत्यक्षप्रमातद्विषययोरेव लक्षणीयत्वेन भ्रमतद्विषययोरलक्ष्यत्वादतिव्याप्तिः, विषयप्रत्यक्षलक्षणस्य=प्रमातृचैतन्याभिन्नत्वे सति योग्यत्वरूपस्य, तद्विषये=भ्रमविषये, तस्य=भ्रमविषयस्य। **अभ्युपगमादिति**। भ्रमविषयस्य साक्षिरूपप्रमातृवेद्यत्वसत्त्वेन प्रमातृसत्तातिरिक्तसत्ताकत्वाभावसत्त्वाल्लक्ष्यत्वमेवेति भावः। ज्ञप्तिप्रत्यक्षप्रमाणलक्षणस्य=चेतनरूपा या प्रत्यक्षप्रमा विषयानिरूपितप्रत्यक्षज्ञानं तल्लक्षणस्य चित्त्वरूपस्य, तत्र=भ्रमे, भ्रमस्य—साक्षिरूपभ्रमस्य, स्वांशे=चेतनांशे, प्रत्यक्षप्रमाणतया=प्रत्यक्षज्ञानतया, विशेषलक्षणस्यैव=तत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्यतरयोग्यतत्तत्साक्षिजन्यतत्तदाकारवृत्त्युपहितविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तत्साक्षिजन्यतत्तदाकारवृत्त्यवच्छिन्नचैतन्यस्य तत्तद्विषयांशे प्रत्यक्षत्वमिति विशेषलक्षणस्य, सा=अतिव्याप्तिः। परममूले **ज्ञेयगतमिति**। प्रमातृचैतन्याभिन्नत्वे सति योग्यत्वरूपं ज्ञेयगतं प्रत्यक्षत्वं प्रत्यक्षत्वादिप्रयोजकं ज्ञप्तिगतं च द्विविधं ज्ञप्तिगतप्रत्यक्षत्वादिप्रयोजकं च निरूपितमित्यर्थः। ज्ञानगतोक्तद्विविधप्रत्यक्षत्वादिप्रयोजकमनुवदति—**तत्रेति**। ज्ञेयगतज्ञप्तिगतप्रत्यक्षत्वादिप्रयोजकयोर्मध्ये इत्यर्थः॥

**तस्य च भ्रान्तिरूपप्रत्यक्षे नातिव्याप्तिः, भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनेन तस्यापि लक्ष्यत्वात्। यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यं तदा पूर्वोक्तलक्षणेऽबाधितत्वं विषयविशेषणं ज्ञेयम्। शुक्तिरूप्यादिभ्रमस्य संसारकालिकबाधविषयप्रातिभासिकरजतादिविषयकत्वेनोक्तलक्षणाभावान्नातिव्याप्तिः॥**

शि०म०–किं तत्तद्विषयांशे प्रत्यक्षत्वप्रयोजकस्य शुक्तिरूप्यादिभ्रमेऽतिव्याप्तिरभिप्रेता, उत तत्तद्विषयांशे प्रत्यक्षप्रमात्वप्रयोजकस्य, तत्राद्यं निराकरोति–**तस्य चेति**। द्वितीयं निरस्यति–**यदा त्विति**। प्रत्यक्षप्रमाणनिरूपणाय तत्प्रमाया एव लक्षणीयत्वादिति भावः। ननु पारमार्थिकत्वस्य पटादावप्यभावेन तद्घटितलक्षणस्य तत्प्रमायामव्याप्तिः। सत्त्वलक्षणाबाधितत्वस्य प्रातिभासिकेऽपि सत्त्वेनातिव्याप्तितादवस्थ्यमित्याशङ्क्य संसारकालिकबाधाविषयत्वस्याबाधितपदेन विवक्षितत्वात्तस्य च तत्राभावान्नातिव्याप्तिरित्याह–**शुक्तिरूप्यादिभ्रमस्येति**॥

म० प्र०–प्रत्यक्षत्वप्रयोजकस्य=तत्तदिन्द्रियेत्यादेर्ज्ञाननिष्ठप्रत्यक्षत्वतत्प्रकारकव्यवहारप्रयोजकस्य, प्रत्यक्षप्रमात्वप्रयोजकस्य=तत्तदिन्द्रियेत्यादेरेव ज्ञाननिष्ठप्रत्यक्षप्रमात्वतत्प्रकारकव्यवहारप्रयोजकस्य, तत्र=द्वयोर्मध्ये। विषयनिष्ठं किं पारमार्थिकत्वरूपमबाधितत्वम्, किं सत्त्वरूपं वा अबाधितत्वमिति विषयनिष्ठाबाधितत्वे संदिहानः शङ्कते–**नन्विति**। पारमार्थिकत्वस्य=अबाधितत्वरूपपारमार्थिकत्वस्य–**तद्घटितेति**=अबाधितत्वघटितेत्यर्थः। तत्प्रमायां=पटादिप्रमायाम्, तस्य च=संसारकालिकाबाधितार्थविषयकत्वस्य, तत्र=भ्रमे॥

**ननु विसंवादिप्रवृत्त्या भ्रान्तिज्ञानसिद्धावपि॥**

शि०म०–भ्रान्तिज्ञानस्यानिर्वचनीयरजतादिविषयत्वमुपश्रुत्य तदसहमानोऽन्यथाख्यातिवादी नैयायिकः प्रत्यवतिष्ठते–**नन्विति**। ननु भ्रान्तिज्ञानमेवासिद्धम्, सर्वज्ञानानां यथार्थत्वात्। तथा हि। विप्रतिपन्नाः सर्वेऽपि प्रत्यया यथार्थाः प्रत्ययत्वात् घटादिप्रत्ययवत्। न चायथार्थज्ञानानभ्युपगमे विसंवादिप्रवृत्त्यनुपपत्तिः, इष्टभेदाग्रहादेव तदुपपत्तेः। ननु न भेदाग्रहमात्रात्प्रवृत्तिः चेतनव्यवहारस्य ज्ञानपूर्वकत्वात्। अन्यथा सुषुप्त्यादावपि तदापत्तेः। नाप्युपस्थिते पुरोवर्तिनीष्टानुपस्थितावपि तत्प्रसङ्गात्॥

म० प्र०–प्रत्यवतिष्ठते=पूर्वपक्षं करोति। **विप्रतिपन्ना इति**। विवादगोचरीभूता इत्यर्थः। अयं घट इत्यादियथार्थज्ञानेषु सिद्धसाधनतावारणाय **विप्रतिपन्ना** इत्युक्तम्। **विसंवादीति**=निष्फलेत्यर्थः। इष्टभेदाग्रहात=इष्टप्रतियोगिकभेदज्ञानाभावात्। तदुपपत्तेः=निष्फलप्रवृत्त्युपपत्तेः। भेदाग्रहमात्रात्=इष्टप्रतियोगिकभेदज्ञानाभावादेव। अन्यथा=इष्टप्रतियोगिकभेदज्ञानाभावस्यैव प्रवृत्तिहेतुत्वे, तदापत्तेः=प्रवृत्त्यापत्तेः। **उपस्थिते इति**। ज्ञातपुरोवर्तिनीष्टप्रतियोगिकभेदज्ञानाभावः कारणम्। तथा च सुषुप्त्यादौ पुरोवर्तिनोऽनुपस्थितत्वान्न प्रवृत्तिरित्यर्थः। तत्प्रसङ्गात्=प्रवृत्तिप्रसङ्गात्॥

शि० म०–न चोपस्थितत्वमुभयविशेषणम्। पुरोवर्त्तीष्टज्ञानयोर्भेदग्रहेऽपि तत्र तदग्रहसत्त्वात्। तस्मादभेदज्ञानमेव प्रवर्तकमित्यकामेनाप्यभ्युपेयमिति चेन्न। उपस्थिते पुरोवर्तिनि उपस्थितेष्टभेदाग्रहस्य ज्ञानभेदाग्रहसहितस्य प्रवर्त्तकत्वात्।

न च भेदग्रहाभावापेक्षया लाघवेन भावस्यैवाभेदग्रहस्य प्रवर्त्तकत्वमिति युक्तम्। भूतलादेः स्वरूपेण भावस्यैव रूपान्तरेणाभावत्वाभ्युपगमेनातिरिक्ताभावासिद्धेः। यथाऽऽहुः 'भावान्तरमभावो हि कयाचित्तु व्यपेक्षया' इति। अस्तु वाऽतिरिक्ताभावस्तथाऽपि न लाघवम्, सत्यस्थल एव तद्धेतोरेवेति न्यायेनावश्यकभेदाग्रहस्यैव प्रवृत्तिहेतुत्वेन क्लृप्तत्वात्॥

म० प्र०–उभयविशेषणम्=इष्टपुरोवर्त्युभयविशेषणम्। तथा चोपस्थितपुरोवर्तिन्युपस्थितेष्टप्रतियोगिकभेदज्ञानाभावः कारणम्। इष्टानुपस्थितिकाले तूपस्थितेष्टप्रतियोगिकभेदज्ञानाभावाभावान्न प्रवृत्तिरित्यर्थः। **पुरोवर्त्तीष्टज्ञानयोरिति**। एतत्पाठस्थाने द्वन्द्वेऽल्पाच्कस्य पूर्वप्रयोगार्हत्वेनेष्टपुरोवर्तिज्ञानयोरिति पाठः साधुः। तथा चेष्टज्ञानमिदं रजतमिति ज्ञानं पुरोवर्तिज्ञानमियं शुक्तिरिति ज्ञानं तयो रजतज्ञानं न शुक्तिज्ञानमिति भेदज्ञानेऽपि तत्र=पुरोवर्त्तिपदार्थे, दोषवशेनेयं शुक्तिरिदं रजतं नेतीष्टप्रतियोगिकभेदज्ञानाभावसत्त्वात्प्रवृत्तिः स्यात्। प्रवृत्तिस्तु नैव भवत्यतोऽभेदज्ञानमेव रजततादात्म्यापन्नपुरोवार्त्तिज्ञानमेव प्रवर्त्तकमित्यर्थः। स्वरूपेण=भूतलत्वेन रूपेण, रूपान्तरेण=अभावस्याधिकरणस्वरूपत्वेन भूतलादेर्घटादिप्रतियोगिकत्वाभिन्नरूपान्तरेण घटाभाववद्भूतलमिति ज्ञाने घटाभावविशेषितत्वेन रूपान्तरेण वा घटादिविनिर्मुक्तत्वेन रूपान्तरेण वा। अत एव नहि भूतलस्य परिणामविशेषात्कैवल्यलक्षणादन्यो घटाभावो विद्यते इति वृद्धोक्तिरपि संगच्छते। इति भावान्तरम्=घटाद्यपेक्षया भूतलादिरूपं पदार्थान्तरम्, घटविशिष्टभूतलापेक्षया केवलभूतलादिरूपभावान्तरं वा। कयाचित्तु व्यपेक्षया=विशेषाकाङ्क्षयाऽभावस्थलीयाकाङ्क्षया सप्रतियोगिकत्वाकाङ्क्षयेति यावत्। व्यपेक्षयेत्युक्ते हि पुरुष इत्यत्र कस्य पुरुष इत्याकाङ्क्षासत्त्वात्पुरुषस्याभावत्वापत्तिरूपो दोषः स्यात्, पुरुषे व्यभिचाररूपो वा दोषः स्यात्, अतो विशेषार्थकं **कयाचिदित्युक्तमिति**। तथापि=भूतलाद्यधिकरणातिरिक्ताभावस्वीकारेऽपि, न लाघवम्=लघुरेव लाघवमिति व्युपत्त्याऽभावापेक्षया लघुभूतमभेदज्ञानं प्रवृत्तिकारणम्, न सत्यस्थले एव=व्यावहारिकरजतादिविषयेऽपि, तद्धेतोरेवेति न्यायेन=तद्धेतोरेव हेतुत्वमस्तु किं तेनेति न्यायेन। तद्धेतोर्विषययोस्तज्ज्ञानयोश्च भेदग्रहो विषययोस्तज्ज्ञानयोश्चाभेदज्ञाने प्रवृत्तिकारणे प्रतिबन्धकः अतस्तदभावो विषययोस्तज्ज्ञानयोश्चाभेदज्ञाने प्रवृत्तिकारणे कारणमिति प्रतिबन्धकाभावत्वेन विषययोस्तज्ज्ञानयोश्च प्रवृत्तिकारणाभेदज्ञानहेतोर्विषययोस्तज्ज्ञानयोश्च भेदज्ञानाभावस्यैव प्रवृत्तिहेतुत्वमस्तु, तेन विषययोरभेदज्ञानरूपविशिष्टज्ञानेन किं फलमिति न्यायवाक्यार्थः, क्लृप्तत्वात्=निश्चितत्वात्॥

शि० म०–प्रत्युत प्रवृत्त्यर्थमसत्यस्थलेऽपि अतिरिक्तविशिष्टज्ञानं कल्पनीयमित्यभेदग्रहहेतुतायामेव गौरवम्। यद्वा स्वरूपतो विषयतश्चागृहीतभेदग्रहणस्मरणात्मकं ज्ञानद्वयमेव प्रवर्त्तकम्। न च ग्रहणस्मरणात्मकज्ञानद्वयाभ्युपगतौ इदं साक्षात्करोमि रजतं स्मरामीति स्वार्थविवेचकानुव्यवसायापत्तिः। शुक्तित्वाग्रह-

**वद्दोषेण तस्य प्रतिबन्धात्, अत एव न तत्तोल्लेखः, दोषेणैव तत्तायाः प्रमुष्टत्वात्। न च पीतः शङ्खस्तिक्तो गुड इत्यादावनुभूयमानारोपस्थले इष्टानिष्टस्मरणाभावात् कथं प्रवृत्तिनिवृत्ती इति वाच्यम्। तत्रापि पीतत्वतिक्तत्वादीनां स्मरणस्यैव कल्पनात्॥**

म० प्र०—प्रवृत्तित्वावच्छिन्नप्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वस्वीकारे लाघवं नास्तीत्यभिप्रेत्याह—**प्रत्युतेति**। प्रत्युताभेदग्रहहेतुतायामेव गौरवमित्यन्वयः। असत्यस्थलेऽपि=मिथ्याविषये रजतादावपि। **अतिरिक्तेति**=इष्टप्रतियोगिकभेदज्ञानाभावातिरिक्तेत्यर्थः। **गौरवमिति**। येन वादिना प्रवृत्तिं प्रत्यभेदज्ञानस्य हेतुत्वं स्वीक्रियते तेनापि विषययोस्तज्ज्ञानयोश्चाभेदज्ञाने विषयतज्ज्ञानभेदज्ञानस्य प्रतिबन्धकत्वेन तदभावस्य प्रवृत्तिकारणविषयतज्ज्ञानाभेदज्ञानाकारणत्वं प्रतिबन्धकाभावत्वेन स्वीकरणीयमिति प्रवृत्तिं प्रति विशिष्टज्ञानविषयतज्ज्ञानभेदज्ञानाभावरूपकारणद्वयकल्पना, असत्यस्थले इष्टस्याभावेन भ्रमात्मकेष्टसाधनताज्ञानमिदं रजतमिति ज्ञानं च कल्पनीयमिति गौरवम्। मन्मते तु सत्यासत्यविषये एकभेदज्ञानाभावस्यैव प्रवृत्तिहेतुत्वेन लाघवमिति भावः। ननु फलमुखगौरवं न दोषावहमित्याशङ्क्य फलमुखगौरवस्य दोषावहत्वे भावस्वरूपज्ञानद्वयस्यैव प्रवृत्तिं प्रति कारणत्वं स्वीकरणीयमित्यभिप्रेत्याह—**यद्वेति**। इदं रजतमित्यत्रेदमित्यनुभवात्मकं रजतमिति स्मरणात्मकमिति स्वरूपत इदमिति ज्ञानस्य पुरोवर्तिविषयो रजतमिति ज्ञानस्य विषयो रजतमिति विषयतश्च न गृहीतो भेदो यस्य ज्ञानद्वयस्य तदगृहीतभेदं ग्रहणं च स्मरणं च ग्रहणस्मरणे ते आत्मानौ यस्य ज्ञानद्वयस्य तद्ग्रहणस्मरणात्मकमगृहीतभेदं च तद्ग्रहणस्मरणात्मकं च तत्तथेत्यर्थः। **स्वार्थविवेचकेति**। स्मरणानुभवविषयं भिन्नत्वेनावगाहमानेत्यर्थः। **शुक्तित्वाग्रहवदिति**। यथा शुक्त्या सह चक्षुःसन्निकर्षसत्त्वेऽपि दूरत्वादिदोषाच्छुक्तित्वग्रहो न भवति तथाऽनुव्यवसायस्यापि प्रमातृगतलोभादिदोषेण प्रतिबन्धान्नोक्तानुव्यवसायापत्तिरित्यर्थः। अत एव=वक्ष्यमाणहेतोरेव, न तत्तोल्लेखः=रजतमिति स्मृतौ तदिदं रजतमिति तत्तोल्लेखो न। तत्तायाः=तत्ताविषयकत्वस्य, प्रमुष्टत्वात्=नष्टत्वात्, तिक्तः=कटुः। **इत्यादाविति**। पीतः शङ्ख इत्यादिभ्रमात्पूर्वं नयनरश्मिद्वारा शङ्खादौ प्राप्तपीतद्रव्यादावनुभूयमानस्य पीतगुणादेर्य आरोपो भ्रान्तिस्तदात्मके पीतः शङ्ख इत्यादिज्ञाने सतीत्यर्थः। पीतः शङ्खः इत्याद्यभिन्नो योऽनुभूयमानस्यारोपस्तद्विषयकशङ्खादावित्यर्थो वा। इष्टानिष्टस्मरणाभावात्=पीततिक्तगुणयोः स्मरणाभावात्। तत्रापि=शङ्खादावपि॥

**शि० म०—तदुक्तं माषराशिस्थमषिविषये माषार्थिप्रवृत्तिर्मषिनीलिमस्मारितमाषभेदाग्रहादनुभूयमानारोपः सिद्ध एवेति। अथवा अगृहीतभेदं ज्ञानद्वयं प्रवर्तकमिदं चानुभूयमानारोपस्थले इष्टपुरोवर्त्तिनोर्ग्रहणाभ्युपगमेऽप्यस्तीति न प्रवृत्त्याद्यनुपपत्तिः। यद्वा अगृहीतेष्टभेदपुरोवर्त्तिविषयागृहीतेष्टज्ञानभेदज्ञानं प्रवर्त्तकम्।**

अयं च भेदाग्रहः क्वचिद्विद्यमानेऽपि भेदे दोषवशेन तदग्रहात् । क्वचित्तदभावात्तथा च सत्यस्थले ज्ञानद्वयाभावेऽपि न प्रवृत्त्यनुपपत्तिः । ननु विवादाध्यासितं पुरोवर्त्तिज्ञानं रजतत्वप्रकारकं तत्प्रकारकप्रवृत्तिजनकत्वात्, उभयसिद्धसमीचीनरजतज्ञानवदित्यनुमानात्पुरोवर्तिनि रजतत्वसिद्धौ तस्य च बाधदर्शनेन मिथ्यात्वावगमात्तज्ज्ञानविषयं यथार्थत्वानुमानं बाधितमिति चेन्न ॥

म० प्र०—मषिविषये=मष्यभिन्नपदार्थे । **स्मारितमाषेति**—स्मृतिविषयाभिन्नमाषेत्यर्थः । अनुभूयमानारोपः=शङ्खादौ पीतः शङ्ख इत्यादिभ्रमात्पूर्वमनुभूयमानस्य पीतगुणादेर्भ्रान्त्यात्मकः प्रत्ययः । ननु नयनरश्मिद्वारा शङ्खादौ प्राप्तपीतद्रव्यादावनुभूयमानपीतगुणादेर्योऽनुभवात्मक आरोपस्तद्विषययोः पीततिक्तगुणयोः स्मरणकल्पनं नैयायिकादिमतविरुद्धमित्याशङ्क्याह— **अथवेति** । अगृहीतभेदं=स्वरूपतो विषयतश्च भेदज्ञानाभाववत् । ज्ञानद्वयम्=पुरोवर्तिज्ञानमिष्टज्ञानं च । **अनुभूयमानारोपस्थले इति** । अनुभूयमानपीतत्वादिगुणस्य भ्रान्तिज्ञानविषयेऽनुभूयमानपीतत्वादिगुणस्य भ्रान्तिकाले वेत्यर्थः । ग्रहणाभ्युपगमे=अनुभवस्वीकारे । न च पीतः शङ्ख इत्यादिपीतगुणादिविषयकानुभवस्वीकारे पीतगुणादिविषयस्य शङ्खादावभावात्तस्य भ्रमत्वं स्यादिति वाच्यम् । अन्यत्र स्थितस्यैव पीतगुणादेर्दोषादत्र भानात् । न च शङ्खादौ प्रवृत्तिनिवृत्ती न स्यातामिति वाच्यम्, इष्टानिष्टभेदाग्रहात्प्रवृत्तिसंभवादिति । ननु ज्ञानद्वयस्य प्रवर्त्तकत्वे तव मते गौरवं स्याद्व्यावहारिकरजतादिविषये ज्ञानद्वयाभावेन प्रवृत्तिश्च न स्यादित्यरुच्याऽऽह—**यद्वेति** । इष्टस्य रजतादेर्भेद इष्टभेदो न गृहीत इष्टभेदो येन ज्ञानेन तदगृहीतेष्टभेदं पुरोवर्ती विषयो यस्य ज्ञानस्य तत्पुरोवर्तिविषयमगृहीतेष्टभेदं च तत्पुरोवर्तिविषयं च तत्तथा । इष्टस्य ज्ञानमिष्टज्ञानमिष्टज्ञानस्य भेद इष्टज्ञानभेदो न गृहीत इष्टज्ञानभेदो येन ज्ञानेन तदगृहीतेष्टज्ञानभेदमगृहीतेष्टभेदपुरोवर्तिविषयं च तदगृहीतेष्टज्ञानभेदं च तत्तथाऽगृहीतेष्टभेदपुरोवर्तिविषयागृहीतेष्टज्ञानभेदं च तज्ज्ञानं च तत्तथेति विग्रहः । यद्वा न गृहीत इष्टभेदो यस्मिन्पुरोवर्तिपदार्थे स तथाऽगृहीतेष्टभेदः पुरोवर्त्ती विषयो यस्य ज्ञानस्येति पूर्वदलस्य विग्रहः । अयं च भेदाग्रहः=प्रवर्तकज्ञानशरीरघटकभेदाग्रहश्च । क्वचित्=मिथ्याभूतरजतादौ, तदग्रहात्=भेदज्ञानप्रतिबन्धात्, क्वचित्=व्यावहारिकरजतादौ, तदभावात्=इष्टरजतभेदाभावात् । अस्यायं च भेदाग्रह इत्यनेनान्वयः । तथा च=अगृहीतेष्टभेदेत्यादिवाक्योक्तज्ञानस्य प्रवृत्तिकारणत्वे स्वीकृते सति, सत्यस्थले=व्यावहारिकविषये, पुरोवर्तिज्ञानम्=इदं रजतमित्यादिज्ञानम्, तत्प्रकारकप्रवृत्तिजनकत्वात्=रजतत्वप्रकारकप्रवृत्तिजनकत्वात् । सिद्धौ=निश्चये, तस्य=पुरोवर्तिज्ञातरजतत्वस्य, तज्ज्ञानविषयम्=रजतज्ञानविषयकम्, अनुमानम्=विप्रतिपन्नाः सर्वे प्रत्यया यथार्थाः प्रत्ययत्वात् घटादिप्रत्ययवदित्यनुमानम् ॥

शि० म०—अनुकूलतर्काभावात्, विपक्षे बाधकाभावाच्च । न च प्रवृत्त्यनुपपत्तिर्बाधिका, अन्यथैव तस्या उपपादितत्वात्, किंच रजतज्ञानं न शुक्तिविषयम्, अन्याकारज्ञानस्यान्यविषयत्वेऽनुभवविरोधात् । ननु रजतज्ञानं शुक्तिविषयमेव तद्गोचरव्यवहारजनकत्वात् शुक्तिज्ञानवत् । न चानुभवविरोधः, इदं रजत-

त्वेन जानामीति रजतज्ञानविषयत्वस्यैवानुभवादिति चेन्न। आरोप्यानिरूपणेन तदभेद-विषयपुरोवर्त्तिज्ञानस्यैवासिद्धेः। तथा हि शुक्तौ विषये इदमात्मनाऽवभासमानं रजतं किम-सदुत सत्, नाद्यः अपरोक्षाभासानुपपत्तेः। न ह्यसदिन्द्रियसन्निकृष्टं संविदभिन्नं वा। ननु विषयस्य समस्तसामर्थ्यविरहेऽपि पूर्वविज्ञानसामर्थ्यादुपजातं विज्ञानमेवासतः प्रकाशः तस्यैष स्वभावः यदसत्प्रकाशयतीति। अत एवाहुः असत्प्रकाशनशक्तिरेवास्या-विद्येति। अत एव चानुभवः असदेवेदं रजतमभावादिति। अन्यथा सत्ख्याति-वादिमतेऽपि विभ्रमे पुरोवर्तिसंसर्गस्य शून्यतयाऽनवभासापत्तेः। तस्मादसदेवाध्यास-विषय इति चेन्न। शक्याभावेन शक्तेरेवानुपपत्तेः असदेवास्याः शक्यमिति चेत् किमेतत्तु कार्य्यमुत ज्ञाप्यम्, न तावत्कार्य्यम् ॥

**म० प्र०—अनुकूलतर्काभावादिति**। पक्षे तत्प्रकारकप्रवृत्तिजनकत्वमस्तु रजतत्व-प्रकारकत्वं माऽस्तु इति व्याप्तिसंशयनिवर्तकतर्काभावात्। न च यदि पक्षे तत्प्रकारकत्वं न स्या-त्तर्हि तत्प्रकारकप्रवृत्तिजनकत्वमपि न स्यादित्यनुकूलतर्कोऽस्तीति वाच्यम्, भेदाग्रहादेव तत्प्रकारक-प्रवृत्तिसंभवेन व्यभिचाराभावसहकृताभावसहचारज्ञानाभावेनानुकूलतर्कानुदयादित्यर्थः। विपक्षे= पक्षवृत्तिसाध्याभावे। अन्यथैव=इष्टभेदाग्रहादिनैव। तस्याः=पुरोवर्तिपदार्थविषयकप्रवृत्तेः। अन्या-कारज्ञानस्य रजतत्वादिप्रकारकज्ञानस्य, अन्यविषयत्वे=शुक्त्यादिविषयकत्वे, अनुभवविरोधात्=रज-तत्वादिप्रकारकं ज्ञानं न शुक्त्यादिविषयकमित्यनुभवविरोधात्, तद्गोचरव्यवहारजनकत्वात्=शुक्ति-गोचरप्रवृत्त्यादिव्यवहारकारणत्वात्, इदं=पुरोवर्ति वस्तु। **रजतेति**। शुक्तौ रजतज्ञानविषय-त्वस्येत्यर्थः। **तदभेदेति**। आरोप्यरजतादेः पुरोवर्तिपदार्थे योऽभेदः स विषयो यस्मिन् ज्ञाने एतादृशं यत्पुरोवर्तिज्ञानं तस्यैवासिद्धिरित्यर्थः। पूर्वविज्ञानसामर्थ्यात्=पूर्वविज्ञानस्य पुरोवर्तिसामान्यांश-विज्ञानस्य व्यावहारिकरजतादिविज्ञानस्य वा शक्तेः। विज्ञानम्=इदं रजतमित्यादिज्ञानम्। प्रकाशः=ज्ञानम्, तस्य=विज्ञानस्य, स्वभावः=असाधारणो धर्मः, अस्य=प्रकाशनशक्तिरेवाविद्येत्य-न्वयः। प्रकाशनशक्तिः=मिथ्यारजतादिविषयकव्यवहारजननानुकूला शक्तिः। अस्य=विज्ञानस्य। अत एव=विज्ञानस्यासत्प्रकाशनशक्तिकत्वादेव। अन्यथा=विज्ञानस्यासत्प्रकाशनशक्तिकत्वानङ्गी-कारे, सत्ख्यातिवादिमते=नैयायिकमते, संसर्गस्य=आरोप्यसंसर्गस्य, शून्यतया=असत्त्वेन, अनव-भासापत्तेः=अविषयत्वापत्तेः। तस्मात्=विज्ञानस्यासत्प्रकाशनसामर्थ्यात्, अध्यासविषयः=ज्ञान-विषयः। **शक्येति**=ज्ञाननिष्ठशक्तिविषयेत्यर्थः। शक्तेः=ज्ञाननिष्ठशक्तेः, अस्याः=ज्ञाननिष्ठासत्प्र-काशनशक्तेः। एतत्=असद्रजतादिकम्, कार्य्यं=ज्ञाननिष्ठशक्तिजन्यम्, ज्ञाप्यं=ज्ञाननिष्ठशक्तिजन्य-ज्ञानविषयः ॥

**शि० म०—असतस्तत्त्वानुपपत्तेः**। द्वितीयेऽपि किं ज्ञानान्तरद्वारा विज्ञान-मसत्प्रकाशयति उत विज्ञानमेव तत्प्रकाशः। नाद्यः, ज्ञानान्तरानुपलब्धेरनवस्था-पाताच्च। न द्वितीयः, सदसतोः संबन्धानिरूपणात्, न ह्यसंबद्धं वस्तु विज्ञानानि शतमपि प्रकाशयन्तीति असदधीननिरूपणत्वम्। सतो विज्ञानस्यासता विषयेण

संबन्ध इति चेत्, न, असतो निरूपकत्वायोगात्। नापि स्वभावः संबन्धः, सन्मात्रनिष्ठस्य कार्य्यकारणभावस्याविनाभावस्य वा स्वभावस्य सदसतोरयोगात्। तस्मान्नाध्यस्तमसत्। सत्त्वपक्षेऽपि तद्रजतं किमान्तरमुत बाह्यम्। नाद्यः, तस्य ज्ञानाभिन्नत्वे प्रमाणाभावात्। सुखादिवत्केवलसाक्षिवेद्यत्वलक्षणस्य चान्तरत्वस्य विज्ञानवादिभिर्योगाचार्यैरभ्युपगमात्। ननु रजतादिकं ज्ञानाभिन्नम् इन्द्रियसंप्रयोगमन्तरेणापरोक्षत्वात् संवेदनवत्। न च विशेषणासिद्धिः, इन्द्रियेण सह संयोगस्याभावात्। ज्ञानस्य च प्रत्यासत्तेरनभ्युपगमादिति चेत् न, तस्य ज्ञानाभिन्नत्वे रजतं जानामीति भेदानुभवविरोधात्, प्रतिपत्तुः प्रत्ययादनतिरेकेणाहं रजतमिति प्रतिभासापत्तेः। अनुभवः प्रमाणमिति चेत्, किमिदं रजतमिति प्रत्ययो रजतस्यान्तरत्वे प्रमाणं बाधकप्रत्ययो वा अर्थापत्तिर्वा। न तावदाद्यः, तस्यान्तरत्वे अप्रमाणत्वात्। इदं रजतमितीदन्त्वरजतत्वसामानाधिकरण्यविषयत्वेन तत्रैव प्रमाणत्वाच्च। अत एव न द्वितीयः, न हि बाधकज्ञानं रजतस्य ज्ञानाकारतामवगाहते। किन्तु पुरोवर्तिद्रव्ये रजतभेदम्॥

म० प्र०—तत्त्वानुपपत्तेः=कार्य्यत्वानुपपत्तेः। ज्ञानान्तरद्वारा=ज्ञाननिष्ठशक्तिजन्यज्ञानद्वारा। तत्प्रकाशः=असद्विषयकव्यवहारजनकम्। ननु सदसतोः संबन्धाभावेऽपि ज्ञानमसद्विषयकव्यवहारं जनयत्वित्याशङ्क्याह—**न हीति**। असंबद्धम्=ज्ञानासंबद्धम्, प्रकाशयन्ति=व्यवहारं जनयन्ति। असदधीननिरूपणत्वम्=कस्य ज्ञानमिति प्रश्ने असतो ज्ञानमित्यसदधीननिरूपणकत्वमेवासता सह ज्ञानस्य संबन्धो निरूप्यनिरूपकाभावः संबन्ध इति यावत्। स्वभावः=ज्ञानगतविजातीयकारणतादिरूपासाधारणधर्मः। तस्मात्=ज्ञानासतोः संबन्धाभावात्। **नाध्यस्तमसदिति**। असद्रजतादिकं ज्ञानविषयो नेत्यर्थः। तस्य=रजतस्य विशेषणासिद्धिः=रजतस्य रूपादिमत्त्वेनेन्द्रिययोग्यत्वादिन्द्रियसंप्रयोगमन्तरेणेति विशेषणस्य पक्षेऽभावः, संयोगस्याभावात्=रजतस्यान्तरविज्ञानरूपत्वेन संयोगाभावात्। ननु रजतेन सहेन्द्रियस्य ज्ञानलक्षणप्रत्यासत्तिरस्तीत्याशङ्क्याह—**ज्ञानस्येति**। ज्ञानाभिन्नप्रत्यासत्तेरित्यर्थः। तस्य=रजतस्य, रजतनिष्ठज्ञानस्वरूपत्वस्वीकारे दूषणान्तरमाह—**प्रतिपत्तुरिति**। प्रमाणं=रजतनिष्ठान्तरत्वविषयकावरणनिवर्त्तकः। बाधकप्रत्ययः=नेदं रजतमिति प्रत्ययः, तस्य=इदं रजतमिति प्रत्ययस्य, आन्तरत्वे=रजतनिष्ठान्तरत्वे, अप्रमाणत्वात्=आवरणनिवर्त्तकत्वाभावात्। तत्रैव=इदन्त्वरजतत्वयोरेकाधिकरणवृत्तित्वे एव, प्रमाणत्वात्=आवरणनिवर्त्तकत्वात्। अत एव=नहीत्यादिना वक्ष्यमाणहेतोरेव॥

शि० म०—न तृतीयः, बाधकप्रत्ययस्य रजतभेदतद्धर्मात्यन्ताभावविषयत्वेन अर्थापत्त्यनवकाशात्। इदन्त्वप्रतिषेधे हि बाधितं बाह्यरजतमान्तर एव ज्ञाने व्यवतिष्ठत इत्यर्थापत्तिः स्यात्, न। इदन्त्वेन प्रतिषिद्धस्य रजतस्य देशान्तरसत्त्वेनाप्युपपत्तेः। किंच ज्ञानस्य रजताकारत्वं स्वाभाविकं हेत्वन्तराधीनं वा। नाद्यः, सर्वज्ञानानां रजताकारत्वप्रसङ्गात्। न द्वितीयः, विज्ञानमात्रवादात्। किंच न तावद्रजतमान्तरं-

बाह्ये शुक्तिशकलादावध्यस्यते। विज्ञानवादिमते बाह्यस्यालीकत्वेन तत्राध्यासायोगात्। नन्वान्तरे रजते बहिष्ट्वारोपः। अत एव बाधोऽपि तन्मात्रविषयः, लाघवात्। न तु रजतविषयः, तथा सति रजतस्य तद्धर्मस्य चेदन्ताया बोध इति गौरवप्रसङ्गादिति चेत्न, रजतस्यापि बाधितत्वेन तत्र बहिष्ट्वाध्यासायोगात्, बाधस्य च नेदं रजतमिति विशिष्टरजतविषयस्यानुभवसिद्धत्वेन तत्कल्पनाभावात्। अत एव नेदं रजतं किंतु शुक्तिरिति बाह्याधिष्ठानावधिको बाधः। अन्यथा रजतमिदं न किंत्वान्तरमिति स्यात्। तस्मादान्तरं रजतमध्यासविषय इत्युक्तम्। बाह्यपक्षेऽपि तद्रजतं किं पुरोदेशवर्त्ति देशान्तरवर्ति वा, आद्येऽपि रजतं पुरोवर्तिद्रव्यस्य परिणामः अविद्याया वा। नाद्यः, शुक्त्यवयवोत्पन्नस्य रजतस्य शुक्तिवत्पारमार्थिकत्वेन बाधानुपपत्तेः॥

स० प्र०—ननु शतवर्षजीवी देवदत्तो बहिर्नास्तीति निषेधवन्नेदं रजतमिति बाह्यरजतनिषेधोऽनुपपद्यमान आन्तरं रजतं कल्पयतीत्यर्थापत्ती रजतस्यान्तरत्वे प्रमाणमित्याशङ्कां निराकरोति—**न तृतीय इति**। बाधकप्रत्ययस्य=नेदं रजतमिति बाधकप्रत्ययस्य। **रजतभेदेति**। पुरोवर्त्तिनिष्ठरजतप्रतियोगिकभेदपुरोवर्तिनिष्ठरजतधर्मरजतत्वाभावरजतनिष्ठपुरोवर्तिधर्मेदन्त्वात्यन्ताभावविषयकत्वेनेत्यर्थः। नेदं रजतमिति रजतनिष्ठेदन्त्वप्रतिषेधो निषेधविषयबाह्यरजतनिष्ठान्तरविज्ञानरूपत्वं विनाऽनुपपद्यमान आन्तरविज्ञानरूपरजतं कल्पयतीति प्रकारान्तरेणार्थापत्तिमाशङ्कते—**इदन्त्वेति**। बाधितं=नेदं रजतमिति बाधविषयतां प्राप्तम्, व्यवतिष्ठते=अभेदेन तिष्ठति। उक्तार्थापत्तिं निराकरोति—**नेति**। उपपत्तेः=बाधकप्रत्ययविषयरजतनिष्ठेदन्त्वात्यन्ताभावोपपत्तेः। स्वाभाविकं=ज्ञानातिरिक्तकारणानधीनम्। **हेत्वन्तरेति**=ज्ञानातिरिक्तकारणेत्यर्थः। **वादादिति**। ज्ञानातिरिक्तकारणं नास्तीति भावः। तत्र=बाह्यशुक्त्यादौ, अध्यासायोगात्=भ्रान्त्यसंभवात्। आरोपः=भ्रान्तिः, अत एव=वक्ष्यमाणहेतोरेव, तन्मात्रविषयः=आन्तरे रजते बहिष्ट्वाभावमात्रविषयः, रजतविषयः=रजताभावविषयः, तथा सति=बाधस्यान्तररजतनिष्ठबहिष्ट्वाभावमात्रविषयकत्वानङ्गीकारे नेदं रजतमिति बाधकप्रत्ययस्य रजताद्यभावविषयकत्वस्वीकारे वा। रजतस्य=रजततत्संसर्गस्य, तद्धर्मस्य=रजतधर्मरजतत्वस्य तत्संसर्गस्य च, इदन्तायाः=इदन्तातत्संसर्गस्य, बाधः=नेदं रजतमिति बाधविषयकत्वकल्पनं मिथ्यात्वकल्पनं वा, इति=इत्याकारकम्, बाधितत्वेन=मिथ्यात्वेन। तत्र=रजते। ननु नेदं रजतमिति बाधस्य रजताद्यभावविषयकत्वे गौरवं स्यादित्याशङ्क्याह—**बाधस्येति**। इति=इत्याकारकस्य। **विशिष्टेति**=रजतत्वादिविशिष्टरजताभावविषयकस्येत्यर्थः। अनुभवसिद्धत्वेन=नेदं रजतमिति ज्ञानस्य रजताद्यभावविषयकत्वमित्याद्यनुव्यवसायरूपसाक्षिरूपानुभवसिद्धत्वेन। **तत्कल्पनेति**। नेदं रजतमित्यादिबाधकनिष्ठरजताद्यभावविषयकत्वकल्पनेत्यर्थः। अत एव=नेदं रजतमित्यादिबाधकस्य रजतादिविषयकत्वसंभवादेव। बाह्याधिष्ठानावधिकः=बाह्यशुक्त्याद्यधिष्ठानावशेषिकः बाह्यशुक्त्याद्यधिष्ठानातिरिक्तेदन्त्वतत्संसर्गरजततत्संर्गादीनां सर्वेषां बाधो भवतीति भावः। अन्यथा=नेदं रजतमित्यादिबाधकस्य रजताद्यभावविषयकत्वानङ्गीकारे॥

**शि० म०**—ननु दोषसापेक्षतदवयवोत्पन्नस्य रजतस्य दोषापगमान्नाशेन बाधोपपत्तिरिति चेत् न, दोषस्य निमित्तकारणमात्रत्वेन तदपगमस्य रजताविनाशकत्वात्। न हि दण्डापगमे घटापायो दृष्टः। ततश्च रजतं न पुरोवर्त्तिद्रव्यपरिणामः। अविद्यापरिणामपक्षेऽपि न केवलाविद्यापरिणामः, दोषरहितस्यानुबद्धरजतसंस्कारस्यापि पुरुषस्य तत्प्रसङ्गात्। नापि दोषादिसहकृताविद्यापरिणामः, रजतावयवानां क्लृप्तरजतोत्पादकानामभावेन दोषादिसहकारिमात्रेणाविद्यायास्तदुत्पादकत्वायोगात्। किंच रजतं नाविद्यापरिणामः, सर्वज्ञानानां यथार्थत्वेन भ्रमानुपपत्तेः। तत्प्रमाणस्य भ्रमोपादानत्वस्य च अविद्यालक्षणस्य तल्लक्षणस्यासंभवेनाविद्याया एव दुर्निरूपत्वात्। तस्मान्न पुरोदेशवर्त्ति रजतमध्यासविषयः। देशान्तरवर्त्तित्वपक्षे न तावत्केवलाच्चक्षुषस्तद्विषयज्ञानजन्म, तस्यासन्निकर्षात् इन्द्रियाणां समीचीनज्ञानजननसामर्थ्यनियमाच्च। नापि दोषसहकृतात्, दोषस्य प्रकृतकार्य्यजननसामर्थ्यविघातमात्रे हेतुत्वात्। अन्यथा दुष्टादपि कुटजबीजाद्वटाङ्कुरोत्पत्तिप्रसङ्गात्। ततश्च न देशान्तरवर्त्तिरजतारोपः। नन्वख्यातिवादिमते शुक्तिकादिपुरोवर्तिद्रव्यदर्शनानन्तरं तत्र जायमानरजतज्ञानस्याप्रामाण्यप्रसिद्धिस्तद्विषयबाधप्रसिद्धिश्चाप्रमाणज्ञानाभावात् बाध्यविषयाभावाच्च न स्यादिति चेत् न, रजतव्यवहारस्यैव तेन बाधात्, ज्ञानस्य च तादृशविसंवादिव्यवहारहेतुत्वेनाप्रामाण्यव्यपदेशोपपत्तेः। तस्माद्यथार्था एव सर्वेऽपि प्रत्यया इति॥

म० प्र०—तदपगमस्य=दोषनाशस्य, अपगमे=नाशेऽन्यत्र गते वा, ततश्च=बाधानुपपत्तिरूपदोषादेव। तत्प्रसङ्गात्=इदं रजतमिति प्रत्ययप्रसङ्गात्, क्लृप्तेति=लोकप्रसिद्धेत्यर्थः। तदुत्पादकत्वेति=रजतोत्पादकत्वेत्यर्थः। तत्प्रमाणस्य=अविद्याप्रमाणस्य। असंभवेन=भ्रमाभावादसंभवेन, तस्मात्=उक्तदूषणकलापात्। तद्विषयेति=रजतविषयकेत्यर्थः। तस्य=रजतस्य। **सहकृतादिति**। चक्षुष इति शेषः। **प्रकृतकार्य्येति**=शुक्तित्वादिप्रकारकशुक्त्यादिविशेष्यकशुक्तिज्ञानादीत्यर्थः। अन्यथा=दोषसहकृतपदार्थस्य विलक्षणकार्य्योत्पादकत्वे, दुष्टादपि=छेदनादिरूपदोषवतोऽपि। कुटजबीजात्—"कुटजो वृक्षभेदे स्यात्" इति मेदिनीकोशाद्वृक्षविशेषस्य "कुटजः शुक्रो वत्सको गिरिमल्लिका" इत्यमरकोशात्कुडा इति ख्यातस्य वा बीजात्, अख्यातिवादिमते=इष्टपुरोवर्तिज्ञानयोस्तद्विषययोश्च भेदज्ञानाभावः प्रवर्त्तक इति वादिमीमांसकमते, तत्र=शुक्तिकादौ। **तद्विषयबाधेति**। रजतज्ञानविषयरजतप्रतियोगिकाभावज्ञानमित्यर्थः। व्यवहारस्य=प्रवृत्त्यादिरूपस्य, तेन=नेदं रजतमित्यादिज्ञानेन। ज्ञानस्य=इदं रजतमित्यादिज्ञानस्य। **तादृशविसंवादीति**=बाध्यनिष्फलेत्यर्थः॥

**शि० म०**—उच्यते। अस्ति तावत्पुरोवर्तिनि इदं रजतमिति सामानाधिकरण्यव्यपदेशो रजतार्थिप्रवृत्तिश्चेति सार्वजनीनम्। तदेतन्न भेदाग्रहमात्राद्भवितुमर्हति,

सुषुप्तौ तत्प्रसङ्गात् । नाप्युपस्थितेष्टभेदाग्रहात्, तस्याभावतया गुरुत्वेनाभेदज्ञानस्यैव सत्यस्थले हेतुत्वेन क्लृप्तत्वात् । न च तद्धेतोरेवास्य हेतुत्वमिति न्यायेन भेदाग्रह एव हेतुः क्लृप्त इत्युक्तमिति वाच्यम्, कारणत्वस्य भावत्वव्याप्यतया अभावमात्रस्यैवाहेतुत्वात् । मण्यादिसमवधाने दाहानुत्पादस्य च वह्निगतशक्त्यभिभवप्रयुक्तत्वेन प्रतिबन्धकाभावस्य करणत्वे प्रमाणाभावात् । नाप्यगृहीतेष्टभेदपुरोवर्तिविषयाऽगृहीतेष्टज्ञानभेदज्ञानं प्रवर्त्तकमुपस्थितेष्टभेदाग्रहवत् । अगृहीतेष्टभेदपुरोवर्तिविषयत्वविशिष्टागृहीतेष्टज्ञानभेदज्ञानापेक्षया पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानत्वस्य लघुत्वेनाभेदग्रहस्य तेनैव सत्यस्थले प्रवृत्तिकारणताग्रहात् । न चातिरिक्तविशिष्टज्ञानकल्पनं दोषः, कारणताग्रहदशायां तत्कल्पनस्यानुपस्थितत्वात् ॥

म० प्र०—सामानाधिकरण्यव्यपदेशः=सामानाधिकरण्यविषयकः शब्दात्मको व्यवहारः । तदेतत्=उक्तद्वयम्, तत्प्रसङ्गात्=प्रवृत्त्यादिप्रसङ्गात् । **भेदाग्रहादिति** । प्रवृत्त्यादिरिति शेषः । तस्य=उपस्थितेष्टभेदाग्रहस्य । सत्यस्थले=व्यावहारिकरजतविषये । हेतुत्वेन=प्रवृत्त्यादिहेतुत्वेन, क्लृप्तत्वात्=निश्चितत्वात् । हेतुः=रजतादिविषयकप्रवृत्त्यादिहेतुः, क्लृप्तः=निश्चितः । भावत्वव्याप्यतया=यत्र कारणत्वं तत्र भावत्वमिति भावत्वनिरूपितव्याप्त्याश्रयतयाऽभावे व्यापकभावत्वाभावेन तद्व्याप्यकारणत्वाभावस्य सुग्रहतया । नन्वेवं दाहादिकार्य्यप्रतिबन्धकमण्यादिप्रतिबन्धकाभावस्यापि कारणत्वं न स्यादित्याशङ्क्याह—**मण्यादीति । उपस्थितेष्टभेदाग्रहवदिति** । उपस्थितेष्टभेदाग्रहनिष्ठकारणताभाववदित्यर्थः । **इष्टतावच्छेदकप्रकारकेति**=रजतत्वादिप्रकारकेत्यर्थः । अभेदग्रहस्य=इदं रजतमित्यादिज्ञानस्य । तेनैव=इष्टतावच्छेदकरजतत्वादिप्रकारकज्ञानत्वेनैव । सत्यस्थले=व्यावहारिकरजतादिविषये । **अतिरिक्तेति** । यथा नैयायिकमते हेतुनिष्ठव्याप्तिस्मृतिहेतुनिष्ठपक्षधर्मताज्ञानद्वयादनुमितिस्थले विशिष्टपरामर्शकल्पनरूपो दोषस्तथा यस्मिन्विषये भेदाग्रहात्प्रवृत्तिस्तस्मिन् विषये भेदाग्रहातिरिक्तविशिष्टज्ञानकल्पना दोषः स्यादित्यर्थः । कारणताग्रहदशायाम्=प्रवृत्तित्वावच्छिन्नप्रवृत्तिं प्रतीष्टतावच्छेदकप्रकारकज्ञानत्वेन हेतुत्वमिति कारणताज्ञानकाले । तत्कल्पनस्य=भेदाग्रहजन्यप्रवृत्तिविषये इदं रजतमित्यादिविशिष्टज्ञानकल्पनरूपगौरवस्य, अनुपस्थितत्वात्=अज्ञातत्वात् ॥

शि०म०—उपस्थितस्य च तर्कितगौरवस्य सकलप्रमाणप्रवृत्त्यप्रतिबन्धकत्वेऽनापरिपन्थित्वात्, फलमुखस्य चोपजीव्यकारणताप्रतिबन्धित्वशङ्कानवकाशात् । न च विषयानिरूपणात् मिथ्याज्ञानाभावः, सत एव रजतस्य देशान्तरवर्तिनः पुरोवर्तिज्ञाने विषयत्वात् । नापि रजतज्ञानसामग्रीविरहः, यथार्थप्रत्यक्षमात्रे सन्निकर्षस्य हेतुत्वेनासन्निकृष्टस्यापि रजतस्य दोषवशाद्भानोपपत्तेः । यत्तु दोषस्य प्रकृतकार्य्यप्रतिबन्धमात्रहेतुत्वेन विपरीतकार्य्याहेतुत्वात् तत्सहकृताच्चक्षुषो न मिथ्याज्ञानसंभव

इति तन्न। दावदग्धे वेत्रबीजादौ कदलीकाण्डारम्भकत्वस्य भस्मकदुष्टे चौदर्ये तेजसि बह्वन्नपानपचनस्य दर्शनात् । यच्चोक्तं विमतिपन्नाः सर्वेऽपि प्रत्यया यथार्थाः प्रत्ययत्वात् संप्रतिपन्नवदिति । नैतत्सारम् । उक्तन्यायेन पुरोवर्तिनि प्रतिपन्नस्य नेदं रजतमिति तत्रैवाभावप्रतियोगित्वाभ्युपगमेनानुमानस्य प्रत्यक्षबाधापहतविषयत्वात् । तदेतत् सिद्धं विवादाध्यासितं रजतज्ञानं पुरोवर्तिविशेष्यकं तद्विशेष्यकरजतार्थिप्रवृत्तिहेतुज्ञानत्वात्, यद्यद्विशेष्यकप्रवृत्तिहेतुज्ञानं तत्तद्विशेष्यकं यथोभयसिद्धसमीचीनज्ञानं तथा चेदं तस्मात्तथेति । न चाप्रयोजकत्वं विशिष्टज्ञानकारणतायां लाघवस्योक्तत्वात् । प्रवृत्त्यनुपपत्तेश्च विपक्षे बाधकत्वात् । तस्माद्विसंवादिप्रवृत्तिजनकं सर्वं ज्ञानमयथार्थमिति सिद्धं तदेतदाह–**विसंवादिप्रवृत्त्या भ्रान्तिज्ञानसिद्धाविति** ॥

म०प्र०–ननु विशिष्टज्ञाननिष्ठप्रवृत्त्यादिकारणताज्ञानोत्तरं गौरवज्ञानं भविष्यतीत्याशङ्क्याह–**उपस्थितस्येति** । विशिष्टज्ञाननिष्ठप्रवृत्त्यादिकारणताज्ञानोत्तरगौरवज्ञानविषयस्येत्यर्थः । तर्कितगौरवस्य=यदि विशिष्टज्ञाननिष्ठप्रवृत्त्यादिकारणता स्यात्तर्हि गौरवं स्यादिति तर्कविषयगौरवस्य । **सकलप्रमाणेति** । अत्र प्रमाणशब्दो ज्ञानपरस्तथा च भुक्तवन्तं प्रति मा भुङ्क्ष्वेति निषेधवत्सकलविशिष्टज्ञाननिवृत्त्यादिकारणताग्रहाप्रतिबन्धकत्वेनेत्यर्थः । ननु निष्फलगौरवाभ्युपगमोऽयुक्त इत्याशङ्क्य तस्य निष्फलत्वं नास्तीत्यभिप्रेत्याह–**फलमुखस्येति** । फलं कार्य्यकारणभावज्ञानं मुखे आदौ यस्य गौरवज्ञानस्य तत्तथा तस्य गौरवज्ञानस्येत्यर्थः । **उपजीव्येति** । उपजीव्यविशिष्टज्ञाननिष्ठप्रवृत्त्यादिकारणतानिष्ठगौरवज्ञाननिमित्तभूता या कारणता विशिष्टज्ञाननिष्ठप्रवृत्त्यादिकारणताज्ञानं तत्प्रतिबन्धकत्वशङ्काऽनवकाशादित्यर्थः। **विषयानिरूपणादिति**। बाह्यस्यान्तरस्यासतश्च विषयस्य निराकरणेन विषयस्यासंभवान्निर्विषयज्ञानस्यासंभवाच्च मिथ्याज्ञानमेव नास्ति । न च शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति पतञ्जलिसूत्राद्धनुर्धरो वन्ध्यापुत्रो यातीत्यादिवाक्यजन्यज्ञानवन्निर्विषयरजतादिज्ञानस्यापि संभवात्कथं निर्विषयज्ञानासंभव इति वाच्यम्। इन्द्रियार्थसन्निकर्षजन्यज्ञानस्य निर्विषयकत्वासंभवादित्यर्थः । **रजतज्ञानेति**=देशान्तरीयरजतज्ञानेत्यर्थः । रजतस्य=देशान्तरीयरजतस्य । **उपपत्तेरिति** । शुक्तिकादाविदं रजतमित्यादिज्ञानस्य यथार्थप्रत्यक्षत्वाभावान्न सन्निकर्षाद्यपेक्षेति भावः । वेत्रबीजादौ=लोके बेतेति ख्यातस्य बीजादौ । भस्मकदुष्टे=भस्मकनामकदोषवति, तेजसि=अग्नौ, उक्तन्यायेन=दोषवशेन देशान्तरीयरजतस्य चक्षुषा भानोपपत्तिरूपहेतुना । प्रतिपन्नस्य=ज्ञातस्य रजतस्य, तत्रैव=पुरोवर्तिन्येव ॥

**तस्य प्रातिभासिकतत्कालोत्पन्नरजतादिविषयकत्वे न प्रामाण्यं देशान्तरीयरजतस्य क्लृप्तस्यैव तद्विषयत्वसंभवादिति चेन्न ॥**

**शि० म०**–नन्विदं रजतमित्यनुभव एवैतत्कालोत्पन्नरजते प्रमाणम् । अन्यथा प्रत्ययस्य निर्विषयत्वापत्तेः, आन्तरस्यासतश्च रजतस्य निराकरणात्, व्यवहितविष-

यस्य च प्रत्यक्षाविषयत्वादित्याशङ्क्य न हीदं रजतमिति प्रत्ययस्तस्य प्रातिभासिकत्वे प्रमाणम्, तेन तस्याविषयीकरणादित्याशयेनाह–**तस्येति**। ननु विषयान्तरानुपपत्त्या तस्य प्रातिभासिकरजतं विषयत्वेन कल्प्यते इत्यत आह–**देशान्तरीयरजतस्येति** । तस्य विषयत्वे विनिगमकमाह–**क्लृप्तस्यैवेति** । तथा च रजतं व्यवहितमपि दोषवशादेव भ्रमे भासत इति भावः । एवं भ्रान्तिज्ञानं सर्वमन्यथाख्यातिरित्याशङ्किते सिद्धान्ती दूषयति–**नेति** ॥

म० प्र०–**एतत्कालेति**=भ्रमकालेत्यर्थः । रजते प्रमाणम्=रजतास्तित्वविषयकावरणनिवर्तकम्, अन्यथा=इदं रजतमित्यनुभवविषयरजतानङ्गीकारे, प्रत्ययस्य=इदं रजतमित्यनुभवस्य । ननु तस्य निर्विषयत्वापत्तिः कुत इत्याशङ्क्याह–**आन्तरस्येति** । नन्विदं रजतमित्यनुभवस्य देशान्तरीयरजतं विषयोऽस्त्वित्याशङ्क्याह–**व्यवहितेति** । तस्य=रजतस्य, प्रातिभासिकत्वे प्रमाणम्=प्रातिभासिकत्वविषयकावरणनिवर्तकम् । तेन=इदं रजतमिति प्रत्ययेन,तस्य=रजतनिष्ठप्रातिभासिकत्वस्य । परममूले **तस्येति** । इदं रजतमित्यादिभ्रान्तिज्ञानस्येत्यर्थः । परममूले **न प्रामाण्यमिति** । प्रमाणाभाव इत्यर्थः । तस्य=इदं रजतमिति ज्ञानस्य, तस्य=देशान्तरीयरजतस्य, विषयत्वे=इदं रजतमित्यनुभवविषयत्वे, विनिगमकम्=प्रसिद्धत्वरूपं ज्ञापकम् । न हि प्रसिद्धपदार्थं परित्यज्याप्रसिद्धपदार्थकल्पनमुचितमिति भावः । भ्रमे भासते=भ्रमनिरूपितविषयताश्रयः ॥

**तस्यासन्निकृष्टतया प्रत्यक्षविषयत्वायोगात् ॥**

शि० म०–किं देशान्तरवर्ति रजतमसन्निकृष्टमपि भ्रमे भासते इत्यभिमतं सन्निकृष्टं वा । नाद्यः, सन्निकर्षाभावे तद्घटितप्रत्यक्षसामग्रीविरहात्, विशेष्यसन्निकर्षवद्विशेषणसन्निकर्षस्यापि प्रत्यक्षे हेतुत्वात्,अन्यथा व्यवहितदण्डे पुंसि दण्डीति विशिष्टप्रत्यक्षापत्तेः । न चैतावता जन्ययथार्थप्रत्यक्ष एव विशेषणसन्निकर्षो हेतुरस्त्विति वाच्यम्, लाघवेन जन्यप्रत्यक्षत्वावच्छिन्ने एव तस्य हेतुत्वात्, अन्यथा सुरभि चन्दनमित्यादौ विशेषणीभूतसौरभांशे ज्ञानप्रत्यासत्तिकल्पनं वह्निसन्निकर्षाभावेन सन्निकृष्टेऽपि पर्वते तद्विशिष्टप्रत्यक्षाभाववर्णनं च तव मते विरुद्धं चेत । द्वितीयेऽपि किमिन्द्रियस्य रजतेन साकं लौकिकः सन्निकर्षः अलौकिको वा । नाद्यः, इन्द्रियस्य तेन संयोगसंयुक्तसमवायादेरभावादित्याह–**तस्येति** । अलौकिकं किं सामान्यं प्रत्यासत्तिः । उत ज्ञानम् । तत्रापि न तावत्प्रमेयत्वेन रजतग्रहः, तस्य तत्प्रकारकत्वापत्तेः । नापि रजतत्वेन, इन्द्रियसंयुक्ते पुरोवर्तिनि तस्याभावेनासन्निकृष्टत्वात्, सन्निकृष्टसामान्यस्यैव प्रत्यासत्तित्वाभ्युपगमात्, किंच न तावत्सामान्यं प्रत्यासत्तिः, प्रमाणाभावात् व्याप्तिग्रहस्य सिद्धान्ते सन्निकृष्टधूमादिव्यक्तिमात्रविषयकत्वेन सर्वधूमाविषयतया तस्य सामान्यप्रत्यासत्तिकल्पकत्वायोगात्, धूमो वह्निव्यभिचारी न वेति संशय-

स्य च तत्तद्धूमत्वेन वह्निसामानाधिकरण्यनिश्चयेऽपि प्रसिद्धधूम एव संभवेनाप्रसिद्धधूमाविषयत्वात्समानप्रकारकनिश्चयस्यैव संशयविरोधित्वादत एव घटत्वेनेतरभेदनिश्चयेऽपि पृथिवीत्वेन घटे तत्संशय इति तवापि राद्धान्तः। तस्मान्न सामान्यं प्रत्यासत्तिरिति संक्षेपः ॥

म० प्र०—असन्निकृष्टमपि=इन्द्रियासंबद्धमेव। **तद्घटितेति**=सन्निकर्षघटितेत्यर्थः। ननु विशेष्येण सन्निकर्षस्य सत्त्वात्कथं सन्निकर्षघटितसामग्रीविरह इत्याशङ्क्याह—**विशेष्येति**। अन्यथा=विशेषणसन्निकर्षस्य विशिष्टप्रत्यक्षं प्रति हेतुत्वानङ्गीकारे। **प्रत्यक्षापत्तेरिति**। न च दण्डविशिष्टत्वेन पूर्वं ज्ञाते पुंसि दण्डाभावेऽप्ययं दण्डीति ज्ञानसंभवेन कथं विशेषणसन्निकर्षस्य हेतुत्वमिति वाच्यम्। तत्रापि तव मते ज्ञानलक्षणप्रत्यासत्त्या चक्षुषो गमनेन विशेषणसन्निकर्षसत्त्वादिति। एतावता=व्यवहितदण्डे पुंसि दण्डीति विशिष्टप्रत्यक्षापत्तिरूपदूषणेन, लाघवेन=जन्ययथार्थप्रत्यक्षत्वरूपकार्य्यतावच्छेदकापेक्षया जन्यप्रत्यक्षत्वरूपकार्य्यतावच्छेदके लाघवेन, तस्य=विशेषणसन्निकर्षस्य,अन्यथा=विशेषणसन्निकर्षस्य प्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वानङ्गीकारे। **तद्विशिष्टेति**=वह्निविशिष्टपर्वतेत्यर्थः। सामान्यम्=इन्द्रियसंबद्धसामान्यम्। किं प्रमेयत्वरूपं सामान्यं प्रत्यासत्तिरुत रजतत्वरूपमिति विकल्पं मनसि निधाय न तावदाद्य इत्याह—**तत्रापीति**। पक्षद्वयमध्येऽपीत्यर्थः। प्रमेयत्वेन=प्रमेयत्वाभिन्नसामान्यधर्मरूपप्रत्यासत्त्या, रजतग्रहः=इदं रजतमिति ज्ञानम्, तस्य=रजतज्ञानस्य, तत्प्रकारकत्वापत्तेः=प्रमेयत्वप्रकारकत्वापत्तेः। नापि द्वितीय इत्याह—**नापीति**। रजतत्वेन=रजतत्वाभिन्नसामान्यप्रत्यासत्त्या। नन्वसन्निकृष्टरजतत्वादिरूपसामान्यमेव प्रत्यासत्तिरस्त्वित्याशङ्क्याह—**सन्निकृष्टेति**। इन्द्रियसंबद्धेत्यर्थः। ननु सामान्यलक्षणप्रत्यासत्त्यनङ्गीकारे महानसादौ धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां ज्ञानाभावेन निखिलधूमेषु निखिलवह्निनिरूपितव्याप्तिज्ञानमेव न स्यादतः सामान्यलक्षणा प्रत्यासत्तिः कल्पनीयेत्याशङ्क्याह—**व्याप्तिग्रहस्येति**। सिद्धान्ते=वेदान्तिमते। नन्वेवमपि सामान्यलक्षणप्रत्यासत्त्यनङ्गीकारे महानसादिवृत्तिप्रत्यक्षधूमे वह्निसंबन्धस्य गृहीतत्वाद्देशान्तरीयकालान्तरीयधूमस्यानुपस्थितत्वाच्च धूमो वह्निव्याप्यो न वेति संशयो न स्यात्सामान्यलक्षणप्रत्यासत्तिस्वीकारे तु सामान्यलक्षणप्रत्यासत्त्या सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमेषु वह्निनिरूपितव्याप्तिसंदेहो—धूमो वह्निव्याप्यो न वेत्याकारकः संभवतीत्याशङ्क्याह—**धूम इति**। तत्तद्धूमत्वेन=महानसीयधूमत्वाद्यवच्छिन्नेत्यर्थः। वह्निसामानाधिकरण्यनिश्चयेऽपि=वह्निनिरूपितव्याप्तिनिश्चयेऽपि, प्रसिद्धधूमे एव=पर्वतीयधूमे एव महानसीयधूमे एव वा न तु देशान्तरीयधूमादावित्येवकारार्थः।**अप्रसिद्धधूमेति**=देशान्तरीयधूमादीत्यर्थः।ननु तत्तद्धूमे वह्निनिरूपितव्याप्तिनिश्चयसत्त्वेन कथं संशय इत्याशङ्क्य समानप्रकारकनिश्चयसंशययोर्विरोध इत्यभिप्रेत्याह **समानप्रकारकेति**। धूमो वह्निव्यभिचारी न वेति संशयस्य धूमो वह्निव्याप्य इति व्याप्तिनिश्चयो विरोधी न तु तत्तद्धूमेषु वह्निनिरूपितव्याप्तिनिश्चय इति

भावः । अत एव=समानप्रकारकनिश्चयस्यैव संशयविरोधित्वादेव । घटत्वेनेतरभेदनिश्चयेऽपि=घटत्वावच्छिन्नो यो जलादिप्रतियोगिकभेदस्तन्निश्चयेऽपि घटत्वप्रकारकजलादिप्रतियोगिकभेदनिश्चयेऽपीति वा । पृथिवीत्वेन घटे तत्संशयः=पृथिवीतरभेदवती न वेति पृथिवीत्वप्रकारकघटादिपृथिवीविशेष्यकजलादिप्रतियोगिकभेदसंशयः । तस्मात्=व्याप्तिग्रहोक्तसंशययोरुपपन्नत्वात् ॥

**न च ज्ञानं तत्र प्रत्यासत्तिः । ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तावनुमानाद्युच्छेदापत्तेः ॥**

**शि० म०—द्वितीयं पक्षं दूषयति—न चेति । अयं भावः । न ज्ञानं प्रत्यासत्तिः, प्रमाणाभावात् । न च घटमहं जानामीत्यनुव्यवसायो व्यवसायस्य प्रत्यासत्तित्वे प्रमाणम्, तस्य स्वप्रकाशतया मनोजन्यज्ञानान्तरानपेक्षणात् । अत एव न चाक्षुषज्ञानेऽपि तन्नियमः, प्रत्यभिज्ञावत्संस्कारादिसहकारिबलादसन्निकृष्टविषयचाक्षुषज्ञानोपपत्तेः । न च तत्रापि चाक्षुषत्वात्सन्निकर्षजन्यत्वं कल्प्यते इति युक्तम्, चक्षुर्जन्यस्यापि कस्यचित्परोक्षत्वे बाधकाभावात्, प्रमात्वाप्रमात्वयोरिव परोक्षत्वापरोक्षत्वयोरेकज्ञानधर्मत्वोपपत्तेश्च । तस्मान्न ज्ञानं प्रत्यासत्तिरिति दिक् ॥**

**म० प्र०— प्रमाणमिति ।** घटमहं जानामीति मानसानुव्यवसायो घटेन सह मनःसन्निकर्षं विनाऽनुपपद्यमानः मनसः घटे मनःसंयुक्तात्मसमवेतज्ञानविषयत्वरूपसंबन्धं कल्पयतीति व्यवसायस्य प्रत्यासत्तित्वसाधक इत्यर्थः । अत एव=ज्ञानलक्षणप्रत्यासत्तौ प्रमाणाभावादेव । चाक्षुषज्ञानेऽपि=सुरभि चन्दनमित्यादिचाक्षुषज्ञानार्थमपि । तन्नियमः=चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वरूपज्ञानलक्षणप्रत्यासत्तेरवश्यं स्वीकारः । **असन्निकृष्टेति**=ज्ञानलक्षणप्रत्यासत्तिरहितेत्यर्थः । तत्रापि=सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञायामपि ॥

**ननु रजतोत्पादकानां रजतावयवादीनामभावे शुक्तौ कथं तवापि रजतमुत्पद्यते इति चेत् उच्यते ॥**

**शि० म०—नन्वलौकिकसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वाद्वह्न्यादेः कथं प्रत्यक्षत्वमिति चेन्न । समाने विषये प्रत्यक्षसामग्रीत्वेनैव लाघवेन बलवत्तया अनुमितिसामग्र्या एव दुर्बलत्वात् । अन्यथा संशयोत्तरप्रत्यक्षभ्रमानुपपत्तेः । ननु रजतावयवस्य तदुपादानस्य प्रसिद्धस्य च तन्निमित्तस्याभावे कथं शुक्तौ रजतं जायेत । न च शुक्त्यवयवास्तदुपादानम्, निरस्तत्वात्, उत्पन्नस्य शुक्तित्वापत्तेश्च । अत एव न तज्ज्ञानमपि, क्लृप्तकारणस्य विषयेन्द्रियसन्निकर्षादेरभावादित्याक्षिपति—नन्विति । अस्ति शुक्ताविदं रजतमिति ज्ञानं तत्र चासतोऽनवभासनादान्तरस्य च रजतस्य निराकृतत्वात् बाह्यस्य च पुरोऽवस्थितस्य पारमार्थिकस्य बाधानुपपत्त्या देशान्तरीयस्य व्यवधानेन विषयत्वायोगात् अतः परिशेषात्प्रातिभासिकं तत्कालोत्पन्नमेव रजतं विषय इत्यभिप्रेत्याह—उच्यते इति ॥**

**म० प्र०**—ज्ञानलक्षणप्रत्यासत्तिस्वीकारेऽपि नानुमानोच्छेद इत्यभिप्रेत्य शङ्कते—**नन्विति**। अलौकिकसामग्रीतः=अलौकिकसन्निकर्षरूपप्रत्यक्षसामग्रीतः । **प्रत्यक्षसामग्रीत्वेनैवेति**। प्रत्यक्षसामग्रीत्वावच्छिन्नबलवत्तयेत्यर्थः । लाघवेन=बलवत्तावच्छेदकीभूतलौकिकप्रत्यक्षसामग्रीत्वापेक्षया बलवत्तावच्छेदकप्रत्यक्षसामग्रीत्वे लाघवेन । अन्यथा=अनुमितिसामग्र्याः अलौकिकप्रत्यक्षसामग्रीतोऽपि दुर्बलत्वानङ्गीकारे, तदुपादानस्य=रजतोपादानस्य । तन्निमित्तस्य=पुरुषप्रयत्नरूपरजतनिमित्तस्य, तदुपादानम्=रजतोपादानम् । निरस्तत्वात्=शुक्त्यवयवोत्पन्नरजतस्य शुक्तिवत्पारमार्थिकत्वेन बाधानुपपत्तेरिति पूर्ववाक्येन शुक्त्यवयवानां रजतोपादानत्वस्य निरस्तत्वात् । उत्पन्नस्य=शुक्त्यवयवोत्पन्नरजतस्य, अत एव=वक्ष्यमाणहेतोरेव । न तज्ज्ञानमपि=रजतज्ञानात्यन्ताभावोऽप्यस्ति, अभावात्=शुक्तौ रजताभावेनाभावात् । तत्र=शुक्ताविदं रजतमिति ज्ञाने, अनवभासनात्=अविषयत्वात् । नन्विदं रजतमिति ज्ञानस्यान्तररजतं विषयोऽस्त्वित्याशङ्क्याह—**आन्तरस्येति**। नन्वेवमपि व्यावहारिकबाह्यरजतमेवेदं रजतमिति ज्ञानस्य विषयोऽस्त्वित्याशङ्क्याह—**बाह्यस्य चेति**। पारमार्थिकस्य=व्यावहारिकस्य । अतः=उक्तहेतुकलापात् ॥

**न हि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका किंतु विलक्षणैव। तथा हि काचादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचिक्याकारा काचिदन्तःकरणवृत्तिरुदेति। तस्यां च वृत्ताविदमंशावच्छिन्नं चैतन्यं प्रतिबिम्बते। तत्र पूर्वोक्तरीत्या वृत्तेर्बहिर्निर्गमनेनेदमंशावच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति। ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकाऽविद्या चाकचिक्यादिसादृश्यसंदर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते॥**

**शि० म०**—किं लोकसिद्धरजतसामग्रीविरहात्प्रातिभासिकरजतानुत्पादः सामग्रीमात्रविरहाद्वा। नाद्यः, लौकिकपरमार्थस्यैव रजतस्य रजतावयवाद्यपेक्षत्वेन प्रातिभासिकस्य तदनपेक्षत्वात्। अत एव क्लृप्तहेतुमन्तरेणापि स्वप्नरथादेरुत्पत्तिरित्याशयेनाह—**न हीति**। द्वितीयमनुवदति—**किन्त्विति**। दोषसंस्कारादिसहकृताविद्यैव प्रातिभासिकरजतोत्पादिकेत्याह—**विलक्षणैवेति**। ननु रजततज्ज्ञानयोर्न तावदविद्योपादानं प्रमाणाभावात्, तदुपादानत्वे च वियदादिवत्सत्यत्वापत्तिः। न चात्मा तदुपादानमपरिणामित्वात्। नापि दोषः गुणसादृश्यात्मनस्तस्य द्रव्योपादानत्वायोगात्। अत एव नाविद्या निमित्तकारणं नापि संस्कारः भ्रमस्य तज्जन्यत्वे स्मृतित्वापत्तेः, भावनासंस्कारस्यार्थाहेतुत्वाच्च । न च भेदाग्रहः, तस्यार्थहेतुत्वे

प्रमाणाभावात्तदन्वयव्यतिरेकयोश्च ज्ञानमादायोपपत्तेः। किंच रजतस्य प्रातिभासिकत्वे कथं प्रत्यक्षत्वम्, न तावच्चाक्षुषत्वं प्रातिभासात्पूर्वं तस्येन्द्रियसंयोगाभावात्, नापि मानसत्वम्, इन्द्रियसंप्रयोगं विना मनसो बहिरस्वातन्त्र्यात्, ततश्च प्रातिभासिकं रजतं तज्ज्ञानं चानुपपन्नमित्यत आह—तथा हीति। अविद्या रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते इति संबन्धः। वियदादेरुपादानाविद्यातो वैलक्षण्यं दर्शयितुं विषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकेति विशेषणद्वयम्। सा हि मूलाविद्या चिन्मात्राश्रिता चिन्मात्रविषया निर्विकल्पकज्ञाननिवर्त्या च। इयं तु शुक्त्यवच्छिन्नचैतन्याश्रिता रजतभेदशुक्तित्वप्रकारिका सविकल्पकज्ञाननिवर्त्या च॥

म० प्र०—परमार्थस्यैव=व्यावहारिकस्यैव। अत एव=प्रातिभासिकवस्तुनोऽवयवाद्यपेक्षाभावादेव। तदुपादानत्वे=शुक्तिरजतादीनामविद्योपादानकत्वे, गुणसादृश्यात्मनः=प्रमातृगतरागद्वेषरूपगुणात्मकस्य विषयगतचाकचिक्यादिसादृश्यात्मकस्य च, अत एव=शुक्तिरजतस्योपादानकारणाभावादेव। नापि संस्कार इति। संस्कारोऽपि तयोर्निमित्तकारणं नेत्यर्थः। भेदाग्रह इति। शुक्तिरजतोपादानमिति शेषः। तस्य=भेदाग्रहस्य। ज्ञानमादायोपपत्तेरिति। भेदाग्रहसत्त्वे शुक्तिरजतज्ञानसत्त्वं भेदाग्रहाभावे शुक्तिरजतज्ञानाभाव इति ज्ञानाश्रितत्वेनोपपत्तेरित्यर्थः। तस्य=शुक्तिरजतस्य। परममूले—पूर्वोक्तरीत्येति। यथा तडागोदकमित्यादिवाक्योक्तरीत्येत्यर्थः। परममूले चाकचिक्याकारेति=विलक्षणशौक्ल्याकारेत्यर्थः। परममूले—रजतसंस्कारसध्रीचीनेति। रजतसंस्कारेण सहाञ्चतीति रजतसंस्कारसध्रीची रजतसंस्कारः सम्यक् सहकारी यस्याः सा तथेति वा, रजतसंस्कारसध्रीच्येव सध्रीचीना, रजतविषयकसंस्कारसहकृतेति यावत्। परममूले समवहितेति=सहकृतेत्यर्थः। सा हि=वियदाद्युपादानभूता हि, इयं तु=शुक्तिरजताद्युपादानाविद्या तु, रजतभेदशुक्तित्वप्रकारिका=रजतस्य भेदो यस्यां शुक्तावेतादृशी या शुक्तिस्तन्निष्ठं यच्छुक्तित्वं तत्प्रकारिका, रजतप्रतियोगिकभेदः शुक्तित्वं चैतदुभयप्रकारिकेति वा॥

शि० म०—न चास्याविद्योपादानत्वे मानाभावः। रूप्याध्यासः साक्षादविद्योपादानः अन्यानुपादानत्वे सति सोपादानत्वादाकाशवत्। "मायां तु प्रकृतिं विद्यात्" इत्यादिश्रुत्या वियदादेरविद्योपादानत्वावगमान्न साधनवैकल्यम्। न चान्तःकरणस्य तदुपादानत्वसंभवात्सत्यन्तासिद्धिरिति वाच्यम्। अन्तःकरणस्य सादित्वेनोपादानापेक्षायामज्ञानस्य तदुपादानत्वेनावश्यकत्वात्। प्रातिभासिकस्वाप्नगजाद्यध्यासे तस्योपादानतया क्लृप्तत्वाच्च। न च विपक्षे बाधकाभावः, मिथ्यार्थावभासानुपपत्तेरेव बाधकत्वादिति भावः। निमित्तकारणमाह—संस्कारेति। नन्वन्वयव्यतिरेकाभ्यां सादृश्यज्ञानमपि कारणं स्यादित्याशङ्क्य तस्य भ्रमजनक-

**संस्कारोद्बोधकत्वेनान्यथासिद्धत्वादित्याह—चाकचिक्यादीति । सादृश्यज्ञानस्य सोपाधिकाध्यासे स्वाप्नगजाद्यध्यासे च व्यभिचारान्न हेतुत्वमित्यपि बोध्यम् ॥**

**म० प्र०**—अस्य शुक्तिरजतस्य, रूप्याध्यासः=अध्यस्तं प्रातिभासिकरजतं तज्ज्ञानं च । शुक्तिरजतादेरन्तःकरणोपादानकत्ववादिमतेऽन्तःकरणद्वाराऽविद्योपादानकत्वस्य शुक्तिरजतादेः सत्त्वेन सिद्धसाधनतावारणाय साक्षादित्युक्तम् । न च शुक्तिरजतादेरन्तःकरणोपादानकत्ववादिमते पक्षेऽविद्यान्यानुपादानकत्वाभावेन तन्मते सिद्धसाधनवारणाय साक्षादित्युक्तमिति वाच्यम् । तन्मतेऽन्तःकरणान्यानुपादानकत्वस्य सत्यन्तार्थत्वेन विशिष्टहेतोः सत्त्वेनोक्तसिद्धसाधनापादनसंभवात् । न च शुक्तिरजतादेरन्तःकरणोपादानकत्ववादिमतेऽन्यानुपादानकत्वे सतीतिसत्यन्तस्यान्तःकरणान्यानुपादानकत्वे सतीत्यर्थकत्वेन दृष्टान्ते साधनवैकल्यमिति वाच्यम्, दृष्टिसृष्टिवाद्युक्तवादिमते वियदादेरप्यन्तःकरणोपादानकत्वसंभवात् । वस्तुतस्तु साध्ये साक्षाद्विशेषणं हेतौ सत्यन्तविशेषणं चानुपादेयमेव । शुक्तिरजतादेः परंपरयाऽविद्योपादानकत्वेऽप्यविद्याया उपादानत्वाक्षतेः । आत्मादौ व्यभिचारवारणाय **सोपादानत्वादि**त्युक्तम् । घटादौ व्यभिचारवारणाय हेतुवाक्ये सत्यन्तम् । न साधनवैकल्यं=दृष्टान्ते हेत्वत्यन्ताभावो न । **तदुपादानत्वेति**=शुक्तिरजतोपादानत्वेत्यर्थः । तदुपादानत्वेन=अन्तःकरणनिरूपितोपादानत्वेन, आवश्यकत्वात्=निश्चितत्वात् । अस्याग्रे तद्धेतोरेवास्य हेतुत्वमस्तु किं तेनेति न्यायेनाज्ञानस्यैव शुक्तिरजताद्युपादानत्वादिति शेषः । न चैवं घटादिकं प्रत्यपि पूर्वोक्तन्यायेन साक्षादज्ञानस्यैवोपादानत्वं स्यान्न मृदादेरिति वाच्यम् । घटादिमृदाद्योः प्रसिद्धकार्यकारणभावस्य त्यागायोग्यतयाऽप्रसिद्धकारणकशुक्तिरजतादिपदार्थे एव लाघवेन साक्षादज्ञानोपादानकत्वकल्पनायाः कृतत्वादिति । तस्य=अज्ञानस्य, विपक्षे=रूप्याध्यासे साध्याभावे=हेत्वभावे च । **अन्वयव्यतिरेकाभ्यामिति** । रजतेन सदृशमिदमिति सादृश्यज्ञानाभावेऽपि चाकचिक्यादिसादृश्यज्ञानसत्त्वे शुक्तिरजतादिसत्त्वं चाकचिक्यादिसादृश्यज्ञानाभावे शुक्तिरजताद्यभाव इत्यन्वयव्यतिरेकाभ्यां शुक्तिरजतादेश्चाकचिक्यादिसादृश्यज्ञानानन्तरभावित्वात्संस्कारवत्सादृश्यज्ञानमपि कारणमिति भावः । तस्य=सादृश्यज्ञानस्य, संस्कारोद्बोधकत्वेन=संस्कारनिष्ठभ्रमानुकूलसामर्थ्योद्बोधकत्वेन । **इत्यपि बोध्यमिति** । न च संस्कारस्यापि सोपाधिकाध्यासे व्यभिचाराच्छुक्तिरूप्याद्यध्यासे हेतुत्वं न स्यादिति वाच्यम्, संस्कारस्य निरुपाधिकशुक्तिरजताद्यध्यासे हेतुत्वाभ्युपगमेनाध्याससामान्यं प्रति हेतुत्वाभावेन व्यभिचाराभावादिति ॥

**शि० म०—न च संस्कारोऽपि न हेतुरुक्तदोषादिति वाच्यम् । समानविषयसंस्कारजन्यत्वस्य संस्कारत्वेन तज्जन्यत्वस्य वा स्मृतित्वप्रयोजकत्वात् । अन्यथा प्रत्यभिज्ञानुमित्योः स्मृतित्वापत्तिरिति भावः । असाधारणकारणमाह—दोषेति । न च दोषसंस्कारयोरर्थाहेतुत्वमन्वयव्यतिरेकाभ्यां विनिगमकाभावेनोभयकारणताग्रहादिति भावः । प्रातिभासिकरजतस्य प्रत्यक्षत्वं प्रदर्शयितुं प्रमातृचैतन्याभिन्नेति विषयचैतन्यविशेषणम् ॥**

म० प्र०–न हेतुः=भ्रमादिहेतुर्न । उक्तदोषात्=भ्रमादेः स्मृतित्वापत्तिरूपदोषात् । **समानविषयेति** । समानविषयेत्याकारकशब्दस्य संस्कारजन्यज्ञानविषयान्यूनानधिकविषयकेत्यर्थकत्वे प्रमुष्टतत्ताकस्मृतेरनुभवजन्यसंस्कारजन्यप्रमुष्टतत्ताकस्मृतिविषयाधिकविषयकसंस्कारजन्यत्वेन स्मृतित्वं न स्यादतः समानविषयेत्याकारकशब्दस्य संस्कारजन्यज्ञानविषयविषयकसंस्कारजन्यज्ञानविषयान्यूनविषयकेत्युभयान्यतरार्थकत्वमित्यर्थः । शुक्तिरजतभ्रमादिहेतुसंस्कारस्य शुक्तिरजतभ्रमादिविषयप्रातिभासिकविषयभिन्नव्यावहारिकरजतादिविषयकत्वेन न संस्कारजन्यशुक्तिरजतभ्रमादेः स्मृतित्वमिति भावः । ननु संस्कारजन्यज्ञानविषयविषयकसंस्कारजन्यत्वस्य स्मृतित्वप्रयोजकत्वे प्रत्यभिज्ञायामुक्तस्मृतित्वप्रयोजकस्य सत्त्वेन स्मृतित्वापत्तिरित्याशङ्क्याह–**संस्कारत्वेनेति** । यद्वा समानविषयेत्याकारकशब्दस्य संस्कारजन्यज्ञानविषयान्यूनविषयकेत्यर्थकत्वस्वीकारे प्रत्यभिज्ञायां स्मृतित्वापादनाभावेऽपि लाघवमाश्रित्याह–**संस्कारत्वेनेति** । भ्रमं प्रति संस्कारस्याविद्यासहकारिकारणत्वेन कारणत्वं न तु संस्कारत्वेनेति न भ्रमादेः स्मृतित्वमिति भावः । अन्यथा=उक्तस्य स्मृतित्वप्रयोजकत्वानङ्गीकारे, संस्कारजन्यत्वस्य स्मृतित्वप्रयोजकत्वस्वीकारे इति वा । **स्मृतित्वापत्तेरिति** । मन्मते प्रत्यभिज्ञां प्रति संस्कारस्य चक्षुरादीन्द्रियसहकारिकारणत्वेनानुमितौ तु व्याप्तिज्ञानव्यापारत्वेन संस्कारस्य कारणत्वं न त्वनुमितिप्रत्यभिज्ञयोः संस्कारस्य संस्कारत्वेन कारणत्वमिति न तयोः स्मृतित्वमिति भावः । दोषसंस्कारयोरर्थाहेतुत्वम्=दोषसंस्कारयोर्ज्ञानं प्रति हेतुत्वेन शुक्तिरजताद्यर्थाहेतुत्वम् । अन्वयव्यतिरेकाभ्याम्=दोषसंस्कारसत्त्वे शुक्तिरजताद्यर्थसत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्याम् । नन्वन्वयव्यतिरेकौ दोषसंस्कारसत्त्वे शुक्तिरजतादिज्ञानसत्त्वं तदभावे शुक्तिरजतादिज्ञानाभाव इति शुक्तिरजतादिज्ञानतदभावाश्रितत्वेनाप्युपपन्नाविति कथमन्वयव्यतिरेकाभ्यां दोषसंस्कारयोः शुक्तिरजताद्यर्थं प्रति हेतुत्वमित्याशङ्क्याह–**विनिगमकाभावेनेति** । दोषसंस्कारयोः शुक्तिरजतादिज्ञानं प्रत्येव हेतुत्वं न तु शुक्तिरजताद्यर्थं प्रति हेतुत्वमिति विशेषनिर्णये युक्त्यादिप्रमाणाभावेनेत्यर्थः । उभयकारणताग्रहात्=शुक्तिरजताद्यर्थस्तज्ज्ञानं चेत्युभयनिरूपितदोषसंस्कारनिष्ठकारणताज्ञानात् । **विषयचैतन्येति**=इदमवच्छिन्नचैतन्येत्यर्थः ॥

**शि० म०–तथा च स्वाकारवृत्त्युपहितस्य रजतस्य प्रमातृचैतन्यनिष्ठाविद्याकार्य्यत्वेन प्रमातृचैतन्याध्यस्तत्वात्प्रत्यक्षत्वं युक्तमिति भावः । नन्वन्तःकरणस्य बहिर्निर्गमनाभावात्कथं विषयचैतन्यस्य प्रमातृचैतन्याभिन्नत्वं तथात्वे वा रजतस्य प्रमातृचैतन्याध्यस्तस्य चक्षुरनपेक्षस्य कथं तदन्वयव्यतिरेकानुविधानं कथं वा तस्य शुक्तित्वाज्ञानकार्य्यत्वम् इदमाकारवृत्तिवत्पुरोवर्तिनि शुक्तित्वाकारवृत्तिसंभवादित्याशङ्क्याह–काचादीत्यादिना । न तावदिन्द्रियवैयर्थ्यं भ्रमजनकधर्मिज्ञाने तज्जनकसंस्कारोद्बोधकसादृश्यज्ञाने चोपयोगात्, नापि पुरोवर्तिनि शुक्तित्वग्रहः दोषेण तस्य प्रतिबन्धात्, प्रमात्रभेदस्य चान्तःकरणबहिर्निर्गमने सति**

स्पष्टत्वादित्यर्थः । **तत्रेति** । तथेत्यर्थः । **वृत्त्यवच्छिन्नचैतन्यमिति** । इदमाकारवृत्त्यवच्छिन्नचैतन्यमित्यर्थः । तथा च धर्मिज्ञानस्य विषयचैतन्याभिन्नत्वेन प्रत्यक्षतया तत्रापरोक्षाध्यासो युज्यते इति भावः ॥

म० प्र०—ननु विषयचैतन्यस्य प्रमातृचैतन्याभिन्नेति विशेषणेन प्रातिभासिकरजतस्य कथं प्रत्यक्षत्वप्रदर्शनं स्याद्विषयचैतन्यस्य प्रमातृचैतन्याभिन्नेति विशेषणदानेऽपि प्रातिभासिकरजतस्य प्रमातृचैतन्याध्यस्तत्वाबोधनादित्याशङ्क्याह—**तथा चेति** । विषयचैतन्यस्य प्रमातृचैतन्याभिन्नेति विशेषणे सतीत्यर्थः । स्वाकारवृत्त्युपहितस्य=रजताकारवृत्तिविषयस्य । **प्रमातृचैतन्यनिष्ठेति** । न च शुक्तिरजताद्युपादानाविद्याया इदमवच्छिन्नचैतन्यनिष्ठत्वेन तस्याः प्रमातृचैतन्यनिष्ठत्वोक्तिः कथं संगच्छत इति वाच्यम् । शुक्तिरजतादिप्रतीतिकाले प्रमातृचैतन्यविषयचैतन्ययोरभेदेन प्रमातृचैतन्यनिष्ठेत्युक्तेरुपपन्नत्वादिति । तथात्वे वा=अन्तःकरणस्य बहिर्निर्गमने वा, चक्षुरनपेक्षस्य=स्वज्ञानोत्पत्त्योश्चक्षुरपेक्षारहितस्य, तदन्वयव्यतिरेकानुविधानम्=चक्षुषः सत्त्वे शुक्तिरजतादिसत्त्वं तदभावे शुक्तिरजताद्यभाव इति चक्षुरन्वयव्यतिरेकप्रयोज्यान्वयव्यतिरेकवत्त्वम् । तस्य=शुक्तिरजतस्य । इन्द्रियवैयर्थ्यम्=भ्रान्त्युत्पत्ताविन्द्रियवैयर्थ्यम् । धर्मिज्ञाने=पुरोवर्त्तिपदार्थज्ञाने । **तज्जनकेति** । भ्रमजनकेत्यर्थः । तस्य=शुक्तित्वग्रहस्य, प्रतिबन्धात्=अनुत्पादात् । धर्मिज्ञानस्य=पुरोवर्तिपदार्थविषयकवृत्त्यवच्छिन्नचैतन्यस्य, तत्र=अपरोक्षशुक्तौ, अपरोक्षाध्यासः=अपरोक्षरजतज्ञानम् ॥

**परिणामो नामोपादानसमसत्ताककार्य्यापत्तिः । विवर्त्तो नामोपादानविषमसत्ताककार्यापत्तिः । प्रातिभासिकं रजतं चाविद्यापेक्षया परिणामः चैतन्यापेक्षया विवर्त इति चोच्यते । अविद्यापरिणामरूपं च तद्रजतम् अविद्याधिष्ठाने इदमवच्छिन्नचैतन्ये वर्त्तते । अस्मन्मते सर्वस्यापि कार्य्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात् ॥**

**शि० म०**—ननु यद्यविद्यापरिणामरूपं रजतं नात्मपरिणामः तर्हि तद्विवर्त्तोऽपि न स्यात् परिणामविवर्त्तशब्दयोः पर्य्यायत्वादित्याशङ्क्य तयोर्भेदमाह=**परिणामो नामेति** । ननु मृत्परिणामस्य घटस्य मृदाश्रितत्ववद्रजतस्यापि स्वोपादानाविद्याश्रितत्वापत्तिः । न हि मृदुपादेयो घटो मृदवयवे वर्तते येनात्मन्यविद्याधिष्ठाने रजतं वर्त्तेतेत्याशङ्क्य चैतन्यावरकाज्ञानस्य तमोवत्स्वाश्रयगतविक्षेपहेतुत्वात्तत्परिणामरूपमपि रजतं तदधिष्ठानचैतन्याश्रितमित्याह—**अविद्यापरिणामरूपं चेति** ॥

म० प्र०—तर्हि=शुक्तिरजतस्यात्मपरिणामत्वाभावे, तद्विवर्त्तोऽपि न स्यात्=शुक्तिरजतमात्मविवर्त्तोऽपि न स्यात्, तयोः=विवर्त्तपरिणामशब्दार्थयोः । परममूले **परिणामो**

१ उत्पद्यमानं कार्यम् ।

**नामेति** । न च शुक्तिरजताद्युपादानाविद्याया व्यावहारिकसत्ताकत्वेन शुक्तिरजतादीनां व्यावहारिकसत्तातिरिक्तप्रातिभासिकसत्ताकत्वेन च शुक्तिरजतादीनां स्वोपादानाविद्यासत्ताभिन्नसत्ताकत्वात्स्वोपादानाविद्यासत्ताकत्वाभावेन शुक्तिरजतादिष्वव्याप्तिरिति वाच्यम् । द्विविधसत्ताभिप्रायेण लक्षणप्रणयनेनाव्याप्त्यभावात्, त्रिविधसत्त्वपक्षेऽपि परिणामलक्षणवाक्यस्योपादानेन समं न ह्युपादानोपादेययोरत्यन्तसादृश्यं तन्तुपटयोरपि तन्तुत्वपटत्वादिना वैजात्यादित्युक्तेर्मिथ्यात्वेन सदृशं सत्तास्वरूपं यस्य कार्य्यस्यैतादृशं यदुत्पद्यमानं कार्य्यं परिणाम इत्यर्थकत्वेन शुक्तिरजतादिष्वव्याप्त्यभावादिति । विवर्त्तेऽतिव्याप्तिवारणाय **समसत्ताकेति** । परममूले **विवर्त्तो नामेति** । न च त्रिविधसत्त्वपक्षे शुक्तिरजतादीनां स्वोपादानाविद्यासत्ताविलक्षणप्रातिभासिकसत्ताकत्वेन विवर्त्तलक्षणस्य शुक्तिरजतादिष्वतिव्याप्तिरिति वाच्यम् । विवर्तलक्षणवाक्ये उपादानशब्देन चैतन्यस्यैव ग्रहणयोग्यत्वेन विवर्त्तलक्षणवाक्यस्योपादानेन चैतन्येन विषमं सत्यत्वेन सादृश्याभाववत् सत्तास्वरूपं यस्यैतादृशं यदुत्पद्यमानं कार्य्यं विवर्त्त इत्यर्थकत्वेन विवर्त्तलक्षणस्य शुक्तिरजतादिष्वतिव्याप्त्यापादनासंभवादिति । परिणामेऽतिव्याप्तिवारणाय **विषमसत्ताकेति** । **स्वोपादानेति**=रजतोपादानेत्यर्थः । **मृदुपादेय इति** । उपादीयते जन्यते इत्युपादेयमिति व्युत्पत्त्योपादेयं कार्यं मृद उपादेयो मृदुपादेय इत्यर्थः । मृदवयवे=मृदधिष्ठाने, येन=कार्य्यस्य स्वोपादानाश्रयवृत्तित्वेन । **तमोवदिति** । यथा प्रसिद्धबाह्यतमसः स्वाश्रयरज्ज्वादिगतसर्पादिकार्य्यहेतुत्वं तद्वदित्यर्थः । **स्वाश्रयेति**=अज्ञानाश्रयेत्यर्थः । **विक्षेपहेतुत्वादिति** । विक्षिप्यते जन्यते इति विक्षेप इति व्युत्पत्त्या कार्य्यहेतुत्वादित्यर्थः । **तत्परिणामेति** । अज्ञानपरिणामेत्यर्थः । **तदधिष्ठानेति**=अज्ञानाधिष्ठानेत्यर्थः । यस्मात्कारणादज्ञानं स्वाधिष्ठाने रजतादिकार्य्यमुत्पादयत्यतस्तस्य कार्य्यस्याज्ञानाधिष्ठानचैतन्याश्रितत्वमिति भावः ॥

**ननु चैतन्यनिष्ठरजतस्य कथमिदं रजतमिति पुरोवर्तिना तादात्म्यम् । उच्यते । यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेनोपलम्भः शरीरस्य सुखाद्यधिकरणतावच्छेदकत्वात्तथा चैतन्यमात्रस्य रजतं प्रत्यनधिष्ठानतया इदमवच्छिन्नचैतन्यस्य तदधिष्ठानत्वेनेदमवच्छेदकतया रजतस्य पुरोवर्तिसंसर्गप्रत्यय उपपद्यते । तस्य च विषयचैतन्यस्य तदन्तःकरणोपहितचैतन्याभिन्नतया विषयचैतन्याध्यस्तमपि रजतं साक्षिण्यध्यस्तं केवलसाक्षिवेद्यम् ॥**

शि० म०—ननु चैतन्यस्य स्वोपादानाविद्याधिष्ठानतया रजतस्य कथंचित्तदाश्रितत्वेऽपि पुरोवर्तिद्रव्यस्य तथात्वाभावात्कथं तदाश्रितत्वम्, ततश्चेदं रजतमिति तादात्म्यव्यपदेशानुपपत्तिरिति शङ्कते—**नन्विति**। **चैतन्यमात्रस्येति** । इदमवच्छिन्नचैतन्यस्यैव रजतोपादानाविद्याधिष्ठानतया तस्यैवाविद्याजनितविक्षेपाधिष्ठानत्वौचित्या-

दिति भावः। नन्वेवमिदमवच्छिन्नचैतन्याध्यस्तस्य रजतस्यान्तःकरणावच्छिन्नचैतन्याध्यस्तत्वाभावेन कथं प्रमातृचैतन्याध्यस्तत्वरूपं प्रत्यक्षत्वमित्याशङ्क्य तस्यान्तःकरणविशिष्टाश्रितत्वाभावेऽपि तदुपहितचैतन्याध्यस्तत्वात्तस्यैव प्रमातृचैतन्याभिन्नत्वपदेन विवक्षितत्वादित्याशयेनाह—**तस्य चेति**। **साक्षिण्यध्यस्तमिति**। **ननु** किमिदमध्यस्तत्वं न तावद् भ्रमविषयत्वम्, तत्र भ्रमत्वं यदि दोषजन्यज्ञानत्वं तदा सर्वस्य कार्य्यस्याविद्यादोषजन्यतया ब्रह्मसाक्षात्कारस्यापि तज्जन्यत्वेनातिव्याप्तिः। नापि दोषत्वेन तज्जन्यत्वम्,काचादिसाधारणदोषत्वस्यानिर्वचनात्। न च संस्कारजन्यानुभवत्वं प्रत्यभिज्ञायामतिव्याप्तेः। न चासद्विषयत्वमसत्ख्यात्यनभ्युपगमात्। नापि व्यधिकरणप्रकारकज्ञानत्वम्, घटे रूपं घटे घटत्वमित्यादिज्ञानेऽतिव्याप्तेः। न च रजतस्याध्यस्तत्वे प्रमाणमस्ति प्रत्यक्षेणाननुभवात्। न च दृश्यत्वादिना तदनुमानं दृष्टान्ताभावात्तस्माल्लक्षणप्रमाणाभावान्न युक्तं रजतादेरध्यस्तत्वमिति ॥

म० प्र०—**स्वोपादानेति**=रजतोपादानेत्यर्थः। कथंचित्=स्वोपादानाविद्याश्रयत्वेन, तथात्वाभावात्=स्वोपादानाविद्याश्रयत्वाभावात्। तदाश्रितत्वम्=शुक्तिरजतस्य पुरोवर्त्तिशुक्त्यादिपदार्थाश्रितत्वम्। ततश्च=शुक्तिरजतादेः पुरोवर्त्तिशुक्त्यादिपदार्थाश्रितत्वाभावादेव। तस्यैव=इदमवच्छिन्नचैतन्यस्यैव। विक्षेपेति=शुक्तिरजतादिकार्य्येत्यर्थः। परममूले **अवच्छेदकत्वादिति**। व्यावर्त्तकत्वादित्यर्थः। तस्य=शुक्तिरजतादेः। **तदुपहितेति**=इदमवच्छिन्नचैतन्याभिन्नान्तःकरणोपहितेत्यर्थः। ननु विषयप्रत्यक्षलक्षणेऽन्तःकरणोपहितस्य ग्रहणाभावेनोक्तदूषणं तदवस्थमित्याशङ्क्याह—**तस्यैवेति**। अन्तःकरणोपहितचैतन्याध्यस्तत्वस्यैवेत्यर्थः। तत्र=भ्रमविषयत्वरूपाध्यस्तत्वघटकभ्रमे। उपाधिनिमित्तकभ्रमकाले उपाधिसन्निधानरूपदोषस्य सत्त्वेन स्फटिकलौहित्यज्ञानादावव्याप्त्यभावेऽपि ब्रह्मसाक्षात्कारेऽतिव्याप्तिमाह—**तदेति**। तर्हीत्यर्थः। अविद्यादोषजन्यतया=साक्षात्परंपरया वाऽविद्यारूपदोषजन्यतया, तज्जन्यत्वेन=अविद्याजन्यत्वेन। अतिव्याप्तिः=ब्रह्मसाक्षात्कारेऽतिव्याप्तिः। तज्जन्यत्वम्=दोषजन्यत्वम्। ब्रह्मसाक्षात्कारस्याविद्यात्वेनाविद्याजन्यत्वान्नातिव्याप्तिरिति भावः। **अनिर्वचनादिति**। न च भ्रमज्ञानजनकत्वं दोषत्वमिति काचादिसाधारणदोषत्वस्य निर्वचनात्कथं काचादिसाधारणदोषत्वस्यानिर्वचनमिति वाच्यमात्माश्रयाददृष्टादावतिव्याप्तेश्चेति। **अतिव्याप्तेरिति**। अयथार्थस्मृतौ संस्कारजन्यानुभवत्वाभावेन लोहितः स्फटिक इत्यादिज्ञाने संस्कारजन्यत्वाभावेन तयोरव्याप्तेश्चेत्यपि बोध्यमिति। **व्यधिकरणप्रकारकज्ञानत्वमिति**। व्यधिकरणः=विशेष्यभिन्नाधिकरणकः प्रकारो यस्मिन् ज्ञाने तत्तथैतादृशज्ञाननिष्ठज्ञानत्वमित्यर्थः। **अतिव्याप्तेरिति**। न च घटनिष्ठाधारतानिरूपिताधेयतासंबन्धेन रूपादौ घटस्य सत्त्वेन कथमुक्तज्ञानेऽतिव्याप्तिरिति वाच्यम्। घटनिष्ठाधारतानिरूपिताधेयतासंबन्धस्य वृत्तिताऽनियामकत्वात्। प्रत्यक्षेणाननुभवात्=शुक्तिरजतादिनिष्ठाध्यस्तत्वे प्रत्यक्षाभिन्नानुभवाभावात्प्रत्यक्षनिरूपितविषयत्वाभावादिति वा। तदनुमानम्=शुक्तिरजतादिनिष्ठमिथ्यात्वानुमानम् ॥

**शि० म०**—अत्राहुः—स्मृतिरूपत्वे सति पूर्वदृष्टसजातीयत्वमध्यासलक्षणम्, स्मृतिरूपत्वं च स्मर्यमाणसदृशत्वम्, तच्च प्रमाणाजन्यज्ञानविषयत्वम् अज्ञातगोचरवृत्त्यनुपहितत्वं वा । तेन स्मर्यमाणे घटादौ नातिव्याप्तिः । प्रतीतिनियतसत्ताकाध्यासस्यात्र लक्ष्यत्वेन सुखादेरपि तथात्वात् नातिव्याप्तिः । अभिनवोत्पन्नवस्तुन्यतिव्याप्तिवारणाय द्वितीयविशेषणम् । अध्यासमात्रलक्षणं तु परत्र परावभासत्वं पारमार्थिकत्वावच्छिन्नस्वात्यन्ताभावाधिकरणे प्रतीयमानत्वमिति यावत् ॥

**म० प्र०**—अध्यासलक्षणम्=प्रतीतिसमकालिकाध्यस्तत्वावच्छिन्नाध्यस्तलक्षणम् , तच्च=स्मर्य्यमाणसदृशत्वं च, वृत्त्यनुपहितत्वम्=वृत्त्यविषयत्वम्, तेन=पूर्वदृष्टसजातीयत्वनिवेशेन । **नातिव्याप्तिरिति** । स्मर्य्यमाणघटादीनां पूर्वदृष्टत्वेन पूर्वदृष्टसजातीयत्वाभावादतिव्याप्त्यभाव इत्यर्थः । अत्र=उक्ताध्यस्तलक्षणे । तथात्वान्नातिव्याप्तिः=स्मृतिरूपत्वे सति पूर्वदृष्टसजातीयत्वज्ञाप्यातिव्याप्तेरभावः, द्वितीयविशेषणम्=सत्यन्तविशेषणम् । अध्यासमात्रलक्षणम्=अध्यस्तमात्रलक्षणम् । **पारमार्थिकत्वेति** । पारमार्थिकत्वावच्छिन्नप्रतियोगिताको यो वस्त्वत्यन्ताभावस्तस्य यदधिकरणं तत्र प्रतीयमानत्वमित्यर्थः ॥

**शि० म०**—एतदभिप्रेत्यैव भगवता भाष्यकारेणोक्तम् । 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इति । न चात्र प्रमाणाभावः, सदिदं रजतमिति स्वाधिकरणे पारमार्थिकत्वेन प्रतिपन्नस्य रजतस्य नेदं रजतमिति प्रत्यक्षेण तदवच्छिन्नाभावप्रतियोगित्वावगमात् । सदिति प्रतीयमानं रजतं स्वसमानाधिकरणपारमार्थिकत्वावच्छिन्नात्यन्ताभावप्रतियोगि बाध्यत्वात् , यन्नैवं तन्नैवं यथेदन्ता इत्यनुमानाच्च । ततश्च रजतमध्यस्तमिति ॥

**म० प्र०**—**एतदभिप्रेत्यैवेति** । स्मृतिरूपपूर्वदृष्टसजातीयार्थकपूर्वदृष्टशब्दाभ्यां प्रातीतिकाध्यासलक्षणं परत्रावभासशब्दाभ्यामध्यासमात्रलक्षणमित्यभिप्रायेणैव । **स्मृतिरूपः परत्र पूर्वदृष्टावभास इतीति** । स्मृतिरूपः=स्मर्य्यमाणसदृशः । सादृश्यं च प्रमाणाजन्यज्ञानविषयत्वं स्मृत्यारोपयोः प्रमाणाजन्यत्वात् । पूर्वदृष्टपदं पूर्वदृष्टसजातीयपरमभिनवरजतादेः पूर्वदृष्टत्वाभावात्तथा च प्रमाणाजन्यज्ञानविषयत्वे सति पूर्वदृष्टसजातीयत्वं प्रातीतिकाध्यासलक्षणं स्मृतिरूपपूर्वदृष्टपदाभ्यामुक्तं परत्रावभासशब्दाभ्यामध्यासमात्रलक्षणमुक्तमित्यर्थः । केचित्तु अत्राध्यास इत्यनुषङ्गः । अत्र परत्रावभास इत्येव लक्षणं शिष्टं पदद्वयं तदुपपादनार्थम्, तथा हि अवभास्यते इत्यवभासः रजताद्यर्थस्तस्यायोग्यमधिकरणं परत्रपदार्थः । अधिकरणस्यायोग्यत्वमारोप्यात्यन्ताभाववत्त्वम्, तथा चैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववत्यवभास्यत्वमित्यर्थः । इदं च साधनाद्यध्याससाधारणलक्षणम् । ब्रह्मभिन्नं सर्वं मिथ्या दृश्यत्वादित्यनुमाने पक्षैकदेशे संयोगादौ सिद्धसाधनवारणाय **एकावच्छेदेनेति,** संयोगादेः संसृज्यमानस्वात्यन्ताभाववद्वृक्षादाववभास्यत्वेऽपि स्वस्वात्यन्ताभावयोर्मूलाग्रावच्छेदकभेदान्न सिद्धसाधनमिति । पूर्वं घटाद्यभाववद्भूतलादौ पश्चादानीता घटादयो भान्तीति घटादौ सिद्धसाधननिरासाय स्वसंसृज्यमान इति पदम्, तेन स्वाभावकाले

प्रतियोगिसंसर्गस्य विद्यमानतोच्यते इति न सिद्धसाधनमिति, भूत्वावच्छेदेनावभास्यगन्धे सिद्धसाधननिरासाय **स्वात्यन्ताभाववतीति** पदम्। नन्वस्य लक्षणस्यासंभवः शुक्तौ रजतस्य सामग्र्यभावेन संसर्गासत्त्वात्। न च स्मर्यमाणसत्यरजतस्यैव परत्र शुक्तावववभास्यत्वेनाध्यस्तत्वोक्तिरिति वाच्यम्, अन्यथाख्यातिप्रसङ्गादित्यत आह–**स्मृतिरूप इति**। स्मर्य्यते इति स्मृतिः सत्यरजतादिस्तस्य रूपमिव रूपमस्येति स्मृतिरूपः स्मर्यमाणसदृश इत्यर्थः। सादृश्योक्त्या स्मर्यमाणस्यारोप्यस्य भेदान्नान्यथाख्यातिरित्युक्तं भवति। सादृश्यमुपपादयति-**पूर्वदृष्टेति**। दृष्टं दर्शनं संस्कारद्वारा पूर्वदर्शनादवभास्यत इति पूर्वदृष्टावभासस्तेन संस्कारजन्यज्ञानविषयत्वं स्मर्यमाणारोप्ययोः सादृश्यमुक्तं भवति स्मृत्यारोपयोः संस्कारजन्यत्वात्। न च संस्कारजन्यत्वादारोपस्य स्मृतित्वापत्तिरिति वाच्यम्, दोषसंप्रयोगजन्यत्वस्यापि विवक्षितत्वेन संस्कारमात्रजन्यत्वाभावात्, अत्र संप्रयोगशब्देनाधिष्ठानसामान्यज्ञानमुच्यतेऽहङ्काराध्यासे इन्द्रियसंप्रयोगालाभादेवं च दोषसंप्रयोगसंस्कारबलाच्छुक्त्यादौ रजतादिकमुत्पन्नमस्तीति परत्र परावभास्यत्वलक्षणमुपपन्नमिति स्मृतिरूपपूर्वदृष्टपदाभ्यामुपपादितमित्युक्तभाष्यव्याख्यां चक्रिरे इत्यपि बोध्यमिति। अत्र=रजतादेरुक्तमिथ्यात्वे, सत्=व्यावहारिकम्, पारमार्थिकत्वेन प्रतिपन्नस्य=व्यावहारिकत्वेन ज्ञातस्य। **तदवच्छिन्नेति**=व्यावहारिकत्वावच्छिन्नेत्यर्थः। **पारमार्थिकत्वावच्छिन्नेति**=पारमार्थिकत्वावच्छिन्नप्रतियोगिताकेत्यर्थः। यन्नैवं=यद्वस्तु पूर्वोक्तात्यन्ताभावप्रतियोगि। तन्नैवं=तद्वस्तु बाध्यं न॥

**सुखादिवदनन्यवेद्यमिति चोच्यते।**

**शि० म०**–नन्विदमवच्छिन्नस्वाधिष्ठानचैतन्यस्य साक्ष्यभेदे रजतस्य साक्ष्यभिन्नत्वे दुष्टकरणानामिवादुष्टकरणानामपि पुरुषाणां पुरोवर्तिनि शुक्तित्वादिग्रहसमये तदीयान्तःकरणोपहितचैतन्याभिन्नविषयचैतन्याध्यस्ततया साक्षात्साक्षिसंबन्धाच्छुक्तित्वादिवत्तस्य भानापत्तिरित्याशङ्क्याह–**सुखादिवदिति**। यदीयदोषक्षुभिताऽविद्या यदाकारेण परिणमते तस्य परिणामस्य तद्दोषवत्पुरुषग्राह्यत्वनियमान्नातिप्रसङ्गः। यथा सिद्धान्ते शुद्धचैतन्याध्यस्तोऽपि स्वप्नरथादिस्तज्जनकनिद्रादोषवतैव गृह्यते नान्येन। यथा वा देवदत्तयज्ञदत्तयोः पुरोवर्तिसंप्रयोगजनितान्तःकरणबहिर्निर्गमनयोरुभयान्तःकरणोपहितसाक्षिचैतन्यैक्येऽपि नान्यान्तःकरणप्रत्ययविषयत्वेनान्यान्तःकरणगतसुखाद्यन्यस्य विषयः। यथा च परमते द्वित्वादेस्संयुक्तसमवायसंबन्धस्य सर्वसाधारण्येऽपि यदपेक्षाबुद्धिजन्यं द्वित्वादि तत्तेनैव गृह्यते, नान्येन, तद्वदिति भावः॥

**म० प्र०**–**स्वाधिष्ठानेति**=रजताधिष्ठानेत्यर्थः। साक्ष्यभिन्नत्वे=साक्षिसत्तातिरिक्तसत्ताकत्वाभावरूपाभेदवत्त्वे। **पुरोवर्तिनीति**। भ्रमाधिष्ठानपुरोवर्तिशुक्त्यादौ। **तदीयेति**=अदुष्टकरणपुरुषीयेत्यर्थः। तस्य=शुक्तिरजतादेः। **यदीयेति**=यत्पुरुषीयेत्यर्थः। **तज्जनकेति**=स्वप्नरथादिजनकेत्यर्थः। **नान्यान्तःकरणेति**। देवदत्तादीनामन्तःकरणस्य परस्परं

भेदाद्देवदत्तान्तःकरणगतसुखादीनां देवदत्तान्तःकरणगतप्रत्ययविषयत्वेन यज्ञदत्तादीनामपरोक्षज्ञानविषयो नेत्यर्थः। **परमते इति**। नैयायिकमते द्वित्वादिनिष्ठेन्द्रियप्रतियोगिकसंयुक्तसमवायस्य बहुपुरुषेन्द्रियवृत्तित्वेऽपीत्यर्थः। **यदपेक्षाबुद्धिजन्यमिति**। यत्पुरुषीयापेक्षाबुद्धिजन्यमित्यर्थः। 'द्वित्वादिपरार्द्धान्ता अपेक्षाबुद्धिजा मताः' इत्युक्तेर्द्वित्वादीनामपेक्षाबुद्धिजन्यत्वमेव न त्वेकत्ववदपेक्षाबुद्धेः प्रागपि सत्त्वमिति भावः॥

**ननु साक्षिण्यध्यस्तत्वेऽहं रजतमिति प्रत्ययः स्यादहं सुखीतिवदिति चेत् उच्यते। न हि सुखादीनामन्तःकरणावच्छिन्नचैतन्यनिष्ठाविद्याकार्य्यत्वप्रयुक्तमहं सुखीति ज्ञानं सुखादीनां घटादिवच्छुद्धचैतन्ये एवाध्यासात्॥**

**शि॰ म॰**—किमहमाकारप्रत्ययविषयत्वे केवलसाक्षिवेद्यत्वं प्रयोजकमुत साक्ष्यध्यस्तत्वमाहोस्वित्तन्निष्ठाविद्यात्कार्य्यत्वम्। नाद्यः, शरीरेन्द्रियादौ व्यभिचारादित्याशयेन आह—**उच्यते इति**। द्वितीयतृतीयौ दूषयति—**न हीति**॥

**म॰ प्र॰**—**विषयत्वे इति**=विषयत्वनिरूपितेत्यर्थः। प्रयोजकम्=समव्यापकं केवलसाक्षिवेद्यत्वसत्त्वेऽहमाकारप्रत्ययविषयत्वसत्त्वं तदभावेऽहमाकारप्रत्ययविषयत्वाभाव इत्यन्वयव्यतिरेकज्ञाप्यकारणतावद्वा, व्यभिचारात्=शरीरेन्द्रियादौ केवलसाक्षिवेद्यत्वरूपकारणाभावेऽप्यहमाकारप्रत्ययविषयत्वाभावाभावेन व्यतिरेकव्यभिचारात्। प्रकृते कारणं केवलसाक्षिवेद्यत्वं तदभाववच्छरीरादि, तत्र चक्षुरादिप्रमाणव्यापारेणैव साक्षिविषयत्वसत्त्वादतो न केवलसाक्षिवेद्यत्वकार्यमहमाकारप्रत्ययविषयत्वम्। यो हि यत्कार्य्यं न स कारणाभावाधिकरणवृत्तिः यथा धूमादिरिति भावः। न हि यत्र यदध्यासस्तस्य तन्निष्ठाविद्याप्रयुक्तं तन्निष्ठतयैव भानमिति नियमः संभवति। सुखादेर्घटादिवच्छुद्धचैतन्याध्यस्तत्वेऽप्यन्तःकरणविशिष्टचैतन्येऽहं सुखीति प्रत्ययवदन्तःकरणोपहितशुद्धचैतन्येऽहं सुखीत्यादिसुखादिनिष्ठसाक्षिवृत्तित्वावगाहिप्रत्ययादर्शनादित्याशयेनाह—**द्वितीयतृतीयाविति**। यद्वा सुखादिषु साक्ष्यध्यस्तत्वस्य जीवसाक्ष्याश्रिताविद्याकार्य्यत्वस्य च सत्त्वेऽप्यन्तःकरणविशिष्टविषयक 'अहं सुखी' इत्यादिप्रत्ययवदन्तःकरणोपहितजीवसाक्षिविषयक 'अहं सुखी' इत्यादिप्रत्ययाभावान्न द्वितीयतृतीयौ अहमाकारप्रत्ययविषयत्वस्य समव्यापकौ इत्यभिप्रेत्याह—**द्वितीयतृतीयाविति**। परममूले **अन्तःकरणावच्छिन्नेति**=अन्तःकरणविशिष्टेत्यर्थः। परममूले **प्रयुक्तमिति**। प्रयोज्यमित्यर्थः। परममूले **ज्ञानं न हीति**। येनान्तःकरणविशिष्टचैतन्यगतसुखादेरहं सुखीत्यादिप्रत्ययविषयत्वं स्यादिति शेषः। परममूले **शुद्धचैतन्य एवाध्यासादिति**। तथा च यत्र यदध्यासस्तस्य तन्निष्ठाविद्याप्रयुक्तं तन्निष्ठतयैव भानमिति नियमस्वीकारेऽहं सुखीति जीवसाक्षिगततयैव सुखादीनां भानं स्यात्सुखादीनां जीवसाक्षिण्यध्यासान्नान्तःकरणविशिष्टचैतन्यगततया सुखादीनां भानं स्यात् सुखादीनामन्तःकरणविशिष्टचैतन्येऽध्यासाभावात्तच्चानिष्टमिति भावः। अत्र घटादिप्रत्यक्षकाले घटादेर्जीवसाक्ष्यध्यस्तत्वेऽप्यहमाकारप्रत्यय-

विषयत्वाभावात् घटादिकार्यस्येश्वरसाक्ष्यध्यस्तत्वेश्वरसाक्षिनिष्ठाविद्याकार्यत्वयोः सत्त्वेऽप्यहमाकारप्रत्ययविषयत्वाभावाच्च न साक्ष्यध्यस्तत्वादिकमहमाकारप्रत्ययविषयत्वप्रयोजकमित्यपि बोध्यमिति ॥

**किंतु यस्य यदाकारानुभवाहितसंस्कारसहकृताविद्याकार्य्यत्वं तस्य तदाकारानुभवविषयत्वमित्येवानुगतं नियामकम्। तथा चेदमाकारानुभवाहितसंस्कारसहकृताविद्याकार्य्यत्वात् घटादेरिदमाकारानुभवविषयत्वमहमाकारानुभवाहितसंस्कारसहकृताविद्याकार्य्यत्वादन्तःकरणादेरहमनुभवविषयत्वं शरीरेन्द्रियादेरुभयविधानुभवाहितसंस्कारसहकृताविद्याकार्य्यत्वादुभयविधानुभवविषयत्वम् । तथा चोभयविधानुभवः इदं शरीरमहं देहः अहं मनुष्यः अहं ब्राह्मणः इदं चक्षुरहं काणः इदं श्रोत्रमहं बधिर इति ॥**

शि०म०—नन्विदंप्रत्ययविषयत्वे प्रमाणव्यापारसापेक्षसाक्षिवेद्यत्वं प्रयोजकम् । अहंप्रत्ययविषयत्वे च केवलसाक्षिवेद्यत्वम् । इदं चान्तःकरणधर्माणामेव । शरीरेन्द्रियादीनां त्वन्यदेव तत्प्रयोजकमिति शङ्कते—**किन्त्विति** । सर्वत्रानुगते नियामके संभवति नाननुगतं न्याय्यमित्याह—**यस्येति** । यस्य यदाकारानुभवाहितसंस्कारजन्यत्वं तस्य तदाकारानुभवविषयत्वमित्येवम् नियामकम्, न तु तत्सहकृताविद्याकार्य्यत्वं गौरवात् । अत एव वक्ष्यति, सत्यस्थलीयेदमाकारानुभवाहितसंस्कारजन्यत्वादिदमाकारानुभवविषयतेति । एतच्चाविद्याकार्य्याणामेवाहमादिप्रत्ययविषयत्वप्रयोजकम्, जीवाविद्यादीनामजन्यत्वात् । यद्वा यज्ज्ञानस्य यदाकारानुभवाहितसंस्कारजन्यत्वं तस्य तदाकारेण तदवभासकत्वम् । एवं चाविद्यादिज्ञानस्याहमज्ञइत्याद्यहमाकारानुभवसंस्कारजन्यत्वादहमाकारतेति भावः । अनुगतत्वमेव नियामकस्योदाहरणप्रदर्शनेन दर्शयति—**तथा चेति** । अविद्याकार्य्यस्य घटादेरिदमाकारानुभवजन्यसंस्कारजन्यत्वादिदमाकारानुभवविषयत्वं तदनुभवस्य इदमाकारानुभवसंस्कारजन्यत्वादिदमाकारत्वमिति वाऽर्थः । एवमुत्तरत्रापि व्याख्येयम् ॥

म० प्र०—वेदान्त्येकदेशी अहमाकारप्रत्ययविषयत्वादीनां नानाप्रयोजकाभिप्रायेण शङ्कते—**नन्विति** । प्रयोजकम्=व्याप्यं व्यापकं च । न चेयमविद्याऽयं जीव इदं रजतमित्यविद्याजीवशुक्तिरजतादीनामिदमाकारप्रत्ययविषयत्वं न स्यात्तेषां प्रमाणव्यापारसापेक्षसाक्षिवेद्यत्वाभावादिति वाच्यम् । स्वातिरिक्तजीवे तन्निष्ठाविद्यायां चेयमविद्येत्यादीदमाकारप्रत्ययविषयत्वाभावात् । स्वातिरिक्तजीवादाविदमाकारप्रत्ययविषयत्वे तु प्रमाणव्यापारसापेक्षसाक्षिवेद्यत्वस्यापि संभवात् । स्वापरोक्षस्वकीयाविद्यायां त्वहमज्ञ इत्यादिप्रत्ययविषयत्वस्यैव सत्त्वेनोक्तेदमाकारप्रत्ययविषयत्वाभावाच्छुक्तिरजतादीनामिदमाकारप्रत्ययाहितसंस्कारजन्यत्वस्यान्यस्यैवेदमाकारप्रत्ययविषयत्वप्रयोजकत्वादिति ।

नन्वेवं शुक्तिरजतादीनामहं रजतमित्यादिप्रत्ययविषयत्वं स्याच्छुक्तिरजतादिषु केवलसाक्षिवेद्यत्व-सत्त्वाच्छरीरादीनां चाहं मनुष्य इत्याद्यहंप्रत्ययविषयत्वं न स्याच्छरीरादिषु केवलसाक्षिवेद्यत्वाभावा-दित्याशङ्क्याह—**इदं चेति**। केवलसाक्षिवेद्यत्वं चेत्यर्थः। **अन्तःकरणधर्माणामेवेति**। अन्तःकरणस्य तद्धर्माणामविद्यायाश्चैवाहमाकारप्रत्ययविषयत्वप्रयोजकमित्यर्थः। एवकारव्यावर्त्यमाह—**शरीरेति**। अहमाकारप्रत्ययविषयत्वे इति शेषः। अन्यदेव=अहमाकारानुभवाहितसंस्कार-जन्यत्वमेव, यज्ज्ञानस्य=यस्य घटादेर्ज्ञानस्य। यदाकारानुभवाहितसंस्कारजन्यत्वम्=इदमाद्या-कारानुभवजन्यसंस्कारजन्यत्वम्। तस्य=घटादिज्ञानस्य। तदाकारेण तदवभासकत्वम्=अयं घटोऽस्ति अयं घटः प्रकाशते इत्याद्याकारेण घटादिविषयकव्यवहारजनकत्वम्। यद्वा, यज्ज्ञा-नस्य=यादृशज्ञानस्य, तस्य=तादृशज्ञानस्य शेषं पूर्ववदित्यर्थः। न च चक्षुरादिजन्यघटादिज्ञानस्य संस्कारजन्यत्वात्स्मृतित्वापत्तिरिति वाच्यम्, स्मृतित्वप्रयोजकानां स्मृतिप्रागभावजन्यत्वादीनां चक्षुरादिज्ञानेष्वभावादिति। परममूले **तथा चेति**। निरुक्तानुगतप्रतीतिनिष्ठेदमाकारत्वादि-नियामके सतीत्यर्थः। परममूले **अहमनुभवविषयत्वमिति**। अहमस्म्यहं सुख्यहं दुःखीत्याद्यहमाकारानुभवविषयत्वमित्यर्थः। उत्तरत्रापि=अहमाकारानुभवेत्यादिवाक्येऽपि। अहमा-कारानुभवेत्यादिवाक्यमपीति वा॥

**प्रकृते च प्रातिभासिकरजतस्य प्रमातृचैतन्याभिन्नेदमवच्छिन्न-चैतन्यनिष्ठाविद्याकार्य्यत्वेऽपीदं रजतमिति सत्यस्थलीये-दमाकारानुभवाहितसंस्कारजन्यत्वादिदमाकारानुभवविषयता, न त्वहं रजतमित्यहंकारानुभवविषयतेत्यनुसंधेयम्। नन्वेव-मपि मिथ्यारजतस्य साक्षात्साक्षिसंबन्धतया भानसंभवे रजतगोचरज्ञानाभासरूपाविद्यावृत्तेरभ्युपगमः किमर्थ इति चेदुच्यते॥**

शि० म०—नतु प्रातिभासिकरजतज्ञानस्य न स्वसमानविषयेदमाकारानुभव-संस्कारजन्यत्वम्, तस्याननुभूतविषयत्वात्। न च घटाद्यनुभवस्य सजातीयघटादे-रिदमाकारानुभवसंस्कारजन्यत्ववत् रजतानुभवस्यापि तज्जातीयसत्यस्थलीयेद-माकाररजतानुभवसंस्कारजन्यत्वाद्युक्तमिदमाकारत्वमिति वाच्यम्, तथा सति घटानुभववद्रजतानुभवस्यापि प्रमात्वापत्तेः। न चेष्टापत्तिः, तद्विषयरजतस्य सविक-ल्पकज्ञाननिवर्त्त्याविद्याकार्य्यत्वानुपपत्तेरित्याशङ्क्य न हि प्रमाहितसंस्कारजन्य-त्वेन प्रामाण्यम्, स्मृतेरपि तत्प्रसङ्गात्। किंत्वनधिगताबाधितार्थविषयत्वेनेति, प्रातिभासिकस्य च प्रत्यक्षेण बाधितत्वात्तज्ज्ञानस्येदमाकारप्रमासंस्कारजन्यतयेद-माकारत्वेऽपि न प्रामाण्यमित्यभिप्रेत्याह—प्रकृते चेति। ननु रजतस्येदमाकारा-नुभवविषयत्वेऽपि तद्गोचराविद्यावृत्त्यभ्युपगमः किमर्थः। न तावत्साक्षिसंबन्धाय,

रजतस्य साक्षात्साक्षिसंबन्धतयैवोपपत्तेः । नाप्यावरणभङ्गाय, रजतस्य सर्वदाऽनावृतसाक्षिणैव संबन्धात् । अन्यथा घटादिवद्रजतमपि कदाचिदपि न ज्ञायेत । न च व्यवहाराय, तस्यानावृतार्थप्रकाशेनैवोपपत्तेरिति सिद्धान्त्येकदेशी चोदयति-नन्वेवमपीति ॥

म० प्र०-**समानविषयेति**=प्रातिभासिकरजतज्ञानविषयसमानविषयकेत्यर्थः । तस्य=प्रातिभासिकरजतज्ञानस्य । **रजतेति**=प्रातिभासिकरजतेत्यर्थः । तथा सति=सत्यरजतीयप्रमाहितसंस्कारजन्यत्वे सति । **सविकल्पकेति**=ब्रह्मात्मैक्यावगाहिभिन्न 'इयं शुक्तिः' इति सविकल्पकेत्यर्थः । **अनुपपत्तेरिति** । यत्र प्रमाविषयत्वं तत्र सविकल्पकनिवर्त्त्याविद्याकार्य्यत्वानुपपत्तिरिति व्याप्तेरिति भावः । तत्प्रसङ्गात्=प्रामाण्यप्रसङ्गात्, न चेष्टापत्तिः स्मृत्यारोपयोः प्रमाणाजन्यत्वेनाप्रमात्वादिति । प्रातिभासिकस्य=प्रातिभासिकरजतादेः । परममूले **प्रकृते इति** । ननु साक्षिण्यध्यस्तत्वे इत्यादिपूर्वग्रन्थे इत्यर्थः । **तद्गोचरेति**=शुक्तिरजतादिगोचरेत्यर्थः । साक्षिसंबन्धाय=साक्षिण्यध्यासाय । **आवरणभङ्गायेति** । वृत्त्यभ्युपगम इति शेषः । अन्यथा=शुक्तिरजतादेः सर्वदाऽनावृतसाक्षिणा सह संबन्धानङ्गीकारे । **कदाचिदपि न ज्ञायेतेति** । केवलसाक्षिणा कदाचिदपि न ज्ञायेत किंत्विन्द्रियद्वारैव घटादिवच्छुक्तिरजतादिज्ञानं स्यादित्यर्थः । यद्वाऽपिशब्दो भिन्नस्थानकस्तथा च कदाचिन्न ज्ञायेतापीति संबन्धसत्त्वेन कदाचिदज्ञातसत्ताकमपि स्यादित्यर्थः । व्यवहाराय=इदं रजतमित्यादिशब्दप्रयोगादिरूपव्यवहाराय । तस्य=उक्तव्यवहारस्य, अनावृतार्थप्रकाशेनैव=अनावृतो यः शुक्तिरजताद्यर्थस्य प्रकाशः साक्षिरूपं ज्ञानं तेनैव । परममूले **एवमपीति** । शुक्तिरजतादेरिदमाकारप्रत्ययविषयत्वेऽपीत्यर्थः ॥

**स्वगोचरवृत्त्युपहितचैतन्यभिन्नसत्ताकत्वाभावस्य विषयापरोक्षरूपतया रजतस्यापरोक्षत्वसिद्धये तदभ्युपगमात् ॥**

शि० म०-**अपरोक्षत्वसिद्धय इति** । नन्वनावृतस्वावच्छिन्नसंवित्तादात्म्यमेव विषयस्यापरोक्षत्वम्, न च घटाकारवृत्तिदशायां परिमाणाकारवृत्तिप्रसङ्गः, तदा घटावच्छिन्नचैतन्यस्यानावृतत्वेऽपि स्वावच्छिन्नस्यावृतत्वात् । तथा च रजतावच्छिन्नचैतन्यस्यानावृतत्वात्तत्तादात्म्येनैव तस्य प्रत्यक्षत्वोपपत्तेः न तदर्थमपि तद्गोचरा वृत्तिरभ्युपगन्तव्येति चेत्, न तावत्स्वोपहितानावृतचैतन्याध्यस्तत्वं प्रत्यक्षत्वम्, परिमाणविशिष्टचैतन्यस्यावृत्तित्वेऽपि स्वोपहितघटावच्छिन्नचैतन्यस्यानावृतत्वात् । नापि स्वविशिष्टानावृतचैतन्याध्यस्तत्वम्, घटादीनामपि शुद्धचैतन्याध्यासेनात्माश्रयापत्त्या च स्वविशिष्टाधिष्ठानत्वायोगात्, तस्मात्साधूक्तं रजतस्यापरोक्षत्वसिद्धये तद्वृत्त्यभ्युपगम इति । इदं चोपलक्षणम् । संस्कारसिद्धये च वृत्तिरुपेया । अविनाशिनः साक्षिलक्षणस्यानुभवस्य

संस्काराभावात् । न चेदमाकारवृत्तिविशिष्टसाक्षिणो विनाशसंभवात्संस्कारोपपत्तिः । तथा सति दुःखादिविशिष्टसाक्षिणो विनाशादेव तत्रापि संस्कारोपपत्तौ तदाकारवृत्तिवैयर्थ्यात्, अन्याकारवृत्तिविशिष्टसाक्षिविनाशेनाप्यन्यसंस्कारोपगमे घटाद्याकारवृत्तिविशिष्टसाक्षिनाशेन परिमाणसंस्कारोपपत्तेः । ह्यस्तनाहङ्कारस्यापि विशिष्टसाक्षिनाशेनैव स्मरणोपपत्तावहंवृत्त्यभ्युपगमवैयर्थ्यापत्तेश्चेत्यास्तां विस्तरः ॥

म० प्र०—परममूले—**चैतन्यभिन्नसत्ताकत्वाभावस्येति** । चैतन्याभिन्नसत्ताकत्वस्येत्यर्थः । परममूले **तदभ्युपगमादिति** । शुक्तिरजतादिगोचरवृत्तिस्वीकारादित्यर्थः । **स्वावच्छिन्नेति**=विषयावच्छिन्नेत्यर्थः।परिमाणाकारवृत्तिप्रसङ्गः=परिमाणादिष्वपरोक्षत्वप्रसङ्गः । न चेति प्रतिज्ञायां हेतुमाह—**तदेति** । घटाकारवृत्तिदशायामित्यर्थः । स्वावच्छिन्नस्य=परिमाणाद्यवच्छिन्नचैतन्यस्य । तथा च=विषयस्यानावृतस्वावच्छिन्नचैतन्यतादात्म्यस्यैवापरोक्षत्वे, तत्तादात्म्येनैव तस्य प्रत्यक्षत्वोपपत्तेः=शुक्तिरजतादिनिष्ठस्वावच्छिन्नजीवसाक्षिचैतन्यतादात्म्याभिन्नप्रत्यक्षत्वोपपत्तेः । तदर्थमपि=शुक्तिरजतादिनिष्ठप्रत्यक्षत्वार्थमपि । तद्गोचरा=शुक्तिरजतादिविषयिणी । किं विषयस्य स्वोपहितानावृतचैतन्याध्यस्तत्वं प्रत्यक्षत्वं किंवा विषयस्य स्वविशिष्टानावृतचैतन्याध्यस्तत्वं प्रत्यक्षत्वमित्यभिप्रेत्य नाद्य इत्याह—**न तावदिति । स्वोपहितेति**=विषयोपहितेत्यर्थः । स्वोपहितघटावच्छिन्नचैतन्यस्य=परिमाणाद्युपहितचैतन्याभिन्नघटाद्यवच्छिन्नचैतन्यस्य । **अनावृतत्वादिति** । घटाकारवृत्तिदशायां परिमाणादेः प्रत्यक्षत्वापत्तेरिति शेषः । यद्यपि वृत्तिं विना यथाऽवच्छिन्नचैतन्यमावृतं तथोपहितचैतन्यमप्यावृतं तथापि परिमाणस्वरूपोपाधेर्घटाभिन्नोपाधेश्चैकशुद्धचैतन्यस्वरूपदेशस्थत्वेन तच्चैतन्ययोरभेदेन घटाकारवृत्तिदशायां घटावच्छिन्नचैतन्यस्यानावृतत्वात्परिमाणाद्याकारवृत्त्यभावदशायामपि परिमाणाद्युपहितचैतन्यस्यानावृतत्वमिति भावः। नापि द्वितीय इत्याह—**नापीति । स्वविशिष्टेति** । विषयाध्यासाश्रयेत्यर्थः । आत्माश्रयापत्त्या=घटादिविषयाध्यासे घटादिविषयापेक्षात्मकात्माश्रयापत्त्या । स्वविशिष्टेति=घटादिविशिष्टचैतन्यस्य घटाद्यधिष्ठानत्वासंभवादित्यर्थः । इदं च=रजतस्यापरोक्षत्वसिद्धये वृत्त्यभ्युपगमकथनं च । संस्कारोपपत्तिः=प्रातिभासिकपदार्थविषयकसंस्कारोपपत्तिः । तथा सति=अन्याकारवृत्तिविशिष्टसाक्षिणो नाशेनान्यस्मारकसंस्काराभ्युपगमे सति । तत्रापि=दुःखादावपि । **तदाकारेति**=दुःखाद्याकारेत्यर्थः । **परिमाणसंस्कारोपपत्तेरिति** । परिमाणादिविषयकवृत्त्यभ्युपगमवैयर्थ्यापत्तेरिति शेषः । ह्यस्तनाहङ्कारस्य=अतीतदिनवृत्त्यहङ्कारस्य । **विशिष्टेति**=पूर्वकालिकाहङ्कारविशिष्टेत्यर्थः ॥

**नन्विदंवृत्तेः रजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे गुरुमतवद्विशिष्टज्ञानानभ्युपगमे कुतो भ्रमज्ञानसिद्धिरिति चेन्न ॥**

शि० म०—नन्विदंवृत्तिमात्राभ्युपगमे तदवच्छिन्नसाक्षिणः पुरोवर्त्यभिन्नतया रजतभासकस्यैकत्वेऽपि वृत्तिद्वयवादिमते तत्तद्वृत्तिविशिष्टसाक्षिणस्तत्तद्विषयमात्रग्राह-

कस्य भिन्नत्वात्कुतो विसंवादिप्रवृत्तिजनकविशिष्टज्ञानसिद्धिः । तदभावेऽपि प्रवृत्त्यभ्युपगतौ प्राभाकरपरिणतोऽयं वेदान्तीति स एव पुनः परिचोदयति-नन्विति ॥

म० प्र०-इदंवृत्तिमात्राभ्युपगमे इति । इदमि वृत्तिरिदंवृत्तिः । पुरोवर्त्तिपदार्थे एव वृत्तिस्वीकारे, न तु रजतादावित्यर्थः । पुरोवर्त्तिपदार्थे एव वृत्त्यभ्युपगमे पुरोवर्त्तिपदार्थविषयकवृत्त्युपहितचैतन्यात्मकज्ञानस्यैकतया ∴ भ्रमज्ञानसिद्धिर्वृत्तिद्वयाभ्युपगमे तु तादृशवृत्त्युपहितचैतन्यात्मकज्ञानस्यानेकत्वेन न भ्रमज्ञानसिद्धिरिति भावः । तदवच्छिन्नेति=पुरोवर्त्तिपदार्थविषयकवृत्त्यवच्छिन्नेत्यर्थः । पुरोवर्त्यभिन्नतया=पुरोवार्त्तिपदार्थावच्छिन्नचैतन्याभिन्नतया । एकत्वेऽपि=एकत्वज्ञाप्यविशिष्टज्ञानसिद्धावपि, वृत्तिद्वयवादिमते=पुरोवार्त्तिपदार्थरजतादिपदार्थविषयकवृत्तिद्वयवादिवेदान्तिमते, तदभावेऽपि=विसंवादिप्रवृत्तिजनकविशिष्टज्ञानाभावेऽपि, प्राभाकरपरिणतः=प्राभाकररूपेण परिणतोऽवतीर्णः प्राभाकार एवेति यावत्, स एव=सिद्धान्त्येकदेश्येव । अयं भावः । तव मते एकं संधातुं प्रवृत्तस्यापरं हीयते इति न्यायापातः । रजतादेरपरोक्षत्वसिद्धये रजतादिष्वविद्यावृत्त्यभ्युपगमेन प्राभाकरमतवद्विशिष्टैकज्ञानानभ्युपगमप्रसक्त्या रजतज्ञानस्य भ्रमत्वहानात् । यथा प्राभाकरमते इदं रजतमिति ज्ञानद्वयमङ्गीकृतं तत्रेदमिति पुरोवार्तिपदार्थविषयकमनुभवात्मकं ज्ञानं रजतमित्यादिकं त्वसन्निकृष्टरजतादिविषयकस्मरणात्मकमिति वस्तुद्वयतादात्म्यावागहिविशिष्टैकभ्रान्त्यात्मकज्ञानं किमपि नास्तीति सर्वमपि ज्ञानं यथार्थमेवेति भ्रमज्ञानासिद्धिस्तद्वद्भवन्मतेऽपि वृत्तिद्वयतद्विषयभेदाभ्युपगमेन वस्तुद्वयतादात्म्यावगाह्येकज्ञानानभ्युपगमाद्भ्रमज्ञानं न सिध्यतीति ॥

**वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेन भ्रमत्वस्वीकारात् ॥**

शि० म०-यत्किंचित्साम्येन गुरुसिद्धान्तापादने सर्वसिद्धान्तसंकरापत्तेः, इदंरजतवृत्तिद्वयोपहितस्य तदभिव्यक्तस्य इदंरजततादात्म्याभिव्यञ्जकस्य साक्षिज्ञानस्यैकत्वाभ्युपगमेन सर्वसाम्याभ्युपगमाभावात् । अत एव सुरभि चन्दनमित्यादौ परोक्षापरोक्षवृत्तिभेदेऽपि तदुभयप्रतिबिम्बितस्य गुणगुणितादात्म्यावगाहिसाक्षिज्ञानस्यैकत्वात्सामानाधिकरण्यव्यपदेश इत्याशयवानाह-वृत्तिद्वयेत्यादिना । सत्येति । अनेन सत्यमिथ्यावस्तुतादात्म्यावगाहित्वलक्षणं सत्यानृतमिथुनीकरणत्वं सिद्धान्तिसंमतमध्यासलक्षणमुक्तमित्यवधेयम् ।

म० प्र०-यत्किंचिन्मतसाम्येन प्राभाकरसिद्धान्तोऽत्रापाद्यते सर्वगुरुमतसाम्येन वा नाद्य इत्याह-यत्किंचित्साम्येनेति । यत्किंचिन्मततुल्यत्वेनेत्यर्थः । न द्वितीय इत्याह-सर्वसाम्याभ्युपगमाभावादिति । रजतादिविषयकस्मरणात्मकवृत्त्यभ्युपगमादिसर्वसाम्यानङ्गीकारादित्यर्थः । कुतः सर्वसाम्याभ्युपगमाभाव इत्यतो हेतुमाह-इदंरजतेत्यादिना । उपहितस्येति । अस्यैव विवरणं तदभिव्यक्तस्येति । वृत्तिद्वयाभिव्यक्तस्येति तदर्थः ।

नन्विदं रजतमिति ज्ञानस्य वृत्तिद्वयात्मकत्वेनेदं रजतमिति सामानाधिकरण्यव्यपदेशो न स्यादित्याशङ्क्याह-**अत एवेति** । इदं रजतमिति वृत्तिद्वयप्रतिबिम्बितसाक्षिज्ञानस्यैकत्वाभ्युपगमादेवेत्यर्थः । अस्य सामानाधिकरण्यव्यपदेश इत्यनेनान्वयः । ननु वृत्तिद्वयप्रतिबिम्बितसाक्षिण एकत्वाभ्युपगम एवाप्रसिद्ध इत्याह-**सुरभि चन्दनमित्यादाविति । तदुभयेति** । परोक्षापरोक्षवृत्तिद्वयेत्यर्थः । सामानाधिकरण्यव्यपदेशः=इदं रजतमित्याद्येकार्थबोधकसमानविभक्तिकभिन्नप्रवृत्तिनिमित्तकशब्दकथनम् । अनेन=वृत्तिद्वयप्रतिबिम्बितेत्यादिवाक्येन, अध्यासलक्षणम्=भ्रमलक्षणम् । न च घटादिज्ञानस्यापि सत्यमिथ्यावस्तुतादात्म्यावगाहित्वस्य सत्त्वात्पूर्वोक्तप्रमात्वानुपपत्तिरिति वाच्यम् । पूर्वं ह्यबाधितपदार्थस्य संकोचं कृत्वा घटादिज्ञानस्य प्रमात्वाभिधानादिदानीं तु त्रिकालाबाध्यमबाधितपदेन गृह्यते इति न पूर्वोत्तरग्रन्थयोर्विरोध इति ॥

**शि० म०-नन्वयुक्तं घटादिज्ञानसाधारणमध्यासलक्षणं तत्र स्वाधिकरणभूतलाद्यभेदस्याप्रतीतेः, तद्वदेव घटादेः सत्यत्वाच्च । न च सन् घटः इति सद्रूपब्रह्मतादात्म्येन मिथ्याभूतघटस्यावभासनात्, अध्यासलक्षणे घटादिज्ञानमपि लक्ष्यमिति वाच्यम्, शुक्तिरूप्यघटसाधारणमिथ्यात्वस्यैवानिरुक्तेस्तत्र प्रमाणाभावाच्चेति चेत् ॥**

म० प्र०-साधारणम्=वृत्तिमत् । घटादिज्ञानेऽव्याप्तिमभिप्रेत्य घटादिज्ञानसाधारणलक्षणस्यायुक्तत्वे हेतुमाह-**तत्रेति** । घटादिज्ञाने इत्यर्थः । अप्रतीतेः=विषयत्वाभावात्, तद्वदेव=भूतलादिवदेव । **अध्यासलक्षणे इति** । अध्यासलक्षणनिरूपिते इत्यर्थः । तत्र=शुक्तिरजतादीनां मिथ्यात्वे ॥

**शि० म०-न तावदनिर्वचनं स्वाश्रयतयाऽभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमित्यनुमानपरिच्छेदे ग्रन्थकृतैव वक्ष्यमाणत्वात् । प्रमाणं च घटादिमिथ्यात्वे तत्रैव वक्ष्यति । शुक्तिरजतमिथ्यात्वे तु नेदं रजतमिति बाधप्रत्यक्षं मानम् । न च देशान्तरीयस्यैव पुरोवर्तिन्यसत्त्वात्तदेव तन्निष्ठत्रैकालिकाभावप्रतियोगितया बाधकज्ञानेन विषयीक्रियते इति वाच्यम्, तस्यासन्निकृष्टस्य पुरोवर्तिन्यप्रसक्तत्वात्, प्रसक्तस्यैव प्रतिषेध्यत्वात् । अनुमानं च "अव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगि शुक्तिरजतं स्वसमानाधिकरणात्यन्ताभावप्रतियोगि दृश्यत्वात्संयोगवत्" प्रातिभासिकरजतस्यापारमार्थिकत्वान्नाश्रयासिद्धिः । न चानुमाने संयोगवदव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वेनार्थान्तरम्, संयोगतदत्यन्ताभाववद्रजततदत्यन्ताभावयोरवच्छेदकभेदेनाप्रतीतेः । न चाव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वमुपाधिः, शशीयत्वावच्छिन्नाभावप्रतियोगिनि शृङ्गे साध्याव्यापकत्वात् ॥**

म० प्र०-**स्वाश्रयतयेति** । रजताद्याश्रयतयेत्यर्थः । तत्रैव=अनुमानपरिच्छेदे एव बाधप्रत्यक्षम्=त्रैकालिकाभावविषयकनिश्चयात्मकप्रत्यक्षम् । देशान्तरीयस्यैव=देशान्तरवृत्तिरज-

तादेरेव । पुरोवर्तिनि=शुक्त्यादौ । तदेव=देशान्तरवृत्तिरजतादिवस्त्वेव । **तन्निष्ठेति** । पुरोवर्तिशुक्त्यादिनिष्ठेत्यर्थः । बाधकज्ञानेन=नेदं रजतमित्यादिबाधकज्ञानेन, तस्य=देशान्तरीयरजतादेः । ननु देशान्तरीयरजतादेः पुरोवर्तिनि शुक्त्यादावप्रसक्तत्वेऽपि तस्य नेदं रजतमित्यादिबाधकज्ञानविषयत्वं स्यादित्याशङ्क्याह—**प्रसक्तस्यैवेति** । **अव्याप्येति** । शुक्तौ केनचित्स्थापिते रजतादौ केनचिदवयवावच्छेदेन स्वाधिकरणे स्वात्यन्ताभावप्रतियोगित्वसत्त्वेन पक्षैकदेशे सिद्धसाधनवारणाय **अव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगीति** शुक्तिरजतविशेषणम् । प्रातिभासिकरजतमिति तदर्थः । ननु सर्वेषां मूर्तपदार्थानामव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वेन शुक्तिरजते उक्तविशेषणाभावेनाश्रयासिद्धो हेतुरित्याशङ्क्याह—**प्रातिभासिकरजतस्येति** । प्रतीतिकालमात्रवृत्तिरजतस्येत्यर्थः । **अपारमार्थिकत्वादिति** । व्यावहारिकभिन्नत्वादित्यर्थः । व्यावहारिकघटादिमूर्तपदार्थानां केनचिदवयवावच्छेदन स्वाधिकरणे स्वात्यन्ताभावसत्त्वेनाव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वेऽपि प्रातिभासिकशुक्तिरजतादीनां सर्वत्राधिकरणे व्यावहारिकत्वेन रूपेणात्यन्ताभावसत्त्वेन व्यावहारिकत्वधर्मेण कुत्राप्यसंबद्धत्वेनाव्याप्यवृत्त्यत्यन्ताभावप्रतियोगिभिन्नत्वादव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगित्वरूपपक्षतावच्छेदकस्य शुक्तिरजते सत्त्वेन पक्षे पक्षतावच्छेदकाभावरूपाऽऽश्रयासिद्धिर्नास्तीति भावः । प्रतियोगित्वेनार्थान्तरम्=प्रतियोगित्वाभिन्नार्थान्तरम् । शशीयत्वावच्छिन्नभावप्रतियोगिनि=शशीयत्वविशिष्टश्रृङ्गस्य योऽभावस्तत्प्रतियोगिनि शशीयत्वावच्छिन्नप्रतियोगिताकश्रृङ्गाभावप्रतियोगिनीति वा साध्यव्यापकत्वात् । एवं श्रृङ्गं तदधिकरणं महिष्यादिस्तत्र वर्त्तमानो यः शशीयत्वेन श्रृङ्गात्यन्ताभावस्तत्प्रतियोगित्वरूपसाध्यस्य शशीयत्वावच्छिन्नाभावप्रतियोगिनि श्रृङ्गे सत्त्वेऽपि तादृशश्रृङ्गे शशीयत्वेन श्रृङ्गात्यन्ताभावस्य केवलान्वयितयाऽव्याप्यवृत्तित्वाभावेनाव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वोपाधेरभावेन साध्यव्यापकत्वाभावात् ॥

**शि० म०—न च विपक्षे बाधकाभावः, रजतस्य पारमार्थिकत्वे कालत्रयेऽप्यत्र रजतं नास्तीति बाधानुपपत्तेर्बाधकत्वात् । ततश्चानुमानं रजतमिथ्यात्वे प्रमाणम् । तथा रजतज्ञानमिथ्यात्वप्रसिद्ध्यनुपपत्तिरपि । न चान्यथोपपत्तिः सदसत्त्वयोरान्तरदेशान्तरीयत्वयो रजतस्य निराकृतत्वेन तज्ज्ञानमिथ्यात्वप्रसिद्धेः प्रकारान्तरेणोपपादयितुमशक्यत्वात् । तदेवं शुक्तिरूप्यघटादीनां मिथ्यात्वं सिद्धम्, ततश्च घटादिज्ञानस्याप्यध्यासत्वात्तत्साधारणं सत्यमिथ्यावस्तुतादात्म्यावगाहिज्ञानत्वमध्यासलक्षणं युक्तमिति ॥**

**म० प्र०**—विपक्षे=पक्षवृत्तिसाध्याभावे । अत्र=शुक्तौ, रजतं=व्यावहारिकरजतम् । अन्यथोपपत्तिः=रजतज्ञाननिष्ठमिथ्यात्वप्रसिद्धी रजतनिष्ठान्तरत्वादिकं विनाऽनुपपन्ना सत्यान्तरं रजतमसद्रजतं वा देशान्तरीयरजतं वा कल्पयति, न तु रजतनिष्ठमिथ्यात्वं कल्पयतीति प्रकारान्तरेणापि रजतविषयकमिथ्यात्वप्रसिद्धेरुपपत्तिः । ततश्च=घटादीनां मिथ्यात्वादेव । अध्यासत्वात्=भ्रमत्वात् ॥

अत एव साक्षिज्ञानस्य सत्यासत्यविषयतया प्रामाण्यानियमादप्रामाण्योक्तिः सांप्रदायिकानाम् । ननु सिद्धान्ते देशान्तरीयरजतमप्यविद्याकार्य्यमध्यस्तं चेति कथं शुक्तिरूप्यस्य ततो वैलक्षण्यमिति चेत् ॥

शि० म०–वृत्तिद्वयेन प्रत्येकमगृहीतमपि सत्यमिथ्यावस्तुतादात्म्यं वृत्तिद्वयप्रतिबिम्बितं साक्षिज्ञानं न गृह्णातीत्यत्र सांप्रदायिकसंमतिमाह–अत एवेति । ननु शुक्तिरजतवत्प्रसिद्धरजतस्य घटादेश्चाविद्याकार्यत्वेन मिथ्यात्वस्याध्यस्तत्वस्य चाभ्युपगमे कथं तस्य घटादिवैलक्षण्यं ततश्च लोके शुक्तिरूप्यज्ञानगताप्रामाण्यप्रसिद्धिस्तज्जन्यप्रवृत्तौ विसंवादित्वप्रसिद्धिश्च न स्यादिति शङ्कते–नन्विति । कथमित्याक्षेपः । न च शुक्तिरूप्यस्य प्रातिभासिकत्वात् घटादिभ्यो वैलक्षण्यमिति युक्तम्, घटादिशुक्तिरूप्ययोरविद्याकार्य्यत्वे तस्यैव प्रातिभासिकत्वमित्यत्र प्रमाणाभावात् प्रयोजकाभावाच्चेति भावः ॥

म० प्र०–प्रत्येकं=भिन्नभिन्नवृत्तिद्वयेन । परममूले **अत एवेति**। वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगाहित्वाभिन्नभ्रमत्वस्वीकारादेवेत्यर्थः । प्रसिद्धरजतस्य=व्यावहारिकरजतस्य । मिथ्यात्वस्य=स्वाश्रयतयाऽभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्य। अध्यस्तत्वस्य च=प्रमाणाजन्यज्ञानविषयत्वे सति पूर्वदृष्टसजातीयस्वरूपाध्यस्तत्वस्य च, पारमार्थिकत्वावच्छिन्नस्वात्यन्ताभावाधिकरणे प्रतीयमानरूपाध्यस्तत्वस्य चेति वा । तस्य=शुक्तिरजतस्य। ततश्च=शुक्तिरजते प्रसिद्धरजतादिभ्यो वैलक्षण्याभावादेव । **तज्जन्येति**=शुक्तिरजतज्ञानजन्येत्यर्थः। **विसंवादित्वेति**। निष्फलत्वेत्यर्थः। परममूले **तत इति**। देशान्तरीयरजतादित्यर्थः ॥ तस्यैव=शुक्तिरजतस्यैव, प्रयोजकाभावाच्च=शुक्तिरजताद्यसाधारणधर्मप्रातिभासिकत्वनियामकाभावाच्च ॥

न, त्वन्मते सत्यत्वाविशेषेऽपि केषांचित्क्षणिकत्वं केषांचित् स्थायित्वमित्यत्र यदेव नियामकं तदेव स्वभावविशेषादिकं ममापि । यद्वा ॥

शि० म०–परिहरति–नेति। किं शुक्तिरूप्यस्य घटादिवदविद्याकार्यत्वेन व्यावहारिकत्वसाधनात्प्रातिभासिकत्वाभावः प्रयोजकाभावाद्वा । नाद्यः, अविद्याकार्य्यत्वस्य हेतोरप्रयोजकत्वात्, शुक्तिरूप्यस्य व्यावहारिकत्वे संसारदशायां बाधानुपपत्तेश्चान्यथा न्यायमतेऽपि शब्दज्ञानेच्छादीनां घटादिवत्सत्यत्वेन स्थायित्वापत्तेः । यदि च घटादीनां प्रत्यभिज्ञानादिबलात् स्थायित्वं शब्दादेश्च तदभावात् क्षणिकत्वमिति मतं तदा शुक्तिरूप्यस्य संसारदशायां बाधितस्य

घटादिवदर्थक्रियाकारित्वाभावान्न व्यावहारिकत्वमिति तुल्यम् । न च घटस्येव शुक्तिरूप्यस्यापि संसारदशायामबाधोऽर्थक्रियाकारित्वं च कुतो न स्यादित्यपि युक्ता वाचोयुक्तिः, स्वभावविशेषस्यैव तत्र नियामकत्वात्, तस्य चापर्यनुयोज्यत्वादिति । न द्वितीयः । आगन्तुकदोषजन्यत्वस्य प्रातिभासिकत्वाप्रयोजकत्वादित्याह—**यद्वेति** ॥

**म० प्र०**—अप्रयोजकत्वात्=अनुकूलतर्काभावेनाविद्याकार्य्यत्वहेतोः शुक्तिरजतादिनिष्ठव्यावहारिकत्वनिश्चयाजनकत्वात् । ननु व्यावहारिकत्वाभावाविद्याकार्य्यत्वाभावयोर्व्याप्तिर्ब्रह्मणि गृहीतत्वेन यदि शुक्तिरजते व्यावहारिकत्वं न स्यात्तर्हि तस्मिन्नविद्याकार्य्यत्वमपि न स्यादित्यनुकूलतर्कसत्त्वात्कथमुक्तहेतोरप्रयोजकत्वमित्याशङ्क्याह—**शुक्तिरूप्यस्येति** । अन्यथा=अविद्याकार्य्यत्वरूपानुगतधर्मेण शुक्तिरजतादौ वेदान्त्यनिष्ठव्यावहारिकत्वधर्मापादने, तदभावात्—व्यक्त्यैक्यावगाहिन्याः प्रत्यभिज्ञाया अभावात्, इत्यपि=इत्याकारिकाऽपि, तत्र=शुक्तिरजतादौ संसारदशायामबाधितत्वाभावादौ । ननु शुक्तिरजतादावेवायं स्वाभावविशेषो न घटादाविति कुत इत्याशङ्क्याह—**तस्येति** । तादृशस्वभावस्येत्यर्थः । अपर्यनुयोज्यत्वात्=उक्तप्रश्नानर्हत्वात् । परममूले **स्वभावविशेषादिकमिति** । अत्रादिपदेन कालान्तरोपालम्भानुपालम्भादिकं गृह्यते, तथा च पक्षद्वयेऽपि दोषतत्परिहारयोः समत्वान्मां प्रत्युक्तानुयोगोऽनुपपन्न इति भावः ॥

**घटाद्यध्यासेऽविद्यैव दोषत्वेन हेतुः, शुक्तिरूप्याध्यासे तु काचादयोऽपि दोषाः । तथा चागन्तुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकम् ॥**

**शि० म०**—नन्वागन्तुकदोषजन्यत्वं न प्रातिभासिकत्वप्रयोजकं काचादिध्वंसे तत्संयोगादौ तत्साक्षात्कारे चातिव्याप्तेः । न च दोषत्वेन तज्जन्यत्वमिह विवक्षितम् । तथा सति आगन्तुकविशेषणवैयर्थ्यप्रसङ्गात् । न च घटादावतिव्याप्तिवारणाय, प्रसिद्धदोषस्य काचादेर्घटादावहेतुत्वान्मूलाविद्यायाश्च दोषत्वेन हेतुत्वे मानाभावादित्यत आह—**घटाद्यध्यास इति** । अयं भावः—दोषत्वेन तज्जन्यत्वमेव विवक्षितम्, न चागन्तुकविशेषणवैयर्थ्यम्, घटादावतिव्याप्तिवारकत्वात् । न च घटादेर्दोषजन्यत्वे प्रमाणाभावः, घटादिर्दोषजन्यः अध्यस्तत्वाच्छुक्तिरूप्यवदित्यनुमानस्य प्रमाणत्वात् । न चाप्रयोजकत्वमन्वयव्यतिरेकाभ्यां लाघवेन दोषत्वेनैव काचादीनामध्यासहेतुत्वस्य शुक्तिरूप्यादौ प्रसिद्धभ्रमस्थले निश्चितत्वात् । न चैवमन्तःकरणादिकमेव घटादौ दोषत्वेन हेतुः कल्प्यतामित्यर्थान्तरमिति वाच्यम्, प्रकृतित्वेन क्लृप्तमायाया एव लाघवेन दोषत्वमात्रकल्पनात् । अन्यथाऽन्तःकरणादेर्घटाद्यध्यासं प्रति हेतुत्वं दोषत्वं च कल्पनीयमिति गौरवप्रसङ्गात् । केचित्तु सविकल्पकज्ञानबाध्यत्वं ब्रह्मज्ञानेतरबाध्यत्वं वा प्रातिभासिकत्वप्रयोजकमिति । तन्न, स्वाप्नगजादेर्निर्विकल्पकब्रह्मज्ञानबाध्यत्वेन प्रातिभासिकत्वाभावप्रसङ्गात् ॥

म० प्र०—तत्साक्षात्कारे=काचादिदोषसाक्षात्कारे, अतिव्याप्तेः=आगन्तुकदोषजन्यत्वरूपहेतोर्व्यभिचारात् । **दोषत्वेन तज्जन्यत्वमिति** । दोषत्वावच्छिन्नदोषनिष्ठजनकतानिरूपितजन्यत्वमित्यर्थः । काचादिध्वंसे प्रतियोगित्वेन काचादिसंबन्धेऽपि प्रतियोगित्वेन तत्साक्षात्कारे च विषयत्वेन दोषस्य हेतुत्वेन दोषत्वेन काचादेः स्वध्वंसादौ हेतुत्वाभावान्न व्यभिचार इति भावः । तथा सति=दोषत्वेन दोषस्य हेतुत्वस्वीकारे सति । **मानाभावादिति** । मूलाविद्याया अविद्यात्वेन घटादौ हेतुत्वादिति शेषः । तज्जन्यत्वं=दोषजन्यत्वम्, स्थले=स्वरूपे, अर्थान्तरम्=घटादावाविद्यकत्वातिरिक्तार्थसिद्धिः । **प्रकृतित्वेन क्लृप्तेति**=उपादानत्वेन श्रुतिप्रसिद्धेत्यर्थः । लाघवेन=अन्तःकरणादिनिष्ठदोषत्वघटाद्युपादानत्वोभयकल्पनापेक्षया मायानिष्ठदोषत्वमात्रकल्पने लाघवेन । अन्यथा=घटादिकार्य्यं प्रत्यन्तःकरणादेर्दोषत्वेन हेतुत्वस्वीकारे । **गौरवप्रसङ्गादिति** । न च मायानिष्ठदोषत्वाकाशाद्युपादानत्वोभयकल्पनरूपगौरवं तुल्यमिति वाच्यम् । मायायाः कार्य्योपादानत्वस्य ''मायां तु प्रकृतिं विद्यात्'' इत्यादिश्रुतिषु प्रसिद्धत्वादेकदोषत्वस्यैव कल्पनीयत्वादिति । **निर्विकल्पकब्रह्मज्ञानबाध्यत्वेनेति** । स्वाप्नगजादेर्मायोपादानकत्वपक्षे इति शेषः ॥

**शि० म०—नन्वागन्तुकदोषजन्यत्वमपि न प्रातिभासिकत्वप्रयोजकं सुखादेरपि प्रतिभानसमयसत्त्वाभ्युपगमेन तत्राव्याप्तेः । न च तूलाविद्याकार्यस्यैव प्रातिभासिकस्यात्र लक्ष्यत्वात् सुखादेश्च मूलाविद्याकार्यत्वान्न तद्व्यावृत्तिर्दोष इति वाच्यम् । तथा सति स्वाप्नगजादेरपि वक्ष्यमाणरीत्या मूलाविद्याकार्यतया तत्रातिव्याप्त्यापत्तेरिति चेत् न, लौकिकपरमार्थविलक्षणस्य प्रातिभासिकत्व एवास्य प्रयोजकत्वात्, सुखादेश्च प्रातिभासिकस्य लौकिकपरमार्थत्वान्नाव्याप्तिः, स्वप्नोपलब्धगजादेश्च लौकिकपरमार्थविलक्षत्णवान्नातिव्याप्तिः, तस्मादागन्तुकदोषजन्यत्वं लौकिकपरमार्थविलक्षणस्य प्रातिभासिकत्वे प्रयोजकं प्रमाणं च, विमतं रजतं प्रतिभानसमयमात्रवृत्ति समयान्तरे तत्सत्त्वे प्रमाणाभावात् सुखादिवदागन्तुकदोषजन्यत्वाद्वा स्वाप्नगजादिवत् । न च द्वितीयानुमाने निद्रादोषजन्यत्वमुपाधिः, लौकिकपरमार्थविलक्षणत्वावच्छिन्नसाध्यव्यापकत्वाभ्युपगमात् । न सुखादौ साध्याव्यापकत्वमिति वाच्यम् । लाघवेनानुगतस्यागन्तुकदोषजन्यत्वस्यैव प्रयोजकत्वादिति ॥**

म० प्र०—प्रतिभानसमयसत्त्वाभ्युपगमेन=ज्ञानसमयमात्रसत्त्वरूपप्रातिभासिकत्वाभ्युपगमेन, तत्र=लक्ष्यसुखादौ । **अव्याप्तेरिति** । सुखादेरविद्यारूपदोषजन्यत्वेनागन्तुकदोषाजन्यत्वादव्याप्तेरित्यर्थः ॥ तद्व्यावृत्तिः=सुखादिषु लक्षणावृत्तित्वम् । तथा सति=तूलाविद्याकार्य्यप्रातिभासिकस्यैव लक्ष्यत्वस्वीकारे । तत्र=अलक्ष्यस्वाप्नगजादौ, अतिव्याप्त्यापत्तेः=आगन्तुकनिद्रारूपदोषजन्यत्वस्यापि सत्त्वेनातिव्याप्त्यापत्तेः । **लौकिकपरमार्थेति**=लौकिकप्रसिद्धव्यावहारिकेत्यर्थः । अस्य=आगन्तुकदोषजन्यत्वस्य । ननु सुखादावव्याप्तिरित्याशङ्क्याह—**सुखादेश्चेति** । प्राति-

भासिकस्य=ज्ञातसत्ताकस्य, तस्मात्=अव्याप्त्यादिदोषाभावात् । विमतं=लौकिकपरमार्थविलक्षणं प्रातिभासिकमिति यावत् । नन्वस्मिन्ननुमाने व्यावहारिकावृत्तिप्रातिभासिकत्वं साध्यते, तथा च सुखादीनां व्यावहारिकत्वस्य तव संमतत्वात्कथं सुखादीनां दृष्टान्ततेत्यत आह–**आगन्तुकदोषजन्यत्वाद्वेति** । ननु सुखादौ प्रतिभानसमयमात्रवृत्तित्वरूपसाध्यसत्त्वेऽपि निद्रादोषजन्यत्वोपाधेरभावेनोपाधेः साध्याव्यापकत्वमित्याशङ्क्योपाधेः पक्षधर्मावच्छिन्नसाध्याव्यापकत्वमाह–**लौकिकेति । लाघवेनेति** । अननुगतनिद्रादोषजन्यत्वादीनां प्रातिभासिकत्वप्रयोजकत्वकल्पनापेक्षयाऽनुगतस्यागन्तुकदोषजन्यत्वस्य प्रातिभासिकत्वप्रयोजकत्वे लाघवमत आगन्तुकदोषजन्यत्वस्यैव प्रातिभासिकत्वप्रयोजकत्वेनाभ्युपगमनीयत्वेन तस्यैवोपाधित्वं वाच्यम् । तथा च निद्रादोषस्याप्यागन्तुकदोषत्वेनागन्तुकदोषजन्यत्वं निद्रादोषजन्यस्वाप्नगजादावस्तीत्यागन्तुकदोषजन्यत्वोपाधेर्दृष्टान्ते साध्यव्यापकत्वेऽपि पक्षे तस्य साधनव्यापकत्वाद्धेतूपाध्योरैक्यापादाच्च नोपाधित्वं तस्येति भावः । अथवा लाघवेनानुगतागन्तुकदोषजन्यत्वस्यैव लौकिकपरमार्थविलक्षणवृत्तिप्रातिभासिकत्वप्रयोजकत्वस्यावश्यं वाच्यतया स्वाप्नगजादौ निद्रादोषत्वेन जन्यत्वाभावात्साध्याव्यापकत्वमिति भावः । यद्वा उपाधेः साध्यव्यापकत्वे सत्युपाधेः साधनाव्यापकत्वार्थं यत्रोपाधौ विशेषणमुपादीयते स पक्षेतर इति पक्षेतरोपाधिलक्षणस्य निद्रादोषजन्यत्वोपाधौ सत्त्वेन दोषजन्यत्वेनैव पक्षधर्मावच्छिन्नसाध्यनिष्ठव्याप्तौ सिद्धायां निद्राविशेषणस्य जन्यत्वेन क्षित्यादौ सकर्तृकत्वानुमाने शरीरजन्यत्वोपाधौ शरीरविशेषणस्येव निद्रादोषजन्यत्वोपाधेः साधनाव्यापकत्वमात्रप्रयोजनस्य ग्रहणेन निद्रादोषजन्यत्वस्य पक्षेतरत्वान्निद्रादोषजन्यत्वं नोपाधिरिति भावः ॥

**अत एव स्वप्नोपलब्धरथादीनामागन्तुकनिद्रादोषजन्यत्वात्प्रातिभासिकत्वम् । ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैव व्यवहारोपपत्तौ न रथादिसृष्टिकल्पनं गौरवादिति चेन्न ॥**

**शि० म०–अत एवेति** । अस्य प्रयोजकत्वादेवेत्यर्थः । ननु न स्वाप्नरथादेः प्रातिभासिकत्वं नाप्यागन्तुकदोषजन्यत्वं तदा तस्यानुत्पत्तेः । न चापरोक्षज्ञाने व्यवहितस्याविषयत्वात्सन्निधानाय रथादेरुत्पत्तिरुपेयेति युक्तं बहिरिन्द्रियाणामुपरतत्वेन मनसो बहिरस्वातन्त्र्येण चापरोक्षरथादिज्ञानस्यैवासिद्धेः, न च वीथ्यादौ रथादिव्यवहारानुपपत्त्या सृष्टिः कल्प्यते इति वाच्यम्, गौरवप्रसङ्गात्, व्यवहारस्य च स्मर्यमाणरथाद्यविवेकादुत्पत्तेः । ततश्च न स्वाप्नरथादेः प्रातिभासिकत्वमित्यख्यातिवादी प्रभाकारः प्रत्यवतिष्ठते–**नन्विति** । स्वप्ने तावद्रथ्यादिगोचरं विशिष्टज्ञानमेव न तु प्रत्येकगोचरं ज्ञानद्वयम्, अन्यथा विशिष्टव्यवहारानुपपत्तेः, भेदाग्रहस्य तत्सहितज्ञानद्वयस्य च विशिष्टव्यवहारहेतुत्वनिरासात् । तच्च विशिष्टज्ञानं न स्मृतिः, पूर्वं तत्र रथादेरननुभूतत्वात् । तथा चायं रथः अयं गज इत्यादिज्ञानमपरोक्षज्ञानमेवेत्याशयेन परिहरति–**नेति** ॥

म० प्र०–तदा=स्वप्नावस्थायाम् । तस्य=स्वाप्नगजादेः । **अपरोक्षज्ञाने इति**=अपरोक्षज्ञाननिरूपितेत्यर्थः । **असिद्धेरिति** । तथा च न रथादिसन्निधानाय स्वाप्नरथाद्युत्पत्तिरुपेयेति भावः । व्यवहारानुपपत्त्या=अयं रथ इत्यादिशब्दप्रयोगादिरूपव्यवहारानुपपत्त्या । गौरवमेवोपपादयति=**व्यवहारस्येति** । अविवेकात्=स्वाप्नकालिकव्यवहाराश्रयरथादिनिष्ठभेदज्ञानाभावात् । ततश्च=गौरवप्रसङ्गादेव । प्रत्यवतिष्ठते=पूर्वपक्षं करोति, विशिष्टज्ञानमेव=रथ्याद्यधिष्ठानरथाद्यारोप्यविषयकसविकल्पात्मकमेकज्ञानमेव । प्रत्येकगोचरं=रथ्याद्यधिष्ठानगोचरं रथादीष्टगोचरं च । ज्ञानद्वयं=रथ्यादिविषयकेष्टरथादिविषयकस्मरणात्मकं ज्ञानद्वयम् । अन्यथा=रथ्यादिविषयकेष्टरथादिविषयकस्मरणात्मकज्ञानद्वयाङ्गीकारे । **विशिष्टव्यवहारेति**=अयं रथ इत्यादिविशिष्टव्यवहारेत्यर्थः । ननु स्वाप्नकालिकस्मरणजाग्रत्कालिकरथादिविषयकापरोक्षपूर्वानुभवयोर्भेदाग्रहात्तयोर्भेदाग्रहसहितात्स्वाप्नकालिकस्मरणजाग्रत्कालिकरथादिविषयकापरोक्षपूर्वानुभवात्मकज्ञानद्वयाद्वा विशिष्टव्यवहारोपपत्तिः स्यादित्याशङ्क्याह–**भेदाग्रहस्येति**। तत्सहितज्ञानद्वयस्य=भेदाग्रहसहकृतस्य स्वरूपतो विषयतश्चागृहीतभेदानुभवस्मरणात्मकज्ञानद्वयस्य विषयतः स्वरूपतोऽगृहीतभेदानुभवात्मकज्ञानद्वयस्य वा। पूर्वं=विशिष्टज्ञानात्पूर्वकाले । तत्र=तस्मिन्देशे। अननुभूतत्वात्=अयं रथ इत्याद्यनुभवविषयत्वाभावात्। न च जाग्रत्कालिकानुभवादेवायं रथ इत्यादिविशिष्टस्मृत्युपपत्तिरिति वाच्यम्। स्मृतेरिदंत्वावगाहित्वाभावेनेदंत्वावगाहिज्ञानस्य स्मृतित्वानुपपत्तेरिति । तथा च–अयं रथ इत्यादिविशिष्टज्ञानस्य स्मृतित्वाभावे सति ॥

**रथादेः स्मृतिमात्राभ्युपगमे रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः । "अथ रथान् रथयोगान्पथः सृजते" इति रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च ॥**

शि० म०–रथादिज्ञानस्मृतित्वे बाधकमाह–**रथादेरिति** । नन्विन्द्रियग्राह्यत्वं तदा स्मर्य्यते इत्यत आह–**स्वप्ने इति** । रथाद्यवभासान्तरं प्रतिबुद्धस्य स्वप्ने रथमद्राक्षमन्वभूवमिति चानुभवो न स्यात्, त्वन्मते तस्य चक्षुषा तदाऽननुभूतत्वादिति भावः। ननु व्यवहितस्याविषयत्वात् सृष्टिकल्पने च गौरवात् रथ्यादौ न रथादिविशिष्टानुभव इत्युक्तत्वात्तुल्योऽनुभवविरोध इत्याशङ्क्य स्वाप्नरथादिसृष्टेः श्रुतिसिद्धत्वान्न गौरवदोष इत्याह–**अथ रथानिति**। जाग्रद्भोगप्रदकर्मोपरमे सति स्वाप्नभोगप्रदकर्माभिव्यक्त्यनन्तरं रथान् रथयुक्ताश्वान् पथः सृजते इत्यर्थः । एतेन रथादेरपरोक्षविशिष्टानुभवविषयत्वमात्रेण न प्रातिभासिकत्वसिद्धिः । व्यवहितस्यापि तस्य स्मर्य्यमाणस्य रथ्यादौ दोषवशेनारोपसंभवात् । अत एव नानुभवविरोधः, न वा सृष्टिकल्पनागौरवम्, ततश्च स्वप्ने अयं रथ इत्यादिविशिष्टज्ञानमन्यथाख्यातिरेवेति निरस्तम्, स्मर्यमाणारोपमात्राभ्युपगमे रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेः । किंच नानुभूयमाने पुरोवर्तिनि गजादेरध्यासः, भूतलादेरिन्द्रिया-

संयुक्तत्वात् । नापि स्मर्यमाणे तदध्यासः धर्मिप्रत्यक्षाभावात्तस्यैवापरोक्षाध्यासे हेतुत्वात् । किंच तत्र गजाद्यनुभवोऽपि न बहिरिन्द्रियेण, गजादेरसन्निकृष्टत्वात्, ज्ञानप्रत्यासत्तेश्च निराकृतत्वात् । न च संस्कारो दोषो वा प्रत्यासत्तिः, अपसिद्धान्तात्, प्रत्यासत्तित्वे च तत एव वह्न्यादेः प्रत्यक्षत्वापत्तौ अनुमानोच्छेदापत्तेः। नापि मनसा, बहिरिन्द्रियासंयुक्तस्य तस्मिन्मनसोऽसामर्थ्यात् । न चानुमानात्तत्प्रतीतिः, स्वप्ने रथमद्राक्षमित्यनुभवविरोधात् । लिङ्गाद्यप्रतिसंधानेऽपि गजानुभवस्य जायमानत्वाच्च । तस्मान्न स्वाप्नगजादिज्ञानमन्यथाख्यातिरित्यलं विस्तरेण ॥

**म० प्र०**—ननु निद्रादोषबलात्स्मरामीत्यस्य प्रमोषात्पश्यामीत्याद्याकारा प्रतीतिरित्याशङ्क्याह—परममूले **स्वप्न इति** । निद्रादोषनिवृत्तिकालेऽपि स्वप्ने रथमद्राक्षमित्येव प्रतीतिर्न तु रथादिकं स्मृतवानित्यत उक्तप्रत्ययव्यवहारस्य विशिष्टप्रत्ययस्य स्मृतिमात्रत्वेन नोपपत्तिरिति भावः । परममूले **अनुभवेति**=प्रतीतीत्यर्थः । इति चानुभवः=इत्याकारिका च प्रतीतिः, तस्य=पुरोवर्तिरथादेः, तदा=स्वप्नकाले, इत्युक्तत्वात्=मयेत्युक्तत्वात् । श्रुतिस्थाथशब्दार्थमाह—**जाग्रदिति । एतेनेति** । वक्ष्यमाणहेतुना, अस्येति निरस्तमित्यनेनान्वयः । **अपरोक्षविशिष्टानुभवविषयत्वमात्रेणेति** । स्वाप्नरथादिनिष्ठापरोक्षविशिष्टानुभवविषयत्वमनुपपन्नं सत्स्वाप्नरथादेः प्रातिभासिकत्वं कल्पयतीत्यन्यथानुपपत्त्याऽपि स्वाप्नरथादेर्न प्रातिभासिकत्वसिद्धिरित्यर्थः । तस्य=स्वाप्नरथादेः, दोषवशेन=निद्रादोषबलेन, आरोपसंभवात्=अपरोक्षभ्रान्तिसंभवात्, अतएव=स्वाप्नरथादेरपरोक्षज्ञानस्वीकारादेव, नानुभवविरोधः=रथं पश्यामीत्यादिप्रतीतिविरोधो नास्ति, ततश्च=उक्तप्रतीतिविरोधादिदोषाभावादेव । **आरोपमात्रेति**=ज्ञानमात्रेत्यर्थः । पुरोवर्तिनि=भूतलादौ, स्मर्यमाणे=स्मृतिविषयभूतलादौ, तदध्यासः=रथाद्यध्यासः, धर्मीति=भूतलादिधर्मीत्यर्थः । ननु भूतलादिधर्मिणः प्रत्यक्षत्वाभावेऽपि रथाद्यध्यासः स्यादित्याशङ्क्याह—**तस्यैवेति** । अपरोक्षधर्मिण एव न तु परोक्षधर्मिण इत्यर्थः । ननु ज्ञानप्रत्यासत्तेः सत्त्वेन कथं गजादेरसन्निकृष्टत्वमित्याशङ्क्याह—**ज्ञानप्रत्यासत्तेश्चेति । संस्कारो दोषो वेति** । अत्र दोषशब्देनादृष्टरूपदोषो ग्राह्यस्तथा च स्वसंयुक्तमनःसंयुक्तात्मसमवेतसंस्कारविषयत्वसन्निकर्षेण स्वसंयुक्तमनःसंयुक्तात्मसमवेतादृष्टविषयत्वसन्निकर्षेण वा गजादौ चक्षुरिन्द्रियगमनमित्यर्थः । अपसिद्धान्तात्=तव मते संस्कारादेः सन्निकर्षत्वस्यानिष्टत्वेनान्यथाख्यातिलोभेन संस्कारादेः सन्निकर्षत्वाभ्युपगमे तव मतस्य हान्यापत्तेः, प्रत्यासत्तित्वे, संस्कारादेः प्रत्यासत्तित्वे तत एव=संस्कारादिरूपप्रत्यासत्तेरेव । **मनसेति** । स्वप्नकाले गजादेरपरोक्षत्वमिति शेषः, बहिरिन्द्रियासंयुक्तस्य=विषयसंबद्धबहिरिन्द्रियैः संबन्धरहितस्य मनसः, तस्मिन्=रथादिज्ञानजनने, अनुमानात्=स देशः रथादिमान् अवच्छेदकतासंबन्धेन रथादिकार्य्यगमनादिमत्त्वादेतद्देशवदित्यनुमानात्, तत्प्रतीतिः=स्वप्ने रथादिप्रतीतिः ॥

**तस्माच्छुक्तिरूप्यवत्स्वप्नोपलब्धरथादयोऽपि प्रातिभासिका यावत्प्रतिभासमवतिष्ठन्ते ॥**

शि० म०—तदेतदन्यथाख्यातिनिराकरणं मनसि निधायोपसंहरति—तस्मादिति। प्रातिभासिकशब्दार्थमेवाह—यावदिति । प्रतिभासनियतसत्ताका इति यावत् ॥

म० प्र०—प्रतिभासनियतसत्ताकाः=प्रतिभाससत्ताव्याप्यसत्ताकाः ॥

**ननु स्वप्नरथाद्यधिष्ठानतयोपलभ्यमानदेशविशेषस्यापि तदा सन्निकृष्टतया अनिर्वचनीयप्रातिभासिकदेशोऽभ्युपगन्तव्यस्तथा चाध्यासः कुत्रेति चेन्न, चैतन्यस्य स्वयंप्रकाशस्य रथाद्यधिष्ठानत्वात् ॥**

शि० म०—ननु तव मतेऽपि कुत्र रथाद्यध्यासः, न तावच्चैतन्ये रथाद्यधिष्ठानतया देशविशेषस्योपलभ्यमानत्वेन शुद्धस्यान्तःकरणावच्छिन्नस्य वा चैतन्यस्याधिष्ठानत्वायोगात् । नापि देशविशेषे, स हि किं पारमार्थिकः प्रातिभासिको वा । नाद्यः, विन्ध्यादिदेशविशेषस्य पारमार्थिकस्यासन्निकृष्टतया तदवच्छिन्नचैतन्ये रथाद्यध्यासायोगात् । न द्वितीयः, तस्यापि प्रातिभासिकत्वे रथादिपौर्वकालिकत्वाभावेनाधिष्ठानतावच्छेदकत्वानुपपत्तेः । तस्मान्न रथादेरध्यास इति चोदयति—नन्विति । शुद्धचैतन्यस्यैवाधिष्ठानत्वान्न रथाद्यध्यासानुपपत्तिरिति परिहरति—न चैतन्यस्येति । ननु चैतन्यमपि नाज्ञातमधिष्ठानं ज्ञानविषय एव संप्रयुक्तशुक्तिकादावध्यासदर्शनादित्यत आह—स्वयंप्रकाशस्येति । ज्ञायमानत्वमेवाधिष्ठानत्वे प्रयोजकं लाघवात् । तच्च स्वप्रकाशपरप्रकाशसाधारणम्, न तु वृत्त्यवच्छिन्नज्ञानविषयत्वं संप्रयोगजन्यज्ञानविषयत्वं वा गौरवादिति भावः ॥

म० प्र०—देशविशेषे=चैतन्यव्यतिरिक्तभूतलादिदेशे, स हि=भूतलादिदेशविशेषो हि, पारमार्थिकः=व्यावहारिकः । तस्यापि=भूतलादिदेशविशेषस्यापि, अधिष्ठानतावच्छेदकत्वानुपपत्तेः=रथादिनिरूपितचैतन्यनिष्ठाधिष्ठानतावच्छेदकत्वासंभवात् । तथा च प्रातिभासिकदेशावच्छिन्नचैतन्ये रथाद्यध्यासो न संभवतीति भावः । न च रथाद्युत्पत्तेः पूर्वं भूतलादिदेशविशेषोत्पत्तिस्ततो गजाद्यध्यास इति प्रातिभासिकभूतलादिदेशविशेषस्य गजादिपौर्वकालिकत्वेन प्रातिभासिकभूतलादिदेशविशेषस्य गजादिनिरूपितचैतन्यनिष्ठाधिष्ठानतावच्छेदकत्वं संभवतीति वाच्यम् । प्रातिभासिकपदार्थस्य व्यावहरिकपदार्थावच्छिन्नचैतन्येऽध्यासो न तु प्रातिभासिकपदार्थावच्छिन्नचैतन्येऽध्यास इति त्वयाऽङ्गीकारादिति । परममूले **तदेति** । स्वप्नावस्थायामित्यर्थः । परममूले **तथाचेति** । गजाद्यधिष्ठानतयोपलभ्यमानभूतलादिदेशविशेषस्यापि सन्निकृष्टतया प्रातिभासिकत्वावश्यकत्वेन तस्याधिष्ठानापेक्षतयाऽधिष्ठानत्वाभावे सतीत्यर्थः । **संप्रयुक्तेति**=इन्द्रियसंबद्धेत्यर्थः । ज्ञायमानत्वम्=अनावृतत्वम् । तच्च=अनावृतत्वस्वरूपाधिष्ठानत्वप्रयोजकं तु, स्वप्रकाशपरप्रकाशसाधारणम्=स्वप्रकाशपरप्रकाशाधिष्ठानवृत्ति । ज्ञायमानत्वमेवेत्यत्रैवकारव्यावर्त्यमाह—**न त्विति** । वृत्त्यवच्छिन्नज्ञानविषयत्वं=वृत्त्यवच्छिन्नज्ञानप्रयोज्यानावृतत्वम् । गौरवात्=ज्ञायमानत्वापेक्षया वृत्त्यवच्छिन्नज्ञानविषयत्वादौ शरीरकृतगौरवात् ॥

**प्रतीयमानो हि रथादिरस्तीत्येव प्रतीयते इति सद्रूपेण प्रकाशमानं चैतन्यमेवाधिष्ठानम्। देशविशेषोऽपि चिदध्यस्तः प्रातिभासिकः रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकं तदा सर्वेन्द्रियाणामुपरमात् ॥**

**शि० म०**–ननु स्वप्रकाशमपि चैतन्यं नाधिष्ठानं चित्त्वादिना ज्ञायमाने तत्र जडाध्यासायोगादित्यत आह–**सद्रूपेणेति**। चैतन्यं सत्त्वेन प्रकाशमानमेवाधिष्ठानम्, न तु चिदानन्दलक्षणपरिपूर्णस्वरूपेण, तद्रूपस्य तस्य शास्त्रविषयस्य मूलाविद्यया आवृतत्वादिति भावः। तर्हि सद्रूपेण वा चैतन्यं कथं प्रकाशते इत्याशङ्क्य सन् घट इतिवत्सन्गजः सन् रथ इति गजादेः सत्त्वेन प्रतीयमानत्वात्तस्य च सत्त्वस्याधिष्ठानरूपत्वादतिरिक्तसत्तायाश्चानभ्युपगमाच्चैतन्यमपि तेन रूपेण प्रतीयते इत्यभिप्रेत्याह–**प्रतीयमानो हीति**। नन्वेवमत्रायं गज इति देशविशेषाधिष्ठानकतया गजाद्युपलम्भो न स्यादित्युक्तमित्यत आह–**देशविशेषोऽपीति**। ननु रथादेश्चैतन्याध्यस्तत्वे तत्रेदन्तेन्द्रियग्राह्यत्वयोरनवभासप्रसङ्गः। न हि शुक्तिरूप्यादाविव इन्द्रियग्राह्येदमवच्छिन्नचैतन्यमधिष्ठानं येन तद्गतेदन्तादिरत्रावभासेत इत्यत आह–**रथादाविति**। अपिरयमनुक्तसमुच्चये इदन्त्वमपीत्यर्थः। नन्विन्द्रियग्राह्यत्वस्यापि प्रातिभासिकत्वकल्पने गौरवमित्यत आह–**तदेति**। ननु देशविशेषस्याप्यध्यस्तत्वे तदधिष्ठानमन्तःकरणावच्छिन्नचैतन्यम्, तस्यैव स्वप्ने प्रतिभासात्। "सधीः स्वप्नो भूत्वेमं लोकमनुसंचरेत्" इति श्रुतेश्चेति चेन्न तावत्प्रतिभासादन्तःकरणावच्छिन्नाधिष्ठानत्वम्, सुखादिवच्छुद्धचैतन्याध्यासेऽपि तद्विशिष्टप्रतिभासोपपत्तेः। सधीरित्यादिश्रुतेश्च "दशभिः सह पुत्रैश्च भारं वहति गर्दभी" इत्यत्र पुत्राणां भारानन्वयवत् "अग्ना ३ इ पत्नीवाँस्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा" इत्यत्र त्वष्टुस्सहत्वप्रतियोगिनः पातृत्वानन्वयवच्च धिया सह वर्तमानः आत्मा स्वप्नो भूत्वेत्यनन्वयलक्षणाप्राधान्येऽप्युपपत्तेः। तस्माच्छुद्धमेव चैतन्यं स्वाप्नगजाद्यधिष्ठानमिति ॥

**म० प्र०**–तत्र=चैतन्ये। **जडाध्यासायोगादिति**। न ह्यसाधारणशुक्तित्वादिधर्मेण ज्ञायमानशुक्तिकादौ रजताद्यध्यासः संभवतीति भावः। सत्त्वेन=अस्तित्वेन। प्रकाशमानम्=ज्ञायमानम्। **आवृतत्वादिति**। न च विदुषा सच्चिदानन्दपरिपूर्णलक्षणब्रह्मणः ज्ञातत्वाद्विदुषः प्रपञ्चाध्यासो न स्यादिति वाच्यम्। विदुषो वस्तुतः प्रपञ्चाध्यासाभावेऽपि बाधितानुवृत्त्या तस्य प्रपञ्चाध्याससत्त्वादिति। तर्हि=सत्त्वेन प्रकाशमानचैतन्यस्याधिष्ठानत्वस्वीकारे। सद्रूपेण वा=सद्रूपेणैव, प्रकाशते=भाति। तेन रूपेण=सद्रूपत्वधर्मेण, एवं=चैतन्यस्याधिष्ठानत्वस्वीकारे सति। **इत्युक्तमिति**। रथाद्यधिष्ठानतया देशविशेषस्योपलभ्यमानत्वेनेति पूर्ववाक्ये इत्युक्त–

मित्यर्थः । परममूले **देशविशेष इति** । अत्रायं रथ इत्यधिष्ठानतया प्रतीयमानदेशविशेषस्यापि प्रातिभासिकत्वान्नाधिष्ठानतेति भावः । येन=इन्द्रियग्राह्येदमवच्छिन्नचैतन्यस्याधिष्ठानत्वेन । **तद्गतेति**=इन्द्रियग्राह्येदमवच्छिन्नचैतन्याधिष्ठानप्राप्तेत्यर्थः । अत्र=रथादौ, **गौरवमिति** । तथा च रथादिकल्पनतन्निष्ठेन्द्रियग्राह्यत्वकल्पनयोर्गौरवेण रथादिस्मरणमेव स्वीकरणीयमिति भावः। परममूले **तदेति** । स्वप्नावस्थायामित्यर्थः । परममूले **सर्वेन्द्रियाणामिति** । व्यावहारिकसर्वेन्द्रियाणामित्यर्थः । तथा च रथाद्यपरोक्षावभासानुपपत्त्या रथादिस्मरणासंभवान्न गौरवं रथादिनिष्ठेन्द्रियग्राह्यत्वकल्पनप्रतिबन्धकमिति भावः । तस्यैव=अन्तःकरणावच्छिन्नचैतन्यस्यैव, प्रतिभासात्=सद्रूपत्वेन ज्ञानात्, स्वाप्नरथादिपदार्थज्ञानादिति वा । **सधीरिति** । बुद्धिविशिष्ट आत्मा स्वप्नो भूत्वा स्वाप्नपदार्थाद्याकारपरिणतबुद्ध्यवभासकत्वेन तदाकारो भूत्वेमं लोकं जाग्रत्पदार्थजातमनुसंचरेदनुसंचरत्यनुभवतीत्यर्थः । तद्विशिष्टप्रतिभासोपपत्तेः=अन्तःकरणविशिष्टचैतन्यस्य रथादिज्ञानोपपत्तेः । **सधीरिति** । सधीरित्यादिश्रुतेश्चेत्यनन्वयलक्षणाप्राधान्येऽप्युपपत्तेरित्यन्वयः । अन्तःकरणे रथादिनिरूपितचैतन्यनिष्ठाधिष्ठानत्वानन्वयलक्षणाप्राधान्ये सत्यपि सधीरित्यादिश्रुत्युपपत्तेरित्यर्थः । अनन्वये लौकिकदृष्टान्तमाह–**दशभिरिति** । भारानन्वयवत् पुत्राणां गर्दभीकर्तृकभारवहनानुपयोगेन संबन्धाभाववत् । अनन्वये एव वैदिकदृष्टान्तमाह–**अग्ना इति** । हे अग्ने त्वं सोमं पिबेत्यन्वयः । कथंभूतस्त्वं पत्नीवान् पत्नीविशिष्टः । पुनः कथंभूतस्त्वं त्वाष्ट्रा त्वष्टृसंज्ञकेन देवेन सजूः सहवर्तमानः । सहवर्त्तमानत्वं चैककर्माधिष्ठातृत्वेन बोध्यम् । सहत्वप्रतियोगिनः=वैशिष्ट्यलक्षणसहत्वनिरूपकस्य । **पातृत्वेति**=सोमपानकर्तृत्वेत्यर्थः । तस्मात्=अन्तःकरणे रथादिनिरूपितचैतन्यनिष्ठाधिष्ठानत्वस्यान्वयाभावात् ॥

**अहं गज इति प्रतीत्यापादनं तु पूर्ववन्निरसनीयम् ॥**

**शि० म०**–नन्वन्तःकरणस्य स्वाप्नाध्यासाधिष्ठानतावच्छेदकत्वाभावेऽपि तदधिष्ठानस्य वस्तुतोऽन्तःकरणावच्छिन्नतया सुखादिवदहं गज इत्यादिप्रतीत्यापत्तिरित्याशङ्क्य शुक्तिरूप्यवत्तदनुभवस्येदमाकारानुभवाहितसंस्काजन्यत्वान्नाहमाकारत्वमित्याह–अहं गज इति ॥

**म० प्र०**–तदधिष्ठानस्य=स्वाप्नरथाद्यधिष्ठानचैतन्यस्य, वस्तुतः=विचारतः । तदनुभवस्य=गजाद्यनुभवस्य ॥

**स्वाप्नगजादयः साक्षान्मायापरिणामा इति केचित् । अन्तःकरणद्वारा तत्परिणामा इत्यन्ये ॥**

**शि०म०**–ननु स्वाप्नगजादिज्ञानस्य न तत्कालोत्पन्नविषयत्वमुपादानाभावात् । तथा हि न तावच्चैतन्यमुपादानमपरिणामित्वेन दूषितत्वात् । नाप्यविद्या, सा हि न मूलाविद्या, तदुत्पादकगजाद्यवयवाभावेन तस्यास्साक्षात्तदुत्पादकत्वायोगात् । घटादेरपि मृत्पिण्डादिस्वावयवद्वारैव मूलाविद्याकार्यत्वाभ्युपगमात् । नापि तूला-

विद्या, साऽपि न बाह्यदेशावच्छिन्नचैतन्याश्रिता देशविशेषस्यापि प्रातिभासिकत्वात्। न चान्तःकरणावच्छिन्नाश्रिता गजादिहेतुः, अन्तःकरणस्य गजाद्युपादानाविद्याधिष्ठानतावच्छेदकत्वे प्रमाणाभावात्, तस्मान्न गजादेः प्रातिभासिकत्वमित्याशङ्क्य मूलाविद्यैव साक्षात्स्वप्नगजाद्युपादानम्, गजादेश्च शुक्तिरूप्यवत्प्रातिभासिकत्वान्न तदवयवापेक्षा लौकिकपरमार्थगजादेरेव तदपेक्षत्वादित्यभिप्रेत्याह—**स्वाप्नगजादय इति** । **अन्तःकरणद्वारेति** । न चात्र प्रमाणाभावः स्वप्ने गजाद्युत्पत्त्यनुपपत्तेरेव प्रमाणत्वात् । अन्यथा साक्षादविद्यापरिणामत्वे सुषुप्तावपि केवलाविद्यायाः सत्त्वेन तत्प्रतिभासापत्तेरिति भावः । एतच्चापाततः क्लृप्ताज्ञानोपादानादेव स्वप्नाध्यासोपपत्तेः । न च सुषुप्तौ तत्प्रतिभासापत्तिः, अन्तःकरणाभावात्, तस्य च रागद्वेषादिवत्तत्र निमित्तकारणत्वात्। किंचान्तःकरणद्वारत्वेऽपि न गजाद्युत्पत्तिः क्लृप्तगजावयवादेरभावात्। यदि च प्रातिभासिकत्वान्न तदवयवापेक्षा तदा मूलाविद्ययैव साक्षात्प्रातिभासिकतदुत्पत्तिसंभवेन किमन्तर्गतेनान्तःकरणेनेत्यास्तामतिविस्तरः ॥

म० प्र०—तस्याः=मूलाविद्यायाः। साक्षात्=अवयवैर्विना । तदुत्पादकत्वायोगात्=गजादिजनकत्वासंभवात् । ननु तस्या गजाद्यवयवद्वारा गजाद्युत्पादकत्वं स्यादित्याशङ्क्याह—**तदुत्पादकेति** । स्वाप्नगजादिजनकेत्यर्थः । **अवयवाभावेनेति** । मूलाविद्याया गजाद्यवयवद्वाराऽपि गजाद्युपादानत्वासंभवादिति शेषः । ननु स्वाप्नगजादिकं प्रति मूलाविद्यायाः साक्षादुत्पादकत्वासंभवस्वीकारे व्यावहारिकघटादेरपि मूलाविद्याकार्य्यत्वं न स्यादित्याशङ्क्याह—**घटादेरिति** । व्यावहारिकघटादेरित्यर्थः । **स्वेति**=घटादीत्यर्थः । तस्मात्=स्वाप्नगजाद्युपादानकारणानिरूपणात् । **प्रातिभासिकत्वमिति** । तथा च स्वप्नकाले व्यावहारिकगजादिविषयकस्मरणमेव नानुभव इति भावः । तदवयवापेक्षा=गजाद्यवयवापेक्षा । **लौकिकपरमार्थेति**=लोकप्रसिद्धव्यावहारिकेत्यर्थः । तदपेक्षत्वात्=अवयवापेक्षत्वात् । अन्तःकरणस्य स्वाप्नगजादिनिमित्तकारणत्वकल्पनापेक्षया स्वाप्नगजादिष्वन्तःकरणद्वारा मायापरिणामत्वकल्पनं वरमित्यभिप्रायवतामाचार्य्याणां मतमाह—परममूले **अन्तः करणद्वारेति** । अन्तःकरणाभिन्नपरिणामवत्या मायाया गजाद्याः परिणामा इत्यर्थः । अत्र=स्वाप्नगजादीनामन्तःकरणद्वारा मायायाः परिणामत्वे । अनुपपत्तेः=स्वप्नकालिकगजाद्युत्पत्तिरन्तःकरणद्वारा मायानिष्ठकारणत्वं विनाऽनुपपद्यमाना सत्यन्तःकरणद्वारा स्वाप्नगजाद्युत्पत्तिनिरूपितमायानिष्ठकारणतां कल्पयतीत्यर्थापत्तेः । **अन्यथेति** । अस्यैव विवरणं साक्षादविद्यापरिणामत्वे इति । स्वाप्नगजादेरन्तःकरणद्वारं विनैवाविद्योपादानकत्वे इति तदर्थ इति । **तत्प्रतिभासेति**=स्वाप्नगजादिज्ञानेत्यर्थः । एतच्च=उक्तदूषणं च । तत्प्रतिभासापत्तिः=स्वाप्नगजादिज्ञानापत्तिः । ननु सुषुप्तावन्तःकरणाभावेन स्वाप्नगजादिज्ञानाभावस्वीकारेऽन्तःकरणस्य स्वाप्नगजाद्युपादानत्वं

प्राप्तमित्याशङ्क्याह—**तस्येति** । अन्तःकरणस्येत्यर्थः । **रागद्वेषादिवदिति** । यथा रागद्वेषादीनां प्रवृत्तौ निमित्तकारणत्वं तद्वदित्यर्थः । तत्र=स्वाप्नगजादौ । अन्तःकरणद्वारत्वेऽपि=अन्तःकरणनिष्ठस्वाप्नगजादिनिरूपितमायानिष्ठकारणत्वप्रयोजकत्वेऽपि । **गजादीति**=स्वाप्नगजादीत्यर्थः । प्रातिभासिकत्वात्=स्वाप्नगजादेर्ज्ञानकालमात्रवृत्तित्वात्, तदवयवापेक्षा=स्वाप्नगजाद्यवयवापेक्षा । **तदुत्पत्तीति**=स्वाप्नगजाद्युत्पत्तीत्यर्थः । अन्तर्गतेन—द्वारभूतेन ॥

**ननु गजादेः शुद्धचैतन्याध्यस्तत्वे इदानीं तत्साक्षात्काराभावेन जागरणेऽपि स्वप्नोपलब्धगजादय अनुवर्तेरन् । उच्यते । कार्यविनाशो हि द्विविधः । कश्चिदुपादानेन सह, कश्चित्तु विद्यमाने एवोपादाने । आद्यो बाधः, द्वितीयस्तु निवृत्तिः । आद्यस्य कारणमधिष्ठानतत्त्वसाक्षात्कारः, तेन विनोपादानभूताया अविद्याया अनिवृत्तेः । द्वितीये विरोधिवृत्त्युत्पत्तिर्दोषनिवृत्तिश्च । तदिह ब्रह्मसाक्षात्काराभावात् स्वाप्नप्रपञ्चो मा बाधिष्ठ ॥**

शि० म०—ननु स्वाप्नगजादेर्मायापरिणामस्य शुद्धचैतन्याध्यासे इदानीं तदधिष्ठानब्रह्मसाक्षात्काराभावेन घटादिवद्बाधो न स्यात् । ततश्च तस्य जागरणेऽप्यनिवृत्तत्वात्प्रतिभासापत्तिरिति शङ्कते—**नन्विति** । बाधानुपपत्तिमङ्गीकरोति—**उच्यते इति** । तर्हि स्वाप्नगजादिर्जागरणेऽप्यनुवर्त्तेतेत्याशङ्क्य बाधाभावेऽपि निवृत्तत्वान्नानुवृत्तिरिति वक्तुं प्रथमं भेदेन निवृत्तिबाधौ निरूपयति—**कार्यविनाशो हीति** । उपादानेनेति । अज्ञानेति शेषः । तेन मृत्पिण्डेन सह घटध्वंसेऽपि न बाधः, तदुपादानभूताया अविद्याया अनिवृत्तत्वादिति ध्येयम् । न केवलं स्वरूपतो निवृत्तिबाधयोर्भेदः किंतु कारणभेदादपीत्याह—**आद्यस्येति** । बाधस्येत्यर्थः । ततः किमित्यत आह—**तदिहेति** । तस्माद्बाधनिवृत्त्योर्भेदादिह जागरणेऽपि । मा बाधिष्ठ अविद्यया सह न निवर्त्येतेत्यर्थः ॥

म० प्र०—इदानीं=जागरणकाले । **तदधिष्ठानेति**=स्वाप्नगजाद्यधिष्ठानेत्यर्थः । ततश्च=स्वाप्नगजादीनां बाधाभावादेव, तस्य=स्वाप्नगजादेः, तर्हि—बाधाभावांगीकारे, तेन=उपादानाज्ञानेन सह कार्यनाशस्य बाधशब्दार्थत्वस्वीकारेण । **तदुपादानेति**=घटाद्युपादानेत्यर्थः । कारणभेदात्=बाधनिवृत्त्योः कारणभेदात्, तस्मात्=बाधनिवृत्त्योः स्वरूपतः कारणतश्च ॥

**मुसलप्रहारेण घटादेरिव विरोधिप्रत्ययान्तरोदयेन स्वजनकीभूतनिद्रादिदोषनाशेन वा गजादिनिवृत्तौ को विरोधः । एवं च शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठतूलाविद्याकार्यत्वपक्षे शुक्तिरिति ज्ञानेन तदज्ञानेन सह रजतस्य बाधः ॥**

शि० म०—तर्ह्यविद्याविनाशाभावाद्गजादिनिवृत्तिरपि न स्यादित्याशङ्क्य न ह्युपादानविनाशादेव सर्वत्र कार्य्यविनाशः, किन्तु कारणान्तरेणापि, गजादेश्च घटादेर्मुसलप्रहारेणेव विरोधिवृत्त्यन्तरेणापि निवृत्त्युपपत्तेर्न विरोध इत्याह—**मुसलप्रहारेणेति**। ननु स्वप्न एव गजप्रतिभासानन्तरमश्वप्रतिभाससमयेऽपि तज्जनकनिद्रादृष्टसंस्कारादिसत्त्वेन तदाऽपि गजोऽनुवर्तेतेत्याशङ्क्य फलबलात्तत्राश्वादिपरिणाम एव विरोधीति तेनैव तन्निवृत्तिरित्यभिप्रेत्याह—**विरोधीति**। ननु स्वप्ने अन्त्यपदार्थस्य विनाशो न स्यात्तदनन्तरं सुषुप्तौ विरोधिपदार्थान्तरानुदयादित्याशङ्क्य तत्र निद्रादिनाशो निवर्तक इत्याशयवानाह—**स्वजनकीभूतेति**। न चाननुगमः फलबलेनाननुगतस्यैव निवर्तकत्वाभ्युपगमात्। नन्विदानीमबाधितस्यापि स्वप्नप्रपञ्चस्य प्रातिभासिकत्वाभ्युपगमे शुक्तिरूप्यस्य—शुक्तितत्त्वज्ञानेऽपि बाधो न स्यात्तदभावेऽप्यागन्तुकदोषजन्यत्वेन प्रातिभासिकत्वोपपत्तेरिति चेत्, किं शुक्तिरजतस्य तुलाविद्यापरिणामत्वपक्षे बाधानुपपत्तिर्मूलाविद्यापरिणामत्वपक्षे वा। तत्र नाद्य इत्याह—**एवं चेति**। कार्य्यविनाशस्य द्वैविध्ये सतीत्यर्थः। **शुक्तिरिति**=**ज्ञानेनेति**। नेदं रजतमिति ज्ञानेनेत्यपि द्रष्टव्यम्॥ भेदगोचराज्ञानकार्यस्य रजतस्य समानविषयभेदसाक्षात्कारेणैव बाध्यत्वात्। न चैवं शुक्तितत्त्वज्ञानमेव बाधकं नेदं रजतमित्यनुवाद इति पञ्चपादिकावाक्यविरोध इति वाच्यम्, भिन्नविषयभेदज्ञानस्य शुक्त्यज्ञानकार्य्यरजताबाधकत्वेन तत्परतया टीकावाक्योपपत्तेः। न च रजतस्य तूलाविद्याकार्य्यत्वे प्रमाणाभावः, अनुमानादेस्तत्प्रमाणस्योक्तत्वात्॥

म० प्र०—तर्हि=गजादेः स्वोपादानाविद्यया सह नाशानङ्गीकारे, तदाऽपि=अश्वप्रतिभाससमयेऽपि, फलबलात्=स्वाप्नगजादिज्ञानध्वंसस्वरूपकार्य्यान्यथानुपपत्त्या, तत्र=स्वाप्नगजाद्यनुवर्त्तने, तदनन्तरम्=स्वाप्नान्त्यपदार्थानन्तरम्, स्वाप्नान्त्यपदार्थज्ञानानन्तरं वा, तत्र=स्वाप्नान्त्यपदार्थे। अत्र निरूपितत्वं सप्तम्यर्थः। निद्रादिनाशः=स्वाप्नान्त्यपदार्थजनकनिद्रादिनाशः। आदिनाऽदृष्टादिसङ्ग्रहः। अननुगमः=स्वाप्नपदार्थनिवर्त्तकानामेकस्वरूपत्वाभावः। अनुगतस्वाप्नपदार्थनिवर्त्तकतावच्छेदकाभाव इति यावत्। फलबलेन=स्वाप्नपदार्थनिवृत्तिरूपकार्य्यबलेन, अननुगतस्य=नानाविधस्य स्वाप्नपदार्थनिवर्त्तकस्य, इदानीं=जागरणकाले, तदभावेऽपि=बाधाभावेऽपि। **आगन्तुकेति**=सादृश्याद्यागन्तुकेत्यर्थः। तत्र=द्वयोर्मध्ये। **समानविषयभेदसाक्षात्कारेणैवेति**। शुक्त्यादिपुरोवर्त्तिनिष्ठप्रातिभासिकरजतादिप्रतियोगिकभेदगोचरज्ञानविषयसमानोऽभिन्नो विषयो यस्य शुक्त्यादिपुरोवर्त्तिनिष्ठप्रातिभासिकरजतादिप्रतियोगिकभेदसाक्षात्कारस्य स तथा स चासौ भेदसाक्षात्कारस्तेनैवेत्यर्थः। एवं=नेदं रजतमित्यादिज्ञानस्य शुक्तिरजतादिबाधकत्वस्वीकारे सति। भिन्नविषयभेदज्ञानस्य=शुक्त्यादिपुरोवर्तिनिष्ठव्यावहारिक-

रजतादिप्रतियोगिकभेदज्ञानस्य, तत्परतया=व्यावहारिकरजतादिविषयकं नेदं रजतमित्यादिज्ञानमनुवादकं न बाधकमित्यर्थाभिप्रायकत्वेन । **टीकावाक्येति**=पञ्चपादिकावाक्येत्यर्थः । तत्प्रमाणस्य=रजतस्य तूलाविद्याकार्य्यत्वे प्रमाणस्य । **उक्तत्वादिति** । रजतोत्पत्तिनिरूपणग्रन्थे रूप्याध्यासः साक्षादविद्योपादानः अन्यानुपादानत्वे सति सोपादानत्वादाकाशवदित्याद्यनुमानस्योक्तत्वादित्यर्थः । यद्वा शुक्तिरजतादिकं तूलाविद्याकार्य्यं ब्रह्मज्ञानेतरशुक्तिज्ञानादिबाध्यत्वाद्यन्नैवं तन्नैवं घटादिवदित्यनुमानस्यैवोक्तप्रायत्वादित्यर्थः ।

**शि० म०**–ननु तूलाज्ञानाङ्गीकारे नानाज्ञानापत्तौ मायामित्यादिश्रुतिविरोध इति चेत् न, मूलाज्ञानस्यैवावस्थाभेदास्तूलाज्ञानपदवाच्या इत्यभ्युपगमात् । न च मूलाज्ञानस्यैव तूलाज्ञानरूपत्वे तस्य शुक्तितत्त्वज्ञानान्निवृत्त्यापत्तिः, तत्तज्ज्ञानात्तत्तद्विषयावरणशक्तेरेव विनाशात् । न चैवं समानविषयसर्वावरणशक्तीनां युगपदेव शुक्त्यादिज्ञानान्निवृत्तिप्रसङ्ग इति युक्तम्, समानविषयत्वेऽप्येकैकावरणशक्तिरेव कार्य्यबलात्तत्त्वज्ञानेन प्रविलयकल्पनात् । अन्यथा न्यायमतेऽप्येकज्ञानेनैव सर्वज्ञानप्रागभावानां निवृत्तिप्रसङ्गः । यदि च प्रागभावानां प्रतियोगिजननस्वरूपयोग्यत्वाविशेषेऽपि फलबलकल्प्यस्वभावविशेषादेक एव प्रतियोगिना निवर्त्तते इति मतं तदा समानविषयतूलाज्ञानानामावरकत्वेऽप्यात्मनि पुनरज्ञानानुभवाद्भ्रमान्तरोदयाच्च तत्त्वज्ञानादेकस्मादेकैवावरणशक्तिर्निवर्तते इति तुल्यम् ॥

**म० प्र०**--अवस्थाभेदाः=आवरणविक्षेपानुकूलशक्तिविशेषाः । तस्य=मूलाज्ञानस्य । **शुक्तितत्त्वेति**=शुक्तिस्वरूपेत्यर्थः । **निवृत्त्यापत्तिरिति** । शक्तिशक्तिमतोरभेदान्मूलाज्ञानस्यैव तूलाज्ञानरूपत्वेन तूलाज्ञानस्य शुक्तिस्वरूपज्ञानेन निवृत्त्या मूलाज्ञानस्यापि नाशः स्यात्तथा च पुनर्भ्रमः संसारश्च न स्यादिति भावः । तत्तज्ज्ञानात्=शुक्त्यादितत्तत्पदार्थज्ञानात् । **शक्तेरेवेति** । न तु मूलाविद्याया नाशः इत्येवकारार्थ इति । एवं=शुक्त्यादिज्ञानेन तत्तद्विषयकावरणशक्तिनाशस्वीकारे सति । समानविषयसर्वावरणशक्तीनाम्=शुक्त्यादिपदार्थज्ञानविषयाभिन्नविषयावरणानुकूलनिखिलतूलाज्ञानानाम् । समानविषयत्वेऽपि=शुक्त्यादिपदार्थविषयकनानावरणशक्तीनां शुक्त्यादिपदार्थज्ञानविषयसमानविषयकत्वेऽपि, कार्य्यबलात्=पुनर्भ्रान्तिरूपकार्य्यान्यथानुपपत्त्या । अन्यथा=पुनर्भ्रान्तिरूपकार्य्यान्यथानुपपत्त्यैकावरणशक्तिनाशानङ्गीकारे । **प्रसङ्ग इति** । तथा च घटादिष्वेकज्ञानानन्तरं पुनर्ज्ञानं न स्यादिति शेषः ॥ एक एव=एकप्रागभाव एव, आत्मनि=अन्तःकरणेऽन्तःकरणावच्छिन्नचैतन्ये वा घटाद्यवच्छिन्नात्मनि वा । तत्त्वज्ञानात्=घटादिस्वरूपविषयकयथार्थज्ञानात् ॥

**शि० म०**–ननु तत्त्वज्ञानादावरणशक्तेरेव विनाशाभ्युपगमे मुक्तावप्यज्ञानं स्यात् । न च ब्रह्मसाक्षात्कारात्प्रागेव सर्वावस्था विनश्यन्तीति प्रमाणमस्तीति चेत् न, किं मुक्तावापाद्यमानमज्ञानमनावरकमुतावरकम् । नाद्यः, अनावरकाज्ञाने

प्रमाणाभावात् । द्वितीयेऽपि न तावद्ब्रह्मावरकं ब्रह्मणः साक्षात्कृतत्वेन तदावरणशङ्काऽनवकाशात् । नापि प्रपञ्चावरकं मूलाज्ञाननिवर्तकेन ब्रह्मसाक्षात्कारेण तन्मूलनिखिलप्रपञ्चस्य निवर्तितत्वात्, अविषयाविद्यावस्थायाश्चाभावात् । भावे वा तस्या अपि निखिलनिवर्तकब्रह्मज्ञानेन निवर्तितत्वात् । तस्मान्मूलाज्ञानस्यानावस्थाभेद एव तूलाज्ञानं तत्परिणामश्च शुक्तिरजतमिति तेनैव सहाध्यासस्य तत्त्वज्ञानान्निवृत्तिरिति युक्तो बाधः । तदुक्तं विवरणाचार्य्यैः । मूलाज्ञानस्यैवावस्थाभेदा रजताद्युपादानानि शुक्तिकादिज्ञानैस्सहाध्यासेन निवर्त्तन्ते इति ॥

म० प्र०—यत्र तत्त्वज्ञानत्वं तत्रावरणशक्तिनाशकत्वमिति व्याप्तेर्घटादिज्ञानेषु दृष्टत्वेन ब्रह्मज्ञानस्य तत्त्वज्ञानत्वात्तत्रापि ब्रह्मविषयकावरणशक्तिनाशकत्वेन मूलाऽज्ञानस्य नाशो न स्यात्तथा च मुक्तावप्यज्ञानं स्यादित्याशयेन शङ्कते—**नन्विति** । प्रागेव=मुक्तेः प्रागेव, सर्वावस्थाः=सर्वावरणशक्तयः । मुक्तावापाद्यमानमावरकाज्ञानं किं ब्रह्मावरकमुत प्रपञ्चावरकमविषयं वा । नाद्य इत्याह—**न तावदिति । तदावरणेति**=ब्रह्माच्छादनेत्यर्थः । नापि द्वितीय इत्याह—**नापीति । तन्मूलेति** । अविद्याकारणकेत्यर्थः । नापि तृतीय इत्यभिप्रेत्य हेतुमाह—**अविषयाविद्यावस्थायाश्चेति** । विषयिताभाववत्या अविद्यायाः स्वरूपस्येत्यर्थः । तस्याः=अविषयाविद्यावस्थायाः, तस्मात्=तूलाज्ञानस्य मूलाज्ञानावस्थाविशेषत्वस्वीकारे दोषाभावात् । अवस्थाभेद एव=स्वरूपविशेष एव । तत्परिणामः=तूलाज्ञानरूपोपादानसमसत्ताककार्य्यम् । तेनैव सह=तूलाज्ञानरूपमूलाज्ञानस्वरूपविशेषेण सहैव । अध्यासस्य=अध्यस्तशुक्तिरजतस्य । **तत्त्वेति**=शुक्तिस्वरूपेत्यर्थः । अवस्थाभेदाः=स्वरूपविशेषतूलाज्ञानानि । सहाध्यासेन=शुक्तिरजताद्यध्यस्तैः सह ॥

**मूलाविद्याकार्य्यत्वपक्षे तु मूलाविद्याया ब्रह्मसाक्षात्कारमात्रनिवर्त्यतया शुक्तित्वज्ञानेनानिवर्त्यतया तत्र शुक्तिज्ञानान्निवृत्तिमात्रं मुद्गरप्रहारेण घटस्येव ॥**

शि० म०—मूलाविद्याकार्य्यत्वपक्षे रजतस्य बाधाभावमनुमोदते—**मूलाविद्येति । निवृत्तिमात्रमिति** । ननु अस्मिन्पक्षे शुक्तिरजतज्ञानस्य प्रमात्वापत्तिः, संसारदशायामबाधितत्वेन उक्तलक्षणसत्त्वात् । न चार्थक्रियाकारित्वमबाधितत्वं शुक्तिरजतं नार्थक्रियाकारीति नोक्तदोष इति वाच्यम्, स्वप्नोपलब्धगजादेः प्रसिद्धगजवदर्थक्रियाकारित्वात् । अबाधितत्वस्याप्यर्थक्रियाविशेषणत्वे आत्माश्रयाद्यनवस्थापातात् । स्वप्नस्त्रीदर्शनस्य सत्यसमृद्धिहेतुत्वदर्शनाच्च । न च प्रातिभासिकभिन्नविषयत्वमबाधितविषयपदेन विवक्षितमिति युक्तम्, सुखादेरपि प्रतिभाससमयमात्रवृत्तित्वेन तज्ज्ञानस्याप्रमात्वापत्तेरिति चेत् न, आगन्तुकदोषाजन्यत्वस्य तदजन्यार्थविषयकत्वस्य वा अबाधितविषयपदेनात्र विवक्षित-

त्वात्। प्रातिभासिकरजतस्य चागन्तुककाचादिदोषजन्यत्वान्न तज्ज्ञानेऽतिव्याप्तिः। तस्माद्युक्तं रजतस्य मूलाविद्याकार्य्यत्वम् ॥

म० प्र०—अनुमोदते=अङ्गीकरोति । परममूले **तत्रेति**। शुक्तावित्यर्थः । अस्मिन्पक्षे=शुक्तिरजतादेर्मूलाविद्याकार्य्यत्वमते, अबाधितत्वेन=शुक्तिरजतादेः स्वोपादाननाशसहितस्वनाशाप्रतियोगित्वेन, उक्तलक्षणसत्त्वात्=शुक्तिरजतादिज्ञानेऽबाधितार्थविषयकत्वरूपोक्तलक्षणसत्त्वात्, अर्थक्रियाकारित्वं=सफलचेष्टाजनकत्वम्, उक्तदोषः=शुक्तिरजतादिज्ञाने प्रमात्वापत्तिरूपो दोषः। **प्रसिद्धेति**=व्यावहारिकेत्यर्थः । अबाधितत्वस्य=अर्थक्रियाकारित्वरूपाबाधितत्वस्य, अर्थक्रियाविशेषणत्वे=अबाधितार्थक्रियाकारित्वमबाधितत्वमित्यर्थक्रियाविशेषणत्वे। **आत्माश्रयाद्यनवस्थापातादिति**। घटाद्यर्थनिष्ठविचारणीयाबाधितत्वादबाधितत्वनिर्वचनवाक्यार्थघटकार्थक्रियाविशेषणाबाधितत्वमभिन्नं भिन्नं वा । नाद्यः आत्माश्रयात् अर्थक्रियायामबाधितत्वस्य घटाद्यर्थनिष्ठविचारणीयाबाधितत्वाभिन्नत्वेऽर्थक्रियायामप्यबाधितार्थक्रियाकारित्वरूपमबाधितत्वं स्वीकरणीयम्। पुनस्तस्यामित्याश्रयादिभिः सहानवस्थाप्राप्तेरित्यर्थः। **सत्यसमृद्धिहेतुत्वदर्शनाच्चेति**। "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ॥" इति श्रुतेः श्रौतकाम्यकर्मव्यावहारिकवृद्धिनिरूपितकारणत्वज्ञानाच्चेत्यर्थः। प्रातिभासिकभिन्नविषयत्वं=ज्ञानकालमात्रवृत्तिभिन्नविषयत्वम्, तज्ज्ञानस्य=सुखादिप्रतीतेः । **तदजन्येति**=आगन्तुकदोषानुत्पन्नेत्यर्थः। अत्र=उक्तप्रमाणलक्षणे, तस्मात्=शुक्तिरजतादेर्मूलाविद्याकार्य्यत्वाभ्युपगमे दोषाभावात् ॥

**ननु शुक्तौ रजतस्य प्रतिभाससमये प्रातिभासिकसत्ताभ्युपगमे नेदं रजतमिति त्रैकालिकनिषेधज्ञानं न स्यात् किंत्विदानीमिदं न रजतमितीदानीं घटः श्यामो नेतिवदिति चेन्न। न हि तत्र रजतत्वावच्छिन्नप्रतियोगिताकाभावो निषेधधीविषयः ॥**

शि० म०—ननु रजतस्य तत्त्वज्ञानाच्छुक्तौ विनाश इत्युक्तमयुक्तं तस्य तत्रानुत्पत्तेः। दोषसहकृतया तूलाविद्यया मूलाविद्यया वा प्रतिभाससमये तत्र तदुत्पत्त्यभ्युपगमे नेदं रजतं कालत्रयेऽप्यत्र रजतं नास्तीति त्रैकालिकाभावप्रतीतिविरोधात्, न च स्वप्नप्रपञ्चवत्प्रातिभासिकत्वोपपत्तिः, तस्य तत्राप्यसंप्रतिपत्तेरित्याशयेन शङ्कते—**नन्विति**। किं व्यवहितस्यैव निषेधधीविषयत्वसंभवादन्यथाख्यातिः सिषाधयिषिता, उत प्रातिभासिकरजते तदनुपपत्तिः । नाद्यः, व्यवहितरजतस्य पुरोवर्तिन्यप्रसक्तत्वात् । द्वितीयेऽपि किमधिकरणे कदाचित्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनो रजतस्य सत्त्वात् तस्य तदवच्छिन्नप्रतियोगिकत्रैकालिकाभावप्रतीतिविषयत्वानुपपत्तिः, प्रतीयमानाभावप्रतियोगितावच्छेदकानाश्रयत्वाद्वा । तत्राद्ये इष्टापत्तिरित्याह—**न हीति** ॥

**म० प्र०**-तत्त्वेति=शुक्तिस्वरूपेत्यर्थः । तस्य=रजतस्य, तत्र=शुक्तौ । **तदुत्पत्तीति**= रजतोत्पत्तीत्यर्थ; । विरोधात्=अनुपपत्तेः । न च कालत्रयेऽप्यत्र रजतं नास्तीति प्रतीतेस्त्रैकालिकाभावविषयकत्वेऽपि नेदं रजतमिति प्रतीते रजतपुरोवर्त्तिभेदविषयकत्वेनात्यन्ताभावविषयकत्वं कथमिति वाच्यम्। ययोर्भेदस्तयोः कालत्रयेऽप्यत्यन्ताभेदो नास्ति तद्धर्मयोरन्योन्यधर्मिण्यत्यन्ताभावश्चास्तीति व्याप्तेर्घटपटादिषु दृष्टत्वेन रजतपुरोवर्त्तिपदार्थयोरभेदात्यन्ताभासत्वेन नेदं रजतमिति प्रतीतेः रजतभेदविषयकत्वेऽपि रजतपुरोवर्तिपदार्थभेदात्यन्ताभावविषकत्वस्य रजतत्वात्यन्ताभावविषयकत्वस्य च संभवादिति । **प्रातिभासिकत्वेति**। रजते इति शेषः । तस्य=प्रातिभासिकत्वस्य, तत्रापि=स्वप्नप्रपञ्चेऽपि, असंप्रतिपत्तेः=अनङ्गीकारात्, तदनुपपत्तिः=अत्यन्ताभावविषयकप्रतीतिविषयत्वासंभवः, तस्य=रजतस्य । **तदवच्छिन्नेति**= रजतत्वावच्छिन्नरजतेत्यर्थः । प्रतियोगितावच्छेदकानाश्रयत्वात्=लौकिकपरमार्थत्वलक्षणव्यावहारिकत्वाभिन्नप्रतियोगितावच्छेदकानधिकरणत्वात्, तत्र=द्वयोः पक्षयोर्मध्ये । परममूले **तत्रेति**। कालत्रयेऽप्यत्र रजतं नास्तीति, त्रैकालिकात्यन्ताभावज्ञाने । अत्र विषयत्वं सतम्यर्थः ॥ रजतत्वे तस्यान्वय इति । परममूले **निषेधधीविषय इति** । अधिकरणे यदाकदाचित्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसत्त्वस्यात्र कालत्रयेऽपि रजतं नास्तीत्यादिधीविषयप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकत्रैकालिकात्यन्ताभावविरोधित्वादिति भावः ॥

**किंतु लौकिकपारमार्थिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताकः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमात् । ननु प्रातिभासिके रजते पारमार्थिकत्वमवगतं न वा, अनवगते प्रतियोगितावच्छेदकावच्छिन्नज्ञानाभावादभावप्रत्यक्षानुपपत्तिः, अवगते अपरोक्षावभासस्य तात्कालिकविषयसत्तानियतत्वात् । रजते पारमार्थिकत्वमप्यनिर्वचनीयं रजतवदेवोत्पन्नमिति तदवच्छिन्नरजतसत्त्वे तदवच्छिन्नाभावस्तत्र कथं वर्तते इति चेत् ॥**

**शि० म०**-द्वितीयमनुवदति-**किंत्विति** । रजतस्य लौकिकपरमार्थत्वलक्षणप्रतियोगितावच्छेदकानाश्रयत्वेऽपि सदिदं रजतमिति तद्वत्तया ज्ञायमानत्वान्न निषेधधीविषयत्वानुपपत्तिरित्याह-**लौकिकेति** । लौकिकपरमार्थत्वावच्छिन्नप्रतियोगिताकप्रातिभासिकरजताभावो निषेधधीविषय इत्यर्थः । ननु लौकिकपरमार्थत्वं न प्रतियोगितावच्छेदकं प्रतियोग्यवृत्तित्वादिति चेत् न, अभावज्ञानं येन रूपेण नियमेन प्रतियोगिनं विषयीकरोति तस्यैव प्रतियोगितावच्छेदकत्वात् । तथापि कथमभावज्ञानमिति चेत्, किं प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिप्रमित्यभावादभावज्ञानानुपपत्तिः, उत व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युप-

गमे अपसिद्धान्तः । नाद्यः, लाघवेन तदवच्छिन्नप्रतियोगिज्ञानत्वेनैव प्रतियोगिज्ञानस्याभावधीहेतुत्वात् । न द्वितीय इत्याह—**व्यधिकरणेति** ॥

म० प्र०—**सदिदमिति** । लौकिकपरमार्थवदिदमित्यर्थः । तद्वत्तया=लौकिकपरमार्थवत्तया । परममूले **व्यधिकरणेति** । विरुद्धं प्रतियोगिभिन्नव्यावहारिकरजताद्यधिरणं यस्य धर्मस्य स व्यधिकरणः स चासौ धर्मश्च लौकिकपरमार्थत्वं तदवच्छिन्ना प्रतियोगिता यस्याभावस्य तादृशाभावाभ्युपगमादित्यर्थः । **प्रतियोग्यवृत्तित्वादिति** । प्रतियोग्यवृत्तिधर्मो न प्रतियोगितावच्छेदक इति भावः । **येन रूपेणेति** । नियमेन यद्धर्मविशिष्टप्रतियोगिनं विषयीकरोतीत्यर्थः । लाघवेन=प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगियथार्थज्ञानत्वेन प्रतियोगिज्ञानस्याभावधीहेतुत्वापेक्षया प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानत्वेन प्रतियोगिज्ञानस्याभावधीहेतुत्वाभ्युपगमे कारणतावच्छेदके शरीरकृतादिलाघवेन । **तदवच्छिन्नेति**=लौकिकपरमार्थत्वरूपप्रतियोगितावच्छेदकावच्छिन्नेत्यर्थः । **हेतुत्वादिति** । तथा च लौकिकपरमार्थत्वप्रतियोगितावच्छेदकावच्छिन्नत्वेन प्रतियोगिनो ज्ञातत्वाच्छुक्त्यादौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यभावज्ञानं संभवतीति भावः ॥

**न, पारमार्थिकत्वस्याधिष्ठाननिष्ठस्य रजते प्रतिभाससंभवेन रजतनिष्ठपारमार्थिकत्वोत्पत्त्यनभ्युपगमात् । यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरङ्गीकारात् । अत एवेन्द्रियसन्निकृष्टतया जपाकुसुमगतलौहित्यस्य स्फटिके भानसंभवान्न स्फटिके अनिर्वचनीयलौहित्योत्पत्तिः ॥**

शि० म०—शुक्तिगतेदन्ताया इव तद्गतलौकिकपरमार्थताया एव रजते प्रतीत्यभ्युपगमेन तदवच्छिन्नप्रतियोगिनस्तत्रासत्त्वान्न तदवच्छिन्नप्रतियोगिकाभावानुपपत्तिरिति परिहरति—**न पारमार्थिकत्वस्येति** । तर्हि सर्वत्रान्यथाख्यात्यापत्तिरविशेषादित्यत आह—**यत्रेति** । नन्वारोप्यासन्निकर्षस्थले एवानिर्वचनीयवस्त्वभ्युपगमे स्फटिकेऽपि सन्निहितजपाकुसुमगतलौहित्यस्यैव भानापत्तौ अनिर्वचनीयलौहित्याभ्युपगमो विरुध्येतेत्याशङ्क्य कुसुमासन्निकर्षस्थले एव तत्रानिर्वचनीयलौहित्याभ्युपगमादन्यत्र तदनुत्पत्तावपि न विरोध इत्याह—**अत एवेति** ॥

म० प्र०—तद्गतलौकिकपरमार्थतायाः=शुक्तिगतव्यावहारिकतायाः । **तदवच्छिन्नेति**=व्यावहारिकत्वाभिन्नलौकिकपरमार्थत्वावच्छिन्नेत्यर्थः । तत्र=शुक्तौ । परिहरति=अवगतपक्षमवलम्ब्य मूलकारो निराकारोति । परममूले **पारमार्थिकत्वस्येति** । व्यावहारिकत्वस्येत्यर्थः । परममूले **अधिष्ठाननिष्ठस्येति** । शुक्तिनिष्ठस्येत्यर्थः । तर्हि=शुक्तिगतव्यावहारिकतायाः शुक्तिरजते भानस्वीकारे । सर्वत्र=सर्वांशे रजतांशे इति यावत् । अविशेषात्=मिथ्यात्वेन रजततन्निष्ठव्यावहारिकत्वयोस्तुल्यत्वात् । असन्निकर्षस्थले=व्यवधानाधिकरणे । तत्र=स्फटिके ।

अन्यत्र=कुसुमाव्यवधानाधिकरणे स्फटिके । तदनुत्पत्तौ=लौहित्योत्पत्त्यभावे । न विरोधः=लोहितः स्फटिक इति प्रतीत्यनुत्पत्तिर्नास्ति ॥

**नन्वेवं यत्र जपाकुसुमं द्रव्यान्तरव्यवधानादसन्निकृष्टं तत्र लौहित्यप्रतीत्या प्रातिभासिकं लौहित्यं स्वीक्रियतामिति चेन्न इष्टत्वात् ॥**

**शि० म०**—नन्वेवं यत्र स्फटिकमात्रं सन्निकृष्टं तदुपरञ्जकं तु जपाकुसुमं हस्तादिना पिहितं तत्रानिर्वचनीयलौहित्यापत्तिरिति शङ्कते—नन्वेवमिति । इष्टत्वादिति । न च कुसुमासन्निकर्षेऽपि तत्सहचरितप्रभायाः सन्निकृष्टत्वात्तद्गतलौहित्यमेव स्फटिके भासतामिति वाच्यम्, जपाकुसुमप्रभाया एवासिद्धेः । तदुक्तं पञ्चपादिकाचार्य्यैः । यथा पद्मरागादिप्रभा निराश्रयाऽप्युन्मुखोपलभ्यते न तथा जपाकुसुमादेरिति । नन्वेवमन्तःकरणगतकर्तृत्वादेर्नित्यसन्निहितत्वेन तस्यैवात्मनि भानसंभवे कथमनिर्वचनीयकर्तृत्वाभ्युपगम इति चेत् न, किं कर्तृत्वादेरात्मन्यन्यथाख्यातिः सिषाधयिषिता पारमार्थिकता वा । नाद्यः, इष्टत्वात् । न द्वितीयः, अहङ्कारस्यात्मन्यध्यस्तत्वेनानिर्वचनीयतया तद्धर्मस्य कर्तृत्वादेः सुतरामनिर्वचनीयत्वात् । न हि महेन्द्रजालनिर्मितस्य राज्ञस्तदुपकरणं परमार्थसद् भवति । यद्वा आत्मनः कर्तृत्वादिप्रतिपादकशास्त्रप्रामाण्यायैव वियदादिवद्व्यावहारिकं तदभ्युपेयते । न च कर्तृद्वयव्यवहारापत्तिः, धर्मिणोरात्मान्तःकरणयोरैक्याध्यासेन धर्मिभेदानवभासनात् ॥

**म० प्र०**—यत्र=यादृशे । सन्निकृष्टम्=इन्द्रियसंबद्धम्, उपरञ्जकं=स्फटिके लौहित्यजनकम् । तत्र=तस्मिन्स्फटिके, तत्सहचरितप्रभायाः=कुसुमाव्यभिचरितकुसुमप्रभायाः । सन्निकृष्टत्वात्=इन्द्रियसंबद्धत्वात् । **तद्गतेति**=कुसुमगतेत्यर्थः । **पद्मरागेति**=रक्तमणीत्यर्थः । **निराश्रयेति** । अग्निज्वालावन्मणिप्रभा मणिपृथक्त्वेनोपलभ्यते । उन्मुखा=ऊर्द्ध्वमुखाप्युऽपलभ्यते इत्यर्थः । तद्धर्मस्य=अहङ्काराधिकरणकस्य । तदुपकरणं=प्रसिद्धच्छत्राद्युपकरणम् । परमार्थसत्=व्यावहारिकम् । **शास्त्रप्रामाण्यायेति** । "कर्त्ता शास्त्रार्थवत्त्वात्" इत्यादिशास्त्रनिष्ठप्रमाजनकत्वायेत्यर्थः । इदं हि सूत्रं द्वितीयाध्यायस्य तृतीये पादे स्थितम् । आत्मनोऽसङ्गत्वश्रुतीनां कर्तुरिष्टसाधनबोधकविधिवाक्यैर्विरोधसंदेहे सांख्योक्तबुद्धिमात्रनिष्ठकर्तृत्वव्यावर्त्तनेनात्मन एव कर्तृत्वमत्र सूत्रे साध्यते, तच्च कर्तृत्वमौपाधिकमित्युत्तराधिकरणे वक्ष्यते इति, नात्मनोऽसङ्गत्वश्रुतिभिर्विरोध इत्यभिप्रायेण सिद्धान्तयति—**कर्त्रेति** । आत्मैव कर्त्ता न बुद्धिः कर्तुरिष्टोपायबोधकविधिशास्त्रस्यार्थवत्त्वात्, आत्मनः कर्तृत्वे विधिशास्त्रमर्थवद्भवत्यन्यथा बुद्धिः कर्त्री आत्मा फलभोक्तेति कर्तुरिष्टोपायबोधकशास्त्रमनर्थकमेव स्यात्तस्मान्न केवलबुद्धेः कर्तृत्वं किंतु बुद्धिविशिष्टात्मन इति सूत्रार्थः ॥

**एवं प्रत्यक्षभ्रमान्तरेष्वपि प्रत्यक्षसामान्यलक्षणानुगमो यथार्थप्रत्यक्षलक्षणासद्भावश्च दर्शनीयः ॥**

शि० म०—ननु कुसुमसन्निकर्षस्थले स्फटिकलौहित्यप्रतीतेरन्यथाख्यातिरूपत्वे तत्र प्रत्यक्षसामान्यलक्षणस्याव्याप्तिः, लौहित्यतदाकारवृत्त्योर्भिन्नदेशस्थत्वेन तदुपहितचैतन्ययोर्भेदात्। तथा शङ्खपीतत्वभ्रमे अव्याप्तिः, पीतत्वादेर्गोलकादिदेशस्थितपीतद्रव्यादिनिष्ठत्वेन तदुपहितचैतन्यस्य तदाकारवृत्त्यवच्छिन्नचैतन्यस्य च परस्परं भेदात्। किंचान्यथाख्यात्यभ्युपगमे तद्विषयस्य लौहित्यादेः संसारदशायामबाधितत्वेन प्रमात्वापत्तिरित्यत आह—**एवमिति**। अयमत्राशयः—न तावत्स्फटिकलौहित्यभ्रमे प्रत्यक्षलक्षणस्याव्याप्तिः अयो दहतीतिवदस्यानुभूयमानारोपत्वेन लोहितत्वेन रूपेण कुसुमतादात्म्यविषयत्वत्। न च लोहितभेदग्रहादारोपानुपपत्तिः, विवेकग्रहस्य सोपाधिकाध्यासे अप्रतिबन्धकत्वात्। नापि पीतत्वादिभ्रमे लक्षणाव्याप्तिः, शङ्खं प्रति स्फालितानां नयनरश्मीनां पीतद्रव्यमाश्रयतामेव दोषवशेन शङ्खे तद्गुणपीतत्वादिग्राहकत्वेन पीतत्वतदाकारवृत्त्योर्भिन्नदेशस्थत्वाभावात्। यत्तु स्फटिकलौहित्यादिभ्रमे प्रमालक्षणस्यातिव्याप्तिरिति तत्र न तावत्संसर्गांशेऽतिव्याप्तिः तस्य पुरोवर्तिनि बाधितत्वात्। नापि लौहित्यांशे, तस्याबाधितत्वेऽपि अनधिगतत्वाभावात्॥

म० प्र०—तत्र=लोहितः स्फटिक इति प्रतीतौ। भिन्नदेशस्थत्वेन=लौहित्यं कुसुमे लौहित्याकारवृत्तिस्तु स्फटिके इति भिन्नाधिकरणकत्वेन। **तदुपहितेति** लौहित्यतदाकारवृत्त्युपहितेत्यर्थः। पीतत्वादेः=पीतगुणादेः। **तदुपहितेति**=पीतगुणाद्युपहितेत्यर्थः। अन्यथाख्यात्यभ्युपगमे=लोहितः स्फटिक इत्यादिज्ञानस्यान्यथाख्यातिस्वरूपत्वाभ्युपगमे सति। तद्विषयस्य=लोहितः स्फटिक इत्यादिप्रतीतिविषयस्य। नैयायिकमते लोहितः स्फटिक इत्यादिभ्रमस्यारोपात्पूर्वमपरोक्षकुसुमनिष्ठलौहित्यविषयकत्वेनानुभूयमानारोपत्वं शुक्त्यादाविदं रजतमित्यादिभ्रमस्य तु नैयायिकमते स्मृतारोपत्वं वेदान्तिमते तु तस्यानिर्वचनीयारोपत्वमिति विभागमभिप्रेत्य नाव्याप्तिरिति प्रतिज्ञायां हेतुमाह—**अस्येति**। लोहितः स्फटिक इत्यादिभ्रमस्येत्यर्थः। अनुभूयमानारोपत्वेन=अनुभवविषयज्ञानत्वेन। **लोहितत्वेन रूपेणेति**। लौहित्यस्वरूपविशिष्टकुसुमेत्यर्थः। धर्मिधर्म्यन्तरप्रतिबिम्बैक्याध्यासयोरन्यतरस्यैव धर्माध्यासव्यापकत्वेन स्फटिके कुसुमप्रतिबिम्बग्रहणेन तद्धर्माध्यासोपपत्त्याऽभिन्नदेशस्थत्वेन लोहितः स्फटिक इति भ्रमे नाव्याप्तिरिति भावः। स्फालितानाम्=संलग्नानाम्। पीतद्रव्यमाश्रयताम्=पीतद्रव्यवताम्, तद्गुणपीतत्वादिग्राहकत्वेन=नयनरश्म्याश्रितद्रव्यगुणपीतरूपादिविषयकज्ञानजनकत्वेनं उभयविधोक्तभ्रमेऽन्यत्र स्थितस्यान्यत्र भानरूपत्वेन पीतलौहित्यादिसंबन्धस्यापि स्फटिकादौ सत्त्वान्नाव्याप्तिरिति भावः। तत्र=पूर्वोक्तिविषये लोहितः स्फटिक इत्यादि भ्रमे। तस्य=लौहित्यादिसंसर्गस्य, पुरोवर्तिनि=स्फटिकादौ, बाधितत्वात्=वस्तुतोऽत्यन्ताभावप्रतियोगित्वात्। **अनधिगतत्वाभावादिति**। कुसुमनिष्ठज्ञातलौहित्यस्यैव स्फटिके भानादिति भावः॥

उक्तं प्रत्यक्षं प्रकारान्तरेण द्विविधम्, इन्द्रियजन्यं तदजन्यं चेति। तत्रेन्द्रियाजन्यं सुखादिप्रत्यक्षं मनस इन्द्रियत्वनिराकरणात्॥

शि० म०—एवं योग्यस्वाकारवृत्त्युपहितविषयावच्छिन्नचैतन्याभिन्नत्वं शुक्तिरूप्यशङ्खपीतत्वादिप्रत्यक्षभ्रमव्यापकत्वात् प्रमाणचैतन्यस्य तत्तद्विषयांशे प्रत्यक्षत्वप्रयोजकमित्युक्तम्, संप्रति तदेव प्रत्यक्षज्ञानं पुनर्विभजते—उक्तं प्रत्यक्षमिति। इन्द्रियेति। न चात्र प्रमाणाभावः, रूपाद्युपलब्धयः करणसाध्याः कार्य्यत्वात्, घटवदित्यनुमानस्य "तमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यागमस्य चेन्द्रियसद्भावे प्रमाणत्वात्। तानि गोलकमात्राणीति सौगताः तच्छक्तयः इति मीमांसकाः। न तावद्गोलकमात्रमिन्द्रियं तद्विरहिणामपि सर्पादीनां वृक्षादीनां च शब्दाद्युपलब्धेः। अत एव न तन्निष्ठा शक्तिः तानि गोलकाद्यतिरिक्तानि शक्तिमद्द्रव्यान्तराणि सर्वगतानीति योगाचार्य्याः प्रतिपेदिरे, तदप्यपेशलं प्रमाणाभावात्। नन्विन्द्रियाणि सर्वगतानि सर्वत्र दृष्टकार्य्यत्वादाकाशादिवदित्यनुमानमिति चेत् न, हेतोरसिद्धत्वात्। यत्र शरीरं तत्र सर्वत्र दृष्टकार्य्यत्वस्य च शरीरेऽपि सत्त्वात्। न चेन्द्रियाणि सर्वगतानि परोपाधिगमनत्वादाकाशवदिति वाच्यम्, शरीरोपाधिगमनेषु शरीरावयवेषु व्यभिचारात्। सर्वगतत्वे युगपत्सर्वविषयोपलब्धिप्रसङ्गाच्च॥

म० प्र०—योग्येति। प्रमाणचैतन्यस्य योग्यस्वाकारवृत्त्युपहितविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तद्विषयांशे प्रत्यक्षत्वप्रयोजकमित्यन्वयः। **स्वाकारेति**=विषयाकारेत्यर्थः। व्यापकत्वात्=उक्तप्रत्यक्षत्वव्यवहारप्रयोजकस्य वृत्तित्वात्। **विषयांशे इति**। विषयांशनिरूपितेत्यर्थः। **प्रत्यक्षत्वप्रयोजकमिति**। प्रत्यक्षत्वप्रकारकशब्दात्मकव्यवहारप्रयोजकमित्यर्थः। अत्र=गोलकाद्यतिरिक्तेन्द्रियसत्त्वे। तद्विरहिणाम्=कर्णादिगोलकरहितानाम्, प्रमाणाभावात्=इन्द्रियाणां व्यापकत्वे प्रमाणासत्वात्। **आकाशादिवदिति**। यथाऽऽकाशे सर्वत्र शब्दरूपदृष्टकार्य्यकत्वं सर्वत्र स्थितिरूपदृष्टकार्य्यकत्वं च तद्वदित्यर्थः। ननु यत्र शरीरं तत्र सर्वत्र दृष्टकार्य्यत्वादिति हेतोर्विवक्षितत्वेनेन्द्रियाणां सर्वगतत्वं सेत्स्यतीत्याशङ्क्याह—**यत्र शरीरमिति। शरीरेऽपि सत्त्वादिति**। तादात्म्यसंयोगादिसंबन्धेन यत्र शरीरं तत्र भोगादिरूपदृष्टकार्य्यकत्वस्य शरीरे सत्त्वेन तत्र शरीरस्य व्यापकत्वं स्यादिति भावः॥

शि० म०—तान्यणुपरिमाणानीत्यन्ये। तदप्ययुक्तं विषयावभासस्याणुमात्रदेशतापत्तौ सर्वशरीरव्यापिशैत्योपलम्भानुपपत्तेः। युगपच्चक्षुषः सर्वविषयसंबन्धाभावेन समूहालम्बनाभावप्रसङ्गाच्च। चक्षुःश्रोत्रयोर्ध्रुवभेर्य्यादिदेशपर्य्यन्तगमने सद्य एवान्धत्वापत्तेश्च। तानि मध्यमपरिमाणान्यप्यहङ्कारोपादानानीति सांख्याः। तदपि मानहीनं पुराणवचनम् मानमिति चेत् न, भूतविकारत्वप्रत्यक्षश्रुतिविरोधेन

**तस्य स्वार्थे अप्रमाणत्वात् । ततश्च परिशेषाद्भौतिकत्वसिद्धिः । इन्द्रियाणि प्रत्येकभूतारब्धानीति वैशेषिकादयः । तदप्ययुक्तं प्रमाणाभावात् । चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वात् प्रदीपप्रभावदित्यनुमानस्य च विपक्षे बाधकाभावेनाप्रयोजकत्वात् । ततश्चेन्द्रियाणां सिद्धं पाञ्चभौतिकत्वमिति ॥**

म० प्र०—**पुराणवचनमिति**। "त्रिविधोऽयमहङ्कारो महत्तत्त्वाद्धि जायते । इन्द्रियाणां ततः सृष्टिर्गुणद्वारा महामुने ॥" इति पुराणवचनम् । प्रत्यक्षश्रुतिविरोधेन="श्रोत्रमाकाशे वायौ त्वगग्नौ चक्षुरप्सु जिह्वा पृथिव्यां घ्राणम्" इति प्रत्यक्षश्रुतिविरोधेन । आकाशे यः सात्त्विकांशस्तस्माच्छ्रोत्रमुत्पद्यते । एवं वायौ त्वगित्यादिवाक्यान्तरेष्वर्थो बोध्य इति प्रत्यक्षश्रुत्यर्थः । तस्य=पुराणवचनस्य । स्वार्थे=इन्द्रियाणामाहङ्कारिकत्वरूपार्थे । प्रमाणाभावात्=इन्द्रियाणां प्रत्येकभूतजन्यत्वे प्रमाणासत्त्वात्, तैजसं=तेजोमात्रकार्यम् । **रूपादिष्विति**। रूपस्यैवाभिव्यञ्जकत्वादित्युक्ते चक्षुषो घटादिरूपत्वरूपाभावाद्यभिव्यञ्जकत्वेन स्वरूपासिद्धिवारणाय मध्यान्तोपादानम्, अदृष्टादौ व्यभिचारवारणायैवकारः । विपक्षे=चक्षुर्वृत्तितेजोमात्रकार्य्यत्वरूपसाध्याभावे । बाधकाभावेन=अनुकूलतर्करूपबाधकाभावेन । न च यत्र तेजोमात्रकार्य्यत्वाभावस्तत्र रूपादिपञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वाभाव इति व्याप्तेर्मनसि दृष्टत्वेन यदि चक्षुषस्तेजोमात्रकार्यत्वं न स्यात्किंतु पञ्चभूतकार्यत्वं स्यात्तर्हि रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वं न स्यात्किंतु सर्वविषयाभिव्यञ्जकत्वं स्यादित्यनुकूलतर्कसत्त्वेन कथमनुकूलतर्काभाव इति वाच्यम् । घटादौ पञ्चभूतकार्य्यत्वेऽपि रूपादिपञ्चविषयग्राहकत्वाभावेनोक्तव्याप्तेरभावेनोक्ततर्कानुत्थानात्, न चेन्द्रियत्वे सति पञ्चभूतकार्य्यत्वं यत्र तत्र रूपादिसर्वविषयाभिव्यञ्जकत्वमिति व्याप्तेर्मनसि सत्त्वेनोक्ततर्कोत्थानसंभव इति वाच्यम् । मन्मते मनस इन्द्रियत्वाभावेन व्याप्तिग्रहाधिकरणदृष्टान्ताभावेनोक्तव्याप्त्यसिद्धयोक्ततर्कोत्थानासंभवादिति । अप्रयोजकत्वात्=तेजोमात्रकार्यत्वरूपसाध्यं साधयितुमक्षमत्वात् । **पाञ्चभौतिकत्वमिति**। न च तव मतेऽपि चक्षुरादीनां पाञ्चभौतिकत्वे प्रमाणाभाव इति वाच्यम् । शारीरकतृतीयाध्यायद्वितीयपादस्थद्वाविंशतिसंख्याक- "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" इति सूत्रभाष्यव्याख्यायां रत्नप्रभाख्यायाम् "अथामूर्त्तवायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यन्तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्त्यस्यैष रसः" इत्यादिश्रुतिष्वमूर्त्तशब्दस्य लक्षणयाऽपञ्चीकृतपञ्चसूक्ष्मभूतपरत्वं ततश्चाथामूर्तमित्यादिश्रुतौ हिरण्यगर्भस्यामूर्तरसत्वोक्त्या करणानां पाञ्चभौतिकत्वसिद्धिरित्यनेन प्रकारेण कैश्चिदाचार्य्यैः करणानां पाञ्चभौतिकत्वस्य श्रुतिप्रमाणसिद्धतयोक्तत्वेन करणानां पाञ्चभौतिकत्वस्य श्रुतिप्रमाणसिद्धत्वादिति ॥

**इन्द्रियाणि पञ्च घ्राणरसनचक्षुःश्रोत्रत्वगात्मकानि । सर्वाणि चेन्द्रियाणि स्वस्वविषयसंयुक्तान्येव प्रत्यक्षज्ञानं जनयन्ति । तत्र घ्राणरसनत्वगात्मकानीन्द्रियाणि स्वस्थानस्थितान्येव**

**गन्धरसस्पर्शोपलम्भान् जनयन्ति । चक्षुःश्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः । श्रोत्रस्यापि चक्षुरादिवत्परिच्छिन्नतया भेर्यादिदेशगमनसंभवात् ॥**

शि० म०–तानि षट् इति नैयायिकादयस्तान्निराचष्टे–**पञ्चेति** । इन्द्रियाण्यप्राप्यकारीणीति सुगताः कल्पयन्ति तान्प्रत्याह–**सर्वाणि चेति** । अयं भावः–न तावत्स्पर्शरसनघ्राणेन्द्रियाणामसंयुक्तार्थग्राहकत्वम्, दूरत एव स्पर्शरसगन्धोपलब्धिप्रसङ्गात् । अत एव न चक्षुःश्रोत्रयोरप्राप्यकारित्वम्, रसनादिवत्तयोरपि संयुक्तार्थग्राहकत्वानुमानात् । ननु सर्वेन्द्रियाणां संयुक्तार्थग्राहकत्वाविशेषेऽपि कस्यचित्स्वस्थाने विषयग्राहकत्वं कस्यचिद्दूरत इति विभागः कथमित्याशङ्क्य फलबलकल्प्यस्वभावविशेषादित्याह–**तत्रेति** । **चक्षुःश्रोत्रे त्विति** । न च चक्षुःश्रोत्रयोर्विषयदेशं प्राप्तयोरेव स्वस्वविषयग्राहकत्वे झटित्यादिध्रुवादिमण्डलानुभवो न स्यादिति वाच्यम्, चक्षुरादेरतिस्वच्छद्रव्यत्वेन सावित्रकिरणवच्छीघ्रगतिसंभवात् । ननु चक्षुरिन्द्रियं भवतु परिच्छिन्नत्वाद् दूरदेशं गत्वा विषयग्राहकम् सर्वगतं तु गगनं कर्णशष्कुल्युपाधिना श्रोत्रपदवाच्यं कथं भेर्यादिदेशं गत्वा शब्द ग्राहयेदित्याशङ्क्याह–**श्रोत्रस्यापीति** ॥

म०प्र०–**अप्राप्येति** । विषयेण सह यः स्वसंबन्धस्तमलब्ध्वा विषयेण सह स्वसंबन्धं वनेति यावत्, कारीणि=ज्ञानलक्षणस्वकार्य्यजनकानि, सुगताः=बुद्धमतानुसारिणः, असंयुक्तार्थेति=स्वासंबद्धविषयेत्यर्थः । **दूरत इति** । इन्द्रियसंबन्धरहितस्पर्शाद्याश्रये विद्यमाना ये स्पर्शादयस्तेषां प्रत्यक्षज्ञानापत्तेरित्यर्थः । अत एव=वक्ष्यमाणहेतोरेव, तयोः=चक्षुःश्रोत्रयोः, अनुमानात्=चक्षुःश्रोत्रे स्वसंयुक्तार्थग्राहके इन्द्रियत्वाद्रसनादिवदित्यनुमानात्, अविशेषेऽपि=समानेऽपि, कस्यचित्=रसनादेः । **स्वस्थाने विषयग्राहकत्वमिति** । स्वस्थाने=स्वगोलके स्वाश्रयसंयुक्तत्वसंबन्धेन स्थितो यो गन्धादिविषयस्तद्विषयकापरोक्षज्ञानजनकत्वमित्यर्थः । कस्यचित्=चक्षुरादेः, दूरतः=स्वगोलकव्यवहितदेशे । अस्य विषयग्राहकत्वमिति पूर्ववाक्येनान्वयः । विभागः=भेदः । **फलबलकल्प्यस्वभावविशेषादिति** । स्वाश्रयसंयुक्तत्वसंबन्धेन स्वगोलके प्राप्तो यः स्पर्शादिविषयस्तस्मिन्विषये यज्ज्ञानं तस्य जननमुत्पत्तिस्तद्रूपं त्वगादीनां यत्कार्यं चक्षुरादिगोलकदूरदेशस्थितघटादिकार्य्यज्ञानजननरूपं चक्षुःश्रोत्रयोर्यच्च कार्य्यं तस्य द्विविधकार्य्यरूपफलस्य यद्बलमिन्द्रियेषु स्वभावविशेषं विनाऽनुपपत्तिरूपमर्थापत्तिप्रमाणं तेन जन्यार्थापत्तिप्रमारूपा या कल्पना तद्विषयस्वभावविशेषात्=तत्तदिन्द्रियवृत्तितत्तद्विषयविषयकज्ञानजननानुकूलासाधारणधर्मरूपस्वभावभेदादयं विभाग इत्यर्थः । परममूले–**तत्रेति** । इन्द्रियेषु मध्ये इत्यर्थः । परममूले–**स्वत इति** । स्वसामर्थ्यादेवेत्यर्थः । **न स्यादिति** । ध्रुवादिदेशगमनेऽपि विलम्बसंभवादिति शेषः । परममूले–**संभवादिति** । स्वस्वविषयं गृह्णीत इत्युक्तेरनुपपत्तिर्नेति शेषः ॥

अत एवानुभवो भेरीशब्दो मया श्रुत इति । वीचितरङ्गादिन्यायेन कर्णशष्कुलीप्रदेशेऽनन्तशब्दोत्पत्तिकल्पनाया गौरवं भेरीशब्दो मया श्रुत इति प्रत्यक्षस्य भ्रमत्वकल्पनागौरवं च स्यात् । तदेवं व्याख्यातं प्रत्यक्षम् ॥

इति श्रीमद्वेदान्तपरिभाषायाः प्रत्यक्षपरिच्छेदः ॥ १ ॥

शि० म०—ननु भेरीदण्डसंयोगादाकाशसमवाये भेरीदेशे कश्चिच्छब्दः संजायते, स चासमवायिकारणतया शब्दान्तरमारभते, एवं सोऽपीति परम्परया श्रोत्रपथमवतीर्णस्य शब्दस्य तेनोपलम्भः । भेरीशब्दो मया श्रुत इति धीरत्र भ्रान्तैवेति तार्किकप्रक्रियामाशङ्क्य निरस्यति—**वीचितरङ्गादिन्यायेनेति** । कदम्बमुकुलन्यायश्चादिपदार्थः । **भ्रमत्वकल्पनेति** । नेदं रजतमितिवन्नायं भेरीशब्द इति बाधकप्रत्ययाभावेन तस्य भ्रमत्वकल्पनमयुक्तमिति भावः । परमप्रकृतमुपसंहरति—**तदेवमिति** । प्रत्यक्षप्रमानिरूपणात्तत्करणत्वेन प्रत्यक्षप्रमाणं निरूपितमित्यर्थः ॥

इति श्रीधर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते वेदान्तशिखामणौ प्रत्यक्षपरिच्छेदः ॥ १ ॥

म० प्र०—परममूले—**अत एवेति** । श्रोत्रस्य भेर्यादिदेशे गमनसंभवादेवेत्यर्थः । परममूले **अनुभवः इति** । उपपद्यते इति शेषः । **आकाशसमवाय इति** । आकाशे समवायो यस्य स तथा आकाशसमवायीत्यर्थः । भेरीदेशे=भेर्यवच्छिन्नाकाशे, स च=भेर्यवच्छिन्नाकाशे जायमानशब्दस्तु, सोऽपि=शब्दान्तरमपि । अस्य शब्दान्तरमारमते इति पूर्ववाक्येनान्वयः । श्रोत्रपथं=कर्णशष्कुलीरूपं श्रोत्रेन्द्रियस्थानम्, अवतीर्णस्य=प्राप्तस्य, तेन=श्रोत्रेन्द्रियेण, उपलम्भः=ज्ञानम् । नन्वेवं भेरीशब्दो मया श्रुत इत्यनुभवस्य प्रामाण्यं न स्यादित्याशङ्कामिष्टापत्त्या परिहरति—**भेरीशब्द इति** । प्रक्रियाम्=पूर्वोत्तरभावरूपं क्रमं सिद्धान्तं वा । परममूले—**वीचितरङ्गन्यायेनेति** । अत्र वीचितरङ्गशब्दौ "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः" इत्यमरकोशात्स्वल्पतरङ्गवाचकौ । तथा च वीच्यनन्तरं तरङ्गो वीचिर्वीच्यन्तरं पुनर्वीचिरेवं तत्र यथा यो न्यायः पुनःपुनरुत्पत्तिरन्तिमवीच्या तद्द्वारोपशान्तिश्चेति द्विविधरूपो धर्मस्तद्वच्छब्दानामपि पूर्वपूर्वशब्देनोत्तरोत्तरशब्दस्योत्पत्तिरन्तिमशब्देन शब्दधाराया निवृत्तिश्चेत्याकारको द्विविधो धर्मस्तद्घटकीभूतपूर्वपूर्वशब्देनोत्तरोत्तरशब्दस्योत्पत्तिरूपो यो धर्मस्तेनेत्यर्थः । परममूले—**प्रदेशे इति** । प्रदेशसंबन्धार्थमित्यर्थः । **कदम्बमुकुलन्याय इति** । "कुड्मलो मुकुलोऽस्त्रियाम्" इत्यमरकोशान्मुकुलशब्दो विकासोन्मुखप्रौढकलिकावाचकस्तथा च कदम्बसंज्ञकवृक्षसंबन्धिविकासोन्मुखप्रौढकलिकानां यथा चतुर्दिगवच्छेदेन विकासस्तद्वच्चतुर्षु दिक्षु शब्दोत्पत्तिरित्यर्थः । तस्य=भेरी-

शब्दो मया श्रुत इति प्रत्यक्षस्य। **तत्करणत्वेनेति**। प्रत्यक्षप्रमाऽसाधारणकारणत्वप्रकारकनिरूपणविषयप्रत्यक्षप्रमाणमित्यर्थः। ननु प्रत्यक्षप्रमाया अनिरूपणात्कथं प्रत्यक्षप्रमाकरणत्वेन प्रत्यक्षप्रमाणं निरूपितमित्याशङ्क्य मैवमित्यभिप्रेत्याह–**प्रत्यक्षप्रमानिरूपणादिति**। परममूले–**तदेवमिति**। अतीतग्रन्थे प्रत्यक्षप्रमाया निरूपणेनेत्यर्थः। परममूले–**प्रत्यक्षमिति**। प्रत्यक्षप्रमाणमित्यर्थः॥

श्रीमतो ब्रह्मविज्ञानपादपादसरोरुहान्।
नौमि येषां रजः पुसां निष्कुरुते रजस्तमः॥ १॥

इति श्रीमद्ब्रह्मविज्ञानाख्यविद्याप्रदगुरुप्रसादलब्धोदासीनामरदासशब्दवाच्याविर्भूतायां वेदान्तपरिभाषाख्यग्रन्थस्य शिखामण्याख्यटीकायाश्च मणिप्रभाख्यायां व्याख्यायां प्रत्यक्षपरिच्छेदः॥ १॥



# अथानुमानपरिच्छेदः २.

**अथानुमानं निरूप्यते। अनुमितिकरणमनुमानम्॥**

**शि० म०**—एवं सर्वप्रमाणज्येष्ठतया प्रथमं प्रत्यक्षप्रमाणं निरूपितम्। इदानीं शिष्यावधानार्थमनुमाननिरूपणं क्रियते इति प्रतिजानीते—**अथेति**। प्रत्यक्षानन्तरमित्यर्थः। सर्वमतसाधारणं लक्षणमाह—**अनुमितीति**॥

पद्मानन विस्तृतपद्मनाभं पद्माङ्कपद्मे धृतपादपद्मम्।
पद्मस्रजा मण्डितबाहुमध्यं कृष्णं नुमः पद्मविशालनेत्रम्॥ १॥

येषां तु पादरजसा विरजस्तमस्के भानोः प्रभेव सलिले विमले प्रभेयम्।
स्वान्ते विभाति मम हन्त शिखामणेश्च विद्याप्रदान्प्रणयतः प्रणमाम्यहं तान्॥ २॥

प्रत्यक्षानुमानयोरुपजीव्योपजीवकभावसङ्गतिमभिप्रेत्य वृत्तानुवादपूर्वकं परममूलेऽथानुमानं निरूप्यते इति प्रतिज्ञायाः प्रयोजनं सूचयति—**एवमित्यादिना**। **ज्येष्ठतयेति**। प्रत्यक्षस्य सर्ववादिसंमतत्वेनानुमानादिप्रमाणोपजीव्यत्वेन च ज्येष्ठतयेत्यर्थः। प्रथमम्=अनुमानादिप्रमाणनिरूपणस्यादौ। निरूपितम्=मूलकारकर्तृकनिरूपणविषयीभूतम्। इदानीं=प्रत्यक्षनिरूपणोत्तरकाले। **शिष्यावधानार्थमिति**। अन्यत्र चित्तसंचारराहित्यपूर्वकप्रकृतग्रन्थशुश्रूषावत्त्वरूपावधानार्थमित्यर्थः। परममूले—**अथानुमानं निरूप्यते इति**। अथशब्द आनन्तर्य्यार्थकः। आनन्तर्य्यं च स्वाव्यवहितोत्तरकालवृत्तित्वम्, प्रकृते स्वं प्रत्यक्षनिरूपणं तथा च प्रत्यक्षलक्षणस्वरूपप्रामाण्यप्रकारकप्रत्यक्षविशेष्यकज्ञानानुकूलव्यापारध्वंसाधिकरणकालिकोऽस्मदर्थग्रन्थकृद्वृत्तिकृतिजन्यो वर्त्तमानकालिकोऽनुमानलक्षणस्वरूपप्रामाण्यप्रकारकानुमानविशेष्यकज्ञानानुकूलो यो व्यापारस्तद्विषयोऽनुमानमित्यर्थः। प्रत्यक्षानन्तरम्=प्रत्यक्षनिरूपणानन्तरम्। परममूले—**अनुमितिकरणमनुमानमिति**। अनुमितित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितव्यापारवत्त्वसमानाधिकरणा या जनकता तद्विशिष्टत्वमनुमितिकरणत्वमित्यर्थः। न च करणत्वं व्यापारवत्त्वे सत्यनन्यथासिद्धनियतपूर्ववृत्तित्वं तथा च घटादिप्रत्यक्षं प्रति घटादिविषयस्य घटादिकार्य्यं प्रत्युपादानकारणकपालादेश्च करणत्वं स्यात्प्रत्यक्षविषयघटादेर्व्यापारवत्त्वे सत्यनन्यथासिद्धनियतपूर्ववृत्तित्वादिति वाच्यम्, इष्टत्वात्। न च तर्हि कारणकरणविभागः कथमिति वाच्यम्, कारणकरणरूपधर्म्यभेदेऽपि कारणत्वकरणत्वरूपधर्मभेदात्, एकस्यैव दण्डादेर्व्यापारवत्त्वे सत्यनन्यथासिद्धनियतपूर्ववृत्तित्वेन रूपेण करणत्वव्यवहारस्यानन्यथासिद्धनियतपूर्ववृत्तित्वमात्रेण कारणत्वव्यवहारस्य च संभवेन कारणकरणविभागानुपपत्त्यसंभवादिति॥

**शि० म०–ननु नानुमितिकरणत्वमपि तल्लक्षणम् । तद्घटकानुमितेर्लक्षणाभावेन दुर्निरूपणत्वात् । न च व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वं लक्षणम् । तत्त्वेन तज्जन्यत्वमिह विवक्षितमित्यनुव्यवसायादौ विषयत्वादिना तज्जन्ये नातिव्याप्तिः ॥**

**म० प्र०–अनुमितिकरणत्वमपीति ।** अत्रापिशब्दो दृष्टान्तार्थकः । व्याप्तिज्ञानादीनामनुमानत्वाभाववदित्यर्थः । **तद्घटकानुमितेरिति ।** अनुमितिकरणत्वरूपानुमानत्वघटकानुमितेरित्यर्थः । घटकत्वं तद्विषयताव्यापकविषयताकत्वम्, प्रकृते तद्विषयताऽनुमितितत्करणरूपसमुदायेऽनुमितिकरणमनुमानमिति ज्ञानस्य विषयता तस्या व्यापिका विषयताऽनुमितिरिति ज्ञानविषयता यस्या अनुमितेः सा तथा तस्याः भावस्तत्त्वमिति । घटितत्वं च तद्विषयताव्याप्यविषयताकत्वम्, प्रकृते तद्विषयताऽनुमितिरिति ज्ञानस्यानुमितिनिष्ठा व्यापिका विषयता तस्या व्याप्या विषयताऽनुमितितत्करणरूपसमुदायनिष्ठा विषयता यस्यानुमितितत्करणरूपसमुदायस्य स तथा तस्य भावस्तत्त्वमिति । नैयायिकमतमाश्रित्यानुमितिलक्षणमाह–**व्याप्तिविशिष्टपक्षधर्मताज्ञानेति ।** अत्र व्याप्तिविशिष्टे पक्षधर्मता व्याप्तिविशिष्टपक्षधर्मता, व्याप्तिविशिष्टा चासौ पक्षधर्मता व्याप्तिविशिष्टपक्षधर्मता, व्याप्तिविशिष्टश्चासौ पक्षधर्मो व्याप्तिविशिष्टपक्षधर्मस्तस्य भावस्तत्तेति सप्तमीतत्पुरुषादिसमासाङ्गीकारे पर्वतो धूमवान्वह्नेरित्यादौ व्यभिचारिलिङ्गे व्याप्त्यभावेन व्यभिचारिलिङ्गजन्यानुमितौ व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वाभावेनाव्याप्तिरतो व्याप्तिविशिष्टपदस्य लक्षणया व्याप्तिविषयकपरत्वमवलम्ब्य ज्ञानान्तपदेन कर्मधारयोऽङ्गीकर्तव्य इति । पर्वतो वह्निव्याप्यधूमवान्न वेति संशयात्मकव्याप्तिविषयकपक्षधर्मताज्ञानस्यानुमितिकरणताभ्रान्तिवारणाय ज्ञानपदेन निश्चयो ग्राह्यः । निश्चयत्वं च संशयभिन्नज्ञानत्वम्, वह्निव्याप्यधूमवान्पर्वतः पर्वते वह्निव्याप्य इत्याद्यात्मको यो व्याप्त्यवच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यता पक्षतावच्छेदकावच्छिन्नप्रकारतानिरूपितव्याप्त्यवच्छिन्नविशेष्यता एतदन्यतरविशिष्टनिश्चयस्तज्जन्यत्वमिति- निर्गलितोऽर्थ इति । ननु व्याप्तिविषयकपक्षधर्मतानिश्चयजन्यत्वस्य वह्निव्याप्यधूमवन्तं पर्वतं पश्यामीति परामर्शप्रत्यक्षे व्याप्तिविषयकपक्षधर्मतास्मृतौ परामर्शध्वंसे च सत्त्वादतिव्याप्तिरित्याशङ्क्याह–**तत्त्वेनेति ।** व्याप्तिविषयकपक्षधर्मतानिश्चयत्वावच्छिन्ना या व्याप्तिविषयकपक्षधर्मतानिश्चयनिष्ठजनकता तन्निरूपितजन्यत्वमिहोक्तलक्षणवाक्ये विवक्षितमित्यर्थः । **अनुव्यवसायादाविति ।** अत्रादिपदेन व्याप्तिविषयकपक्षधर्मतास्मृतिव्याप्तिविषयकपक्षधर्मतानिश्चयध्वंसयोर्ग्रहणमिति । **विषयत्वादिनेति ।** अत्र प्रतियोगित्वस्वसमानविषयकानुभवत्वे आदिशब्दार्थौ । तथा च परामर्शानुव्यवसायनिष्ठकार्य्यतानिरूपितव्याप्तिविषयकपक्षधर्मताज्ञाननिष्ठविषयत्वावच्छिन्नकारणतायाः व्याप्तिविषयकपक्षधर्मताज्ञानध्वंसनिष्ठकार्य्यतानिरूपितव्याप्तिविषयकपक्षधर्मताज्ञाननिष्ठप्रतियोगित्वावच्छिन्नकारणतायाश्च व्याप्तिविषयकपक्षधर्मताविषयकस्मृतिनिष्ठकार्य्यतानिरूपितस्वसमानविषयकानुभवनिष्ठस्वसमानविषयकानुभवत्वावच्छिन्नकारणतायाश्च सत्त्वेन परामर्शप्रत्यक्षादिकं प्रति व्याप्तिविषयकपक्षधर्मताज्ञानत्वेन हेतुत्वाभावेन न व्याप्तिविषयकपक्षधर्मताज्ञानप्रत्यक्षादिष्वतिव्याप्तिरिति भावः ॥

**शि० म०**—तत्त्वं च व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयप्रकारकपक्षधर्मताज्ञानत्वम्। तच्च विशकलितस्थलीयलिङ्गपरामर्शसाधारणमिति नासम्भव इति वाच्यम्। तथाऽपि न्यायमते धूमो वह्निव्याप्यः अयं चालोकवानिति समूहालम्बनादप्यनुमित्यापत्तेः॥

**म० प्र०**—नन्वेवं व्याप्तिविषयकपक्षधर्मताज्ञानप्रत्यक्षादावतिव्याप्त्यभावेऽपि साध्यवदन्यावृत्तित्वं व्याप्तिर्हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिः हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्याप्तिरिति व्याप्तीनां नानात्वेन परस्परं व्याप्तिज्ञानानां व्यभिचारादनुगतस्यानुमितित्वावच्छिन्नानुमितिनिष्ठकार्यतानिरूपितव्याप्तिविषयकपक्षधर्मताज्ञाननिष्ठकारणतावच्छेदकस्यासंभवेन किमपि व्याप्तिविषयकपक्षधर्मताज्ञानं न हेतुः। न च व्याप्तिषु व्याप्तित्वमनुगतमिति वाच्यम्। साध्यवदन्यावृत्तित्वं कुत्रचिद्व्याप्तित्वं हेतुव्यापकसाध्याधिकरणवृत्तित्वं कुत्रचिद्व्याप्तित्वमित्यादिरीत्या व्याप्तित्वस्यापि भेदादित्याशङ्क्याह—**तत्त्वं चेति**। व्याप्तिविषयकपक्षधर्मताज्ञानत्वं चेत्यर्थः। **व्यभिचारज्ञानप्रतिबन्धकेति**। वह्न्यभाववद्वृत्तिर्धूम इत्यादिव्यभिचारज्ञानस्य प्रतिबन्धकं यज्ज्ञानं वह्न्यभाववदवृत्तिर्धूम इत्यादिव्याप्तिज्ञानं तस्य विषयो व्याप्तिधूमादिस्तत्प्रकारकमित्यर्थः। व्याप्तेर्व्याप्तित्वस्य च नानात्वेऽपि व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयत्वस्य सर्वत्र सत्त्वेनानुगतस्य व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयप्रकारकपक्षधर्मताज्ञानत्वरूपकारणतावच्छेदकस्य सत्त्वान्नानुगतकारणतावच्छेदकस्याभाव इत्यभिप्रेत्याह—**तच्चेति**। व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयप्रकारकपक्षधर्मताज्ञानत्वं चेत्यर्थः। **विशकलितेति**। विशकलितत्वं च भिन्नाभिन्नत्वं स्थलशब्दो हि व्याप्तिरूपाधिकरणवाचकस्तथा च विशकलितस्थलीयोऽन्योन्याभावघटितव्याप्तिस्थलीयो यो लिङ्गपरामर्शोऽत्यन्ताभावघटितव्याप्तिस्थलीयो यो लिङ्गपरामर्शो व्यतिरेकव्याप्तिस्थलीयो यो लिङ्गपरामर्शस्तत्साधारणं=तद्वृत्तीति नासंभवोऽनुगतकारणतावच्छेदकस्याभावो नेत्यर्थः। वेदान्तिभिरनुमितिहेतुव्याप्तिविषयकपक्षधर्मताज्ञानानङ्गीकाराद्व्याप्तिविषयकपक्षधर्मताज्ञानजन्यत्वमित्यादिकथनं नैयायिकमताभिप्रायेणैवेति भावः। **न्यायमते इति**। वेदान्तिभिर्व्याप्तिविषयकपक्षधर्मताज्ञानस्यानुमितिनिष्ठकार्य्यतानिरूपितकरणताया अस्वीकारेण मीमांसकमतवद्व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताज्ञानस्यानुमितिनिष्ठकार्य्यतानिरूपितकारणतायाः स्वीकारान्न्यायमत इत्युक्तमिति भावः। समूहालम्बनात्=प्रत्यक्षस्मरणाद्यात्मकसमूहालम्बनात्। **अनुमित्यापत्तेरिति**। व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयप्रकारकपक्षधर्मताज्ञानत्वस्योक्तसमूहालम्बने सत्त्वादिति शेषः॥

**अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या॥**

**शि० म०**—न च पक्षवृत्तिहेतुतावच्छेदेन व्यभिचारज्ञानविरोधिवैशिष्ट्यविषयत्वं विवक्षितमिति युक्तम्, साध्यगोचरपक्षधर्मव्यापकताज्ञानाकारतावादिमते अनुमितौ

निरुक्तलक्षणाभावात् । न्यायमते व्यतिरेकिलिङ्गपरामर्शस्य साध्याभावांश एव साधनाभावनिरूपितव्याप्तिवैशिष्ट्यविषयत्वेन ततोऽनुमित्यभावापत्तेश्च । ततश्चानुमितिकरणत्वं नानुमानस्य लक्षणमित्याशङ्क्याह—**अनुमितिश्चेति** । **व्याप्तिज्ञानत्वेनेति** । व्याप्तिप्रकारकज्ञानत्वेनेत्यर्थः । व्याप्तिपदं व्यभिचारज्ञानविरोधिपरम्, न तु ग्रन्थकृदभिमतव्याप्तिपरम् । तेन तज्जनकेऽन्योन्याभावादिगर्भव्याप्तिज्ञाने कारणतावच्छेदकसत्त्वान्न लक्षणासंभवो न वा सर्वत्र प्रमेयमिति ज्ञानादनुमितिः । ननु व्याप्तिपदं ग्रन्थकृदभिमतव्याप्तिपरमेव, न चान्योन्याभावादिगर्भव्याप्तिज्ञानादनुमित्यभावापत्तिः, अन्योन्याभावगर्भाया अत्यन्ताभावगर्भायाश्च व्याप्तेरभावघटितत्वेन तज्ज्ञानस्य गुरुविषयत्वेनानुमित्यहेतुत्वादिति चेत् न, अशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यलक्षणव्याप्त्यज्ञानेऽपि शब्दादिना अत्यन्ताभावादिगर्भव्याप्तिज्ञानादप्यनुमितिदर्शनेन गुरुविषयत्वेऽपि तज्ज्ञानस्याप्यनुमितिहेतुत्वात् । न चैवं परस्परव्यभिचारात्किमपि व्याप्तिज्ञानं न हेतुः स्यादिति वाच्यम्, व्यभिचारज्ञानविरोधिज्ञानविषयत्वेन सर्वव्याप्त्यनुगमस्योक्तत्वात् ॥

म० प्र०—**पक्षवृत्तिहेतुतावच्छेदेनेति** । अत्रावच्छेदपदमवच्छेदकपरमवच्छिन्नत्वं तृतीयार्थः । विरोधिशब्दः प्रतिबन्धकज्ञानविषयपरः । वशिष्ट्यं सम्बन्धः । तथा च पक्षवृत्तिहेतुतावच्छेदकावच्छिन्नो यो व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयव्याप्तिसंबन्धस्तद्विषयकत्वे सति पक्षधर्मताज्ञानत्वं व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयप्रकारकपक्षधर्मताज्ञानत्वशब्देन विवक्षितमिति निर्गलितोऽर्थस्तथा च प्रकृतसमूहालम्बने पक्षवृत्त्यालोकहेतुतावच्छेदकावच्छिन्नव्यभिचारज्ञानविरोधिज्ञानविषयव्याप्तिसंबन्धविषयकत्वाभावान्नोक्तसमूहालम्बनादनुमित्यापादनमिति भावः । परकीयानुमितिलक्षणवाक्ये व्यापकताशब्दस्याधिकदेशवृत्तित्वरूपार्थमभिप्रेत्य दोषमाह—**साध्यगोचरेति** । साध्यविषयकं यत्पक्षधर्मव्यापकताज्ञानं पक्षवृत्तिधूमव्यापको वह्निरित्याद्याकारकं तादृशज्ञानात्पर्वतो वह्निमानित्याद्यनुमितिर्भवतीति वादिमते इत्यर्थः । **निरुक्तलक्षणाभावादिति** । पक्षधर्मव्यापको वह्निरित्यादिज्ञानस्य पक्षधर्मताज्ञानत्वेऽपि पक्षवृत्तिहेतुतावच्छेदेन व्यभिचारज्ञानविरोधिज्ञानविषयव्याप्तिवैशिष्ट्यविषयकत्वाभावेन पक्षधर्मव्यापको वह्निरित्यादिज्ञानजन्य'पर्वतो वह्निमान्'इत्याद्यनुमितौ निरुक्तलक्षणाभावादित्यर्थः । ननु पक्षधर्मव्यापकं साध्यमिति शब्दस्य धूमादिपक्षधर्मनिष्ठव्याप्तिनिरूपकसाध्यमित्यर्थकत्वेन धूमादिपक्षधर्मव्यापको वह्निरित्यादिज्ञानस्य पक्षवृत्तिहेतुतावच्छेदेन व्यभिचारज्ञानविरोधिज्ञानविषयव्याप्तिवैशिष्ट्यविषयकत्वेन कथं साध्यगोचरपक्षधर्मव्यापकताज्ञानस्यानुमितिकरणतावादिमतेऽनुमितौ निरुक्तलक्षणाभावकथनं क्रियते इत्यरुच्या हेत्वन्तरमाह—**न्यायमते इति** । नवीननैयायिकैः साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तेर्हेतावङ्गीकृतत्वेन प्राचीननैयायिकमते इत्यर्थः । वेदान्तिभिरनु-

मितिहेतुव्यतिरेकव्याप्त्यनङ्गीकारेण न्यायमते इत्युक्तमिति भावः । **व्यतिरेकिलिङ्गपरामर्शस्येति** । व्यतिरेकिलिङ्गं गन्धादिकं तस्य प्रतियोगितया गन्धाभावव्याप्य इतरभेदाभाव इत्याद्यात्मको यो लिङ्गपरामर्शस्तस्येत्यर्थः । ततः=व्यतिरेकिलिङ्गपरामर्शात् । **ततश्चेति** । चकारस्यावधारणार्थकत्वेनोक्ताव्याप्तिदोषादेवेत्यर्थः । ननु व्याप्तिज्ञानस्यानुमितिं प्रति व्याप्तिज्ञानत्वेन करणत्वस्वीकारे व्याप्तिरिति ज्ञानादपि पवतो वह्निमानित्याद्यनुमितिः स्यादित्यत आह–**व्याप्तिप्रकारकेति** । धूमो वह्निव्याप्य इत्याद्यात्मकव्याप्तिप्रकारकेत्यर्थः । व्याप्तिरिति ज्ञानस्य व्याप्तित्वप्रकारकत्वेन व्याप्तिप्रकारकत्वाभावान्न व्याप्तिरिति ज्ञानादनुमित्यापादनं संभवतीति भावः । ननूक्तप्रकारेण व्याप्तीनां भेदादुक्तानुगतकारणतावच्छेदकाभावस्यास्मिन्पक्षेऽपि तुल्यत्वेनोक्तानुमितिलक्षणासंभवः । किंच व्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्यानुमितिजनकत्वे सर्वं प्रमेयमिति ज्ञानात्पर्वतो वह्निमानित्याद्यनुमितिः स्याद्व्याप्तेरपि सर्वान्तःपातित्वेन प्रमेयत्वप्रकारकव्याप्तिज्ञानस्यापि संभवादित्यत आह–**व्याप्तिपदमिति** । तेन=व्याप्तिपदस्य व्यभिचारज्ञानविरोधिपरत्वस्वीकारेण । तज्जनके=पर्वतो वह्निमानित्याद्यनुमितिजनके । असंभवः=अव्याप्तिः, सर्वत्र=सर्वम् । न चेति प्रतिज्ञायां हेतुमाह–**तज्ज्ञानस्यानुमित्यहेतुत्वादिति** । अन्योन्याभावादिगर्भव्याप्तिज्ञानस्यानुमितिनिष्ठकार्य्यतानिरूपितकारणताभावादित्यर्थः । तज्ज्ञानस्यानुमित्यहेतुत्वे हेतुमाह–**गुरुविषयत्वेनेति** । संभवति लघुधर्मावच्छिन्ने कारणे गुरुधर्मावच्छिन्ने कारणत्वानङ्गीकारादिति भावः । तज्ज्ञानस्य गुरुव्याप्तिविषयकत्वे हेतुमाह–**अन्योन्याभावगर्भाया इति** । **शब्दादिनेति** । अत्र प्रत्यक्षानुमाने आदिशब्दार्थौ । एवम्=व्याप्तिपदस्य ग्रन्थकृदभिमतव्याप्तिपरत्वाभावेनान्योन्याभावगर्भादिव्याप्तीनां व्याप्तिपदेन ग्रहणे सति । **परस्परव्यभिचारादिति** । यत्रात्यन्ताभावघटितव्याप्तिज्ञानादनुमितिस्तत्रान्योन्याभावघटितव्याप्तिज्ञानरूपकारणाभावः, यत्रान्योन्याभावघटितव्याप्तिज्ञानादनुमितिस्तत्रात्यन्ताभावघटितव्याप्तिज्ञानरूपकारणाभावो, यत्र व्यतिरेकव्याप्तिज्ञानादनुमितिस्तत्रोभयविधव्याप्तिज्ञानरूपकारणाभाव इत्यादिरीत्या व्याप्तिभेदेन व्याप्तिज्ञानानां परस्परव्यभिचारादित्यर्थः । अनुगमस्य=ग्रहणस्य अनुगतधर्मस्येति वा, अस्मिन्पक्षे विषयत्वेनेति तृतीयाया अभेदोऽर्थ इति॥

**व्याप्तिज्ञानानुव्यवसायादेस्तत्त्वेन तज्जन्यत्वाभावात् नानुमितित्वम् ॥**

**शि० म०–अवच्छेदकविवक्षायाः प्रयोजनमाह–अनुव्यवसायादेरिति । तज्जन्यस्मृतिशाब्दज्ञानादिरादिशब्दार्थः । अनुव्यवसाये विषयत्वेन स्मृतौ समानविषयानुभवत्वेन वाक्यार्थज्ञाने पदार्थज्ञानत्वेन च हेतुतया उक्तरूपेणाहेतुत्वात् । न चैवमपि संशयविपर्ययोत्तरप्रत्यक्षेऽतिव्याप्तिः, विरोधिदर्शनत्वेन तत्र हेतुतया उक्तरूपेण व्याप्तिज्ञानस्याजनकत्वान्नातिव्याप्तिरिति भावः ॥**

म० प्र०-**अवच्छेदकेति**=व्याप्तिज्ञानत्वरूपव्याप्तिज्ञाननिष्ठानुमितिकारणतावच्छेदकेत्यर्थः । **तज्जन्येति**=व्याप्तिज्ञानजन्यव्याप्तिविषयकस्मृतिशाब्दबोधेत्यर्थः । अत्र व्याप्तिज्ञानध्वंस आदिपदार्थः । **अनुव्यवसाये इति** । व्याप्तिज्ञानस्य वह्निव्याप्यधूमवन्तं पर्वतं जानामीत्याद्यनुव्यवसायनिष्ठकार्य्यतानिरूपितविषयत्वावच्छिन्नकारणत्वेनेत्यर्थः । उक्तरूपेणाहेतुत्वात्=व्याप्तिज्ञानानुव्यवसायादिकं प्रति व्याप्तिज्ञानत्वेन कारणत्वाभावात् । एवमपि=व्याप्तिज्ञानानुव्यवसायादावतिव्याप्त्यभावेऽपि । **संशयेति** । वह्न्यादिविषयकसंशयोत्तरवह्न्यादिविषयकप्रत्यक्षे वह्न्याद्यभावविषयकविपर्य्ययोत्तरवह्न्यादिविषयकप्रत्यक्षे चेत्यर्थः । संशयस्य विपर्ययत्वेऽपि संशयस्योभयकोटिकत्वाद्विपर्ययात्पृथक्त्वेनोपादानमिति । **अतिव्याप्तिरिति** । यत्र पर्वतो वह्निमान्न वेत्यादिसंशयो जातस्तदुत्तरं वह्निव्याप्यधूमवानित्यादिप्रत्यक्षात्मकविशेषदर्शनं जातं तदनन्तरं च जायमाने पर्वतो वह्निमानित्यादिप्रत्यक्षे वह्निव्याप्यधूमवान्पर्वत इत्यादिविशेषदर्शनात्मकव्याप्तिज्ञानस्य हेतुत्वादतिव्याप्तिरेवं यत्र पर्वतो वह्न्यभाववानित्यादिविपर्य्ययो जातस्तदुत्तरं वह्निव्याप्यधूमवान्पर्वत इत्यादिप्रत्यक्षात्मकविशेषदर्शनं जातं तदनन्तरं जायमाने पर्वतो वह्निमानित्यादिप्रत्यक्षे वह्निव्याप्यधूमवान्पर्वत इत्यादिविशेषदर्शनात्मकव्याप्तिज्ञानजन्यत्वादतिव्याप्तिरिति भावः । विरोधिदर्शनत्वेन=विशेषदर्शनात्मकव्याप्तिज्ञानस्य संशयविपर्य्ययविरोधित्वविशिष्टज्ञानत्वेन । तत्र=संशयोत्तरप्रत्यक्षादौ । उक्तरूपेण=व्यभिचारज्ञानविरोधिज्ञानत्वेन ॥

## अनुमितिकरणश्च व्याप्तिज्ञानम् ॥

शि० म०-तत्र परामृश्यमानं लिङ्गं करणमिति जरन्नैयायिकाः, मनः करणमित्यन्ये तान् प्रत्याह-**अनुमितिकरणं चेति** । अयं भावः-न तावत् अनुमितौ लिङ्गं करणम्, अयोग्यलिङ्गकानुमितौ व्यभिचारात्, तत्र त्वदभिमतपरामर्शस्य व्यापारत्वासंभवेन तस्य तत्राकरणत्वात् । अतीतादिलिङ्गकानुमितौ व्यभिचाराच्च । नाप्यनुमितौ मनः करणम् । प्रमाणाभावात् । अनुमितौ करणान्तरानुपपत्त्या मनः करणं कल्प्यत इति चेत् न, व्याप्तिज्ञानस्य सत्त्वात् । किंचानुमितेः मनःकरणकत्वे मानसत्वापत्तिः करणान्तरासहकृतमनोजन्यत्वस्य मानसत्वप्रयोजकत्वात् । नचानुमितेर्मनस्त्वेन मनोजन्यतया इन्द्रियत्वेन तज्जन्यत्वाभावान्न मानसत्वमिति युक्तम्, करणान्तरासहकृतमनोजन्यतया तस्याप्यापातात्, मनस इन्द्रियत्वस्य निराकृतत्वाच्चेति । **व्याप्तिज्ञानमिति** । ननु व्याप्तिज्ञानमपि न करणं स्मृत्यनुव्यवसायादावपि हेतुत्वेनासाधारणत्वाभावादिति चेत् न । व्याप्तिज्ञानत्वेन रूपेण तस्यान्यत्राहेतुत्वात् ॥

म० प्र०-तत्र=अनुमितित्वावच्छिन्नानुमितौ, परामृश्यमानं=विषयतासंबन्धेन परामर्शात्मकज्ञानविशिष्टम् । **मन इति** । अस्योर्द्ध्वमनुमिताविति शेषः । **अयोग्यलिङ्गकानुमितौ व्यभिचारादिति** । अयोग्यं परं प्रति प्रत्यक्षायोग्यं लिङ्गं करणं यस्या देवदत्तो धर्म-

वान् सुखित्वादित्याद्यनुमितेः सा तथा तादृशानुमितिनिष्ठकार्य्यतानिरूपितकरणताया अयोग्यलिङ्गेऽभावादित्यर्थः। व्यभिचारश्च व्यापकाभाववद्वृत्तित्वं यदा कारणाभावस्तदा कार्याभाव इति व्याप्तेः। प्रकृते व्यापकोऽनुमितिरूपकार्य्याभावस्तदभावरूपानुमितिमतिकाले परामृश्यमानायोग्यलिङ्गरूपकरणाभावसत्त्वेन व्यतिरेकव्यभिचार इति भावः। अयोग्यलिङ्गे अनुमितिनिष्ठकार्यतानिरूपितकरणत्वाभावे हेतुमाह—**तत्रेति**। सुखित्वादिरूपपरामृश्यमानायोग्यलिङ्गे इत्यर्थः। त्वदभिमतपरामर्शस्य=धर्मव्याप्यसुखित्ववान्देवदत्त इत्यादित्वदभिमतपरामर्शस्य, व्यापारत्वासंभवेन=उक्तपरामर्शस्य लिङ्गजन्यानुमितिजनकत्वेऽपि परकीयसुखित्वादिरूपहेतोः परं प्रत्यप्रत्यक्षत्वेनोक्तपरामर्शं प्रत्योग्यलिङ्गस्य विषयत्वेन कारणत्वाभावेनायोग्यहेतुजन्यत्वाभावाद्व्यापारत्वासंभवेन, तस्य=परामृश्यमानायोग्यलिङ्गस्य, तत्र=अनुमितौ, अकरणत्वात्=करणत्वयोग्यतात्यन्ताभावात्, अतीतादिलिङ्गकानुमितौ व्यभिचाराच्च=अतीतादिधूमादिलिङ्गस्येयं यज्ञशाला वह्निमत्यभूदतीतधूमादित्यादिपञ्चावयववाक्यजन्यानुमितिनिरूपितव्यतिरेकव्यभिचाराच्च। प्रमाणाभावात्=मनसोऽनुमितिनिष्ठकार्य्यतानिरूपितकरणत्वे प्रमाणाभावात्। ननु यथा दिवाऽभुञ्जानस्य पीनत्वं रात्रिभोजनातिरिक्तसाधनाभावे सति रात्रिभोजनं विनाऽनुपपद्यमानं रात्रिभोजनं कल्पयति तथाऽनुमितेः सकरणकत्वेन मनोऽतिरिक्तकरणाभावे सति मनोरूपकरणं विनाऽनुपपद्यमानं मनसः करणत्वं कल्पयतीति मनसोऽनुमितिं प्रति करणत्वेऽर्थापत्तिः प्रमाणमित्यभिप्रेत्य शङ्कते—**अनुमिताविति**। सत्त्वात्=अनुमितिनिष्ठकार्य्यतानिरूपितकरणत्वसत्त्वात्। ननु यत्रेन्द्रियत्वेन मनोजन्यत्वं तत्र मानसत्वमिति व्याप्तेः सुखादिप्रत्यक्षे दृष्टत्वेनानुमितेर्मनस्त्वेन मनोजन्यतयेन्द्रियत्वेन मनोजन्यत्वाभावान्न मानसत्वमित्याशङ्क्य ता निराकरोति—**न चानुमितेरिति**। यत्र कारणान्तरासहकृतमनोजन्यत्वं तत्र मानसत्वमिति व्याप्तेः सुखादिप्रत्यक्षे दृष्टत्वं मनसि निधाय न च युक्तमिति प्रतिज्ञायां हेतुमाह—**कारणान्तरेति**। अस्यादावनुमितेरित्यस्य शेषः कर्तव्यः। तस्यापि=अनुमितेर्मनोजन्यप्रत्यक्षविषयत्वरूपमानसत्वस्यापि। पूर्वपक्षिसंमतव्याप्त्यसिद्धिमभिप्रेत्य हेत्वन्तरमाह—**मनस इति**। स्मृत्यनुव्यवसायादावपि हेतुत्वेन=व्याप्तिज्ञानस्य व्याप्तिस्मृतिव्याप्तिज्ञानानुव्यवसायादावपि कारणत्वेन, असाधारणत्वाभावात्=असाधारणकारणत्वाभावात्, तस्य=व्याप्तिज्ञानस्य, अन्यत्र=व्याप्तिस्मृत्यादौ। **अहेतुत्वादिति**। व्याप्तिज्ञानस्य व्याप्तिज्ञानानुव्यवसाये विषयत्वेन व्याप्तिस्मृतिस्वसमानविषयकानुभवत्वेन वाक्यार्थज्ञाने पदार्थज्ञानत्वेन च हेतुत्वादिति शेषः॥

**तत्संस्कारोऽवान्तरव्यापारः॥**

**शि० म०**—नन्वेवमपि व्याप्तिज्ञानं न करणं व्यापाराभावात्। न च तृतीयलिङ्गपरामर्शो व्यापारः, तत्कारणत्वस्य त्वयाऽनभ्युपगमादित्यत आह—**तत्संस्कार इति**। व्याप्तिसंस्कार इत्यर्थः॥

**म० प्र०**—**व्यापारेति**। व्याप्तिज्ञानस्येति शेषः। **तृतीयलिङ्गपरामर्श इति**। महानसाद्यवच्छेदेन धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं तदादिमं पक्षे यद्धूमज्ञानं तद् द्वितीयं

पक्षे एव व्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयमित्युच्यते। तादृशतृतीयज्ञानरूपलिङ्गपरामर्शो व्याप्तिज्ञानस्य व्यापार इत्यर्थः। **तत्कारणत्वस्येति**। वह्निव्याप्यधूमवान्पर्वत इत्यादितृतीयलिङ्गपरामर्शनिष्ठकारणत्वस्य, त्वया=वेदान्तिना त्वया। **अनभ्युपगमादिति**। तृतीयलिङ्गपरामर्शे तज्जन्यजनकत्वरूपांशाभावेन तृतीयलिङ्गपरामर्शस्य व्याप्तिज्ञानव्यापारत्वं न संभवतीति भावः। व्याप्तिसंस्कारः=व्याप्तिविषयकसंस्कारः व्याप्तिज्ञानसंस्कार इति वा॥

**न तु तृतीयलिङ्गपरामर्शोऽनुमितौ करणं तस्यानुमितिहेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वात्॥**

**शि० म०**—तृतीयलिङ्गपरामर्शोऽनुमितौ करणम्, तत्संस्कारोऽवान्तरव्यापार इति नैयायिकैकदेशिनः कल्पयन्ति तान्प्रत्याह—**नत्विति**। अयमाशयः—यत्प्रकारकं व्याप्तिज्ञानं तत्प्रकारकत्वेनैव पक्षधर्मताज्ञानस्यानुमितिहेतुत्वम्, अस्य च गुरुत्वेऽपि व्याप्यत्वप्रकारकत्वापेक्षया सामान्यधर्मत्वेनावच्छेदकतौचित्यात्। किंच पक्षधर्मताज्ञानम् उक्तरूपेणैवानुमितिहेतुस्सर्वत्राव्यभिचारात्, न तु त्वदुक्तरूपेण व्यवहितधूमादिस्थले व्यभिचारात्। न च तत्र प्रत्यक्षपरामर्शः संभवति, विशेष्यसन्निकर्षाभावात्। तत्रानुमित्यात्मकपरामर्शादनुमित्यभ्युपगतावनवस्थापातात्। धूमे व्याप्यत्वाज्ञानेऽपि व्यवहितधूमस्मरणादनुमितिदर्शनाच्च। न मनसा तत्र परामर्शस्तस्यासहायस्य बहिरस्वातन्त्र्यात्। न च ज्ञानं प्रत्यासत्तिः, निराकृतत्वात्। तस्मान्न व्याप्यत्वप्रकारकत्वेन पक्षधर्मताज्ञानमनुमितिहेतुरिति। यत्तु पक्षधर्मताज्ञानं करणं तत्संस्कारोऽवान्तरव्यापार इत्यन्ये तन्न, उद्बुद्धव्याप्तिसंस्कारस्य पर्वतादौ पक्षे धूमादिदर्शनानन्तरम् अनुमितेः पक्षधर्मतासंस्कारस्यानुमित्यहेतुत्वात्॥

**म० प्र०**—तत्संस्कारः=तृतीयलिङ्गपरामर्शजन्यसंस्कारः। **यत्प्रकारकमिति**। यादृशधूमत्वादिरूपगृह्यमाणव्याप्यतावच्छेदकप्रकारकं व्याप्तिज्ञानं तादृशधूमत्वादिप्रकारकत्वेनैवेत्यर्थः। **अस्येति**। व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वापेक्षयाऽस्य गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वस्य गुरुत्वेऽपि सामान्यधर्मत्वेन अस्य व्यवहितधूमादिपक्षधर्मताज्ञानेऽपि वृत्तित्वेन अवच्छेदकतौचित्यादनुमितिनिष्ठकार्यतानिरूपितहेतुनिष्ठपक्षधर्मताज्ञाननिष्ठकारणतावच्छेदकतायोग्यत्वादित्यर्थः। वह्न्यादिव्याप्तिज्ञानशून्यपुरुषस्यापि धूमवान्पर्वत इत्यादिज्ञानादनुमित्यापत्तिवारणाय **गृह्यमाणेति** व्याप्यताविशेषणमिति। उक्तरूपेणैव=गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेनैव, सर्वत्र=सर्वानुमित्यव्यवहितपूर्वक्षणे, अव्यभिचारात्=महानसाद्यवच्छेदेन धूमे जायमानव्याप्तिज्ञानस्यैव करणत्वेन पर्वताद्यवच्छेदेन धूमे व्याप्तिज्ञानस्यानुमितिं प्रत्यकरणत्वेन पर्वतादिधूमे व्याप्तिज्ञानाभावेऽपि गृह्यमाणव्याप्यतावच्छेदकप्रकारकप्रत्यक्षस्मरणशाब्दबोधाद्यन्यतम-

रूपपक्षधर्मताज्ञानस्य सत्त्वेन व्यभिचाराभावात्। त्वदुक्तरूपेण=व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन, व्यवहितधूमादिस्थले=कालान्तरीयधूमाद्यधिकरणे, व्यभिचारात्=व्यवहितधूमादिभ्योऽनुमिति-सत्त्वेऽपि व्यवहितधूमादौ सामान्यलक्षणादीनां निराकृतत्वेन व्याप्तिज्ञानाभावेन त्वदुक्तव्याप्तिप्रकारक-पक्षधर्मताज्ञानस्य व्यतिरेकव्यभिचारात्। व्यभिचारमेव स्पष्टयति—**न चेत्यादिना**। तत्र=व्यवहितधूमादौ, प्रत्यक्षपरामर्शः=वह्निव्याप्यातीतधूमवानयं देश इत्याद्यात्मकं प्रत्यक्षात्मक-व्याप्तिप्रकारकपक्षधर्मताज्ञानम्। विशेष्यसन्निकर्षाभावात्=व्याप्तिनिष्ठविशेषणतानिरूपितविशेष्यता-वद्धूमे इन्द्रियसन्निकर्षाभावात्, तत्र=व्यवहितधूमादौ, अनुमित्यात्मकपरामर्शात्=स देशो वह्निव्या-प्यातीतधूमवान् वह्न्यार्द्रेन्धनसंयोगावच्छेदकत्वादित्याद्यनुमित्यात्मकपरामर्शात्, धूमे=व्यवहितधूमे, व्याप्यत्वाज्ञानेऽपि=व्याप्यत्वज्ञानेऽपि, तत्र=व्यवहितधूमादौ, तस्य=मनसः, ज्ञानम्=स्वसंयुक्तात्मस-मवेतज्ञानविषयत्वरूपज्ञानघटितम्, पक्षधर्मताज्ञानं=धूमवान्पर्वत इत्याद्याकारकं पक्षधर्मताज्ञानम्। तन्नेति प्रतिज्ञायां हेतुमाह—**पक्षधर्मतासंस्कारस्येति**। पक्षधर्मताविषयकसंस्कारस्य पक्षधर्मता-ज्ञानजन्यसंस्कारस्यैवेत्यर्थः। तस्यानुमित्यहेतुत्वे हेतुमाह—**उद्बुद्धव्याप्तिसंस्कारस्येति**। उद्बुद्धो व्याप्तिसंस्कारो व्याप्तिविषयकसंस्कारो यस्य स तथा तस्येत्यर्थः॥

**न च संस्कारजन्यत्वेनानुमितेः स्मृतित्वापत्तिः। स्मृतिप्राग-भावजन्यत्वस्य संस्कारमात्रजन्यत्वस्य वा स्मृतित्वप्रयोजक-तया संस्कारध्वंससाधारणसंस्कारजन्यत्वस्य तदप्रयोजकत्वात्॥**

शि० म०—ननु स्मृतिप्रागभावजन्यत्वं न स्मृतित्वप्रयोजकं तद्गोचरसाक्षात्कार-स्यापि तथात्वापत्तेः। किञ्चैवं स्मृतेरेतत्कालावच्छेदेन ग्राह्यत्वाभावज्ञानाप्रतिबन्ध-कत्वेऽपि तत्कालविषयग्राह्याभावज्ञानप्रतिबन्धकत्वेन तदभावस्य प्रतिबन्धकाभाव-त्वेन प्रागभावादिसाधारणस्य ग्राह्याभावानुभवहेतुतया तस्यापि स्मृतित्वापत्तिः। अपि च स्मृतिप्रागभावजन्यत्वं न प्रयोजकम्, तस्य स्मृतित्वज्ञानाधीननिश्चयत्वात्। अन्यथा अनुमित्यादिप्रागभावजन्यत्वस्यैवानुमितित्वादिप्रयोजकत्वापत्तौ न तत्र प्रयोजकान्तरानुसरणं वैयर्थ्यादित्यरुचेराह—**संस्कारमात्रजन्यत्वस्येति**। संस्कारत्वावच्छिन्नकारणताप्रतियोगिककार्यताश्रयत्वस्येत्यर्थः॥

म० प्र०—तद्गोचरसाक्षात्कारस्यापि=स्मृतिप्रागभावगोचरस्यैतदर्थस्मरणं भविष्यतीत्याकारकस्यै-तदर्थविषयकस्मरणप्रागभावोऽस्तीत्याकारकस्य वा साक्षात्कारस्यापि, तथात्वापत्तेः=स्मृति-त्वापत्तेः। वस्तुतस्तु स्मृतिप्रागभावजन्यत्वं च स्मृतिप्रागभावत्वावच्छिन्नजनकतानिरूपितजन्यत्वम्। तथा च स्मृतिप्रागभावस्य स्वविषयकसाक्षात्कारे विषयत्वेन कारणतया स्मृतिप्रागभावत्वावच्छिन्न-जनकतानिरूपितजन्यत्वाभावान्न स्मृतिप्रागभावसाक्षात्कारे स्मृतित्वापत्तिरूपो दोष इति। एवं=तथा, तस्यापि=घटवद्भूतलमित्यादिस्मृत्यात्मकप्रतिबन्धकाभावजन्य 'घटाभाववद्भूतलम्' इत्यादिग्राह्याभावा-नुभवस्यापि। प्रतिबध्यज्ञाने प्रकारो ग्राह्य इति ग्राह्यपदार्थं मनसि निधाय घटाभाववद्भूतलमित्याद्य-

नुभवस्य स्मृतित्वापत्तौ हेतुमाह—**तदभावस्येति**। प्रागभावादिसाधारणस्य घटवद्भूतलमित्यादि-स्मृतिध्वंसप्रागभावात्यन्ताभावान्यतमरूपस्य तदभावस्य घटवद्भूतलमित्यादिस्मृत्यभावस्य घटाभाववद्भूतलमित्यादिग्राह्याभावानुभवं प्रति कारणतयेत्यर्थः। ननु घटवद्भूतलमित्यादिस्मृत्यभावत्वावच्छिन्नस्मृत्यभावस्य घटाभाववद्भूतलमित्याद्यनुभवं प्रति हेतुत्वं कुत इत्याशङ्क्य तत्र हेतुमाह—**प्रतिबन्धकाभावत्वेनेति**। घटवद्भूतलमित्यादि—स्मृत्यभावत्वावच्छिन्नस्मृत्यभावस्य प्रतिबन्धकाभावत्वेनेत्यर्थः। ननु घटवद्भूतलमित्यादिस्मृत्यभावत्वावच्छिन्नस्मृत्यभावस्य प्रतिबन्धकाभावत्वं कुत इत्याशङ्क्य तत्र हेतुमाह—**स्मृतेरित्यादिना**। स्मृतेः=घटवद्भूतलमित्यादिकालान्तरीयस्मृतेः, एतत्कालावच्छेदेन ग्राह्याभावज्ञानाप्रतिबन्धकत्वेऽपि समानकालिकयोरेव प्रतिबध्यप्रतिबन्धकभावनियमेन वर्तमानकालावच्छेदेन घटाभाववद्भूतलमित्याद्याकारकप्रत्यक्षाद्यात्मकग्राह्याभावज्ञानप्रतिबन्धकत्वाभावेऽपि। **तत्कालविषयग्राह्याभावज्ञानप्रबिन्धकत्वेनेति**। अत्र विषयशब्दोऽधिकरणार्थकस्तथा च तदभाववत्ताबुद्धिं प्रति तद्वत्ताबुद्धिः प्रतिबन्धिकेति नियमाद्घटवद्भूतलमित्यादिस्मृतेः घटवद्भूतलमित्यादिस्मृतिकालाधिकरणक 'घटाभाववद्भूतलम्' इत्याद्याकारकग्राह्याभावज्ञानप्रतिबन्धकत्वेनेत्यर्थः। **स्मृतित्वापत्तिरिति**। वस्तुतस्तु घटवद्भूतलमित्यादिस्मृतिप्रागभावस्य घटाभाववद्भूतलमित्यादिग्राह्याभावानुभवं प्रति प्रतिबन्धकाभावत्वेन हेतुतयोक्तस्मृतिप्रागभावत्वेनाहेतुत्वादुक्तानुभवस्य स्मृतित्वापत्तिरूपो दोषो नास्तीति। न प्रयोजकं स्मृतित्वज्ञापकं न। **तस्येति**। स्मृतिप्रागभावजन्यत्वस्येत्यर्थः। **स्मृतिज्ञानेति**=स्मृतिप्रागभावज्ञानेत्यर्थः। यद्वाऽभावज्ञाने प्रतियोगिज्ञानं कारणमिति नियमात्स्मृतित्वप्रकारकनिश्चयसत्त्वे स्मृतिप्रागभावनिश्चयसत्त्वं स्मृतिप्रागभावनिश्चयसत्त्वे स्मृतिप्रागभावजन्यत्वनिश्चय इति स्मृतित्वज्ञानाधीननिश्चयत्वादित्यर्थः। स्मृतिप्रागभावजन्यत्वज्ञानस्य स्मृतिप्रागभावज्ञानाधीनत्वेन स्मृतिप्रागभावज्ञानस्य स्मृतित्वप्रकारकज्ञानाधीननिश्चयत्वेन चात्माश्रयादिति भावः। अन्यथा=उक्तप्रकारेणात्माश्रयसत्त्वेऽपि स्मृतिप्रागभावजन्यत्वस्यैव स्मृतिप्रयोजकत्वस्वीकारे। परममूले **संस्कारमात्रजन्यत्वस्येति**। न चात्र मात्रपदादानेऽसंभव इति वाच्यम्। तस्य संस्कारेतरेन्द्रियसन्निकर्षाद्यसाधारणकारणाजन्यत्वे सति संस्कारजन्यत्वं संस्कारमात्रजन्यत्वमित्यर्थकत्वात्। न च तथाऽप्यत्र मात्रपदस्य प्रयोजनाभावान्मात्रपदं न देयमिति वाच्यम्। संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वेन तस्य तत्र स्मृतित्वापत्तिनिवारणार्थकत्वात्। न च संस्कारजन्यत्वं संस्कारत्वावच्छिन्नजनकतानिरूपितजन्यत्वं तथा च संस्कारध्वंसे प्रतियोगितावच्छिन्नजनकतानिरूपितजन्यत्वसत्त्वेऽपि संस्कारत्वावच्छिन्नजनकतानिरूपितजन्यत्वस्याभावान्न तत्र स्मृतित्वापत्तिरूपो दोष इति वाच्यम्। तथापि तस्य प्रत्यभिज्ञायां स्मृतित्वापत्तिनिवारणार्थकत्वात्। न च तत्तांशे प्रत्यभिज्ञाया इष्टत्वादित्यादिग्रन्थेन स्मृतित्वस्याङ्गीकारात्प्रत्यभिज्ञायाः स्मृतित्वापत्तिनिवारणार्थकत्वेन मात्रपदस्य न साफल्यमिति वाच्यम्। तथापि ब्रह्मभिन्ननिखिलकार्यपदार्थस्य तदनुभवस्य चाध्यस्ततया पूर्वपूर्वभ्रमसंस्कारजन्यत्वेन तत्र स्मृतित्ववारणार्थकत्वेन मात्रपदस्य साफल्यादिति। **संस्कारत्वावच्छिन्नेति**। संस्कारत्वावच्छिन्ना कारणता प्रतियोगिनी निरूपिका

यस्याः कार्य्यतायाः सा तथा सा चासौ कार्य्यता सा तथा तदाश्रयत्वस्येत्यर्थः । अत्र ब्रह्मभिन्ननिखिलपदार्थानुभवे स्मृतित्वापत्तिवारणाय संस्कारत्वावच्छिन्नकारणतायां मात्रपदार्थसंस्कारेतरासाधारणकारणसहकृतेति विशेषणप्रवेशोऽपि बोध्य इति ॥

**शि० म०—ननु ध्वंसव्यावृत्तं संस्कारजन्यज्ञानत्वमेव स्मृतित्वप्रयोजकम् । अस्य संस्कारत्वावच्छिन्नकारणतानिरूपितकार्य्यताश्रयत्वापेक्षया लघुत्वात्, ततश्चानुमितेः स्मृतित्वं दुर्वारमिति चेत् न, न्यायमतेऽपि लिङ्गकरणतापक्षे तत्संस्कारलिङ्गकानुमितेरपि तत्प्रसङ्गात् । सिद्धान्ते ब्रह्मभिन्ननिखिलपदार्थानुभवस्याध्यस्ततया पूर्वपूर्वभ्रमसंस्कारजन्यत्वेन तत्रातिप्रसङ्गाच्च । यद्वा संस्कारमात्रजन्यत्वेन स्वसमानविषयसंस्कारजन्यत्वं विवक्षितम् । अनुमितेश्च भिन्नविषयव्याप्तिसंस्कारजन्यत्वान्न स्मृतित्वम् । न च लिङ्गोपहितलैङ्गिकभानपक्षे तदंशे स्मृतित्वापत्तिः । तत्पक्षस्याप्रामाणिकत्वेनानुपादेयत्वात् । न चैवं प्रत्यभिज्ञायाः सिद्धान्ते तत्तासंस्कारजन्यतया तदंशे स्मृतित्वापत्तिरिति वाच्यम्, इष्टत्वात् । परोक्षत्वापरोक्षत्ववत्स्मृतित्वानुभवत्वयोरेकत्रावच्छेदकभेदेन वृत्तौ विरोधाभावात् ॥**

म० प्र०—ध्वंसव्यावृत्तमिति विशेषणं स्मृतित्वप्रयोजकाघटकमिति मनसि निधाय संस्कारजन्यज्ञानत्वमेव स्मृतित्वप्रयोजकमिति स्मृतित्वप्रयोजकबोधकवाक्यघटकज्ञानपदफलं सूचयति—**ध्वंसव्यावृत्तमिति** । संस्कारध्वंसावृत्तीत्यर्थः । अस्य=संस्कारजन्यज्ञानत्वस्य । लघुत्वात्=शरीरकृतलाघवात् । ततश्च=संस्कारजन्यज्ञानत्वस्य स्मृतित्वप्रयोजकत्वादेव । **संस्कारलिङ्गकानुमितेरपीति** । देवदत्तः घटपटाद्यर्थविषयकस्मृतिमान् घटपटाद्यर्थविषयकसंस्कारवत्त्वादित्यादिघटपटाद्यर्थविषयकसंस्कारलिङ्गकानुमितेरपि स्मृतित्वप्रसङ्गादित्यर्थः । **अध्यस्ततयेति** । कार्य्यत्वे सत्यध्यस्ततयेत्यर्थः । तथा च नाविद्यादौ व्यभिचारः । **पूर्वपूर्वभ्रमसंस्कारजन्यत्वेनेति** । यत्र कार्य्यत्वे सत्यध्यस्तत्वं तत्र पूर्वपूर्वभ्रमसंस्कारजन्यत्वं यथा शुक्तिरजतादाविति व्याप्तेरिति शेषः । ननु त्वदुक्तस्मृतित्वप्रयोजके गौरवमित्याशङ्क्याह—**यद्वेति** । संस्कारमात्रजन्यत्वेन=संस्कारमात्रजन्यत्वशब्देन स्वसमानविषयसंस्कारजन्यत्वं स्वविषयाभिन्नविषयकोद्बुद्धसंस्कारजन्यत्वं स्वविषयान्यूनानधिकविषयकोद्बुसंस्कारजन्यत्वमिति यावत् । न च मे मातेत्यादिप्रमुष्टतत्ताकस्मृतौ स्मृतित्वाभावापत्तिस्तत्तांशेऽपि संस्कारस्य सत्त्वेनोक्तस्मृतेः स्वविषयाधिकविषयसंस्कारजन्यत्वात्त्वदुक्तस्मृतित्वप्रयोजकाभावादिति वाच्यम् । तत्तांशे स्मृतिरूपकार्य्याभावेन तत्तांशविषयकसंस्कारस्यानुद्बुद्धत्वेनोक्तप्रयोजनसत्त्वादिति । भिन्नविषयव्याप्तिसंस्कारजन्यत्वात्=अनुमितेर्व्याप्तिज्ञानविषयधूमवह्नितद्व्याप्त्यविषयकत्वाद्व्याप्त्यनुभवविषयभिन्नविषयकत्वेनानुमितिविषयभिन्नविषयकव्याप्त्यनुभवजन्यव्याप्तिविषयकसंस्कारजन्यत्वात् । **लिङ्गोपहितलैङ्गिकभानपक्षे इति** । लिङ्गाजातं लैङ्गिकं लैङ्गिकं च तत् भानं लैङ्गिकभानं साध्यविषयकानुमितिलिङ्गोपहितं लिङ्गविषयकं च तल्लैङ्गिकभानं च तत्तथा च वह्निव्याप्यधूमवान्पर्वतो वह्निमानित्या

कारकलिङ्गविषयकसाध्यानुमितिपक्षे इत्यर्थः। तदंशे=वह्नितद्व्याप्त्याद्यंशे। तत्तासंस्कारजन्यतया=असन्निहितदेशकालादिवैशिष्ट्यरूपतत्ताविषयकसंस्कारजन्यतया। तदंशे=तत्तांशविषयकप्रत्यभिज्ञात्मकज्ञाने। ननु स्मृतित्वानुभवत्वयोः परस्परविरोधेन कथमेकस्यां प्रत्यभिज्ञायां स्मृतित्वानुभवत्वयोः संभव इत्याशङ्क्य मैवमित्यभिप्रेत्याह—**परोक्षत्वापरोक्षत्ववदिति**। यथा पर्वतो वह्निमान् सुरभि चन्दनमित्यादिज्ञानेषु पर्वताद्यंशे वह्न्याद्यंशे चान्तःकरणवृत्तिभेदाङ्गीकारेण तत्तद्वृत्त्यवच्छेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये न विरोधस्तद्वदेकत्रैकस्मिन्सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञात्मकज्ञानेऽपि तत्तद्वृत्त्यवच्छेदकभेदेन स्मृतित्वानुभवत्वयोर्विरोधाभावादित्यर्थः॥

**न च यत्र व्याप्तिस्मरणादनुमितिस्तत्र कथं संस्कारो हेतुरिति वाच्यम्। व्याप्तिस्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमितिहेतुत्वात्। न हि स्मृतेः, संस्कारनाशकत्वानियमः स्मृतिधारादर्शनात्। न चानुद्बुद्धसंस्कारादप्यनुमित्यापत्तिः, तदुद्बोधस्यापि सहकारित्वात्॥**

**शि० म०—कथमिति**। व्याप्तिसंस्कारो नानुमितिहेतुः, तदा व्याप्तिस्मृत्या तन्नाशे सति स्मृतिजन्यानुमितौ व्यभिचारादिति भावः। संस्कारस्य यत्र पक्षधर्मताज्ञानादुद्बोधः तत्र किं व्यभिचारः उतान्यत्र। नाद्यः, पक्षधर्मताज्ञाने व्याप्तिसंस्कारोद्बोधे च सत्यनुमितेरेवोत्पत्तेः। न द्वितीयः, व्याप्त्यनुभवस्थले तत्संस्कारस्यानुमितिहेतुतया क्लृप्तत्वेन स्मृतिस्थलेऽपि तस्यैव हेतुत्वकल्पनादित्याह—**व्याप्तिस्मृतिस्थले इति**। **न हीति**। ननु स्मृत्यनन्तरं संस्कारस्य नाशानियमवदवस्थानानियमस्याभावेन यत्र कदाचिद्व्याप्तिस्मृत्या तद्विनाशस्तत्र कथं संस्कारो हेतुरिति चेत् न, अनुमितौ करणान्तरस्य दुर्निरूपत्वेन व्याप्तिज्ञानकरणत्वस्यावश्यं वाच्यतया तत्संस्कारस्य व्यापारत्वेनानन्यगत्या अनुमितिहेतुत्वकल्पनात्। **सहकारित्वादिति**। कारणतावच्छेदकत्वादित्यर्थः। अन्यथा व्याप्तिसंस्कारोद्बोधस्यापि कारणत्वे तद्द्वारा व्याप्तिसंस्कार एव करणं स्यात्। न व्याप्तिज्ञानं तत्संस्कारतदुद्बोधपक्षधर्मताज्ञानैरेवानुमितिसंभवे व्याप्तिज्ञानस्यापि करणत्वकल्पने गौरवात्, मानाभावाच्च। तथा सर्वत्रापि स्मृतौ संस्कार एव करणम्, न पूर्वानुभव इति बहुव्याकुलीभावः स्यात्॥

म० प्र०—तदा=अनुमित्युत्पत्तिपूर्वकाले। तन्नाशे=व्याप्त्यनुभवजन्यव्याप्तिविषयकसंस्कारनाशे। **स्मृतीति**=व्याप्तिस्मृतीत्यर्थः। व्यभिचारात्=व्यतिरेकव्यभिचारेण संस्कारनिष्ठकारणत्वाभावात् व्यतिरेकव्यभिचारादिति वा। अस्मिन्पक्षेऽनुमितावित्यस्यानुमितिमत्यात्मादावित्यर्थो बोध्य इति। यत्र=यस्मिन्नात्मनि यस्मिन्काले वा यस्मिन्नन्तःकरणे वा। तत्र=तस्मिन्नात्मनि तस्मिन्काले वा तस्मिन्नन्तःकरणे वा। व्यभिचारः=अनुमितिनिरूपितकारणत्वासंभवो व्यतिरेकव्यभिचारो वा। **अन्यत्रेति**। सदृशादृष्टचिन्तनादिभ्यो यस्मिन्नात्मनि यस्मिन्काले वा यस्मि-

न्नन्तःकरणे वा संस्कारस्योद्बोधस्तत्रेत्यर्थः । व्याप्त्यनुभवस्थले=व्याप्तिस्मृत्यनधिकरणपक्षधर्मताज्ञानोद्बुद्धव्याप्त्यनुभवजन्यसंस्काराधिकरणकालादौ, तत्संस्कारस्य=व्याप्त्यनुभवजन्यव्याप्तिविषयकसंस्कारस्य, स्मृतिस्थलेऽपि=व्याप्तिस्मृत्यधिकरणे कालादावपि, तस्यैव=संस्कारस्यैव । यत्रकदाचित्=यस्मिंश्चकस्मिंश्चित्काले । तत्र=तस्मिन्काले । हेतुः=अनुमितिहेतुः । तत्संस्कारस्य=व्याप्त्यनुभवजन्यव्याप्तिविषयसंस्कारस्य । अनन्यगत्या=अन्यस्य व्यापारत्वाभावेन । अन्यथा=सहकारित्वादित्यस्य कारणतावच्छेदकत्वादित्यर्थानङ्गीकारे, यद्वाऽन्यथेत्यस्यैव विवरणं व्याप्तीत्यादि कारणत्वे इत्यन्तमिति । संकारोद्बोधस्यापि=संस्कारनिष्ठानुमित्यादिरूपकार्य्यानुकूलशक्त्युद्बोधस्यापि । तद्द्वारा=संस्कारनिष्ठशक्त्युद्बोधद्वारा । तत्संस्कारेति=व्याप्तिज्ञानजन्यव्याप्तिविषयकसंस्कारेत्यर्थः । तदुद्बोधेति=संस्कारोद्बोधेत्यर्थः । **बहुव्याकुलीभाव इति** । संस्कारद्वारा स्मृतिं प्रत्यनुभवः करणं तथाऽनुमितिं प्रति संस्कारद्वारा व्याप्त्यनुभवः करणमित्यादिबहुसिद्धान्तानामुक्तप्रकारेण हानिः स्यादित्यर्थः ॥

**एवं चायं धूमवानिति पक्षधर्मताज्ञानेन धूमो वह्निव्याप्य इत्यनुभवाहितसंस्कारोद्बोधे च सति वह्निमानित्यनुमितिर्भवति, न तु मध्ये व्याप्तिस्मरणं तज्जन्यं वह्निव्याप्यधूमवानयमित्यादिविशेषणविशिष्टज्ञानं वा हेतुत्वेन कल्पनीयं गौरवान्मानाभावाच्च ॥**

शि० म०—नन्वेमपि व्याप्तिस्मृतिरेवानुमितिहेतुर्नोद्बुद्धसंस्कारः, न च पक्षधर्मताज्ञानेन तत्संस्कारोद्बोधे सति यत्रानुमितिस्तत्र व्यभिचार इति वाच्यम्, व्याप्तिस्मरणस्थले तस्यानुमितिहेतुत्वेन क्लृप्ततयाऽन्यत्रापि तत्कल्पनादित्यत आह—**एवं चेति** । व्याप्त्यनुभवतत्संस्कारयोर्व्यापारव्यापारिभावे सिद्धे सतीत्यर्थः । अयमाशयः । किं व्याप्तिस्मृतिरेवावान्तरव्यापार इत्यभिमतं करणमिति वा । नाद्यः, संस्कारोद्बोधानन्तरमेव यत्रानुमितिस्तत्र व्यभिचारस्योक्तत्वात्, न च तत्रापि व्यापारतया तत्कल्पनं संस्कारस्य सत्त्वेन तृतीयलिङ्गपरामर्शवद्व्याप्तिस्मृतेरपि व्यापारत्वायोगात् । अत एव न द्वितीयः । निर्व्यापारत्वाच्च । न च तृतीयलिङ्गपरामर्शो व्यापारः तत्कारणत्वस्य निराकृतत्वात् । न चानुमितौ करणान्तरानुपपत्त्या व्याप्तिस्मृतिः करणं लिङ्गपरामर्शश्च तद्व्यापार इति कल्प्यते इति वाच्यम्, व्याप्त्यनुभवस्य संस्कारव्यापारकस्य करणान्तरस्य सत्त्वादिति ॥

म० प्र०—एवमपि=व्याप्त्यनुभवजन्यव्याप्तिविषयकसंस्कारोद्बोधस्य कारणत्वाभावेऽपि । स्मृतिरेवेत्येवकारव्यावर्त्यमाह—**नोद्बुद्धसंस्कार इति । तत्संस्कारेति** । व्याप्त्यनुभवजन्यव्याप्तिविषयकसंस्कारेत्यर्थः । यत्र=यस्मिन्नात्मनि यस्मिन्काले वा यस्मिन्नन्तःकरणे वा, तत्र=तस्मिन्नात्मनि तस्मिन्काले वा तस्मिन्नन्तःकरणे वा, व्याप्तिस्मृतिस्थले=सदृशादृष्टचिन्तनादिना

संस्कारोद्बोधेन व्याप्तिस्मृत्यधिकरणे आत्मादौ । तस्य=व्याप्तिस्मरणस्य, अन्यत्रापि=यत्रात्माद्यधिकरणे पक्षधर्मताज्ञानेन व्याप्त्यनुभवजन्यव्याप्तिविषयकसंस्कारोद्बोधे सत्यनुमितिर्भवति तस्मिन्नात्माद्यधिकरणेऽपि । एवं चेत्यादिमूलस्याभिप्रायमाह—**अयमाशय इति । करणमिति ।** व्याप्तिस्मृतिरेव करणमित्यन्वयः । संस्कारोद्बोधानन्तरम्=पक्षधर्मताज्ञानेन संस्कारोद्बोधानन्तरम्, यत्र=यस्मिन्नात्माद्यधिकरणे, तत्र=तस्मिन्नात्माद्यधिकरणे, तत्रापि=पक्षधर्मताज्ञानेन संस्कारोद्बोधाधिकरणे आत्मादावपि, तत्कल्पनं=व्याप्तिस्मरणकल्पनम्, अत एव=उक्तस्थले व्यभिचारस्योक्तत्वादेव, निर्व्यापारत्वाच्च=व्याप्तिस्मृतेर्व्यापाररहितत्वाच्च, तत्कारणत्वस्य=तृतीयलिङ्गपरामर्शनिष्ठकारणत्वस्य, करणान्तरानुपपत्त्या=व्याप्तिस्मृत्यतिरिक्तकरणासिद्ध्या, तद्व्यापारः=व्याप्तिविषयकस्मृतेर्व्यापारः । करणान्तरानुपपत्तिरूपहेत्वसिद्धिमभिप्रेत्य न च वाच्यमिति प्रतिज्ञायां हेतुमाह—**व्याप्त्यनुभवस्येति ॥**

**तच्च व्याप्तिज्ञानं वह्निविषयकज्ञानांश एव करणं न तु पर्वतविषयज्ञानांश इति पर्वतो वह्निमानिति ज्ञानस्य वह्न्यंश एवानुमितित्वं न पर्वतांशे तदंशे प्रत्यक्षत्वस्योपपादितत्वात् ॥**

**शि०म०**—नन्वेवमपि व्याप्तिज्ञानजन्यत्वं नानुमितिलक्षणं सन्निकृष्टपक्षकानुमितेस्तव मते सन्निकृष्टविषयांशे अनुमितित्वाभावेन तदंशे अतिव्याप्तेरित्यत आह—**तच्चेति ।** नन्वनुमितेः सन्निकृष्टविषयांशे व्याप्तिज्ञानजन्यत्वाभावान्नानुमितित्वं तदभावाच्च न तज्जन्यत्वमित्यन्योन्याश्रयः स्यादित्याशङ्क्य पर्वतं पश्यामि वह्निमनुमिनोमीत्यनुभवबलादेव ज्ञानस्यांशभेदेन परोक्षत्वापरोक्षत्वयोः साधितत्वात् नेत्याह—**तदंश इति ॥**

**म० प्र०**—एवमपि=व्याप्तिस्मृतेः करणत्वाभावेऽपि, तदंशे=सन्निकृष्टपर्वतादिविषयांशे, तदभावाच्च=अनुमितित्वाभावाच्च, न तज्जन्यत्वम्=व्याप्तिज्ञानजन्यत्वाभावः । व्याप्तिज्ञानजन्यत्वव्याप्तिज्ञानजन्यत्वाभावाभ्यामनुमितित्वाभावौ न, किंतु सन्निकृष्टपर्वतादिविषयकज्ञाने पर्वतं पश्यामीत्यनुभवबलादनुमितित्वाभावोऽसन्निकृष्टवह्न्यादिविषयकज्ञाने तु वह्निमनुमिनोमीत्याद्यनुभवबलादेवानुमितित्वमिति नान्योऽन्याश्रय इत्यभिप्रेत्याह—**पर्वतमिति ।** परममूले **तदंशे इति ।** पर्वतांशविषयकज्ञाने इत्यर्थः ॥

**व्याप्तिश्चाशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यरूपा ॥**

**शि०म०**—ननु का व्याप्तिः यद्विषयज्ञानमनुमितिहेतुः स्यात् । न तावदनौपाधिकत्वम्, तद्धि यत्किंचित्साध्यव्यापकयत्किंचित्साधनाव्यापकशून्यत्वम् । तस्य सद्धेतावभावात् । न च प्रकृतेति साध्यसाधनयोर्विशेषणं तस्य सिद्ध्यसिद्धिभ्यां निषेद्धुमशक्यत्वात् । नापि कार्य्यकारणभावो व्याप्तिः, दण्डघटयोरपि

**तत्प्रसङ्गात् । पृथिवीत्वस्य द्रव्यत्वव्याप्त्यभावापत्तेश्च । ततश्च दुर्निरूपा व्याप्तिरित्यत आह—व्याप्तिश्चेति ॥**

म०प्र०—अनौपाधिकत्वम्=हेतुनिष्ठमुपाधिशून्यत्वम्, तद्धि=अनौपाधिकत्वं हि, तस्य=यत्किंचित्साध्यव्यापकयत्किंचित्साधनाव्यापकोपाधिशून्यत्वस्य। **सद्धेतावभावादिति** । यथा पर्वतो धूमवान् वह्नेरित्यादौ व्यभिचारिणि वह्न्याद्यसद्धेतौ यत्किंचिद्वह्न्यादिसाधनाव्यापकार्द्रेन्धनसंयोगाद्युपाधेः सत्त्वेन यत्किंचित्साध्यव्यापकयत्किंचित्साधनाव्यापकोपाधिशून्यत्वाभावस्तथा पर्वतो वह्निमान् धूमादित्यादौ सद्धेतुधूमादावपि यत्किंचिद्वह्न्यादिसाध्यव्यापकयत्किंचित्प्रमेयत्वादिसाधनाव्यापकद्रव्यत्वाद्युपाधेः सत्त्वेन यत्किंचित्साध्यव्यापकयत्किंचित्साधनाव्यापकोपाधिशून्यत्वाभावेनासंभवः स्यादिति भावः । **प्रकृतेतीति** । प्रकृतत्वं च तात्पर्यगोचरत्वं तथा च प्रकृतयत्किंचित्साध्यव्यापकप्रकृतयत्किंचित्साधनाव्यापकशून्यत्वं विवक्षितमित्यर्थः । तथा च द्रव्यत्वस्य प्रकृतधूमादिसाधनव्यापकत्वान्नासंभव इति भावः । प्रकृतयत्किंचिद्वह्न्यादिसाध्यव्यापकप्रकृतयत्किंचिद्धूमादिसाधनाव्यापकधर्मस्य प्रसिद्धिरस्ति न वा । नाद्यः, सिद्धस्य तस्य निषेधाभावात् । न द्वितीयः । असिद्धस्यापि निषेधं वक्तुमशक्यत्वादित्यभिप्रेत्य न चेति प्रतिज्ञायां हेतुमाह—**तस्येति** । प्रकृतयत्किंचिद्वह्न्यादिरूपसाध्यव्यापकप्रकृतयत्किंचिद्धूमादिसाधनाव्यापकधर्मस्येत्यर्थः। **कार्य्यकारणभाव इति** । प्रकृतिजन्यबोधे प्रकारो भावस्तथा च कारणं वह्निस्तन्निष्ठकारणतानिरूपितकार्य्यता धूमे । कार्य्यं धूमस्तन्निष्ठकार्य्यतानिरूपितकारणता वह्नावस्तीति कारणतानिरूपितकार्य्यता कार्य्यतानिरूपितकारणता व्याप्तिरित्यक्षरार्थः । निष्कृष्टार्थस्तु कारणतानिरूपितकार्य्यत्वमित्यर्थः । **तत्प्रसङ्गादिति** । व्याप्तिप्रसङ्गादित्यर्थः । तथा च दण्डनिष्ठकारणतानिरूपितकार्य्यताया घटे सत्त्वात् घटनिष्ठकार्य्यतानिरूपितकारणताया दण्डे सत्त्वाच्च दण्डघटयोरतिव्याप्तिरिति भावः । **पृथिवीत्वस्येति** । यत्र पृथिवीत्वं तत्र द्रव्यत्वमिति पृथिवीत्वनिष्ठद्रव्यत्वनिरूपितव्याप्तिर्न स्यात्तयोः कार्य्यकारणभावाभावादित्यर्थः । परममूले **अशेषेति** । व्यभिचारिणि वह्न्यादावतिव्याप्तिवारणाय **अशेषेति** । नन्वशेषत्वं च कार्त्स्न्यं तस्य हेतावन्यः स्वीक्रियते हेतुमति वा साध्ये वा । नाद्यः, घटो द्रव्यं पृथिवीत्वादित्याद्येकव्यक्तिकहेतावव्याप्तेः, पृथिवीत्वादिजातेरेकत्वेनाशेषत्वरूपकार्त्स्न्याप्रसिद्धेः । न द्वितीयः, अयं घट एतद्रूपवानेतद्रसादित्यादावेकव्यक्तिमात्रवृत्तिहेतावव्याप्तेस्तत्र हेतुमत एकत्वेन नानात्वरूपकार्त्स्न्याभावात् । न तृतीयः, पर्वतो वह्निमान् धूमादित्यादौ प्रसिद्धधूमादिहेतावसंभवाद्धूमे अयःपिण्डीयवह्निनिरूपितसामानाधिकरण्याभावेन सकलवह्निसामानाधिकरण्याभावात्तथा च नोक्ता व्याप्तिः संभवतीति चेन्न, व्यापकत्वरूपाशेषत्वाभ्युपगमेन पक्षत्रयेऽपि दोषाभावात् । तथा हि । व्यापकत्वरूपाशेषत्वस्य हेतावन्वयाभ्युपगमपक्षे साध्यसामानाधिकरण्यनिष्ठं यद्धेतुतावच्छेदकव्यापकत्वमवच्छेदकतासंबन्धेन स्वाश्रयाश्रयत्वसंबन्धेन वा तद्वद्यत्साधनं तदाश्रयाश्रितसाध्यसामानाधिकरण्यं व्याप्तिरिति परममूलोक्तलक्षणनिष्कर्षः । तथा च घटो द्रव्यं पृथिवीत्वादित्यादौ साधनं पृथिवीत्वादिकं साधनतावच्छेदकं पृथिवीत्वत्वादिकं तन्निरू-

पितयद्व्यापकत्वं द्रव्यत्वस्वरूपसाध्याधिकरणवृत्तित्वनिष्ठमवच्छेदकतासंबन्धेन स्वाश्रयाश्रयत्वसंबन्धेन वा तद्वद्यत्साधनं पृथिवीत्वादिकं तदाश्रयाश्रितसाध्यसामानाधिकरण्यस्य पृथिवीत्वादौ सत्त्वान्नाव्याप्तिरिति । स्वं व्यापकत्वं तदाश्रयः साध्यसामानाधिकरण्यं तदाश्रयत्वं हेताविति तदर्थः । घटो द्रव्यं सत्त्वादित्यत्र द्रव्यत्वरूपसाध्याधिकरणवृत्तित्वनिष्ठं यद्धेतुतावच्छेदकसत्तात्वनिरूपितव्यापकत्वं तस्यावच्छेदकतासंबन्धेन स्वाश्रयाश्रयसंबन्धेन वा व्यभिचारिसत्तायां सत्त्वेऽपि द्रव्यत्वरूपसाध्यस्य सत्ताश्रयगुणाद्याश्रितत्वाभावेनातिव्याप्त्यभाव इति । एवं व्यापकत्वाभिन्नाशेषत्वस्य हेतुमत्यन्वयस्वीकारेऽपि न दोषः । तथा हि । साध्याधिकरणत्वनिष्ठ यद्धेतुव्यापकत्वमुक्तान्यतरसंबन्धेन तद्वान् य आश्रयस्तदाश्रितसाध्यसामानाधिकरण्यं व्याप्तिरिति परममूलोक्तलक्षणनिष्कर्षः । तथा च महानसादौ धूमवह्निसामानाधिकरण्यमिति प्रतीतेर्यत्र धूमस्तत्रावच्छेदकतासम्बन्धेन स्वाश्रयाश्रयतासंबन्धेन वा साध्याधिकरणत्वनिष्ठहेतुव्यापकत्वस्य सत्त्वात्पर्वतो वह्निमान् धूमादित्यादौ धूमादौ लक्षणसमन्वयः । एवमयं घट एतद्रूपवानेतद्रसादित्यादावेतद्रसादिहेतावपि नाव्याप्तिः, तद्रूपाधिकरणत्वनिष्ठं यदेतद्रसव्यापकत्वमुक्तोभयान्यतरसंबन्धेन तद्वानयं घटस्तदाश्रितसाध्याधिकरण्यस्यैतद्रसादौ सत्त्वादिति, साध्याधिकरणतानिष्ठ यत्साधनाधिकरणताव्यापकत्वमुक्तान्यतरसंबन्धेन तद्वान् य आश्रयस्तदाश्रितसाध्यसामानाधिकरण्यं व्याप्तिरिति वा द्वितीयपक्षे परममूलोक्तलक्षणनिष्कर्षः । अत्रापि पूर्वोक्तप्रकारेणातिव्याप्तिपरिहारो बोध्यः । एवं साध्ये व्यापकत्वरूपाशेषत्वस्यान्वयस्वीकारेऽपि पर्वतो वह्निमान् धूमादित्यादिवाक्योक्तधूमादौ नासंभवरूपो दोषः, साधनतावच्छेदकसंबन्धेन साधनाश्रयाश्रितं यत्साधनव्यापकं साध्यं तत्सामानाधिकरण्यं व्याप्तिरिति तृतीयपक्षे परममूलोक्तलक्षणनिष्कर्षादिति । नन्वेवमपि घटो द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र विशिष्टसत्ताहेतोर्विशिष्टं शुद्धान्नातिरिच्यते इति न्यायेन शुद्धसत्ताभेदाभावेन हेत्वधिकरणगुणादौ द्रव्यत्वरूपसाध्याभावेन साधनव्यापकसाध्याभावाद्विशिष्टसत्तारूपसाधनेऽव्याप्तिरिति चेन्न । विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्ये गुणः सत्तावानिति प्रतीतिवद् गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीत्यापत्तिरूपदोषाद्विशिष्टसत्तायाः शुद्धसत्तातिरिक्तत्वमङ्गीकृत्यैतन्निष्कर्षाभिधानात् । विशिष्टसत्तायाः शुद्धसत्तानतिरिक्तत्वेऽपि विशिष्टसत्तानिरूपिताधिकरणतायाः शुद्धसत्तानिरूपिताधिकरणतातिरिक्तत्वाच्च । तथा च साधनशब्देन साधनतावच्छेदकावच्छिन्नसाधनस्य विवक्षितत्वात्साधनतावच्छेदकं गुणकर्मान्यत्वविशिष्टसत्तात्वं तदवच्छिन्नसाधनस्य गुणादावभावेन गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नसत्ताव्यापकं यद्द्रव्यत्वं. तत्सामानाधिकरण्यस्य विशिष्टसत्ताहेतौ सत्त्वान्नाव्याप्तिरिति भावः ॥

**शि० म०—यावत्साधनाश्रयाश्रितं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः । न च साध्यतावच्छेदकस्य वह्नित्वादेः साधनाश्रयमहानसाद्यनाश्रितत्वादिदमपि लक्षणं न युक्तमिति वाच्यम्, स्वाश्रयघटितपरंपरासंबन्धेन तस्य तद्वृत्तित्वात् ॥**

**म० प्र०**—नन्वेवमपि हेतोः साध्यस्य च व्यक्तीनां नानात्वेन पर्वतीयधूमवह्निव्यक्त्योः सामानाधिकरण्यस्य सत्त्वेऽपि महानसीयवह्निव्यक्त्या सह पर्वतीयधूमव्यक्तेः सामानाधिकरण्याभावात्पर्वतो वह्निमान् धूमादित्यादौ धूमादिहेतावव्याप्तिस्तदवस्थेत्यरुच्याऽऽह—**यावदिति** । साधनाधिकरणत्वव्यापकं स्वाश्रयाश्रयत्वसंबन्धेन साधनाश्रयाश्रितं च यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः । स्वं वह्नित्वादिकं तदाश्रयो वह्न्यादिस्तदाश्रयत्वं महानसादाविति संबन्धवाक्यार्थः । तथा च सत्त्वरूपसाधनाश्रयगुणादौ स्वाश्रयाश्रयत्वसम्बन्धेन द्रव्यत्वाभावात् घटो द्रव्यं सत्त्वादित्यादौ नातिव्याप्तिः । हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणत्वस्य विवक्षितत्वाद्धूमावयवानादाय पर्वतो वह्निमान् धूमादित्यादौ धूमादावव्याप्तेरुद्धाटनमपि न कार्य्यमिति । न चैवमपि विशिष्टं शुद्धान्नातिरिच्यते इति न्यायेन गुणकर्मान्यत्वविशिष्टसत्तायाः शुद्धसत्तायाश्च भेदाभावेन गुणकर्मणोः साधनाधिकरणत्वेऽपि स्वाश्रयाश्रत्वसंबन्धेन द्रव्यत्वत्वरूपसाध्यतावच्छेदकाभावेन साध्यतावच्छेदकद्रव्यत्वत्वे साधनाधिकरणत्वव्यापकत्वासत्त्वेन घटो द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ गुणकर्मान्यत्वविशिष्टसत्तादावव्याप्तिरिति वाच्यम् । साधनतावच्छेदकावच्छिन्नसाधनाधिकरणत्वव्यापकत्वस्य विवक्षितत्वात् । तथा च विशिष्टं शुद्धान्नातिरिच्यते इति न्यायेन गुणकर्मान्यत्वविशिष्टसत्तायाः शुद्धसत्तायाश्च भेदाभावेऽपि गुणकर्मान्यत्वविशिष्टसत्ताधिकरणत्वस्य शुद्धसत्ताधिकरणत्वस्य च भेदेन घटो द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ साधनतावच्छेदकं गुणकर्मान्यत्वमेव न तु शुद्धसत्तात्वं तदवच्छिन्नसाधनाधिकरणत्वस्य द्रव्यमात्रवृत्तित्वेन गुणकर्मवृत्तित्वाभावेन गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नसत्तारूपसाधनाधिकरणत्वव्यापकत्वस्य साध्यतावच्छेदकद्रव्यत्वत्वे सत्त्वेन गुणकर्मान्यत्वविशिष्टसत्तारूपसाधने नाव्याप्तिरिति । एवं दूषणान्तरपरिहारोऽपि कर्तव्य इत्यलमतिविस्तरेणेति । इदमपि=यावत्साधनाश्रयाश्रितमित्यादिवाक्योक्तमपि, स्वाश्रयघटितपरंपरासंबन्धेन=स्वाश्रयाश्रयत्वसंबन्धेन । स्वं वह्नित्वादिकं तदाश्रयो वह्न्यादिस्तदाश्रयत्वं महानसादाविति संबन्धवाक्यार्थः । तस्य=वह्नित्वादेः । तद्वृत्तित्वात्=महानसादिवृत्तिमत्त्वात् ॥

**सा च व्यभिचाराज्ञाने सति सहचारदर्शनेन गृह्यते । तच्च सहचारदर्शनं भूयो दर्शनं सकृद्दर्शनं वेति विशेषो नादरणीयः, सहचारदर्शनस्यैव प्रयोजकत्वात् ॥**

**शि० म०**—नन्वस्तु निरुक्ता व्याप्तिः, तथापि न तज्ज्ञानसंभवः, तद्ग्राहकाभावात् । न तावत्तर्कस्तद्ग्राहकः, तस्य व्याप्तिमूलकत्वेन तत्रापि तर्कापेक्षायामनवस्थानात् । व्याप्तिशून्यत्वे च तस्य प्रशिथिलमूलत्वेन तर्काभासतया व्याप्तिग्राहकत्वायोगात् । नापि सहचारज्ञानं व्याप्तिग्राहकम्, तद्धि न सकृद्दर्शनम्, सत्यपि तस्मिन् व्यभिचारज्ञाने व्याप्त्यग्रहात् । न च भूयस्सहचारज्ञानं तथा, सहचारज्ञानबाहुल्येऽपि पार्थिवत्वादौ लोहलेख्यत्वादिव्याप्त्यग्रहात् । ततश्च ग्राहकाभावात्

दुर्ज्ञेया व्याप्तिरित्याशङ्क्याह-**सा चेति** । व्यभिचाराज्ञाने इत्युपलक्षणं व्याप्यत्वादिविरहज्ञानाभावे सतीत्यपि द्रष्टव्यम् । न चैवं व्यभिचारिणि व्यभिचारज्ञानाभावदशायां सहचारज्ञानात् व्याप्तिग्रहः स्यादिति वाच्यम्, इष्टत्वात् । **सहचारदर्शनस्येति** । न चास्य सहचारज्ञानत्वेन कारणत्वे प्रमाणाभावः, अगृहीतसहचारस्य व्याप्तिग्रहाभावादन्वयव्यतिरेकाभ्यां तस्य हेतुत्वावधारणात् । न चैतावता तद्विशेषणज्ञानत्वेन हेतुः स्यादिति वाच्यम्, सहचारविशेष्यकप्रत्यक्षे तदभावात् । सिद्धान्ते विशेषणज्ञानस्य कारणत्वाभावाच्च ॥

म० प्र०—तथापि=निरुक्तव्याप्तिसंभवेऽपि, न तज्ज्ञानसंभवः=निरुक्तव्याप्तिसत्त्वं न संभवति, तद्ग्राहकाभावात्=निरुक्तव्याप्तिविषयकज्ञानजनकाभावात् । **न तावत्तर्कस्तद्ग्राहक इति** । धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यादित्याद्याकारकतर्को हि व्यभिचारशङ्कानिवृत्तिद्वारा निरुक्तव्याप्तिग्राहको नेत्यर्थः । तस्य=धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यादित्यादितर्कस्य, व्याप्तिमूलकत्वेन=आपाद्यनिरूपितापादकनिष्ठव्याप्तिग्रहमूलकत्वेन । तत्रापि=आपाद्यनिरूपितापादकनिष्ठव्याप्तिग्रहेऽपि, तर्कापेक्षायाम्=धूमो यदि वह्निजन्यः स्यात्तर्हि वह्निव्यभिचारी न स्यादित्यादितर्कापेक्षायाम्, व्याप्तिशून्यत्वे=तर्कस्यापाद्यनिरूपितापादकनिष्ठव्याप्तिप्रमामूलकत्वाभावे, प्रशिथिलमूलत्वेन=अदृढीभूतापाद्यापादकव्याप्तिभ्रममूलकत्वेन, तद्धि=साध्यसाधनयोः सहचारज्ञानं हि, तस्मिन्=साध्यसाधनयोः सहचारज्ञाने, तथा=हेतुनिष्ठव्याप्तिग्राहकम् । **व्याप्यत्वादीति** । अत्रादिपदेन व्यापकत्वं ग्राह्यं तथा च व्याप्त्याश्रयो व्याप्यो धूमादिस्तन्निष्ठव्याप्यत्ववह्न्यादिसाध्यनिष्ठव्यापकत्वाभावज्ञानाभावे सत्यपीत्यर्थः । एवं=व्यभिचाराज्ञानादिकालिकसहचारदर्शनस्य व्याप्तिग्राहकत्वे सति, व्यभिचारिणि=धूमवान्वह्नेरित्यादौ वह्न्यादौ, अस्य=व्यभिचाराज्ञानादिकालिकसहचारज्ञानस्य, कारणत्वे=व्याप्तिज्ञाननिरूपितकारणत्वे । न चेति प्रतिज्ञायां हेतुमाह-**अन्वयव्यतिरेकाभ्यामिति** । सति व्यभिचाराज्ञानादिकालिकसहचारदर्शने व्याप्तिग्रहः व्यभिचाराज्ञानादिकालिकसहचारदर्शनाभावे सति व्याप्तिग्रहाभाव इत्यन्वयव्यतिरेकाभ्यां तस्य व्यभिचाराज्ञानादिकालिकसहचारज्ञानस्य करणत्वनिश्चयादित्यर्थः । ननु कुत्र व्यतिरेकनिश्चय इत्याशङ्क्याह-**अगृहीतसहचारस्येति** । पुंस इति शेषः । एतावता=व्यभिचाराज्ञानादिकालिकसहचारज्ञानस्य व्याप्तिग्रहहेतुत्वनिश्चयेन, तत्=व्यभिचाराज्ञानादिकालिकसहचारज्ञानम् । **विशेषणज्ञानत्वेनेति** । सहचारनियमो व्याप्तिरित्याद्याकारकव्याप्तिविषयकविशिष्टबुद्धिं प्रति विशेषणज्ञानत्वेन हेतुः स्यान्न सहचारज्ञानत्वेन हेतुरित्यर्थः । **सहचारविशेष्यकप्रत्यक्षे** । धूमे वह्निनिरूपितव्याप्तिग्राहकसामानाधिकरण्यमित्याकारकप्रत्यक्षे वह्निधूमयोर्व्याप्तिग्राहकसामानाधिकरण्यमित्याकारकप्रत्यक्षे वा, तदभावात्=विशेषणज्ञानत्वाभावात्, विशेषणज्ञानत्वेन सहचारज्ञानस्य व्याप्तिज्ञाने कारणत्वाभावाद्वा । **कारणत्वाभावाच्चेति** । प्रत्यक्षात्मविशिष्टबुद्धिं प्रति विशेषणविशेष्योभयसन्निकर्षस्य हेतुत्वादिति भावः ॥

**तच्चानुमानमन्वयिरूपमेव न तु केवलान्वयि । सर्वस्यापि धर्मस्यास्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेन अत्यन्ताभावाप्रतियोगिसाध्यकत्वरूपकेवलान्वयित्वस्यासिद्धेः ॥**

शि॰ म॰—अनुमानं त्रिविधम्, केवलान्वयि केवलव्यतिरेक्यन्वयव्यतिरेकिभेदादिति नैयायिकादयः । तन्निराकरोति । **तच्चेति** । अनुमानविषयीभूतं लिङ्गमित्यर्थः । **सर्वस्येति** । सर्वस्य प्रपञ्चस्य "नेह नानाऽस्ति" इत्यादिना ब्रह्मणि निषेधावगमादिति भावः । **असिद्धेरिति** । अप्रसिद्धेरित्यर्थः ॥

म॰ प्र॰—अनुमानम्=अनुमितिकरणव्याप्तिज्ञानादिविषयो लिङ्गम् ॥

शि॰ म॰—अत्र ब्रूमः—स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वं साध्यस्य केवलान्वयित्वम् । तत्साधकत्वं केवलान्वयिलिङ्गलक्षणम् । प्रमेयत्वादेश्च स्वसमानाधिकरणपारमार्थिकत्वावच्छिन्नात्यन्ताभावप्रतियोगित्वेऽपि स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वात्केवलान्वयित्वम् । न च श्रुतिविरोधः, तस्या अपि पारमार्थिकत्वावच्छिन्नद्वैताभावपरत्वात् । तदुक्तमष्टमवर्णके विवरणाचार्यैः । आगमेन च द्वैतस्य तत्त्वांशबाधादिति । न च लक्षणे स्ववृत्तिविरोधीति व्यर्थं तस्याव्याप्यवृत्तिकपिसंयोगात्यन्ताभावादिसंग्रहार्थत्वात् । न च ब्रह्मणः स्वप्रकाशत्वेन तत्र स्वरूपेणापि प्रमेयत्वस्याभावात् कथं केवलान्वयित्वमिति वाच्यम्, ब्रह्मणोऽपि वृत्तिलक्षणप्रमाविषयत्वात् । न चैतावता स्वप्रकाशत्वविरोधः, अनुपहितस्यैव तथात्वात् । तथा चाहुराचार्यवाचस्पतिमिश्राः "सर्वोपाधिविहीनं हि स्वयंज्योतिरिति गीयते न तूपहितमपि" इति । अत एवाहुः—"न तावदयमेकान्तेनाविषयः" इति । न चैवमपि नाभिधेयत्वं केवलान्वयिब्रह्मणोऽनभिधेयत्वादिति वाच्यम्, ब्रह्मणो लक्ष्यतया वाच्यत्वाभावेऽपि पदजन्यज्ञानविषयत्वात्, वाच्यत्वस्याग्रे ग्रन्थकृता वक्ष्यमाणत्वाच्च । न चैवं प्रमेयत्वादिवृत्तिविरोधिनोऽप्रसिद्धत्वात्तत्र लक्षणाव्याप्तिः स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावप्रतियोगिनो घटादयः प्रसिद्धाः तदन्यत्वस्य प्रमेयत्वादावपि सत्त्वात् । न चायमभिधेयवान् द्रव्यत्वादित्यत्र केवलान्वयिलिङ्गलक्षणस्याव्याप्तिरिति वाच्यम् । तादृशात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वस्येह विवक्षितत्वात् । तस्माद्युक्तं द्रव्यत्वादेः केवलान्वयित्वमिति संक्षेपः ॥

म॰ प्र॰—**स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावप्रतियोगित्वमिति** । अत्र वृत्तिशब्देनाधेयता ग्राह्या । तथा च प्रमेयत्वादिवृत्तिविरोधिवृत्तिमत्प्रमेयत्वाद्यत्यन्ताभावाप्रसिद्ध्या स्वशब्देन घटादयो ग्राह्यास्तेषामाधेयताविरोधिवृत्तिमदत्यन्ताभावो घटादिशून्यदेशे घटाद्यत्यन्ता-

भावस्तत्प्रतियोगित्वं घटादावप्रतियोगित्वं प्रमेयत्वादाविति लक्षणसमन्वयः। वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमित्युक्ते कपिसंयोगात्यन्ताभावादीनामपि केवलान्वयित्वस्याभीष्टत्वेन लक्ष्यत्वात्कपिसंयोगाभावादिष्वव्याप्तिः स्याद्वृत्तिमदत्यन्ताभावः कपिसंयोगात्यन्ताभावाद्यभावस्तत्प्रतियोगित्वस्य कपिसंयोगाभावादौ सत्त्वात्तद्वारणाय **स्ववृत्तिविरोधीति** । तथा च स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावः कपिसंयोगात्यन्ताभावाद्यभावो नास्ति, कपिसंयोगात्यन्ताभावाद्यभावरूपकपिसंयोगाद्यधिकरणवृक्षादौ मूलाद्यवच्छेदेन कपिसंयोगाद्यत्यन्ताभावस्य सत्त्वात्, किंतु स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावो घटाद्यत्यन्ताभावस्तत्प्रतियोगित्वं घटादावप्रतियोगित्वं कपिसंयोगात्यन्ताभावादाविति कपिसंयोगात्यन्ताभावादौ केवलान्वयित्वमिति। गगनात्यन्ताभावादावव्याप्तिवारणाय **वृत्तिमदित्युक्तम्।** तथा च गगनात्यन्ताभावाद्यभावस्य गगनादिरूपत्वेन वृत्तिमत्त्वाभावेन तद्ग्रहणासंभवेन नाव्याप्तिरिति, तत्साधकत्वं=केवलान्वयिसाध्यविषयकानुमितिजनकत्वम् । श्रुतिविरोधः=प्रमेयत्वादीनां स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वे "एकमेवाद्वितीयं नेह नानाऽस्ति किंचन" इत्यादिश्रुतिविरोधः । तस्या अपि=अद्वैतश्रुतेरपि । **पारमार्थिकत्वावच्छिन्नेति** । पारमार्थिकत्वावच्छिन्नप्रतियोगिताकेत्यर्थः । आगमेन=नेह नानाऽस्ति किंचनेत्यादिश्रुत्या । **तत्त्वांशेति**=पारमार्थिकत्वांशेत्यर्थः । तस्य=स्ववृत्तिविरोधीति विशेषणस्य, तत्र=ब्रह्मणि । स्वरूपेणापि=प्रमेयत्वेनापि । एतावता=वृत्तिलक्षणप्रमाविषयत्वस्वीकारेण । स्वप्रकाशत्वविरोधः=इतराप्रकाश्यस्यैव स्वप्रकाशत्वेन स्वप्रकाशत्वानुपपत्तिः । तथात्वात्=स्वप्रकाशत्वात् । न चानुपहितब्रह्मणो वृत्त्यविषयत्वेन स्वरूपेण प्रमेयत्वाभावात्प्रमेयत्वस्य केवलान्वयित्वानुपपत्तिरूपपूर्वोक्तदोषस्तदवस्थः, शुद्धस्यापि वृत्तिविषयत्वस्वीकारे तु बहुसिद्धान्तभङ्गापत्तिरिति वाच्यम् । अनुपहितस्य ब्रह्मणोऽपि वृत्तिविषयत्वस्वीकारात् । न चैतावता स्वप्रकाशत्वविरोधस्तदवस्थ इति वाच्यम्, वृत्तिविषयत्वेऽपि वृत्तिप्रकाश्यत्वाभावादिति । **न तूपहितमपीतीति** । अस्य स्वयंज्योतिरिति गीयते इति पूर्वेणान्वयः । अयम्=सर्वोपाधिविहीनः । **एकान्तेनेति** । सर्वप्रकारेणाविषयो न, किंत्वनुपहितब्रह्मणो वृत्तिविषयत्वं फलचैतन्याविषयत्वमित्यर्थः । एवमपि=प्रमेयत्वस्य केवलान्वयित्वेऽपि । **विषयत्वादिति** । पदजन्यज्ञानविषयत्वमेवाभिधेयत्वमिति भावः । ननु शब्दशक्तिविषयत्वरूपाभिधेयत्वस्य शास्त्रे प्रसिद्धत्वेन पदजन्यज्ञानविषयत्वरूपमभिधेयत्वं न प्रसिद्धमित्याशङ्क्याह–**वाच्यत्वस्येति** । शब्दशक्तिविषयत्वस्येत्यर्थः । एवम्=प्रमेयत्वादीनां सर्वत्र स्वीकारेण, प्रमेयत्वादिवृत्तिविरोधिनः=प्रमेयत्वादिवृत्तिविरोधिवृत्तिमदत्यन्ताभावस्य । तत्र=प्रमेयत्वादौ, अव्याप्तिः=असंभवः । अयम्=पर्वतादिः । **अभिधेयवानिति** । अत्राभिधेयस्य साध्यत्वेनाभिधेया वाच्या ये रूपादयस्तद्वानित्यर्थः। **अव्याप्तिरिति**। स्वमभिधेयं स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावश्चालनीन्यायेन रूपादिस्वरूपतत्तदभिधेयाभावस्तत्प्रतियोगित्वस्याभिधेये सत्त्वादिति शेषः । **तादृशात्यन्ताभावेति** । तादृशात्यन्ताभावः स्ववृत्तिविरोधिवृत्तिमद्रूपादिस्वरूपतत्तदभिधेयात्यन्ताभाव-

स्तत्तत्प्रतियोगितावच्छेदकं तत्तदभिधेयत्वमनवच्छेदकमभिधेयत्वरूपसाध्यतावच्छेदकं तदवच्छिन्न-साध्यसाधकं द्रव्यत्वे इति लक्षणसमन्वयः। यत्किंचिदभिधेयाभावसत्वेऽप्यभिधेयत्वावच्छिन्नाभि-धेयाभावो नास्तीति नाव्याप्तिरिति भावः । इह=स्ववृत्तिविरोधीत्याद्युक्तवाक्ये ॥

**नाप्यनुमानस्य व्यतिरेकिरूपत्वं साध्याभावे साधनाभाव-निरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयो-गात् । कथं तर्हि धूमादावन्वयव्याप्तिमविदुषोऽपि व्यतिरे-कव्याप्तिज्ञानादनुमितिः ॥**

**शि० म०–व्यतिरेकिरूपत्वमिति** । व्यतिरेकव्याप्तिधीजन्यानुमितिकार-णत्वं व्यतिरेकित्वमित्यर्थः। **अनुपयोगादिति** । अन्यगतव्याप्तिज्ञानस्याप्या-न्यलिङ्गकानुमितिहेतुत्वे कृतकत्वानित्यत्वव्याप्तिज्ञानेन धूमाद्वह्न्यनुमित्यापत्तेरिति भावः। ननु व्यतिरेकव्याप्तिज्ञानमप्यनुमितिकरणं धूमादावन्वयव्याप्त्यज्ञानदशायां व्यतिरेकव्याप्तिज्ञाने पक्षधर्मताज्ञाने च सति सन्निकृष्टपर्वतादौ वह्निज्ञानस्यानुभू-यमानत्वात् । न चातिप्रसङ्गः, स्वगतव्याप्तिज्ञानवत्स्वाभावनिरूपितसाध्याभा-वनिष्ठव्याप्तिज्ञानस्यापि फलबलेनानुमितिहेतुत्वकल्पनादित्याशयेनाक्षिपति=**कथं-तर्हीति** ॥

म० प्र०–परममूले **व्यतिरेकिरूपत्वमिति** । केवलव्यतिरेकिरूपत्वमित्यर्थः । साधनेन हि साध्यमनुमीयतेऽनुमितौ च साध्यनिरूपितसाधननिष्ठव्याप्तिज्ञानमुपयुज्यते, न तु साध्याभावनिष्ठसाधनाभावनिरूपितव्याप्तिज्ञानमित्याह–परममूले **साध्याभावे इति** । वृत्तित्वं सप्तम्यर्थः । तथा च साध्याभावनिष्ठा या साधनाभावनिरूपिता व्याप्तिस्तज्ज्ञानस्येत्यर्थः । परममूले **साधनेनेति** । गन्धादिसाधनेन साध्यजन्या याऽनुमितिरितरभेदरूपसाध्यविषयिका याऽनुमितिरिति वा, तत्र साध्याभावनिष्ठसाधनाभावनिरूपितव्याप्तिज्ञानस्यानुपयोगात्करणत्वाभा-वादित्यर्थः । **व्यतिरेकव्याप्तिधीति** । गन्धाभावव्याप्य इतरभेदाभाव इत्याकारक-व्यतिरेकव्याप्तिधीजन्या पृथिवीतरेभ्यो भिद्यते इत्याकारिका याऽनुमितिस्तत्कारणत्वमित्यर्थः । अन्यगतव्याप्तिज्ञानस्यापि=साध्याभावगतव्याप्तिज्ञानस्यापि, अन्यलिङ्गकानुमितिहेतुत्वे=गन्धादिलि-ङ्गकानुमितिहेतुत्वे, कृतकत्वानित्यत्वव्याप्तिज्ञानेन=कृतकत्वमनित्यत्वव्याप्यमिति कृतकत्वनिष्ठा-नित्यत्वनिरूपितव्याप्तिज्ञानेन, अतिप्रसङ्गः=धूमाद्वह्न्यनुमित्यापत्तिरूपातिप्रसङ्गः । **स्वगतव्या-प्तिज्ञानवदिति** । स्वं हेतुस्तद्गता या व्याप्तिस्तज्ज्ञानस्य यथा धूमादिलिङ्गकानुमितौ हेतुत्वं तद्वदित्यर्थः । **स्वाभावेति**=हेत्वभावेत्यर्थः । फलबलेन=अनुमित्यात्मकका-र्यान्यथानुपपत्त्या ॥

**अर्थापत्तिप्रमाणादिति वक्ष्यामः ॥**

**शि० म०**–सत्यं व्यतिरेकव्याप्तिज्ञानाद्वह्निज्ञानमिति, तथापि न साऽनुमितिः क्लृप्तकारणाभावात् । किंत्वर्थापत्तिप्रमाणजन्यत्वादर्थापत्तिरित्याह–**अर्थापत्तीति**।

**वयं तु ब्रूमः। धूमादावन्वयव्याप्तिमविदुषोऽपि ततो वह्निज्ञानमित्यविवादं तच्चानुमितिरेव वह्निमनुमिनोमीत्यनुव्यवसायात्। न च क्लृप्तकारणस्य व्याप्तिज्ञानस्याभावात् कथमनुमितिरित्युक्तमिति वाच्यम्, व्यतिरेकव्याप्तिज्ञानस्य सत्त्वात्। नन्वस्तु व्यतिरेकव्याप्तिज्ञानं तथापि नानुमितिः,तस्यानुमित्यहेतुत्वात्। तथा हि तस्य न व्याप्तिज्ञानत्वेन हेतुत्वमतिप्रसङ्गात् नापि स्वाभावनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानत्वेन अन्वयव्याप्तिज्ञानस्यानुमित्यहेतुत्वापत्तेः। नापि स्वव्याप्तिज्ञानत्वेन, स्वव्यतिरेकव्याप्तिज्ञाने तदभावात्। न चान्यतरत्वं कारणतावच्छेदकम् तथा सत्येकप्रमाणपरिशेषापत्तेः। न च तृणारणिमणिन्यायेनानुमितिविशेषे तत्कारणमिति वाच्यम्। व्यतिरेकिसाध्यज्ञाने अनुमितित्वस्यैवासिद्धेः क्लृप्ततत्करणस्य व्याप्तिज्ञानस्याभावादिति चेत् न॥**

**म० प्र०**—सा=वह्निज्ञानरूपा बुद्धिः, क्लृप्तकारणाभावात्=हेतुगतव्याप्तिज्ञानरूपप्रसिद्धकारणाभावात्। परममूले **अर्थापत्तिप्रमाणादिति**। वक्ष्यमाणरीत्याऽर्थापत्तिप्रमाणस्यावश्यकतया व्यतिरेक्यनुमानस्य तदन्तर्भावसंभवेन तस्य पृथक् प्रामाण्याभ्युपगमो न युक्त इति भावः। ततः=धूमादिहेतुतः। **क्लृप्तेति**=निश्चितेत्यर्थः। व्याप्तिज्ञानस्य=अन्वयव्याप्तिज्ञानस्य। अन्वयव्याप्तिज्ञानस्यैव क्लृप्तप्रमाणत्वमसिद्धमित्यभिप्रेत्य न च वाच्यमिति प्रतिज्ञायां हेतुमाह—**व्यतिरेकेति**। तस्य=व्यतिरेकव्याप्तिज्ञानस्य, तस्य=व्याप्तिज्ञानस्य, अतिप्रसङ्गात्=कृतकत्वानित्यत्वव्याप्तिज्ञानेन धूमाद्वह्न्यनुमित्यापत्तिरूपातिप्रसङ्गात्। **स्वाभावेति**=हेत्वभावेत्यर्थः। नेति प्रतिज्ञायां हेतुमाह—**अन्वयव्याप्तीति**। साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तेर्हेतुनिष्ठत्वमभिप्रेत्य शङ्कते—**स्वव्याप्तिज्ञानत्वेनेति**। हेतुनिष्ठव्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्य हेतुत्वमित्यर्थः। तथा चान्वयव्याप्तिज्ञानस्यानुमित्यहेतुत्वापत्तिरूपो दोषो नेति भावः। साधनाभावनिरूपिता साध्याभावनिष्ठैव व्यतिरेकव्याप्तिर्न हेतुनिष्ठेत्यभिप्रेत्य नेति प्रतिज्ञायां हेतुमाह—**स्वव्यतिरेकव्याप्तिज्ञाने इति**। स्वं हेतुस्तस्य यो व्यतिरेकोऽभावस्तन्निरूपिता साध्याभावनिष्ठा या व्याप्तिस्तज्ज्ञाने तदभावादनुमितिहेतुत्वाभावापातादित्यर्थः। अन्यतरत्वम्=स्वव्याप्तिज्ञानत्वस्वव्यतिरेकनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानत्वान्यतरत्वम्। कारणतावच्छेदकम्=अनुमितिनिष्ठकार्य्यतानिरूपितव्याप्तिज्ञाननिष्ठकारणातावच्छेदकम्। तथा सति=स्वव्याप्तिज्ञानत्वस्वव्यतिरेकनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानत्वान्यतरत्वस्य कारणतावच्छेदकत्वस्वीकारे सति। **एकप्रमाणपरिशेषापत्तेरिति**। उक्तान्यतरत्वरूपकारणतावच्छेदकस्यैकत्वादेकमन्वयव्यतिरेकिरूपमनुमानप्रमाणं स्यान्न तु केवलान्वयिकेवलव्यतिरेक्यनुमानं प्रमाणं स्यादिति भावः। **तृणारणिमणिन्यायेनेति**। तृणजन्यत्वविशिष्टवह्निं प्रति तृणत्वेन कारणत्वमरणिजन्यत्वविशिष्टवह्निं प्रत्यरणित्वेन कारणत्वं मणिजन्यत्वविशिष्टवह्निं प्रति मणित्वेन कारणत्वमिति कार्यतावच्छेदकभेदेन यथा तृणादीनां तत्तद्वह्निं प्रति कारणत्वं तद्वत्स्वव्याप्तिज्ञानाव्यवहितोत्तरक्षणजाय-

मानानुमितिं प्रति स्वव्याप्तिज्ञानत्वेन हेतुत्वं स्वव्यतिरेकिनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानाव्यवहितोत्तरक्षणजन्यानुमितिं प्रति स्वव्यतिरेकनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानत्वेन कारणत्वमित्यनुमितिविशेषे तत्कारणं स्वव्याप्तिज्ञानं स्वाभावनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानं च कारणमित्यर्थः। तथा चोक्तप्रकारेण कार्य्यतावच्छेदकभेदेन कारणतावच्छेदकस्य भेदान्नैकप्रमाणपरिशेषापत्तिरिति भावः। व्यतिरेकिसाध्यज्ञाने=पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ केवलव्यतिरेकिहेतुजन्यसाध्यज्ञाने। उक्तज्ञानेऽनुमितित्वासिद्धौ हेतुमाह—**क्लृप्ततत्करणस्येति**। उभयवादिसंमतानुमितिकरणस्य। व्याप्तिज्ञानस्य=अन्वयव्याप्तिज्ञानस्य। **अभावादिति**। तथा च हेत्वभावनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानाव्यवहितोत्तरक्षणजन्यानुमितित्वरूपकार्य्यतावच्छेदकाभावेन स्वव्यतिरेकनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानत्वरूपकारणतावच्छेदकभेदाभावान्न व्यतिरेकिणः पृथक्प्रमाणत्वमिति भावः॥

**शि० म०—स्वव्यभिचारधीविरोधिधीविषयव्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्यानुमितिहेतुत्वात्। अस्य च व्यतिरेकव्याप्तिज्ञानसाधारणत्वात्, न हि धूमाभावो यावद्वह्न्यभावाधिकरणवृत्तिरिति ज्ञाने धूमो वह्न्यभावेन समानाधिकरण इति ज्ञानं संभवति। न चातिप्रसङ्गः, धूमो वह्निव्याप्य इति ज्ञानस्य कृतकत्वानित्यत्वव्यभिचारज्ञानाविरोधित्वेनानित्यत्वानुमितिहेतुत्वाभावात्॥**

म० प्र०—**स्वव्यभिचारधीति**। स्वं धूमादिहेतुस्तन्निष्ठा या व्यभिचारधीर्धूमादिर्वह्न्यादिसध्याभाववद्वृत्तिरित्याकारिका तस्या विरोधिधीर्वह्न्यादिसाध्याभाववद्वृत्तिर्धूमादिहेतुः साध्याभावव्यापकीभूताभावप्रतियोगिधूमादिहेतुर्वह्न्यादिसाध्याभावाधिकरणवृत्तिर्धूमादिहेत्वभाव इत्याद्याकारिका तस्या विषयो व्याप्तिस्तज्ज्ञानत्वावच्छिन्नव्याप्तिज्ञाननिष्ठकारणत्वादित्यर्थः। अस्य=स्वव्यभिचारधीविरोधिधीविषयव्याप्तिज्ञानत्वस्य, साधारणत्वात्=वृत्तित्वात्, इति ज्ञाने=इत्याकारके स्वव्यभिचारधीविरोधिधीविषयव्याप्तिज्ञाने सति, इति ज्ञानम्=इत्याकारकव्यभिचारज्ञानम्। **न चातिप्रसङ्ग इति**। धूमो वह्निव्याप्य इति व्याप्तिज्ञाने सति कृतकत्वहेतोरनित्यत्वविषयकानुमित्यापादनं न संभवतीत्यर्थः। **अनुमितीति**=कृतकत्वहेतुकानुमितीत्यर्थः॥

**शि० म०—नन्वनुमानस्य व्यतिरेकितयाऽपि प्रामाण्याभ्युपगमे तत्रैवार्थापत्तेरन्तर्भावापत्तौ सा पृथक् प्रमाणमिति राद्धान्तो भज्येतेति चेत्तर्ह्यनुमानस्य प्रामाण्ये संशयाद्युत्तरप्रत्यक्षस्थले चक्षुरादेः प्रामाण्यं न स्यात्तत्रानुमितिसामग्रीसत्त्वेनानुमितेरेवोत्पत्तेः। तथा शाब्दज्ञानस्थलेऽपि शब्दो न प्रमाणं स्यात्। एते पदार्थास्तात्पर्यविषयमिथःसंसर्गवन्तः आकाङ्क्षादिमत्पदकदम्बस्मारितत्वादित्यनुमानेनैव क्लृप्तप्रमाणभावेन तात्पर्यविषयसंसर्गप्रतीतिसंभवात्। यदि च स्थाणुं साक्षात्करोमि शब्दादमुमर्थं प्रत्येमीत्यनुभवबलात् प्रत्यक्षशब्दयोः पृथक् प्रामाण्यं तर्हि व्यतिरेकव्याप्तिज्ञानादिघटकानुमितिसामग्र्यां सत्यामपि वह्निज्ञानानन्तरं धूमेन वह्निं कल्प-**

यामीति यदाऽनुव्यवसायस्तदा धूमस्यार्थापत्तिविधया प्रामाण्यमिति तुल्यम् । यद्वा निरुपाधिव्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते इति व्यतिरेकिण्यप्यन्वयव्याप्तिज्ञानमेवानुमितिहेतुः । न चान्यसहचारज्ञानादन्यत्र व्याप्तिग्रहेऽतिप्रसङ्गः । स्वाधिकरणनिष्ठव्यभिचारज्ञानविरोधिसहचारज्ञानत्वेन तस्य व्याप्तिज्ञानहेतुत्वाभ्युपगमात् । न चैवं सत्यन्वयिव्यतिरेकिणोर्भेदो न स्यादिति वाच्यम् । व्यतिरेकसहचारमात्रज्ञानजन्यान्वयव्याप्तिधीर्यत्रानुमितिहेतुः स व्यतिरेकी । यत्रान्वयसहचारमात्रज्ञानजन्याऽनुमितिहेतुः सोऽन्वयी । यत्रोभयसहचारज्ञानजन्या सोऽन्वयव्यतिरेकीति विभागोपपत्तेः । अस्मिंश्च पक्षे यदाऽन्वयसहचारेणान्वयव्याप्तिस्फुरणं तदा धूमस्यान्वयितया गमकत्वम् । यदा व्यतिरेकसहचारेण तदा केवलव्यतिरेकितया, यदाऽन्वयव्यतिरेकसहचारेण तदाऽन्वयव्यतिरेकितया, यदा तु व्यतिरेकसहचारेण व्यतिरेकव्याप्तेरेव ज्ञानं तदाऽर्थापत्तिविधया धूमस्य प्रामाण्यम् । न च व्यतिरेक्यनुमानस्य पृथक् प्रमाणत्वेऽपसिद्धान्तः । मूलग्रन्थेषु शुक्तिरूप्यमिथ्यात्वादौ तत्र तत्र व्यतिरेक्यनुमानस्यापि प्रमाणत्वेनोपन्यासात् । तस्मात्त्रिविधमेवानुमानमिति युक्तमिति ॥

**म० प्र०–प्रमाण्येति**=प्रमाकरणत्वेत्यर्थः, तत्रैव–अनुमानप्रमाणे एव, सा=अर्थापत्तिः, प्रत्यक्षस्थले=प्रत्यक्षकाले प्रत्यक्षविषये वा । तत्र=संशयाद्युत्तरप्रत्यक्षविषये । एते पदार्थाः=दण्डेन गामानयेति वाक्यघटकपदानां दण्डकरणत्वगोकर्मत्वानयनकृतिरूपा अर्थाः । **तात्पर्य्येति** । कालिकसंबन्धमादायापादितसिद्धसाधनतावारणाय **तात्पर्य्यविषयेति** मिथःसंसर्गविशेषणम् । मिथःसंसर्गवन्तः=आधेयत्वस्वरूपनिरूपकत्वजनकत्वादिरूपसंसर्गवन्तः । पदकदम्बस्मारितत्वात्=दण्डादिपदसमूहजन्यपदार्थोपस्थितिविषयत्वात्, क्लृप्तप्रमाणभावेन=निश्चितप्रमाणत्वेन । **निरुपाधिव्यतिरेकेति** । निरुपाधिरुपाधिशून्यो यत्र वह्न्यभावस्तत्र धूमाभाव इति यो वह्न्यभावधूमाभावयोः सहचारस्तेनेत्यर्थः। धूमवान्वह्नेरित्यादौ धूमाभावादिवह्न्यभावाद्योर्यः सहचारः स तु उपाधिव्यभिचारितासंबन्धेन वह्निसंयोगाभावाद्युपाधिविशिष्टः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वमित्यस्य व्यापकव्यापकत्वे सति व्याप्याव्यापकत्वमित्यर्थकत्वात्तथा च यत्र वह्न्यभावस्तत्र वह्निसंयोगाभावो यथा जलह्रदे इति वह्निसंयोगाभावरूपोपाधेर्व्यापकवह्न्यभावव्यापकत्वेन साध्यव्यापकत्वम्। यत्र धूमाभावस्तत्र वह्निसंयोगाभावाभावो यथाऽयोगोलके इत्युक्तोपाधेः साधनाव्यापकत्वं व्यापकाभावाद्व्याप्याभावः व्यापकोपाधेरयोगोलकेऽभावाद्व्याप्यस्य वह्न्यभावस्याभावः । वह्न्यभावाभावो वह्निस्वरूपः । एवं चायोगोलके वह्न्यभावो नास्ति धूमाभावो वर्त्तते इति व्यभिचारोन्नायकतया व्यतिरेकसहचार उपाधिव्यभिचारितासंबन्धेनोपाधिमानिति भावः । **अन्वयव्याप्तिरेव गृह्यते इति** । वह्न्यभाववदवृत्तिर्धूम इत्याकारकस्य धूमो वह्निसमानाधिकरण इत्याकारकस्य वा ग्रहस्य विषयोऽन्वयव्याप्तिरेवेत्यर्थः । **व्यतिरेकिण्यपीति** । अन्वयव्याप्तिज्ञानमेव

व्यतिरेकिण्यपि व्यतिरेकिलिङ्गसाध्येऽप्यनुमितिहेतुरिति योजना। अथवा व्यतिरेकिण्यपि व्यतिरेकिहेतावपीत्यर्थः। **स्वाधिकरणेति**। स्वं व्याप्तिस्तदधिकरणं हेतुस्तन्निष्ठं तद्विषयकं धूमो वह्न्यभाववद्वृत्तिरित्याद्याकारकं यद्व्यभिचारज्ञानं तस्य विरोधि धूमो वह्निसमानाधिकरण इत्याकारकं धूमाभावो यावद्वह्न्यभावाधिकरणवृत्तिरित्याकारकं वा यत्सहचारज्ञानं तन्निष्ठज्ञानत्वेनेत्यर्थः। तस्य=सहचारज्ञानस्य। एवं सति=व्यतिरेकसहचारस्य अन्वयव्याप्तिग्राहकत्वे स्वीकृते सति। व्यतिरेकिलिङ्गस्याप्यन्वयव्याप्तिज्ञानद्वाराऽनुमितिहेतुत्वे स्वीकृते सतीति वा, यत्र=यस्मिन् हेतौ। एवमग्रेऽपि यत्रशब्दार्थो बोध्यः। **जन्येति**। अन्वयव्याप्तिधीरिति शेषः। एवमग्रेऽपि जन्याशब्दोत्तरं शेषो बोध्यः। अस्मिंश्च पक्षे=साध्याभावहेत्वभावसहचारेणाप्यन्वयव्याप्तिरेव गृह्यते इति पक्षे। अन्वयसहचारेण=अन्वयसहचारमात्रेण, गमकत्वम्=साध्यविषयकानुमितिजनकत्वम्। व्यतिरेकसहचारेण=साध्याभावसाधनाभावयोः सहचारेणैव। अस्यान्वयव्याप्तिस्फुरणमित्यनेनान्वयः। **केवलव्यतिरेकितयेति**। गमकत्वमिति शेषः। पृथक् प्रमाणत्वे=अन्वय्यनुमानाद्भिन्नप्रमाणत्वे, मूलग्रन्थेषु=शुक्तिरूप्यं मिथ्या दृश्यत्वाद्यन्नैवं तन्नैवं ब्रह्मवदित्यादिष्वाधुनिकाचार्य्यग्रन्थमूलभूतेषु प्राचीनाचार्य्यग्रन्थेषु। तत्र तत्र=तस्मिंस्तस्मिन् प्रकरणविशेषे, तस्मात्=नन्वस्तु व्यतिरेकव्याप्तिज्ञानमित्यादिग्रन्थेनोक्तदोषाणामभावात्॥

**अत एवानुमानस्य नान्वयव्यतिरेकिरूपत्वम्। व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वात्। तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम्। तत्र स्वार्थं तूक्तमेव। परार्थं तु न्यायसाध्यम्। न्यायो नाम अवयवसमुदायः॥**

**शि० म०—अतःशब्दार्थमाह—व्यतिरेकेति। अवयवसमुदाय इति। नन्वेवं न्यायजन्यवाक्यार्थज्ञानजनकवाक्यमवयवः तत्समुदायश्च न्याय इत्यन्योन्याश्रयः स्यादिति चेत् न, अनुमितिचरमकारणपक्षधर्मताज्ञानप्रयोजकशब्दज्ञानजनकवाक्यत्वस्यैवावयवलक्षणत्वादिति भावः॥**

म० प्र०—एवम्=अवयवसमुदायस्य न्यायत्वस्वीकारे सति। **न्यायजन्येति**। वह्निसंबन्ध्यभिन्नः पर्वत इत्यादिः पर्वतो वह्निमानित्यादिप्रतिज्ञावाक्यार्थबोधः। धूमीयज्ञानज्ञाप्यत्वमित्यादिर्धूमादिहेतुवाक्यार्थबोधः। वीप्सायास्तात्पर्यग्राहकतया वह्निपदस्य धूमव्यापकवह्नौ लक्षणया धूमसंबन्ध्यभिन्नधूमव्यापकवह्निसंबन्ध्यभिन्न इत्यादिर्यो यो धूमवान्स सोऽग्निमानित्याद्युदाहरणवाक्यार्थबोध इत्येवं प्रतिज्ञादिवाक्यैः खण्डवाक्यार्थबोधः। ततः प्रतिज्ञाद्युदाहरणान्ता अवयवा इति पक्षे वाक्यैकवाक्यतया धूमज्ञानज्ञाप्यवह्निसंबन्ध्यभिन्नधूमसंबन्ध्यभिन्नधूमव्यापकवह्निसंबन्ध्यभिन्नः पर्वत इत्याकारकं महावाक्यरूपन्यायजन्यं यद्वाक्यार्थज्ञानमुदाहरणादिनिगमनान्ता अवयवा इति पक्षे तु धूमसंबन्ध्यभिन्नो धूमव्यापकवह्निसंबन्ध्यभिन्न इत्यादिर्यो यो धूमवान् स सोऽग्निमानित्याद्युदाहरणवाक्यार्थबोधः। धूमसंबन्ध्यभिन्नः पर्वत इत्यादिस्तथा चायमित्युपनयवाक्यार्थबोधः। पक्षवृत्तिधूम-

ज्ञानज्ञाप्यवह्निसंबन्ध्यभिन्न इत्यादिस्तस्मात्तथेति निगमनवाक्यार्थबोध इत्येवमुदाहरणादिनिगमनान्त-वाक्यैः खण्डवाक्यार्थबोधस्ततो वाक्यैकवाक्यतया धूमसंम्बन्ध्यभिन्नधूमव्यापकवह्निसंबन्ध्यभिन्न-धूमसंबन्ध्यभिन्नपक्षवृत्तिधूमज्ञानज्ञाप्यवह्निसंबन्ध्यभिन्नपर्वत इत्याकारकं महावाक्यरूपन्यायजन्यं च यद्वाक्यार्थज्ञानमवान्तरवाक्यार्थज्ञानस्य महावाक्यार्थबोधहेतुत्वात्तज्जनकत्वे सति वाक्यत्वं प्रतिज्ञा-दिष्वस्तीति लक्षणसमन्वय इत्यर्थः । इतीति=इत्याकारकतल्लक्षणसत्त्वादित्यर्थः । स्वज्ञाने स्व-ज्ञानापेक्षात्वस्वरूपात्माश्रयः स्पष्ट एवेत्यभिप्रेत्याह-**अन्योन्याश्रय इति** । अवयवलक्षणस्य न्यायघटितत्वेनावयवसमुदायरूपन्यायज्ञानसत्त्वे न्यायजन्यवाक्यार्थज्ञानजनकवाक्यरूपावयवज्ञानं न्यायलक्षणस्यावयवघटितत्वेन न्यायजन्यवाक्यार्थज्ञानजनकवाक्यरूपावयवज्ञानसत्त्वेऽवयवसमुदाय-रूपन्यायज्ञानसत्त्वमित्यन्योऽन्याश्रय इत्यर्थः । **अनुमितिचरमकारणेति** । अनुमितेश्चरम-कारणं यद्धूमवान्पर्वत इत्याकारकं पक्षधर्मताज्ञानं तस्य प्रतिज्ञाद्युदाहरणान्ता अवयवास्त्रय इति पक्षे परंपरया साक्षाद्वा जनकानि यानि वह्निसंबन्ध्यभिन्नः पर्वतः धूमीयज्ञानज्ञाप्यत्वं धूमसंबन्ध्य-भिन्नः धूमव्यापकवह्निसंबन्ध्यभिन्न इत्याकारकाणि शाब्दज्ञानानि । उदाहरणादिनिगमनान्तास्त्रयो-ऽवयवा इति पक्षे तु धूमसंबन्ध्यभिन्नः धूमव्यापकवह्निसंबन्ध्यभिन्नः धूमसंबन्ध्यभिन्नः पर्वतः पक्ष-वृत्तिधूमज्ञानज्ञाप्यवह्निसंबन्ध्यभिन्न इत्याकारकाणि पक्षधर्मताज्ञानजनकानि यानि शाब्दज्ञानानि तज्जनकत्वे सति वाक्यत्वं प्रतिज्ञादिवाक्येष्वस्तीत्यर्थः ॥

**अवयवाश्च त्रय एव प्रतिज्ञाहेतूदाहरणरूपा उदाहरणोपनय-निगमनरूपा वा ॥**

**शि० म०**—तर्ह्यवयवत्रितयपक्षे प्रतिज्ञोदाहरणनिगमनरूपाः हेतूदाहरणप्रतिज्ञा-रूपाश्च किमवयवाः किं तत्समुदायोऽपि न्याय इति नेत्याह—**प्रतिज्ञेति** । उक्तरू-पाणामुक्तक्रमाणामेव कथकसंप्रदायसिद्धत्वात् नान्ये भिन्नक्रमाश्च न तेऽप्यवयवा इति भावः । **उदाहरणेति** । अत्रेदं प्रतिभाति । न युक्तमवयवत्रयस्योदाहरणा-दित्वम् विप्रतिपत्त्यनन्तरं शब्दानित्यत्वे प्रमाणं वदेति तटस्थस्य वादिनो वा आका-ङ्क्षायां प्रथमं साध्यनिर्देशस्यैव कर्तुमुचितत्वात् । अन्यथोपनय एव प्रथमं किं न स्यात्, अनुमित्युपयोगिज्ञानजनकत्वेनाविशेषात् । यदि च पक्षधर्मतायाः प्रथमम-नाकाङ्क्षितत्वेन तदभिधानस्याऽप्राप्तकालत्वापत्तेर्न तत्प्रदर्शकोपनयस्य प्राथम्यं तदा व्याप्तेरपि साध्यनिर्देशात्प्रागनाकाङ्क्षितत्वान्नोदाहरणस्यापि प्राथम्यमिति तुल्यम् । एतेनोदाहरणोपनयात्मकद्व्यवयवमेव युक्तम्, अनुमित्यौपयिकव्याप्तिपक्ष-धर्मताज्ञानयोरवयवद्वयेनैव सिद्धेरिति सौगतमतमपास्तम् । प्रथमं साध्यनिर्देशाभावे व्याप्त्यभिधानस्याप्राप्तकालत्वादिति ॥

**म० प्र०**—उक्तरूपाणाम्=प्रतिज्ञाहेतूदाहरणरूपाणाम् । अनेन प्रतिज्ञोदाहरणनिगमनरूपाणां त्रयाणां व्युदासः, उक्तक्रमाणाम्=उक्तानुपूर्वीकाणाम । अनेन हेतूदाहरणप्रतिज्ञारूपाणामवयवानां

व्युदासः, कथकसंप्रदायसिद्धत्वात्=प्राचीनाचार्य्यपथेन निश्चितत्वात् । **नान्य इति**। ये प्रतिज्ञोदाहरणनिगमनरूपा अन्ये तेऽप्यवयवा न, ये भिन्नक्रमा हेतूदाहरणप्रतिज्ञारूपाश्च तेऽप्यवयवा नेत्यर्थः । अत्र=अवयवाश्च त्रय इति पक्षे, विप्रतिपत्त्यनन्तरम्=संदिग्धोऽर्थो विचार्य्यते इति न्यायाद्विचारप्रयोजकसंशयोत्थापक 'पर्वतो वह्निमान् तदभाववान् वा' इत्याद्याकारकविरुद्धार्थप्रतिपादकशब्दात्मकविप्रतिपत्त्यनन्तरम्, अन्यथा=प्रथमं साध्यनिर्देशानङ्गीकारे, किंतु प्रथममुदाहरणनिर्देशस्वीकारे इति यावत् । **अनुमित्युपयोगिज्ञानजनकत्वेनाविशेषादिति** । अनुमित्युपयोगिज्ञानं व्याप्तिज्ञानं पक्षधर्मताज्ञानं च तदन्यतरजनकत्वस्योदाहरणोपनयान्यतरस्य तुल्यत्वादुपनयस्य च प्रथममुपन्यासः स्यादिति भावः । अप्राप्तकालत्वापत्तेः=शब्दत्वाच्छब्दो नित्यः इत्यादिवदवयवानां व्युत्क्रमेण कथनरूपाप्राप्तकालत्वापत्तेः । **तत्प्रदर्शकेति**=हेतुनिष्ठपक्षधर्मताविषयकज्ञानजनकेत्यर्थः । एतेन=वक्ष्यमाणहेतुना । **औपयिकेति**=उपायभूतेत्यर्थः ॥

**न तु पञ्चावयवरूपाः, अवयवत्रयेणैव व्याप्तिपक्षधर्मतयोरुपदर्शनसंभवेनाधिकावयवद्वयस्य व्यर्थत्वात् ॥**

**शि०म०–**अक्षपादीयानां मतं निरस्यति–**न तु पञ्चावयवरूपा इति**। अत्र च पक्षतावच्छेदकसाध्यसामानाधिकरण्यपरत्वे सति न्यायावयवत्वमुदाहरणप्रयोजकाकाङ्क्षाजनकशाब्दज्ञानजनकवाक्यत्वं व्याप्तिपरन्यायावयवत्वं पक्षधर्मतोपदर्शकत्वे सति हेतुभिन्नन्यायावयवत्वमुपनयवाक्यधीजन्यसाध्याकाङ्क्षानिवर्तकवाक्यत्वं प्रतिज्ञाहेतूदाहरणोपनयनिगमनानां क्रमेण लक्षणं बोध्यम् । किमुपनयस्य व्याप्तेः प्रदर्शनं प्रयोजनम्, उत पक्षधर्मतायाः, आहो व्याप्तिविशिष्टपक्षधर्मताज्ञानम् । नान्त्यः, लिङ्गपरामर्शकारणत्वस्य निराकृतत्वेन व्याप्तिविशिष्टपक्षधर्मताप्रतिपादनस्य व्यर्थत्वात् । आद्यद्वितीयौ दूषयति–**अवयवत्रयेणेति** । यद्यप्युदाहरणहेतुभ्यामेव व्याप्तिपक्षधर्मतयोः दर्शनं तथापि प्रतिज्ञाया अप्याकाङ्क्षाद्वारा व्याप्त्युपदर्शनप्रयोजनतया तदभिप्रायेणावयवत्रयेणेत्युक्तम् ॥

म० प्र०–अत्र=पञ्चावयवा इति पक्षे । **पक्षतावच्छेदकेति** । पक्षतावच्छेदकं पर्वतत्वादिकं तेन सह यत्साध्यस्य वह्न्यादेः सामानाधिकरण्यं तद्बोधकत्वे सति पञ्चावयवसमुदायरूपन्यायावयवत्वमित्यर्थः । हेत्वाद्यवयवेष्वतिव्याप्तिवारणाय सत्यन्तम् । पर्वतत्वसमानाधिकरणो वह्निरित्यादिवाक्ये उदासीनप्रतिज्ञावाक्ये चातिव्याप्तिवारणाय प्रथमान्तमिति । **न्यायावयवत्वमिति** । इत ऊर्ध्वं प्रतिज्ञावाक्यत्वमित्यस्य शेषः कार्य्यः । **उदाहरणेति**। धूमज्ञानजन्यज्ञानविषयवह्निमदभिन्नः पर्वत इत्याद्याकारकशाब्दज्ञाने सति कुतो धूमादेर्गमकत्वमित्याकाङ्क्षायामुदाहरणवाक्यस्य प्रयोगो भवतीत्युदाहरणवाक्यस्य प्रयोजिका परंपरया कारणीभूता या कुतो धूमादेर्गमकत्वमित्याकारिका आकाङ्क्षा तज्जनकं धूमज्ञानजन्यज्ञानविषयवह्निमदभिन्नः पर्वत इत्या-

द्याकारकं यच्छाब्दज्ञानं तज्जनकवाक्यत्वं धूमादीत्यादिहेतुवाक्येऽस्तीत्यर्थः। वाक्यत्वं=हेतुवाक्यत्वमिति शेषः। **व्याप्तिपरन्यायावयवत्वमिति**। व्याप्तिविषयकबोधजनकत्वे सति न्यायावयवत्वमुदाहरणवाक्यत्वमित्यर्थः। **पक्षधर्मतेति**।प्रतिज्ञादिष्वतिव्याप्तिवारणाय सत्यन्तम्, हेतुवाक्ये सति पक्षधर्मताज्ञानं भवतीति परंपरया पक्षधर्मतोपदर्शकत्वाद्धेतुवाक्येऽतिव्याप्तिवारणाय **हेतुभिन्नेति। अवयवत्वमिति**। उपनयवाक्यत्वमिति शेषः। **उपनयवाक्यधीति**। तथा चायमित्याकारकं यदुपनयवाक्यं तदर्थविषयिका या धूमवान्पर्वत इत्याकारिका धीस्तज्जन्यायाः कथं धूमादिना पक्षे साध्यं सिध्यतीत्याकारिकसाध्याकाङ्क्षाया निवर्त्तकवाक्यत्वं निगमनवाक्यत्वमित्यर्थः। **पक्षधर्मताया इति**। अस्य प्रदर्शनं प्रयोजनमिति पूर्वेणान्वयः, आहो=अथवा। **ज्ञानमिति**। अस्य प्रयोजनमिति पूर्वेणान्वयः। ननूदाहरणेन व्याप्तिज्ञानं हेतुवाक्येन तु पक्षधर्मताज्ञानमित्यवयवद्वयेनैव व्याप्तिपक्षधर्मतयोरुपदर्शनसंभवेन प्रतिज्ञया व्याप्तिपक्षधर्मतयोरुपदर्शनसंभवेन च परममूलेऽवयवत्रयेणैवेत्युक्तिरनुपपन्नेत्याशङ्क्याह—**यद्यपीति। प्रतिज्ञाया अप्याकाङ्क्षाद्वारेति**। शब्दोऽनित्य इत्यादिप्रतिज्ञाया अपि कुत इति हेतुविषयकाकाङ्क्षाद्वारा किंवदित्युदाहरणविषयकाकाङ्क्षाद्वारा च व्याप्त्युपदर्शनप्रयोजनकतयेत्यर्थः। तदभिप्रायेण=व्याप्त्युदपर्शनप्रयोजनकत्वाभिप्रायेण॥

शि०म०—नन्वेवमप्यबाधितत्वासत्प्रतिपक्षितत्वयोः प्रतिज्ञयाऽनुपदर्शितत्वात्, तत्प्रदर्शनाय निगमनमिति चेत्, न तावन्निगमनमनुमितिप्रतिबन्धकबाधज्ञानविधूननाय, अनुमित्युपयोगिज्ञानस्यैवावयवप्रयोजनत्वात्। अन्यथा तत्प्रतिबन्धककामिनी जिज्ञासादिनिरासायावयवान्तराभ्युपगमापत्तेः। नापि तदुपयोगिज्ञानाय बाधाभावज्ञानस्यानुमितिकारणत्वम् मानाभावात्। बाधज्ञानप्रतिबन्धकत्वस्य तदभावकारणत्वेनैवोपपत्तेः। किंच न निगमनमनुमित्युपयोगिज्ञानजनकम्, साध्याभावप्रमा बाध इति पक्षे तदभावस्य पदवाक्यार्थभिन्नतया निगमनाप्रतिपाद्यत्वात्। साध्याभावो बाध इति पक्षे च तदभावस्य साध्यरूपतया तज्ज्ञानस्य साध्यनिश्चयपर्य्यवसन्नत्वेनानुमित्यहेतुत्वात्। अन्यथाऽनुमितिवैयर्थ्यात्। किंच निगमनस्य साध्यनिर्देशकतया साध्यलक्षणबाधाभावज्ञापकत्वे प्रतिज्ञाया अपि साध्यप्रतिपादकत्वेन निगमनवैयर्थ्यात्। सिद्धत्वेन साध्यप्रतिपादकत्वाभावात् नैतया बाधविधूननमित्येतन्निगमनेऽपि तुल्यम्। लक्षणया सिद्धवह्निबोधकत्वं च प्रतिज्ञायामपि समानम्। किंच निगमनस्य सिद्धत्वेन रूपेण वह्निबोधकत्वे तस्मादिति हेत्वन्वयानुपपत्तिः। हेत्वन्वयानन्तरं साध्ये सिद्धत्वान्वयबोधकत्वे वह्निमत्पदस्यावृत्त्यापत्तिः। न चेष्टापत्तिस्तस्मादित्यंशाभावेन तस्य वाक्यान्तरतया अवयवान्तरत्वापत्तेः। तस्मान्नाबाधितत्वज्ञानं निगमनप्रयोजनम्। अत एव नासत्प्रतिपक्षत्वबोधनमपि तत्प्रयोजनं तस्यात्यन्तमपदार्थत्वादिति दिक्॥

म० प्र०—एवमपि=उपनयस्य व्यर्थत्वेऽपि । अबाधितत्वासत्प्रतिपक्षितत्वयोः=हेतुनिष्ठयोरबाधितसाध्यकत्वासत्प्रतिपक्षितत्वयोः । तत्प्रदर्शनाय=हेतुनिष्ठाबाधितसाध्यकत्वासत्प्रतिपक्षितत्वबोधनाय । अनुमित्युपयोगिज्ञानस्य=अवयववाक्यजन्यव्याप्तिपक्षधर्मताज्ञानस्य, अन्यथा=निगमनवाक्यस्यानुमितिप्रतिबन्धकबाधज्ञाननिवृत्तिफलकत्वस्वीकारे । **तत्प्रतिबन्धकेति**=अनुमितिप्रतिबन्धकेत्यर्थः । तदुपयोगिज्ञानाय=अनुमित्युपयोगिबाधाभावज्ञानाय. निगमनम् । ननु बाधाभावज्ञानस्य कारणत्वानङ्गीकारे बाधज्ञानस्य प्रतिबन्धकत्वमेव न स्यादित्याशङ्क्याह—**बाधज्ञानेति**। तदभावकारणत्वेनैव=बाधज्ञानाभावस्यानुमितिकारणत्वेनैव बाधज्ञाननिष्ठानुमितिप्रतिबन्धकत्वोपपत्तेरित्यर्थः । स्वरूपसन्नेव बाधज्ञानाभावोऽनुमितिकारणं न तु बाधज्ञानाभावज्ञानमनुमितिकारणमिति बाधज्ञानाभावस्यानुमितिकारणत्वेनैव बाधज्ञानस्य कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वोपपत्तिरिति भावः। इदानीं बाधाभावज्ञानस्यानुमितिकारणत्वमभ्युपेत्य निगमनस्य बाधाभावज्ञानजनकत्वं खण्डयति—**न निगमनमिति**। अनुमित्युपयोगिज्ञानजनकम्=अनुमित्युपयोगिबाधाभावविषयकज्ञानजनकम् । तदभावस्य=साध्याभावविषयकप्रमाऽभावस्य । तदभावस्य=साध्याभावाभावस्य । तज्ज्ञानस्य=साध्याभावाभावज्ञानस्य । पर्य्यवसन्नत्वेन=स्वरूपत्वेन। **अहेतुत्वादिति** ।सिद्धेरनुमितिप्रबन्धकत्वेन साध्याभावाभावज्ञानस्यानुमितेरहेतुत्वमिति भावः । अन्यथा=निगमनस्य साध्याभावाभावरूपसाध्यनिश्चयजनकत्वे, अनुमितिवैयर्थ्यात्=साध्यज्ञानमेव प्रतिज्ञादीनां प्रयोजनं तत्तु निगमनवाक्येनैवोत्पन्नमिति निगमनेतरानुमितिकारणीभूतप्रतिज्ञादीनां वैयर्थ्यात् । साध्यनिर्देशकतया=साध्यविषयकबोधजनकतया । **साध्यलक्षणेति**=साध्यस्वरूपेत्यर्थः । **वैयर्थ्यादिति** । निगमनमनुमित्युपयोगिज्ञानजनकं नेति शेषः । ननु प्रतिज्ञा हि साध्यत्वेन साध्यविषयकबोधं जनयति न निश्चितत्वेन साध्यविषयकबोधं जनयतीति प्रतिज्ञया बाधविधूननं न सम्भवति, निगमनवाक्यं तु निश्चितत्वेन साध्यविषयकबोधं जनयतीति निगमनेन बाधविधूननं सम्भवतीति न प्रतिज्ञावाक्येन निगमनवाक्यवैयर्थ्यमित्याशङ्क्याह—**सिद्धत्वेनेति** । **अभावादिति** । प्रतिज्ञाया इति शेषः । एतया=प्रतिज्ञया, इत्येतत्=बाधानाशकत्वम् । **तुल्यमिति** । निगमनवाक्यस्यापि सिद्धत्वेन साध्यप्रतिपादकत्वाभावादिति शेषः । ननु निगमनवाक्यस्य स्वघटकतथापदलक्षणया सिद्धत्वेन वह्निविषयकबोधजनकत्वमस्ति प्रतिज्ञायास्तु सिद्धत्वेन वह्निविषयबोधजनकत्वं नास्तीति न प्रतिज्ञावाक्येन निगमनवाक्यस्य वैयर्थ्यमित्यत आह—**लक्षणयेति** । सिद्धत्वेन=निश्चितत्वेन । **तस्मादिति हेत्वन्वयानुपपत्तिरिति** । तस्मादित्याकारको यो हेतुस्तस्य हेतोः साध्यवह्न्यादान्वयो न स्याद्वह्न्यादिसाध्यबोधकपदस्य निराकाङ्क्षत्वादित्यर्थः। वह्निमत्पदस्य=वह्निमद्बोधकतथेति पदस्य । तस्य वह्निमद्बोधकद्वितीयतथेतिपदस्य । अतएव=वक्ष्यमाणहेतोरेव, तस्य=हेतुनिष्ठासत्प्रतिपक्षत्वस्य ॥

**एवमनुमाने निरूपिते तस्माद्ब्रह्मभिन्ननिखिलप्रपञ्चस्य मिथ्यात्वसिद्धिः ॥**

शि० म०—एवं सप्रपञ्चमनुमानप्रामाण्यं निरूपितम्, संप्रति तन्निरूपणस्य प्रयोजनमाह—**एवमिति । मिथ्यात्वसिद्धिरिति** । शास्त्रीयविषयप्रयोजनसिद्धिहेतुत्वात्प्रपञ्चमिथ्यात्वसिद्धिरनुमाननिरूपणस्य प्रयोजनमिति भावः ॥

म०प्र०—प्रामाण्यं=प्रमाकरणत्वम् । तन्निरूपणस्य=अनुमानप्रमाणनिरूपणस्य । ननु प्रपञ्चमिथ्यात्वसिद्धेरनुमानप्रमाणप्रयोजनत्वं न संभवत्यानन्दावाप्तेर्दुःखनिवृत्तेश्च शास्त्रसिद्धप्रयोजनत्वादित्याशङ्क्य प्रपञ्चमिथ्यात्वसिद्धेः प्रयोजनसिद्धिहेहेतुत्वेन प्रयोजनत्वमभिप्रेत्याह—**शास्त्रीयेति** । प्रपञ्चमिथ्यात्वसिद्धावैक्यज्ञानद्वाराऽऽनन्दावाप्तिर्दुःखनिवृत्तिश्च सम्भवतीति परंपरयाऽनुमानप्रमाणस्य तदेव प्रयोजनमिति भावः ॥

तथा हि ॥

शि० म०—ननु प्रपञ्चो मिथ्या दृश्यत्वाच्छुक्तिरूप्यवदित्यनुमानान्न तन्मिथ्यात्वसिद्धिः । तत्र हि न तावत्प्रपञ्च इति पक्षनिर्देशः प्रपञ्चशब्देन ब्रह्मणोऽप्यभिधानेन तस्यापि पक्षत्वापत्तौ बाधाद्यापत्तेः । न च सर्वे विकारा इति तन्निर्देशः, परमते वियदादेः सिद्धान्ते चाविद्यासंबन्धादेरविकारतया पक्षबहिर्भावापत्तेः । शुक्तिरूप्यादेरपि पक्षत्वेनांशतः सिद्धसाधनाच्च । किंच मिथ्यात्वं न तावत्स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वम्, तथात्वस्य संयोगादौ सर्वैः परैरभ्युपगमात् । न चाविद्याकार्य्यत्वम्, अविद्यादावव्याप्तेः । नापि ज्ञाननिवर्त्यत्वम्, सत्यस्यापि प्रपञ्चस्य परैरपि ईश्वरज्ञाननिवर्त्यत्वाङ्गीकारात् । अनिर्वचनीयत्वं मिथ्यात्वमिति चेत् न, विकल्पासहत्वात् । तथा हि । न तावत्सद्विलक्षणत्वमनिर्वचनीयत्वम्, असतोऽपि शशविषाणादेरमिथ्यात्वात् । नाप्यसद्विलक्षणत्वम्, ब्रह्मण्यतिव्याप्तेः, अस्य सत्यत्वाविरोधाच्च । न च सदसद्भिन्नत्वम्, सदसद्रूपप्रतियोग्यप्रसिद्धेः, वस्तुनः सदसदन्यतरनियमेन उभयभिन्नत्वासंभवाच्च । अत एव न सत्त्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वमनिर्वचनीयत्वम्, निर्धर्मके ब्रह्मण्यतिव्याप्तेः । किंच दृश्यत्वं नाम न तावज्ज्ञानलक्षणफलव्याप्यत्वम्, अतीन्द्रियेषु तदभावेन भागासिद्धेः । नापि वृत्तिविषयत्वम्, स्वप्रकाशस्यापि ब्रह्मणो वृत्तिविषयत्वाभ्युपगमेन व्यभिचारात् । एतेन कार्य्यत्वविभक्तत्वादयो हेतवो निरस्ताः । तस्मान्नानुमानात्प्रपञ्चमिथ्यात्वसिद्धिरित्याशङ्क्याह—**तथा हीति** ॥

म०प्र०—प्रपञ्चशब्देन=समुदायवाचकप्रपञ्चशब्देन । **बाधादीति** । अत्रादिपदेन स्वरूपासिद्ध्यादेर्ग्रहणमिति । विकाराः=जन्याः, इति=इत्यस्य, तन्निर्देशः=प्रपञ्चशब्देन निर्देशः । यद्वा इति=अनेन शब्देन, तन्निर्देशः=पक्षनिर्देश इत्यर्थः । अविकारतया=अजन्यतया । **सिद्धसाधनाच्चेति** । वस्तुतस्तु पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरङ्गीकारान्न सिद्धसाधनमिति बोध्यमिति । **स्वसंसृज्यमानेति** । मिथ्यावस्तु-

संबद्धेत्यर्थः । तथात्वस्य=स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वस्य । **संयोगादाविति** । अत्रादिपदेन विभागादीनामव्याप्यवृत्तीनां सर्वेषां ग्रहणम् । तथा च परमते संयोगादिषु पूर्वोक्तमिथ्यात्वं सत्यत्वं चास्तीति सत्यत्वविरोधिमिथ्यात्वं न सिध्यतीति भावः । असतः=सद्भिन्नलक्षणस्य । सदसद्भिन्नत्वम्—सदसत्प्रतियोगिकभेदवत्त्वम् । सदसदन्यतरनियमेन=सदसदन्यतरस्वरूपत्वनियमेन । अत एव=वक्ष्यमाणहेतोरेव । निर्धर्मके=पारमार्थिकधर्मशून्ये । ज्ञानलक्षणफलव्याप्यत्वम्=इन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्यविषयत्वम् । अतीन्द्रियेषु=धर्माधर्मादिषु । तदभावेन=इन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्यलक्षणफलविषयत्वाभावेन । एतेन=भागासिद्ध्यादिदोषसत्त्वेन ॥

**ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वाद्यदेवं तदेवं यथा शुक्तिरूप्यम् ॥**

**शि० म०—ब्रह्मभिन्नमिति** । अत्र च ब्रह्मणः पक्षत्ववारणायोक्तं ब्रह्मभिन्नमिति । सिद्धसाधनवारणाय **सर्वपदम्** । तथा च शुक्तिरूप्यादौ ब्रह्मभिन्नत्वेन साध्यसिद्धावपि सर्वस्यापि ब्रह्मभिन्नत्वेन तदसिद्धेर्न सिद्धसाधनम् । अत एव घटादौ पृथिवीत्वेनेतरभेदनिश्चयेऽपि सर्वपृथिवीत्वेन तदसिद्धेर्न सिद्धसाधनमिति राद्धान्तः । न चैवमंशतः सिद्धसाधनं दुर्वारमिति वाच्यम्, क्वचित्पक्षे शुक्तिरूप्यादौ मिथ्यात्वनिश्चयेऽपि पक्षतावच्छेदकनानात्वाभावात् । पक्षतावच्छेदकनानात्व एव तदभ्युपगमात् । अत एवानित्ये वाङ्मनसे इत्यत्रांशतः सिद्धसाधनमिति परस्यापि राद्धान्तः । **शुक्तिरूप्यमिति** । न च शुक्तिरूप्यस्यापि पक्षत्वेन कथं दृष्टान्तता इति साम्प्रतम् । निश्चितसाध्यकत्वेन सपक्षत्वाविरोधात् । तस्यैव लाघवेन दृष्टान्तत्वे प्रयोजकतया पक्षभिन्नत्वस्य व्यर्थत्वात् । अत एवाभेदानुमाने पक्ष एव दृष्टान्तः ॥

म० प्र०—शुक्तिरूप्यादौ ब्रह्मभिन्नत्वेन=पक्षतावच्छेदकब्रह्मभिन्नत्वविशिष्टपक्षैकदेशशुक्तिरूप्यादौ, सर्वस्यापि ब्रह्मभिन्नत्वेन पक्षतावच्छेदकब्रह्मभिन्नत्वविशिष्टनिखिलस्यापि, तदसिद्धेः=मिथ्यात्वासिद्धेः । अत एव=पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि पक्षतावच्छेदकावच्छेदेन साध्यसिद्ध्यभावेन सिद्धसाधनाभावादेव । **पृथिवीत्वेनेति** । पृथिवीत्वावच्छिन्नेत्यर्थः । **सर्वपृथिवीत्वेनेति** । निखिलपृथिवीनिष्ठपृथिवीत्वावच्छिन्नेत्यर्थः । तदसिद्धेः=इतरभेदासिद्धेः । न सिद्धसाधनम्=सर्वा पृथिवी इतरभिन्ना गन्धाद्घटवदित्यनुमाने सिद्धसाधनं न । एवम्=ब्रह्मभिन्नसर्वत्वावच्छेदेन साध्यसिद्धिस्वीकारेऽपि, तदभ्युपगमात्=अनुमानेंऽशतः सिद्धसाधनत्वाभ्युपगमात् । अत एव=पक्षतावच्छेदकनानात्वस्यवांशतः सिद्धसाधनत्वप्रयोजकत्वादेव । **इत्यत्रेति** । अनित्ये वाङ्मनसे इन्द्रियत्वाच्चक्षुरादिवदित्यत्र वाक्त्वमनस्त्वरूपपक्षतावच्छेदकयोर्नानात्वेनांशतः वागंशे सिद्धसाधनमित्यर्थः । **सपक्षत्वाविरोधादिति** । शुक्तिरूप्यादीनां दृष्टान्तत्वानुपपत्त्यभावादित्यर्थः । तस्यैव=निश्चितसाध्यकत्व-

स्यैव, लाघवेन=पक्षभिन्नत्वे सति निश्चितसाध्यकत्वस्य दृष्टान्तत्वप्रयोजकत्वापेक्षया निश्चितसाध्यकत्वस्य दृष्टान्तत्वप्रयोजकत्वे लाघवेन। **पक्षभिन्नत्वस्य व्यर्थत्वादिति।** पक्षभिन्नत्वे सति निश्चितसाध्यकत्वं दृष्टान्तत्वप्रयोजकमिति पक्षभिन्नत्वविशेषणदानस्य व्यर्थत्वादित्यर्थः। अत एव=निश्चितसाध्यकत्वस्य दृष्टान्तत्वप्रयोजकत्वादेव, अभेदानुमाने=त्वंपदलक्ष्यचैतन्यं ब्रह्माभिन्नं सच्चिदानन्दलक्षणत्वाद् ब्रह्मवदित्यनुमाने पृथिवी पृथिव्यभिन्ना गन्धाद्वत्त्ववदित्याकारके वाऽनुमाने ॥

**न च दृष्टान्तासिद्धिः तस्य साधितत्वात् ॥**

**शि० म०**—ननु शुक्तिरूप्यं न दृष्टान्तः, प्रमाणाभावेन तत्र मिथ्यात्वस्यानिश्चयात्। न च तत्रानुमानात्तन्निश्चयः। तद्दृष्टान्तेऽप्यनुमानान्तरान्मिथ्यात्वनिश्चय इत्यनवस्थापातात्। न चात्र शुक्तिरूप्यादन्यो दृष्टान्तः संभवति। ततश्च व्याप्तिग्रहाभावान्न प्रपञ्चमिथ्यात्वसिद्धिरित्याशङ्क्य शुक्तिरूप्यस्य नात्र रजतमिति त्रैकालिकाभावप्रतीतिविषयत्वमुपपादयता मया प्रत्यक्षप्रमाणेन मिथ्यात्वस्य प्रत्यक्षपरिच्छेदे साधितत्वात्तदेव दृष्टान्त इत्याह—न चेति। **साधितत्वादिति।** इदं चोपलक्षणम्। शुक्तिरूप्यमिथ्यात्वस्यार्थापत्तिप्रमाणेनाग्रे साधयिष्यमाणत्वाच्चेत्यपि बोध्यम् ॥

**म० प्र०**—तत्र=शुक्तिरूप्ये। **तत्रानुमानादिति।** शुक्तिरूप्ये शुक्तिरूप्यं मिथ्या बाधितत्वाद्रज्जुसर्पादिवदित्याकारकानुमानान्मिथ्यात्वनिश्चय इत्यर्थः। **दृष्टान्तेऽपीति।** शुक्तिरूप्यनिष्ठमिथ्यात्वसाधकानुमाने यो रज्जुसर्पादिदृष्टान्तस्तस्मिन्नपीत्यर्थः। अत्र=व्यावहारिकप्रपञ्चनिष्ठमिथ्यात्वे, शुक्तिरूप्यात्=प्रातिभासिकपदार्थात्। ततश्च=दृष्टान्तानिरूपणाच्च। **नात्र रजतमितीति।** शुक्तिशकलवृत्तित्रैकालिकरजतत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः। तदेव=शुक्तिरूप्यमेव, इदं च=शुक्तिरूप्यस्य साधितत्वादिति वाक्यं च ॥

**न चाप्रयोजकत्वं शुक्तिरूप्यरज्जुसर्पादीनां मिथ्यात्वे ब्रह्मभिन्नत्वस्यैव लाघवेन प्रयोजकत्वात् ॥**

**शि० म०**—ननु शुक्तिरूप्ये साध्यनिश्चयेऽप्यनुकूलतर्काभावेन व्याप्यत्वासिद्धो हेतुः। न च हेतोर्निरुपाधिकत्वभङ्गाख्य एव तर्को व्याप्तिग्राहक इति वाच्यम्। अविद्यातिरिक्तदोषजन्यत्वस्योपाधित्वात्। तद्व्यावर्त्यस्य ब्रह्मणो विपक्षस्य सत्त्वात् न पक्षेतरत्वमित्याशङ्क्य ब्रह्मभिन्नत्वस्य सामान्यधर्मस्याविद्यातिरिक्तदोषजन्यत्वापेक्षया लघुशरीरस्य लाघवाख्यतर्केण मिथ्यात्वं प्रति व्याप्यत्वनिश्चयान्न सोपाधिकत्वम्। अत एव न व्याप्यत्वासिद्धिरित्याह—न चेति।

**म० प्र०**—अनुकूलतर्काभावेन=ब्रह्मभिन्नत्वं मिथ्यात्वव्यभिचारि न वेति व्यभिचारशङ्कानिवर्तकतर्काभावेन, व्याप्यत्वासिद्धः=व्याप्यत्वं व्याप्त्याश्रयत्वमसिद्धमनिश्चितं यस्मिन्स व्याप्यत्वासिद्धः।

**हेतोर्निरुपाधिकत्वभङ्गाख्य एवेति** । ब्रह्मभिन्नत्वं यदि मिथ्यात्वव्यभिचारि स्यात्तर्हि ब्रह्मभिन्नत्वहेतोर्निरुपाधिकत्वं न स्यादिति तस्य निरुपाधिकत्वभङ्गापादनाख्यतर्क एव तस्य व्यभिचारशङ्कानिवर्तनद्वारा व्याप्तिग्राहक इत्यर्थः। यदि ब्रह्मभिन्नत्वहेतोर्निरुपाधिकत्वं स्यात्तदा तस्य निरुपाधिकत्वभङ्गापादनाख्यतर्कोऽपि स्यात्किंतु ब्रह्मभिन्नत्वहेतोर्निरुपाधिकत्वमेव नास्तीत्याह—**अविद्येति** । नन्वविद्यातिरिक्तदोषजन्यत्वोपाधेः पक्षमात्रावृत्तित्वात्पक्षेतरत्वतुल्यत्वेन नोपाधित्वमित्याशङ्क्य तस्य पक्षेतरत्वतुल्यत्वं निराकरोति—**तद्व्यावर्त्यस्येति** । तदविद्यातिरिक्तदोषजन्यत्वव्यावर्त्यमवृत्तिर्यस्मिन्ब्रह्मणि तत्तथा तस्योपाधिशून्यस्येत्यर्थः। साध्यसमनियतस्योपाधित्वमित्याचार्य्यमताभिप्रायेण ब्रह्मभिन्नत्वस्य हेतोः सोपाधिकत्वं निराकरोति—**ब्रह्मभिन्नत्वस्येति** । लाघवाख्यतर्केण=अविद्यातिरिक्तदोषजन्यत्वनिष्ठमिथ्यात्वरूपसाध्यव्याप्यत्वापेक्षया ब्रह्मभिन्नत्वे मिथ्यात्वरूपसाध्यव्याप्यत्वाङ्गीकारे लाघवापादनरूपतर्केण । अविद्यातिरिक्तदोषजन्यत्वं यदि मिथ्यात्वव्याप्यं स्यात्तर्हि गौरवं स्यादिति लाघवभङ्गापादनरूपतर्केण वा। अयं भावः। साध्यसमनियतस्योपाधित्वम्। साध्यसमनियतत्वं च साध्यव्यापकत्वे सति साध्यव्याप्यत्वम्। यत्र मिथ्यात्वं तत्राविद्यातिरिक्तदोषजन्यत्वमित्यविद्यातिरिक्तदोषजन्यत्वस्य साध्यव्यापकत्वेऽपि मिथ्यात्वरूपसाध्यव्याप्यत्वं त्वविद्यातिरिक्तदोषजन्यत्वे स्वीकरणीयं ब्रह्मभिन्नत्वे वेति संशये सामान्यधर्मेऽविद्यातिरिक्तदोषजन्यत्वापेक्षया लघुभूते च ब्रह्मभिन्नत्वे एव मिथ्यात्वव्याप्यत्वं स्वीकरणीयं नाविद्यातिरिक्तदोषजन्यत्वे, संभवति सामान्यधर्मे विशेषधर्मे तदन्याय्यमिति न्यायात्संभवति लघौ गुरौ तदन्याय्यमिति न्यायाच्च। तथा चाविद्यातिरिक्तदोषजन्यत्वस्य नोपाधित्वमिति । वस्तुतस्तु सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिनां मते क्षित्यङ्कुरादिकं सकर्तृकं कार्य्यत्वाद्घटवदित्यनुमाने ऽपाध्यभावहेतुना साध्याभावसाधने सति शरीरजन्यत्वोपाधेर्व्यर्थविशेषणत्ववदत्राप्युपाध्यभावेन साध्याभावसाधनेऽविद्यातिरिक्तविशेषणस्य व्यर्थत्वान्नाविद्यातिरिक्तदोषजन्यत्वस्योपाधित्वमिति । अत एव=ब्रह्मभिन्नत्वहेतावुपाध्यभावादेव ॥

**मिथ्यात्वं च स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वम्। अभिमतपदमसंभववारणाय। यावत्पदमर्थान्तरवारणाय। तदुक्तम्। "सर्वेषामपि भावानां स्वाश्रयत्वेन संमते । प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ॥" इति। यद्वा ॥**

शि० म०—ननु बाध्यत्वं मिथ्यात्वम्, तच्च ज्ञानत्वेन ज्ञाननिवर्त्यत्वम्, तत्तु न विनाऽनुमानेन शुक्तिरूप्ये ज्ञातुं शक्यम्, बाधप्रत्यक्षेणाविषयीकरणात्। ततश्च दृष्टान्तासिद्धिस्तदवस्थैवेत्याशङ्क्य न्यायसिद्धबाधप्रत्यक्षयोग्यत्वं मिथ्यात्वमिह विवक्षितमित्याह—**मिथ्यात्वं चेति**। न चानाश्रिताकाशादिषु लक्षणस्याव्याप्तिः, वियदधिकरणोक्तन्यायेन तस्यापि कार्यतया कारणाश्रितत्वस्यावश्यमभ्युपेतव्यत्वात्। **असंभववारणायेति**। न च स्वाश्रये स्वरूपेण तदत्यन्ताभावाभावेऽपि पारमार्थिकत्वा-

वच्छिन्नतदत्यन्ताभावसत्त्वान्न बाध इत्यभिमतपदं व्यर्थमिति वाच्यम्, अस्मिन्पक्षे स्वरूपेणैव ब्रह्मणि प्रपञ्चाभावाभ्युपगमात्। चित्सुखाचार्यसंमतिमाह—**तदुक्तमिति**। यदि कश्चित्पक्षभिन्नत्वमपि सपक्षत्वप्रयोजकमतो भेदानुमानं चासिद्धमिति ब्रूयात्तदा पक्षान्तरमाह—**यद्वेति** ॥

म० प्र०—तच्च=बाध्यत्वं च। **ज्ञानत्वेन ज्ञाननिवर्त्यत्वमिति**। ज्ञाननिष्ठनाशकतानिरूपितनाश्यता ज्ञानप्रागभावे उत्तरज्ञाननिवर्त्यपूर्वज्ञाने चास्तीति परमतेऽतिव्याप्तिरतो **ज्ञानत्वेनेत्युक्तम्**। तथा च ज्ञानप्रागभावे प्रतियोगित्वावच्छिन्ननाशकतानिरूपितनाश्यता, एवमुत्तरज्ञानेन निवर्त्ये पूर्वज्ञाने स्वोत्तरवृत्तिप्रत्यक्षयोग्यविभुविशेषगुणत्वावच्छिन्ननाशकतानिरूपितनाश्यता, न ज्ञानत्वावच्छिन्ननाशकतानिरूपितनाश्यता पूर्वज्ञानज्ञानप्रागभावयोरिति नातिव्याप्तिरिति भावः। बाधप्रत्यक्षेण=नात्र रजतमित्याकारकबाधप्रत्यक्षेण। **न्यायसिद्धेति**। न्यायो नेह नानाऽस्ति किंचनेत्यादिश्रुतिरूपोऽधिष्ठाने ज्ञाते यदि सत्स्यात्तर्ह्यधिष्ठानज्ञाने तदभावो न स्यादभावस्त्वधिष्ठानज्ञाने न भवत्यतोऽधिष्ठाने ज्ञातं सन्नास्तीत्याद्यात्मकश्च तेन सिद्धो यो बाधो ज्ञातस्यात्यन्ताभावस्य यत्प्रत्यक्षं नात्र ब्रह्मणि प्रपञ्च इत्याद्याकारकं तद्योग्यत्वं तदत्यन्ताभावानधिकरणत्वरूपं मिथ्यात्वमिह प्रपञ्चेऽनुमाने वा विवाक्षितमित्यर्थः। परममूले **स्वाश्रयत्वेनेति**। स्वमाश्रितं न तु कार्य्यमविद्यादावव्याप्तेस्तथा चाश्रिताश्रयत्वेनाभिमतयावति स्थितात्यन्ताभावप्रतियोगित्वमित्यर्थः। नन्वाश्रिताश्रयनिष्ठनिरवच्छिन्नात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमित्येतावदेवास्त्वित्याशङ्क्याह—परममूले **अभिमतेति**। यावति स्वाश्रये स्वात्यन्ताभावासंभवादभिमतपदमावश्यकम्। तथा च वस्तुतो रजताद्यनाश्रयेऽपि शुक्त्यादौ रजताद्याश्रयत्वेनाभिमते वर्तमानरजताद्यत्यन्ताभावप्रतियोगित्वं शुक्तिरूप्यादेरस्तीति तत्सार्थक्यमिति भावः। ननु तथापि लक्षणे यावत्पदं व्यर्थमित्यत आह—परममूले **यावदिति**। तथा च लक्षणे यावत्पदाभावे कपिसंयोगाद्याश्रयत्वेनाभिमतवृक्षे मूलावच्छेदेन वर्तमानात्यन्ताभावप्रतियोगित्वं शाखावच्छेदेन स्थितकपिसंयोगादेरस्तीति सत्यत्वाविरोधिप्रतियोगितदभावसामानाधिकरण्यरूपार्थान्तरसिद्धिवारणाय यावत्पदमावश्यकम्, तद्दाने तु स्वाश्रयत्वेनाभिमते शाखादौ संयोगादेरत्यन्ताभावप्रतियोगित्वसाधनान्नार्थान्तरापत्तिर्दोष इति भावः। **वियदधिकरणोक्तन्यायेनेति**। "न वियदश्रुतेः" इत्यादिवियदधिकरणे प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य इत्यस्मिन्सिद्धान्तसूत्रे उक्तेन विज्ञेयाद्ब्रह्मणः कृत्स्नस्य वस्तुजातस्याव्यतिरेकादात्मैकविज्ञानात्सर्वविज्ञानप्रतिज्ञायाः छान्दोग्यादौ कृताया अहानिर्भवति, ब्रह्मभिन्नसत्ताकस्य नित्यस्याकाशस्याभ्युपगमे तु सा प्रतिज्ञा बाध्येत, तस्मादाकाशस्योत्पत्तिमङ्गीकृत्य ब्रह्माधीनसत्ताकत्वाद्ब्रह्मणि ज्ञाते सर्वमाकाशादिकं ज्ञातं भवतीति सा प्रतिज्ञा समर्थनीयेत्याकाशस्योत्पत्तिरस्तीति न्यायेनेत्यर्थः। तस्यापि=वियतोऽपि, स्वाश्रये=आश्रिताश्रये कपालादौ, न बाधः=नासंभवः, अस्मिन्पक्षे=द्विविधसत्त्वपक्षे उक्तमिथ्यात्वपक्षे वा। आश्रिताश्रयत्वेन ज्ञाते यावति स्वरूपेणाश्रितात्यन्ताभावस्य विवक्षितत्वादभिमतपद-

मावश्यकमिति भावः । परममूले **अत्यन्ताभावं प्रतीति**। अत्यन्ताभाव इत्यर्थः । पक्षान्तरम्=नवीनोक्तमनुमानम् ॥

**अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी पटत्वात्पटान्तरवदित्याद्यनुमानं मिथ्यात्वे प्रमाणम्। तदुक्तम्—"अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः । अंशित्वादितरांशिवद्दिगेषैव गुणादिषु ॥" इति । न च घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षबाधः, अधिष्ठानब्रह्मसत्तायास्तत्र विषयतया घटादेः सत्यत्वासिद्धेः। न च नीरूपस्य ब्रह्मणः कथं चाक्षुषादिज्ञानविषयतेति वाच्यम् । नीरूपस्यापि रूपादेः प्रत्यक्षत्वात्। न च नीरूपस्य द्रव्यस्य चक्षुराद्ययोग्यत्वमिति नियमः, मन्मते ब्रह्मणो द्रव्यत्वासिद्धेः । गुणाश्रयत्वं समवायिकारणत्वं वा द्रव्यत्वमिति तेऽभिमतम् । न हि निर्गुणस्य ब्रह्मणो गुणाश्रयता, नापि समवायिकारणता समवायासिद्धेः ॥**

**शि० म०—पटत्वादिति**। अवयवित्वादित्यपि द्रष्टव्यम्। **मिथ्यात्वे प्रमाणम्**=एतत्पटमिथ्यात्वे प्रमाणमित्यर्थः। गुणकर्मादौ चैतत्पटरूपमेतत्पटनिष्ठात्यन्ताभावप्रतियोगि रूपत्वाद्रूपान्तरवदित्येवमादिप्रयोगो द्रष्टव्यः। अत्रापि तत्संमतिमाह—**तदुक्तमिति** । दिग्=मार्गः । **निर्गुणस्येति** । " साक्षी चेता केवलो निर्गुणश्च " इत्यादिवचनेन ब्रह्मणो निर्गुणत्वावगमादिति भावः । **नापीति** । अपरिणामित्वादिति भावः ॥

**म० प्र०**—परममूले **अयं पट इति** । न च बाध एव किं न स्यादिति वाच्यम्। व्याप्तिमद्धेतोः पक्षधर्मताबलात्पक्षे साध्यस्यावश्यमेवाभ्युपेयत्वादिति । समवायसंबन्धेनैकावच्छेदेन चेत्यपि द्रष्टव्यम्। तथा च संयोगसंबन्धेन देशावच्छेदेन च पूर्ववन्नार्थान्तरता। एवं व्यधिकरणधर्मानवच्छिन्नप्रतियोगिताकत्वमत्यन्ताभावविशेषणं देयम्। तेन घटत्वादिव्यधिकरणधर्ममादाय नार्थान्तरता । तथैतत्कालिकत्वमप्यत्यन्ताभावविशेषणं देयम्, तेन पटोत्पत्तिकालिकात्यन्ताभावमादाय नार्थान्तरता । तथा व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वमत्यन्ताभावविशेषणं देयम्, तेन तन्तुषु पटसत्त्वेऽपि पटघटोभयं नास्तीति पटघटोभयत्वावच्छिन्नप्रतियोगिताकपटघटात्यन्ताभावमादाय नार्थान्तरता । तथा चायं पटः समवायसम्बन्धावच्छिन्ननिरवच्छिन्नव्यधिकरणधर्मानवच्छिन्नपटकालवृत्तिव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगीत्यर्थः । न चैतत्तन्तुषु पटसमवाय इति प्रत्यक्षबाध इति वाच्यमुक्तप्रत्यक्षस्य भ्रमप्रमासाधारणतया चन्द्रप्रादेशिकत्वप्रत्यक्षवदप्रामाण्यशङ्कास्कन्दितत्वेनाबाधकत्वादिति।

परममूले **दिगेषैवेति** । गुणादिषु गुणादिनिष्ठमिथ्यात्वेऽपि एष एव मार्ग इत्यर्थः । अत्रापि=पटादीनां स्वांशगतात्यन्ताभावप्रतियोगित्वेऽपि । **अपरिणामित्वादितीति** । न चारम्भवादाऽङ्गीकर्तृनैयायिकं प्रति अपरिणामित्वादिति हेतुकथनमयुक्तं तेन परिणामवादस्यास्वीकृतत्वादिति वाच्यम् । आरम्भवादस्य निरस्तत्वेन परिणामवादस्यैव स्वीकर्तव्यत्वात् । तथा च ब्रह्मणः परिणामित्वासंभवेन समवायिकारणत्वं नास्तीति भावः ॥

**अस्तु वा द्रव्यत्वं ब्रह्मणः, तथापि नीरूपस्य कालस्येव चाक्षुषादिज्ञानविषयत्वे न विरोधः ॥**

शि० म०—ननु ब्रह्मणोऽपि समवायिकारणत्वम् केवलस्यापरिणामित्वेऽपि मायाविशिष्टस्य प्रपञ्चोपादानत्वात्, अन्यथा अभिन्ननिमित्तोपादानवादभङ्गापत्तेः । ततश्च ब्रह्मणो न द्रव्यत्वासिद्धिरिति अपरितोषादाह—**अस्तु वेति** । यद्वा अभ्युपेत्याह—**अस्तु वेति** । काल इन्द्रियवेद्य इति मतेन दृष्टान्तमाह—**कालस्येति** । वस्तुतस्तु अनन्यथासिद्धप्रतीतिबलेन ब्रह्मव्यतिरिक्तद्रव्यचाक्षुषतायामेव महत्त्वे सत्युद्भूतरूपवत्त्वं प्रयोजकं बोध्यम् ॥

म० प्र०—अन्यथा=ब्रह्मण उपादानत्वानङ्गीकारे । **अन्यथासिद्धेति** । ब्रह्मनिष्ठविषयतां विनाऽनुपपद्यमानेत्यर्थः । यथाऽध्वरमीमांसकानामस्मिन्काले घटो नास्तीत्यादिप्रतीतिबलात्कालस्येन्द्रियवेद्यत्वं स्वीकृतं तथा ब्रह्मनिष्ठविषयतां विनाऽनुपपद्यमान 'सन् घटः' इत्यादिप्रतीतिबलाद् ब्रह्मणश्चाक्षुषत्वमस्माभिः स्वीक्रियते इति भावः । परममूले **न विरोध इति** । सन् घट इत्यादिप्रत्यक्षस्यानुपपत्तिर्नेत्यर्थः ॥

**यद्वा त्रिविधं सत्त्वम् । पारमार्थिकसत्त्वं ब्रह्मणः, व्यावहारिकं सत्त्वम् आकाशादेः, प्रातिभासिकं सत्त्व शुक्तिरजतादेः । तथा च घटः सन्निति प्रत्यक्षस्य व्यावहारिकसत्त्वविषयत्वेन प्रामाण्यम् । अस्मिन्पक्षे च घटादेर्ब्रह्मणि निषेधो न स्वरूपेण, किंतु पारमार्थिकत्वेनैवेति न विरोधः ॥**

शि०म०—ननूक्तानुमानं न प्रपञ्चमिथ्यात्वसाधकम्, घटः सन्नित्यादिप्रत्ययबाधितत्वात् । न चासावधिष्ठानसत्ताविषयत्वाद् भ्रमः बाधकाभावात् । न चास्थूलादिवाक्येन प्रत्यक्षबाधः । तर्हि तेनैव प्रपञ्चमिथ्यात्वसिद्धावनुमानवैयर्थ्यात्प्रपञ्चतत्त्वांशबाधपरतयैव श्रुत्युपपत्तेश्च । न चोक्तानुमानमेव तद्बाधकम्, प्रत्यक्षस्य सर्वप्रमाणज्येष्ठतया अनुमानेन बाधायोगात् । अन्यथा वह्न्यनौष्ण्यानुमानेन तदौष्ण्यप्रत्यक्षबाधापत्तेः । किंच प्रपञ्चस्य स्वरूपेणासत्त्वे तज्ज्ञानस्य बाधितार्थविषयत्वेनाप्रामाण्यापत्तौ घटादिज्ञानं प्रमा शुक्तिरूप्यादिज्ञानमप्रमेति विभागाभावोऽसत्ख्यातिवादिमतप्रवेशश्च प्रसज्येत । किंचैवं कर्मकाण्डमात्रस्याप्रामाण्यापत्तौ तत्सामान्या-

द्वेदैकदेशस्य वेदान्तस्याप्रामाण्यापत्तिः । अपि च घटादेरसत्त्वे तदभावो न निरूप्येत सद्भ्यामेवाधिकरणप्रतियोगिभ्यामभावनिरूपणात् । अन्यथा शशविषाणस्यापि अभावप्रतियोगित्वापत्तिः । अत एवाहुः 'सद्भ्यामभावो निरूप्यते इति । ततश्च प्रत्यक्षबाधितं प्रपञ्चमिथ्यात्वानुमानमित्यरुचेराह—**यद्वेति । त्रिविधमिति**। पारमार्थिकसत्त्वं व्यावहारिकसत्त्वं प्रातिभासिकसत्त्वं चेति त्रिविधमित्यर्थः। तत्र कालत्रयाबाध्यत्वं पारमार्थिकसत्त्वं संसारदशायामबाध्यत्वं व्यावहारिकसत्त्वं प्रतिभासकालाबाध्यत्वं प्रातिभासिकसत्त्वम् । एतानि क्रमेणोदाहरति—**पारमार्थिकेति ॥**

**म० प्र०**—अधिष्ठानसत्ताविषयत्वात्=अधिष्ठाननिष्ठसत्ताया घटादिनिष्ठत्वेन विषयीकरणात् । **बाधकाभावादिति** । यथेदं रजतमित्यादिज्ञानस्य नेदं रजतमित्यादिबाधकसत्त्वाद् भ्रमत्वं तद्वद्घटः सन्नित्यादिप्रत्ययस्य 'न सन् घटः' इत्यादिबाधकाभावान्न भ्रमत्वम् । न च तदभाववति तत्प्रकारकत्वस्य भ्रमत्वप्रयोजकस्य सन् घट इत्यादिज्ञानेषु सत्त्वाद्भ्रमत्वं स्यादिति वाच्यम्, मन्मते प्रपञ्चस्य सत्यत्वेन सन् घट इत्यादिघटादिनिष्ठसत्यत्वावगाहिज्ञानेषु तदभाववति तत्प्रकारकत्वस्य भ्रमत्वप्रयोजकस्याभावात् । न च बाधकाभावादिति वाक्याद्बाधकज्ञानसत्त्वे पूर्वज्ञानस्य भ्रमत्वं बाधकज्ञानाभावे पूर्वज्ञानस्य भ्रमत्वाभाव इति प्रतीयमानत्वेन पूर्वपूर्वज्ञाने उत्तरोत्तरज्ञानस्य नाशकत्वेन बहूनां पूर्वज्ञानानां भ्रमत्वं स्यादुत्तरज्ञानरूपबाधकसत्त्वादिति वाच्यम् । अधिष्ठानज्ञानजन्यत्वे सति भ्रान्तिज्ञानविषयरजताद्यत्यन्ताभावविषयकत्वाभिन्नबाधकत्वाभ्युपगमादुत्तरज्ञानानां नियमेन बाधकत्वाभावाच्चेति । **अस्थूलादिवाक्येनेति** । अस्थूलमनण्वित्यादिवाक्यात्स्थूलाद्यत्यन्ताभाववद्ब्रह्मेति ज्ञाने जाते घटसदभेदावगाहि सन् घट इति प्रमात्मकप्रत्यक्षं न संभवतीत्यर्थः । तर्हि=अस्थूलादिवाक्यजन्यज्ञानस्य सन् घट इत्यादिप्रमात्मकप्रत्यक्षबाधकत्वाङ्गीकारे, तेनैव=अस्थूलादिवाक्यजन्यज्ञानेनैव । **प्रपञ्चतत्त्वांशेति** । घटादिप्रपञ्चस्य स्वरूपेण सत्त्वेऽपि घटादिप्रपञ्चनिष्ठं पारमार्थिकत्वं नास्तीत्यर्थपरतयाऽस्थूलमनण्वित्यादिश्रुत्युपपत्तेरित्यर्थः । घटादिस्वरूपावगाहि 'सन् घटः' इत्यादिप्रत्ययबाधितत्वान्नोक्तानुमानं घटादिप्रपञ्चस्वरूपाभावसाधकमिति भावः । तद्बाधकं=घटः सन्निति प्रमात्मकप्रत्ययबाधकम्, अन्यथा=अनुमानस्य प्रत्यक्षबाधकत्वे, तज्ज्ञानस्य=प्रपञ्चज्ञानस्य, असत्ख्यातिवादिमतप्रवेशश्च=स्वरूपेणासतो ज्ञानं भवतीति वदनशीलस्य शून्यवादिनो मतप्राप्तिश्च । **कर्मकाण्डमात्रस्येति** । अत्र मात्रशब्दस्य कृत्स्नवाचकत्वेन सर्वप्रपञ्चस्य स्वरूपेणासत्त्वेन स्वरूपेणासत्साध्यसाधनादिप्रतिपादकसर्वकर्मकाण्डस्याप्यप्रामाण्यापत्तौ तत्सामान्याद्वेदत्वेन कर्मकाण्डवेदसादृश्याद्वेदान्तस्याप्यप्रमाणत्वापत्त्या ब्रह्मासिद्धिप्रसङ्ग इत्यर्थः । सद्भ्यामित्यस्यैव विवरणमधिकरणप्रतियोगिभ्यामिति । ननु ब्रह्मनिष्ठविषयतां विनाऽनुपपद्यमान 'सन् घटः' इत्यादिप्रतीतिबलाद्ब्रह्मणश्चाक्षुषत्वं यदि स्वीक्रियते तर्ह्याकाशनिष्ठविषयतां विनाऽनुपपद्यमान'आकाशे बलाकाः'इत्यादिप्रतीतिबलादाकाशस्यापि चाक्षुषता स्यादित्यरुचेराह—परममूले

**यद्वेति** । तत्र–उक्तत्रिविधसत्त्वमध्ये । परममूले **अस्मिन्पक्षे इति** । त्रिविधसत्त्वपक्षे इत्यर्थः । परममूले **न विरोध इति** । अनुमानस्य पारमार्थिकत्वेन प्रपञ्चात्यन्ताभावविषयकत्वेन घटः सन् इत्यादिप्रत्यक्षस्य व्यवहारिकसद्घटादिविषयकत्वेन च तयोर्भिन्नविषयकत्वेनोक्तप्रत्यक्षेणोक्तानुमानबाधो नेत्यर्थः ॥

**अस्मिन्पक्षे च मिथ्यात्वलक्षणे पारमार्थिकत्वावच्छिन्नप्रतियोगिताकत्वमत्यन्ताभावविशेषणं द्रष्टव्यम् । तस्मादुपपन्नं मिथ्यात्वानुमानमिति ॥**

**इति श्रीमद्वेदान्तपरिभाषायामनुमानपरिच्छेदः ॥ २ ॥**

**शि० म०**–नन्वेवमप्युक्तमिथ्यात्वस्याप्रसिद्धिः, सर्वस्यापि स्वाश्रये तत्तदत्यन्ताभावायोगात् । न चाभिमतपदात्तन्निरास इत्युक्तमिति वाच्यम्, स्वाश्रयतया ज्ञातस्याप्युक्तरीत्या वस्तुतः स्वाश्रयत्वेन तत्र तदत्यन्ताभावासंभवतादवस्थ्यात् । किंच मिथ्यात्वलक्षणस्य ज्ञानगर्भत्वे भूतलादेः स्वाश्रयत्वाभिमानाभावदशायां घटादेर्मिथ्यात्वाभावप्रसङ्गः, अभिमानोपलक्षितत्वविवक्षादशायां तत्कालोत्पन्नविनष्टस्य पर्वतगुहान्तर्वर्तिनो मिथ्यात्वानापत्तिः । अपि च निरुक्तमिथ्यात्वं न सत्यत्वविरोधि परेणाप्यव्याप्यवृत्तिकपिसंयोगादौ तदभ्युपगमादित्यत आह–**अस्मिन्पक्ष इति** । तथा च पारमार्थिकत्वावच्छिन्नप्रतियोगिताकस्वात्यन्ताभावसामानाधिकरण्यं मिथ्यात्वमित्यर्थः। एतच्चोपलक्षणम् । परमार्थिकभिन्नत्वं पारमार्थिकत्वात्यन्ताभाववत्त्वं वा मिथ्यात्वं बोध्यम् । अनुमाननिरूपणप्रयोजनमुपसंहरति–**तस्मादिति ॥**

इति श्रीधर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरीविरचिते
वेदान्तशिखामणौ अनुमानपरिच्छेदः ॥ २ ॥

**म० प्र०**–एवमपि=प्रत्यक्षानुमानयोर्भिन्नविषयकत्वेन विरोधाभावेऽपि, स्वाश्रयतया=आश्रिताश्रयतया, उक्तरीत्या=आश्रिताश्रये तत्तदत्यन्ताभावायोगेन हेतुना । तत्र=आश्रिताश्रये, ज्ञानगर्भत्वे=ज्ञानघटितत्वे । अभिमानाभावदशायां=ज्ञानाभावकाले, प्रयोजनम्=प्रपञ्चमिथ्यात्वानुमानम् ॥

इति श्रीमद्ब्रह्मविज्ञानाभिधविद्याप्रदगुरुप्रसादलब्धोदासीनामरदासशब्दवाच्याविर्भूतायां वेदान्तपरिभाषाख्यग्रन्थस्य शिखामण्याख्यटीकायाश्च मणिप्रभाख्यायां व्याख्यायामनुमानपरिच्छेदः ॥ २ ॥

---

# अथोपमानपरिच्छेदः ३.

**अथोपमानं निरूप्यते । तत्र सादृश्यप्रमाकरणमुपमानम् ॥**

शि० म०-शिष्यावधानाय प्रतिजानीते-**अथेति** । अनुमाननिरूपणानन्तरमित्यर्थः । सूचीकटाहन्यायेन शब्दनिरूपणात्प्रागुपमाननिरूपणमिति ध्येयम् । ननु सूचीकटाहन्यायादरे उपमानस्य प्रत्यक्षादपि प्राथम्यं स्यादिति चेत् न, प्रत्यक्षानुमानान्तर्भावानन्तर्भावयोरुपमाने विचारणीययोः प्रत्यक्षादिनिरूपणसापेक्षत्वेन तयोरेव प्रथमनिरूपणीयत्वात् । **तत्रेति** । उपमाने निरूपणीय इत्यर्थः । **सादृश्येति** । अत्र उपमितिकरणत्वं लक्षणम्, तत्करणत्वं चासाधारणत्वमितीह विवक्षितम् । न तु व्यापारवत्त्वघटितमिह विवक्षितम् । गवयनिष्ठसादृश्यज्ञानस्योपमितौ जनयितव्यायां व्यापाराभावात् ॥

म० प्र०-यन्नामालापमात्रेण विघ्नव्यूहो विनश्यति ।

सर्वदेवाभिपूज्यं तं वन्दे श्रीनानकं गुरुम् ॥ १ ॥

धर्मराजाध्वरीन्द्रोऽथशब्देन मङ्गलं कुर्वन्नवसरसंगत्योपमाननिरूपणं प्रतिजानीते-परमूले **अथेति** । अवधानाय=अन्यत्र चित्तसंचाररहित्यपूर्वकप्रकृतग्रन्थशुश्रूषायै । उपमाने विचारणीययोः=उपमानप्रमाणस्य प्रत्यक्षेऽनुमाने वाऽन्तर्भावोऽस्ति न वेति विचाराङ्गसंशयविषययोः । प्रत्यक्षैकप्रमाणवादिमते उपमानस्य प्रत्यक्षप्रमाणान्तर्भावो वैशेषिकमते उपमानप्रमाणस्यानुमानप्रमाणान्तर्भावः । सिद्धान्ते प्रत्यक्षादिप्रमाणतः पृथक् प्रमाणमुपमानमिति विचारविषययोरिति वा । तयोः=प्रत्यक्षानुमानयोः । निरूपणीये=उपमानस्य प्रत्यक्षानुमानयोरनन्तर्भावात् प्रतिपादनयोग्ये सति, अत्र=मूले । लक्षणम्=उक्तमिति शेषः । तत्करणत्वं च=उपमितिकरणत्वं च, असाधारणत्वम्=असाधारणकारणत्वम्, इह=मूले । **गवयनिष्ठसादृश्यज्ञानस्येति** । उपमितौ=अनेन सदृशी मदीया गौरित्याद्युपमितौ, जनयितव्यायां=जननीयां सत्यामयं पिण्डो गोसदृश इत्याकारकस्य गवयनिष्ठसादृश्यज्ञानस्य व्यापाराभावादित्यर्थः ॥

शि० म०-ननु नोपमितिकरणत्वं लक्षणम्, तस्या एव दुर्वचत्वात् । तथा हि । न तावत्सादृश्यप्रमात्वमुपमितित्वम्, भ्रमोपमितावव्याप्तेः । न चोपमानप्रमाणलक्षणाय प्रमोपमितेरेव लक्ष्यत्वात् सा न संग्राह्येति वाच्यम् । तथापि सामान्यलक्षणाकरणे विशेषलक्षणप्रणयनायोगात् । न च सादृश्यज्ञानमुपमितिसामान्यलक्षणमिति युक्तम्, सादृश्यप्रत्यक्षेऽतिव्याप्तेः । न चासन्निष्ठविषयत्वविशेषणम्, तथापि शब्दादिना सादृश्यज्ञानेऽतिव्याप्तेः । न चोपमानजन्यसादृश्यज्ञानत्वमात्माश्रयापत्तेः । न च सादृश्यज्ञानजन्यज्ञानत्वम्, सादृश्यलिङ्गकानुमितौ तदनुव्यवसायादावतिव्याप्तेः । न च सादृश्यप्रतियोगिस्मरणसहकृतसादृश्यज्ञानजन्यत्वमुप-

**मितित्वम्, तत्प्रतियोगिस्मरणस्य गोसादृश्यज्ञानोपक्षीणत्वेन फलीभूतसादृश्यज्ञानाहेतुत्वात्। तदुभयगोचरसमूहालम्बने अतिव्याप्तेश्च। ततश्च न युक्तमुपमानलक्षणमिति। उच्यते। उपमितिकरणत्वमेवोपमानलक्षणम्। उपमितिश्च सादृश्यज्ञानत्वेन सादृश्यज्ञानजन्या। उपमितौ करणान्तरानुपपत्त्या तस्य तत्त्वेन करणत्वकल्पनान्नासम्भवः॥**

म० प्र०—तस्या एव=उपमितेरेव, सादृश्यप्रमात्वं=सादृश्यप्रकारकगवादिविशेष्यकयथार्थज्ञानत्वम्। भ्रमोपमितौ=उष्ट्रपिण्डो गोसदृश इति भ्रमात्मकसादृश्यप्रकारकज्ञानजन्य'अनेन सदृशी मदीया गौः' इत्याकारकोपमितौ, तथापि=भ्रमोपमितावव्याप्त्यभावेऽपि। **अयोगादिति।** भ्रमात्मकसादृश्यप्रकारकज्ञानजन्यज्ञानस्याप्युपमिनोमीत्यनुव्यवसायबलादुपमितित्वेन भ्रमप्रमासाधारणोपमितिलक्षणप्रणयनं विनोपमितिविशेषलक्षणप्रणयनायोग इति भावः। सादृश्यज्ञानं=सादृश्यप्रकारकगवादिविशेष्यकज्ञानम्। सादृश्यप्रत्यक्षे=अयं पिण्डो गोसदृश इत्याकारकसादृश्यप्रत्यक्षे, शब्दादिना सादृश्यज्ञाने=अनेन चैत्रेण सदृशस्तव पुत्र इत्यादिशब्दजन्य 'एतच्चैत्रनिरूपितसादृश्यवान् मत्पुत्रः' इत्याद्याकारके। अत्रादिनाऽनुमानं ग्राह्यम्। आत्माश्रयाद्यापत्तेः=उपमितिकरणजन्यसादृश्यज्ञानत्वरूपोपमितिलक्षणस्योपमितिघटितत्वेन स्वज्ञाने स्वज्ञानापेक्षात्मकात्माश्रयापत्तेः। उपमानजन्यसादृश्यज्ञानमुपमितिरित्युपमितिज्ञानं हि उपमानज्ञानमपेक्षते, उपमितिकरणमुपमानमित्युपमानज्ञानं तु स्वघटकोपमितिज्ञानमपेक्षते इत्यन्योन्याश्रयोऽप्यादिपदगृहीतो बोध्यः। ज्ञानत्वम्। अस्याग्रे उपमितित्वमिति शेषः। सादृश्यलिङ्गकानुमितौ=मदीया गौर्गवयनिष्ठसादृश्यप्रतियोगिनी गवयप्रतियोगिकसादृश्यात् यो यत्प्रतियोगिकसादृश्यवान् स तन्निष्ठसादृश्यप्रतियोगी यथा मैत्रप्रतियोगिकसादृश्यवांश्चैत्रो मैत्रनिष्ठसादृश्यप्रतियोगी इत्यनुमानजन्य 'मदीया गौर्गवयनिष्ठसादृश्यप्रतियोगिनी' इत्यनुमितौ, देवदत्तमुखमाह्लादजनकं चन्द्रसदृशत्वान्मत्प्रियामुखवदित्यनुमानजन्य 'देवदत्तमुखमाह्लादजनकम्' इत्यनुमितौ च, तदनुव्यवसायादौ=सादृश्यमहं जानामीति सादृश्यज्ञानानुव्यवसाये। आदिपदगृहीतसादृश्यस्मृतौ च। **सादृश्यप्रतियोगीति।** गवयादिनिष्ठसादृश्यस्य प्रतियोगिगवादिस्मरणसहकृत 'गवयो गोसदृशः' इत्यादिज्ञानजन्यत्वमुपमितित्वमित्यर्थः। न चेति प्रतिज्ञायां हेतुमाह—**तत्प्रतियोगिस्मरणस्येति।** गवयादिनिष्ठसादृश्यप्रतियोगिकगवादिस्मरणस्येत्यर्थः। गोसादृश्यज्ञानोपक्षीणत्वेन=अयं पिण्डो गोसदृश इत्यादिगवयादिनिष्ठगवादिनिरूपितसादृश्यज्ञानजनकत्वेन। **फलीभूतज्ञानेति।** अनेन सदृशी मदीया गौरित्यादिफलीभूतज्ञानेत्यर्थः। ननु यथा व्याप्त्यनुभवस्य परामर्शद्वाराऽनुमितिं प्रति हेतुत्वेन परामर्शमात्रजननहेतुत्वम्, यथा वाऽनुभवस्य स्मृतिं प्रति संस्कारद्वारा हेतुत्वेन संस्कारमात्रजननहेतुत्वम्, तद्वद्गवयादिनिष्ठसादृश्यप्रतियोगिगवादिस्मरणस्यापि गवादिनिरूपितगवयादिनिष्ठसादृश्यज्ञानद्वाराऽनेन सदृशी मदीया गौरित्यादिफलीभूतज्ञानेऽपि हेतुत्वं स्यादित्याशङ्क्य दूषणान्तरमाह—**तदुभयेति।** आदौ गौरित्यादि-

प्रतियोगिगवादिस्मरणं पश्चाद्गवयादिनिष्ठसादृश्यज्ञानं ततः सादृश्यं तत्प्रतियोगी चेति समूहालम्बनमिति सादृश्यं तत्प्रतियोगी चेति समूहालम्बनस्य सादृश्यप्रतियोगिस्मरणसहकृतसादृश्यज्ञानजन्यत्वेन सादृश्यं तत्प्रतियोगीत्येतदुभयविषयक 'सादृश्यं तत्प्रतियोगी च' इति समूहालम्बनेऽतिव्याप्तेरित्यर्थः। ततश्च=उपमित्यनिरूपणादेव, तस्य=गवादिप्रतियोगिकगवयादिनिष्ठसादृश्यज्ञानस्य तत्त्वेन=सादृश्यज्ञानत्वेन, नासंभवः=सादृश्यज्ञानत्वेन सादृश्यज्ञानजन्योपमितिरित्युपमितिनिरूपणे सत्युपमितिकरणमुपमानमित्युपमानलक्षणस्यासंभवो न ॥

**शि० म०—तदनुव्यवसायादेश्च तत्त्वेन तज्जन्यत्वाभावान्नातिव्याप्तिः। न च गोविसदृश उष्ट्र इति वैधर्म्यज्ञानजन्य 'अनेन विसदृशी मदीया गौः' इत्युपमिताव्व्याप्तिः, तत्रोपमानप्रामाण्यानभ्युपगमात्। न हि कश्चिदनुव्यवस्यति करभेण गामुपमिनोमीति। केचित्तु सप्रतियोगिकपदार्थज्ञानानन्तरं परस्मिन्सप्रतियोगिकपदार्थज्ञानमुपमितिः। एवं च वैधर्म्यपुरस्कारप्रवृत्तोपमितिसंग्रहः। तत्त्वेन तज्जन्यत्वस्य विवक्षितत्वाच्च नातिप्रसङ्ग इत्याहुः ॥**

म० प्र०—तदनुव्यवसायादेः=सादृश्यज्ञानानुव्यवसायसादृश्यस्मृत्योश्च, तत्त्वेन=सादृश्यज्ञानत्वेन। **तज्जन्यत्वाभावादिति**। सादृश्यज्ञानस्य स्वविषयकानुव्यवसाये विषयत्वेन हेतुत्वात्सादृश्यस्मृतौ तु सादृश्यज्ञानस्यानुभवत्वेन हेतुत्वादिति शेषः। **गोविसदृश उष्ट्र इति वैधर्म्यज्ञानेति**। गोनिरूपितवैजात्यवानुष्ट्र इति वैधर्म्यज्ञानेत्यर्थः। तत्र=अनेन विसदृशी मदीया गौरित्यादिज्ञाने। उपमानप्रामाण्यानभ्युपगमात्=उपमाननिष्ठप्रमाकरणतानङ्गीकारात्। **करभेणेति**। यथा चन्द्रेण मुखमुपमिनोमि कमलेन नेत्रमुपमिनोमीति पुरुषोऽनुव्यवस्यति तथा करभेणोष्ट्रेण गामुपमिनोमीति नानुव्यवस्यतीत्यर्थः। उष्ट्रनिरूपितवैजात्यविषयकोपमित्याश्रयोऽहमित्यनुव्यवसायवाक्यार्थः। नन्वेवमपि सिद्धान्तेऽनेन विसदृशी मदीया गौरित्यादिज्ञानं कुतः प्रमाणाद्भवतीति चेन्न। यदि गव्युष्ट्रनिरूपितसादृश्यं स्यात्तर्हि तदुपलभ्येत यतस्तन्नोपलभ्यतेऽतो गवि तन्नास्तीति योग्यानुपलब्धिप्रमाणादुष्ट्रनिरूपितवैधर्म्यप्रकारकगोविशेष्यकज्ञानोत्पत्तिसंभवादिति। **सप्रतियोगिकेति**। सप्रतियोगिकपदार्थस्य सादृश्यस्य वैधर्म्यस्य च यज्ज्ञानं गोसदृशो गवयो गोविसदृश उष्ट्र इत्याद्याकारकं तदनन्तरं परस्मिन् गवादौ सप्रतियोगिकपदार्थज्ञानं गवयसदृशी मदीया गौरुष्ट्रविसदृशी मदीया गौरित्यादिज्ञानमुपमितिरित्यर्थः। ननु सप्रतियोगिकपदार्थानां घटात्यन्ताभावघटप्रागभावघटध्वंसघटभेदादीनां घटात्यन्ताभावो घटप्रागभावो घटध्वंसो घटभेद इत्यादिज्ञानानन्तरं परस्मिन् भूतलादौ घटात्यन्ताभाववद्भूतलं घटप्रागभाववत्कपालं घटध्वंसवत्कपालं घटभेदवान्पट इत्यादिविशिष्टवैशिष्ट्यावगाहिसप्रतियोगिकघटात्यन्ताभावादिपदार्थज्ञानेष्वतिव्याप्तिरित्याशङ्क्याह—**तत्त्वेनेति**। सप्रतियोगिकपदार्थज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताशालित्वे सति परस्मिन्सप्रतियोगिकपदार्थज्ञानत्वस्य विवक्षितत्वादित्यर्थः। तथा च घटात्यन्ताभाववद्भूतलमित्यादिसप्रतियोगिकघटात्यन्ताभावादिविषयकविशिष्टवैशिष्ट्यावगाहिज्ञानेषु घटात्य-

न्ताभाव इत्यादिज्ञानानां विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुत्वेन सप्रतियोगिकपदार्थज्ञानत्वेन हेतुत्वाभावान्न पूर्वोक्तज्ञानेष्वतिव्याप्तिरिति भावः ॥

**तथा हि । प्राङ्गणेषु दृष्टगोपिण्डस्य पुरुषस्य वनगतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिरियं पिण्डो गोसदृश इति । तदनन्तरं च भवति निश्चयोऽनेन सदृशी मदीया गौरिति ॥**

शि० म०—ननु गवयनिष्ठगोसादृश्यज्ञानं न प्रत्यक्षेण, तदा गोगवययोरसन्निकर्षात् । तदुभयसन्निकर्षे च तत एव सादृश्यप्रतीत्यापत्तौ मानान्तरत्वानुपपत्तेरित्याशङ्क्य गवयेन्द्रियसन्निकर्षे सति जायमाना गोसादृश्यप्रतीतिः व्यवहितदृष्टे गोपिण्डांशे परोक्षा गवयांशे त्वपरोक्षेत्याह—**तथा हीति** । **गोसदृश इति** । गोभिन्नत्वे सति तद्गतभूयःसामान्यवानित्यर्थः । अथवा तदसाधारणधर्मशून्यत्वे सति तद्गतधर्मवत्त्वं सादृश्यम् । न च हस्तिमशकयोः सादृश्यापत्तिः, प्राणित्वादिनेष्टत्वात् । अत एव पुष्टिमात्रसाधर्म्येण महिष एवायं पुरुष इति लोकव्यवहारः । अन्ये तु सादृश्यं पदार्थान्तरं क्लृप्तपदार्थेष्वनन्तर्भावात् । तथा हि । न तावत् सादृश्यं द्रव्यम्, गुणवृत्तित्वात् । अत एव न गुणः कर्म वा । न च गुणे सादृश्यं नास्त्येव, तत्र तद्व्यवहारस्याश्रयसादृश्यादेवोपपत्तेः, तथा च हेतुरसिद्ध इति वाच्यम्, रूपद्वयं सदृशमिति प्रतीतेर्बाधकं विना प्रमात्वात् । न च परंपरासंबन्धेन प्रमात्वोपपत्तिः, साक्षात्संबन्धे बाधकाभावात्, आश्रयवैसादृश्येऽपि तद्गतगुणयोः सादृश्यानुभवाच्च । नापि सामान्यं सामान्यवृत्तित्वात् । निषेधरूपत्वेनाप्रतीतेश्च नाभावान्तर्भावस्तस्मात्सादृश्यं पदार्थान्तरमिति । तन्न । सादृश्यस्य सामान्ये अन्तर्भावात् । तदसाधारणधर्मशून्यत्वे सति तद्गतधर्मवत्त्वस्य सादृश्यस्योपाधिरूपत्वेन प्रमेयत्वादिवत्सामान्यवृत्तित्वेऽपि विरोधाभावात् । न च सादृश्यं सप्रतियोगिकं सामान्यं तु निष्प्रतियोगिकमिति कथमस्य सामान्यरूपत्वमिति वाच्यम् इतरनिरूप्यं हि सप्रतियोगिकं तद्गतधर्मवत्त्वलक्षणं तथा । किंच सादृश्यं न पदार्थान्तरम्, तथा सति सुसदृशमीषत्सदृशमित्युत्कर्षापकर्षाभावप्रसङ्गात् । सिद्धान्ते तु सामान्यालपभूयस्त्वाभ्यां तत्र तदुपपत्तेः । तदुक्तं तर्कपादे शास्त्रदीपिकायाम् ये तु सामान्ययोगातिरिक्तमन्यदेव तत्त्वं सादृश्यं मन्यन्ते तेषां प्रकर्षापकर्षभेदः किंनिबन्धन इति चिन्तनीयमिति । अनन्तरमित्यनेनान्वयो दर्शितः । चकारेणैवकारार्थेन व्यतिरेकः ॥

म० प्र०—गवयनिष्ठगोसादृश्यज्ञानम्=गवयनिष्ठगोनिरूपितसादृश्यविषयक 'अयं पिण्डो गोसदृशः' इत्याकारकज्ञानम्, तदा=सादृश्यज्ञानाव्यवहितपूर्वकाले । **गोगवययोरिति** । यद्यप्येकेन गवयेन सन्निकर्षसद्भावे गोगवययोरसन्निकर्षादित्युक्तिरनुपपन्ना तथापि पृथिव्यां गन्धसत्त्वेऽपि

पृथिवीजलयोर्गन्धाभाव इत्युक्तिवद्द्वयेन सन्निकर्षसत्त्वेऽप्युभाभ्यां सन्निकर्षाभावेन गोगवययोरसन्निकर्षादित्युक्तिरुपपद्यते इति भावः। तत एव=सन्निकर्षादेव, सादृश्यप्रतीत्यापत्तौ=अनेन सदृशी मदीया गौरित्याकारकसादृश्यज्ञानसिद्धौ। मानान्तरत्वानुपपत्तेः=उपमाननिष्ठप्रत्यक्षाद्यतिरिक्तप्रमाणत्वासिद्धेः, व्यवहितदृष्टे=व्यवहिते व्यवधानवति देशे दृष्टो व्यवहितदृष्टस्तस्मिन्व्यवहितश्चासौ दृष्टो व्यवहितदृष्टस्तस्मिन्निति वा। परममूले प्राङ्गणेषु=चौक इति ख्यातेषु। **गोभिन्नत्वे सतीति**। सादृश्यप्रतियोगिभिन्नत्वे सति स्वाश्रयसमवेतत्वसंबन्धेन सादृश्यप्रतियोगिगतशृङ्गत्वपुच्छत्वादिवहुजातिरूपं यत् सामान्यं सामानाधिकरण्यसंबन्धेन तद्वानित्यर्थः। ननु गोगवययोरुक्तवहुजातिरूपसादृश्यसत्त्वेऽपि जात्यादौ जात्यभावादुक्तवहुजातिरूपं सादृश्यं न स्यादित्याशङ्क्याह–**अथवेति। तदसाधारणधर्मशून्यत्वे सतीति**। सादृश्यप्रतियोगिगवादिगतगोत्वाद्यसाधारणधर्मानधिकरणत्वे सत्युपाधिरूपशृङ्गपुच्छाद्यवयवसमवेतत्वप्राणित्वादिधर्मवत्त्वमित्यर्थः। अत एव=हस्तिमशकयोः प्राणित्वादिना सादृश्यस्येष्टत्वादेव, अत एव=सादृश्यस्य गुणवृत्तित्वादेव, तत्र=गुणे, तद्व्यवहारस्य=सादृश्यव्यवहारस्य, हेतुः=सादृश्यस्य गुणवृत्तित्वादिति हेतुः, असिद्धः=स्वरूपासिद्धः, बाधकं विना=बाधकाभावात्। परंपरासंबन्धेन=सादृश्याश्रयद्रव्याश्रितत्वरूपपरंपरासंबन्धविषयकत्वेन, साक्षात्संबन्धे=रूपद्वयं सदृशमिति प्रतीतेः स्वरूपसंबन्धरूपसाक्षात्संबन्धविषयकत्वे, सामान्यं=जातिः, सामान्यवृत्तित्वात्=नित्यत्वेन गोत्वसदृशं घटत्वमिति सादृश्यस्य घटत्वादिजातिवृत्तित्वात्, सामान्येऽन्तर्भावात्=उपाधिरूपसामान्येऽन्तर्भावात्, तद्गतधर्मवत्त्वस्य=सादृश्यप्रतियोगिगतावयवसमवेतत्वानित्यत्वप्राणित्वादिधर्मवत्त्वस्य। यद्यपि जातिरूपसामान्ये इतरनिरूप्यत्वरूपं सप्रतियोगिकत्वं न संभवति तथाऽप्युपाधिरूपनित्यत्वप्राणित्वाह्लादजनकत्वशृङ्गपुच्छाद्यवयवसमवेतत्वादिरूपसामान्ये इतरनिरूप्यत्वरूपसप्रतियोगिकत्वं भवत्येवेत्यभिप्रेत्याह=**इतरनिरूप्यमिति**। तद्गतधर्मवत्त्वलक्षणं=सादृश्यप्रतियोगिगतोपाधिरूपनित्यत्वादिधर्मवत्त्वलक्षणं सामान्यम्। तथा=इतरनिरूप्यम्, तथा सति=सादृश्यस्य पदार्थान्तरत्वे सति। **सामान्येति**=उपाधिरूपधर्मैरित्यर्थः। तत्र=सखण्डोपाधिरूपसादृश्ये, तदुपपत्तेः=उत्कर्षापकर्षविषयकप्रतीत्युपपत्तेः। सामान्ययोगातिरिक्तम्=सखण्डोपाधिरूपसामान्यसंबन्धातिरिक्तम्, अन्यदेव=द्रव्यादिभिन्नमेव, तत्त्वं=स्वरूपम्, प्रकर्षापकर्षभेदः=सादृश्यनिष्ठाधिक्यन्यूनतारूपविशेषः। अनन्तरमित्यनेन=परममूलस्थानन्तरमितिशब्देन, अन्वयः=अयं पिण्डो गोसदृश इत्यादिज्ञानसत्त्वेऽनेन सदृशी मदीया गौरित्यादिज्ञानसत्त्वमित्यन्वयः। व्यतिरेकः=अयं पिण्डो गोसदृश इत्यादिज्ञानाभावेऽनेन सदृशी मदीया गौरित्यादिज्ञानाभाव इति व्यतिरेकः। अस्य दर्शित इति पूर्वेणान्वयो बोध्यः॥

**तत्रान्वयव्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणम्। गोनिष्ठगवयसादृश्यज्ञानं फलम्॥**

**शि० म०**–नन्वस्तु अन्वयव्यतिरेकावधारणं ततः किमित्यत आह–तत्रेति॥

**म० प्र०**–अवधारणम्=निश्चयात्मकज्ञानम्। परममूले **तत्रेति**। निश्चयद्वयमध्य इत्यर्थः॥

**नचेदं प्रत्यक्षेण संभवति। गोपिण्डस्य तदेन्द्रियासन्निकर्षात्। नाप्यनुमानेन, गवयनिष्ठसादृश्यस्यातल्लिङ्गत्वात्॥**

**शि० म०**—ननु गवयनिष्ठगोसादृश्यज्ञानस्य नान्वयव्यतिरेकाभ्यां गोनिष्ठगवयसादृश्यज्ञानं प्रति करणत्वावगमः, तयोः कारणतामात्रनिश्चायकत्वात्। न च करणान्तरानुपपत्त्या तस्य तत्करणत्वम्, क्लृप्तप्रमाणभावस्य प्रत्यक्षादेः सत्त्वादिति चेत् न, किं प्रत्यक्षं तत्करणमनुमानं वा आद्येऽपि किं तत्करणं चक्षुरादि, अन्तःकरणं वा, आद्यं दूषयति—**न चेति। इन्द्रियासन्निकर्षादिति।** इन्द्रियेण साकं गोपिण्डविशेषस्य संयोगादेरभावात्, ज्ञानप्रत्यासत्तेश्च निराकृतत्वादित्यर्थः। अत एव न द्वितीयः, इन्द्रियासन्निकृष्टबाह्यविषयकप्रत्यक्षज्ञाने मनसोऽसामर्थ्यात्। साधारणकारणत्वाच्च। ननु प्रत्यक्षेण गवये गोसादृश्ये गृह्यमाणे गव्यपि गवयसादृश्यं समानसंवित्संवेद्यतया गृहीतमेवेति चेत् न, विशेषणविशेष्यभेदेन समानसंवित्संवेद्यत्वासिद्धेः। अनुमानपक्षेऽपि किं गोनिष्ठगवयसादृश्यं प्रति गवयनिष्ठगोसादृश्यं लिङ्गं गवयनिष्ठगोसादृश्यप्रतियोगित्वं वा। नाद्यः, गवयनिष्ठसादृश्यस्य भेदगर्भतया गोवृत्तित्वाभावेन तन्निष्ठसादृश्यानुमापकत्वादित्याह—**नाप्यनुमानेति॥**

**म० प्र०**—तयोः=अन्वयव्यतिरकयोः, तस्य=गवयादिनिष्ठसादृश्यज्ञानस्य, तत्करणत्वम्=अनेन सदृशी मदीया गौरित्यादिज्ञानकरणत्वम्, क्लृप्तप्रमाणभावस्य=निश्चितप्रमाणत्वस्य, तत्करणम्=अनेन सदृशी मदीया गौरित्यादिज्ञानकरणम्। ननु प्रत्यक्षेणायं पिण्डो गोसदृश इत्यादिज्ञानानन्तरं गवादिज्ञानलक्षणप्रत्यासत्त्याऽनेन सदृशी मदीया गौरित्यादिज्ञानं स्यादित्याशङ्क्याह—**ज्ञानप्रत्यासत्तेश्चेति।** अत एव=वक्ष्यमाणहेतुभ्यामेव, प्रत्यक्षेण=चक्षुःस्वरूपप्रत्यक्षप्रमाणेन गव्यपि गवयसादृश्यं गृहीतमेवेत्यन्वयः। गवि गवयसादृश्यस्य गृहीतत्वे हेतुमाह—**समानसंवित्संवेद्यतयेति।** घटनिष्ठाधेयतानिरूपितभूतलनिष्ठाधिकरणतायां भूतलनिष्ठाधिकरणतानिरूपितघटनिष्ठाधेयतायां च घटवद्भूतलमित्येकज्ञानविषयतावद्गोगवयसादृश्ययोरपि प्रत्यक्षप्रमाणजन्य 'अयं पिण्डो गोसदृशः' इत्येकज्ञानविषयतयेत्यर्थः। समानसंवित्संवेद्यत्वासिद्धेः=एकज्ञानविषयत्वानिश्चयात्। यत्रैकज्ञानविषयत्वं न तत्रविशेषणविशेष्यभेदो घटवद्भूतलमित्येकज्ञानविषयघटनिष्ठाधेयतानिरूपितभूतलनिष्ठाधिकरणतावद्गोगवयसादृश्ययोस्तु व्यापकविशेषणविशेष्यभेदभावाभावादेकज्ञानविषयत्वरूपव्याप्यस्याभाव इति भावः। असिद्धौ हेतुमाह—**विशेषणविशेष्यभेदेनेति।** गोनिरूपितगवयनिष्ठसादृश्ये गौर्विशेषणं गवयनिरूपितगोनिष्ठसादृश्ये गवयो विशेषणमिति विशेषणविशेष्ययोर्भेदेनेत्यर्थः। गोनिष्ठगवयसादृश्यं प्रति=मदीया गौरनेन सदृशीति गोनिष्ठगवयनिरूपितसादृश्यरूपसाध्यस्य, लिङ्गं=ज्ञापकम्, भेदगर्भतया=गोनिरूपितगवयनिष्ठसादृश्यस्य गोभेदघटितत्वेन। तन्निष्ठसादृश्यानुमापकत्वात्=मदीया गौरनेन सदृशीत्याकारकगोनिष्ठसादृश्यविषयकानुमित्यजनकत्वात्॥

**नापि मदीया गौरेतद्गवयसदृशी एतन्निष्ठसादृश्यप्रतियोगित्वात् यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः यथा मैत्र-**

निष्ठसादृश्यप्रतियोगी चैत्रः मैत्रसदृश इत्यनुमानात्तत्संभव इति वाच्यम् । एवंविधानुमानानवतारेऽप्यनेन सदृशी मदीया गौरिति प्रतीतेरनुभवसिद्धत्वात् ॥

शि० म०—द्वितीयमाशङ्क्य निराकरोति—नापीति । तत्संभव इति । गावि गवयसादृश्यानुभव इत्यर्थः । परिहरति—एवंविधेति । इदमत्राकूतम् । किमत्र सामान्यव्याप्तिर्मूलं विशेषव्याप्तिर्वा । नाद्या, यत्तद्भ्यामननुगतत्वेन सामान्यव्याप्तेरनुमानानङ्गत्वात् । न द्वितीया, यो गवयनिष्ठसादृश्यप्रतियोगी स गवयसदृश इति विशेषव्याप्तेः प्रागज्ञानात् । किंच नानुमानात्तत्संभवः । गवयनिरूपितगोसादृश्यरूपसाध्याप्रसिद्धेः । किंच न हेतुः पक्षधर्मतया ज्ञातुं शक्यः, गवयनिष्ठसादृश्यप्रतियोगित्वस्यासन्निकृष्टे गावि प्रत्यक्षेणाज्ञानात् । न च विशिष्टघटकपदार्थभेदेन गावि गवयसादृश्याश्रयत्वाज्ञानेऽपि गवये गोसादृश्ये गृह्यमाणे समानसंवित्तिवेद्यतया तत्प्रतियोगित्वं भातमेवेति वाच्यम् । तथापि गोरसन्निकर्षे मदीया गौरेतद्गवयनिष्ठसादृश्यप्रतियोगिनीति गोविशेष्यकपक्षधर्मताज्ञानस्यासिद्धेः । न च ज्ञानोपनीते तस्मिन्मानसः परामर्श इति युक्तम्, ज्ञानप्रत्यासत्तेर्निराकृतत्वात् । अपि च न गवि गवयसादृश्यमनुमितिविषयः, कथंचित्साध्यहेतुप्रसिद्धावपि गावि गवयसादृश्यानुभवसमये नियमेन व्याप्तिज्ञानाभावात् । तस्मादनुमितिसामग्रीविरहात् न गावि गवयसादृश्यानुमितिरिति ॥

म० प्र०—अत्र=मदीया गौरनेन सदृशीत्याकारकगोनिष्ठैतद्गवयनिरूपितसादृश्यानुमितौ । यत्तद्भ्यामननुगतत्वेन=यदा यच्छब्देन दृष्टान्तस्य ग्रहणं तदा पक्षस्य ग्रहणं नास्ति यदा यच्छब्देन पक्षस्य ग्रहणं तदा दृष्टान्तस्य ग्रहणं नास्तीति पक्षदृष्टान्तयोरेकयच्छब्देनैकदा ग्रहणाभावेन पक्षदृष्टान्तीयसादृश्यरूपसाध्यभेदेन साध्यस्यैकरूपत्वाभावेन, यः=गोपदार्थः । सः=गोपदार्थः । प्राक्=अनुमानात्प्राक्, तत्संभवः=मदीया गौरेतद्गवयसदृशीत्यनुमितेः संभवः । **साध्याप्रसिद्धेरिति** । न च साध्यप्रसिद्ध्यभावेऽप्येतद्रूपवानेतद्रसादित्याद्यनुमानवदत्र साध्यप्रसिद्ध्यभावेऽप्युक्तानुमानसंभव इति वाच्यम् । व्यतिरेक्यनुमानानभ्युपगमेन दृष्टान्तस्यासंमतत्वादिति । हेतुः=गवयनिष्ठसादृश्यप्रतियोगित्वरूपो हेतुः, पक्षधर्मतया=पक्षवृत्तित्वेन, प्रत्यक्षेण=चक्षुरिन्द्रियेण, विशिष्टघटकपदार्थभेदेन=विशिष्टसादृश्यघटकपदार्थभेदेन, समानसंवित्तिवेद्यतया=एकज्ञानविषयतया । तत्प्रतियोगित्वम्=गोरेतद्गवयनिष्ठसादृश्यप्रतियोगित्वम्, ज्ञानोपनीते=ज्ञानविषये गोपदार्थे । कथंचित्=तुष्यतु दुर्जनः इति न्यायेन ज्ञानप्रत्यासत्तिस्वीकारेण, तस्मात्=पूर्वोक्तयुक्तिकलापात् । **अनुमितिसामग्रीति**=व्याप्तिज्ञानादिरूपानुमितिसामग्रीत्यर्थः ॥

उपमिनोमीत्यनुव्यवसायाच्च

**शि० म०**—नन्वनुमानानवतारे तत्र गवयसादृश्यानुभवोऽसिद्ध एव, लाघवेन क्लृप्तप्रमाणभावस्य व्याप्तिज्ञानस्यैव तत्र करणत्वकल्पनादित्यत आह—**उपमिनोमीति**। नैयायिकास्तु—कीदृशो गवय इति, प्रश्नानन्तरं यथा गौस्तथा गवय इत्याप्तद्वारा लब्धोपदेशकस्य वनं गतस्य तद्वाक्यार्थं स्मरतो नागरिकस्य सत्ययं गोसदृश इति प्रत्यक्षे भवति प्रतीतिरसौ गवयशब्दवाच्य इति सैवोपमितिः तत्करणं च नातिदेशवाक्यम्, तस्य प्राक् पिण्डप्रत्यक्षादपि भावात्। नापि प्रत्यक्षम्। सत्यपि तस्मिन् वाक्याश्रवणे वाच्यताप्रतीत्यनुपपत्तेः। नापि मिलिताभ्यां वाक्यप्रत्यक्षाभ्यां तादृशज्ञानमिति वाच्यम्। तयोर्भिन्नकालतया मेलनासिद्धेः। प्रत्यक्षसमये तद्वाक्यानुस्मृतिसंभवेऽपि शाब्दत्वापरोक्षत्वयोः सांकर्य्यापत्त्या ताभ्यां विजातीयप्रमाणाभ्यां तादृशप्रमाऽनुपपत्तेः॥

**म० प्र०**—अनुमानानवतारे=उक्तानुमानानुत्पत्तौ। तत्र=गवि, लाघवेन=अनुमानातिरिक्तोपमानप्रमाणानङ्गीकाररूपलाघवेन। तत्र=गोनिष्ठगवयसादृश्यज्ञाने। गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थशाब्दबोधः करणमुक्तातिदेशवाक्यार्थस्मरणं व्यापारः, गोसादृश्यविशिष्टपिण्डप्रत्यक्षमुक्तकरणसहकारि, अयं गवयपदवाच्य इत्युपमितिः फलमिति संप्रदायमतं निराकुर्वतां गवये गोसादृश्यप्रत्यक्षमुपमितिकरणम्, गोसदृशो गवयपवाच्य इत्यतिदेशवाक्यार्थस्मरणं व्यापारः, उक्तोपमितिः फलमिति वदतां नवीननैयायिकानां मतं दूषयितुमनुवदति—**नैयायिकास्त्विति**। इति प्रश्नानन्तरम्=सामान्यतो गवयपदवाच्यं किंचिदस्तीति जानतो विशेषव्यक्तौ गवयपदशक्तिमजानतः पुरुषस्योक्तप्रश्नानन्तरम्। तथा=गोनिरूपितसादृश्यवान्। गवयः=गवयपदवाच्यः। आप्तद्वारा=यथार्थवक्तृरूपनिमित्तकारणेन। तद्वाक्यार्थम्=गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थम्। **सतीति**। अयं गोसदृश इति प्रत्यक्षे सतीत्यन्वयः। तत्करणं च=उक्तोपमितिकरणं च। नातिदेशवाक्यं=गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यं न, तस्य=अतिदेशवाक्यस्य। भावात्=सत्त्वात्। प्रत्यक्षं=गवयचाक्षुषप्रत्यक्षम, तस्मिन्=गवयचाक्षुषज्ञाने। वाच्यताप्रतीत्यनुपपत्तेः=शक्तिज्ञानानुत्पत्तेः। तादृशज्ञानम्=असौ गवयपदवाच्य इति ज्ञानम्। तयोः=गवयचाक्षुषप्रत्यक्ष 'गोसदृशो गवयगदवाच्यः' इति वाक्ययोः। **तद्वाक्येति**। गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्येत्यर्थः। तादृशप्रमानुपपत्तेः=उपमितित्वधर्मविशिष्ट 'असौ गवयपदवाच्यः' इति प्रमानुत्पत्तेः॥

**शि० म०**— न च वाक्यार्थानुसंधानसहकृतप्रत्यक्षं तत्करणमिति युक्तम्, प्रत्यक्षानन्तरं व्यासङ्गादिना वाच्यत्वप्रतीत्यभावेऽपि उत्तरकाले सादृश्यविशिष्टपिण्डस्मरणे सति समयपरिच्छेददर्शनात्। नाप्यनुमानं तत्करणं तदनवतारेऽप्युक्तप्रतीतेरनुभवसिद्धत्वात्तस्मात्सादृश्यज्ञानमेवोपमितिकरणम् तदुक्तमुदयनाचार्य्यैः। "संबन्धस्य परिच्छेदं संज्ञायास्संज्ञिना सह। प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः"

इति। ततश्च पृथक् प्रमाणं तदित्याहुः। तच्चिन्त्यम्, क्लृप्तप्रमाणेनैव तत्संभवात्। तथा हि। किं गवयपदवाच्यताज्ञानं फलं गवयपदं गवयत्वप्रवृत्तिनिमित्तकमिति ज्ञानं वा। आद्ये न तावद्गवयपदवाच्यताज्ञानम्, गोसदृशो गवयपदवाच्य इति वाक्यात्सादृश्योपलक्षिते तत्पदवाच्यत्वस्य ज्ञातत्वात्॥

म० प्र०—वाक्यार्थानुसंधानसहकृतम्=गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणसहकृतम्। प्रत्यक्षम्=गवयचाक्षुषज्ञानम्, तत्करणम्=असौ गवयपदवाच्य इति ज्ञानकरणम्, प्रत्यक्षानन्तरम्=गवयचाक्षुषज्ञानानन्तरम्। व्यासङ्गादिना=ह्याद्यन्यपदार्थचित्तसंचारादिना। वाच्यत्वप्रतीत्यभावेऽपि=गवयपदशक्तिज्ञानाभावेऽपि। उत्तरकाले=व्यासङ्गादिप्रतिबन्धकनिवृत्त्युत्तरकाले। सादृश्यविशिष्टपिण्डस्मरणे सति=गवये गोनिरूपितसादृश्यचाक्षुषज्ञानजन्यगोनिरूपितसादृश्यविशिष्टगवयपिण्डस्मरणे सति, समयपरिच्छेददर्शनात्=उक्तस्मरणरूपव्यापारद्वारोक्तकारणादेव शक्तिनिश्चयदर्शनात्, अनुमानम्=अयं पिण्डो गवयपदवाच्यो गोसदृशत्वाद्गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यावगतपिण्डवदित्यनुमानम्, तत्करणम्=असौ गवयपदवाच्य इति ज्ञानकरणम्। तदनवतारेऽपि=उक्तानुमानानुत्पत्तावपि, उक्तप्रतीतेः=असौ गवयपदवाच्य इति प्रतीतेः। तस्मात्=अयं पिण्डो गवयपदवाच्य इति प्रतीतेः प्रत्यक्षादिनाऽसंभवात्, सादृश्यज्ञानमेव=गोसदृशगवयचाक्षुषसादृश्यज्ञानमेव। **संबन्धस्येति**। संज्ञाया वाचकशब्दस्य संज्ञिना वाच्यार्थेन संबन्धस्य शक्तिरूपस्य परिच्छेदं निश्चयमुपमानप्रमाणफलं विद्वांसो विदुरित्यर्थः। ततश्च=अयं पिण्डो गवयपदवाच्य इति ज्ञानस्य शब्दादिनाऽसंभवादुपमानप्रमाणस्योदयनाचार्याणां संमतत्वाच्च। क्लृप्तप्रमाणेन=शब्दानुमानेन, सत्संभवात्=असौ गवयशब्दवाच्य इति शक्तिज्ञानसम्भवात्। आद्ये=असौ गवयपदवाच्य इति शक्तिज्ञानमुपमानफलमिति प्रथमपक्षस्वीकारे सति। **गवयपदवाच्यताज्ञानमिति**। वाच्यता च शक्यता, शक्यता तु शक्तिरेव। तथा च गवयपदशक्तिज्ञानमित्यर्थः। **गोसदृश इति**। गोसदृशो गवयपदवाच्य इति वाक्यजन्यगोनिरूपितसादृश्यज्ञानविषये इत्यर्थः। तत्पदवाच्यत्वस्य ज्ञातत्वात्=गोसदृशो गवयपदवाच्य इति वाक्यादेव गवयपदशक्तेर्ज्ञातत्वादित्यर्थः॥

शि० म०—नाप्ययं गवयपदवाच्य इति ज्ञानं फलमयं पिण्डो गवयपदवाच्यः गोसदृशत्वादतिदेशवाक्यावगतपिण्डवदित्यनुमानेन तत्र वाच्यत्वग्रहसंभवात्। अत एव गवयत्वविशिष्टो गवयपदवाच्य इति ज्ञानमुपमानफलम्। गवयत्वस्य पूर्वमनुपस्थितत्वान्नास्य शब्दादिना अन्यथासिद्धिरित्यपास्तम्। गवयत्वविशिष्टो गवयपदवाच्यः गोसदृशत्वादतिदेशवाक्यावगतपिण्डवदित्यनुमानेनैव तत्संभवात्। न द्वितीयः। गवयपदं सप्रवृत्तिनिमित्तं पदत्वात् घटपदवदित्यनुमानेन गवयपदं गवयत्वतदन्यान्यतरप्रवृत्तिनिमित्तकं पदत्वादिति सामान्यतो दृष्टेन लाघवसहकृतेन वा गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति

सप्रवृत्तिनिमित्तकत्वादिति व्यतिरेकिणा वा गवयत्वप्रवृत्तिनिमित्तकत्वपरिच्छेदसम्भवात् । न चैतादृशानुमानानवतारदशायामुपमानप्रवृत्तिरिति वाच्यमुपमानानुमानयोरन्यतरकल्पनाप्रसक्तावनुमानस्यैव क्लृप्तप्रमाणभावतया कल्पनौचित्यात् ॥

म० प्र०–ननु गोसदृशो गवयपदवाच्य इतिवाक्यादनिर्धारितपिण्डविशेषे परोक्षं गवयपदशक्तिज्ञानं न तूक्तवाक्यादपरोक्षं गवयपदशक्तिज्ञानमपरोक्षगवयपदशक्तिज्ञानमेवोपमानफलमित्याशङ्क्य निषेधयति–**नापीति** । तत्र=गवये, वाच्यत्वग्रहसंभवात्=गवयपदशक्तिज्ञानसम्भवात् । अत एव=वक्ष्यमाणहेतोरेव । अस्यापास्तमित्यनेनान्वयः । **अस्येति** । गवयत्वविशिष्टो गवयपदवाच्य इति ज्ञानस्य शब्दादिना अन्यथाऽन्यप्रमाणेनोत्पत्तिर्नेत्यर्थः । उक्तज्ञानस्य शब्दाद्यन्यप्रमाणेनानुत्पत्तौ हेतुमाह–**गवयत्वस्य पूर्वमिति** । गोनिरूपितसादृश्यप्रकारकपिण्डविशेषविशेष्यकज्ञानरूपोपमानप्रमाणात्पूर्वं गवयत्वस्य पिण्डविशेषेऽपरोक्षभानासंभवेनासौ गवयपदवाच्य इत्युपमित्यर्थमुपमानप्रमाणमङ्गीकर्तव्यमिति भावः । **गोसदृशत्वादिति** । ननु गोनिरूपितपशुत्वादिना सादृश्यस्य महिष्यादौ सत्त्वेन महिष्यादौ गवयपदवाच्यत्वाभावेन च महिष्यादौ हेतोर्व्यभिचार इति चेन्न, महिष्याद्यवृत्तित्वे सतीति विशेषणस्य निवेशनीयत्वात्तथा च गोसदृशी महिषीत्यादिव्यवहाराभावेन पशुत्वादिनाऽत्र सादृश्यं न विवक्षितमिति भावः । तत्सम्भवात्=गवयत्वविशिष्टो गवयपदवाच्य इति ज्ञानसम्भवात् । सामान्यतो दृष्टेन=कार्य्यकारणभिन्नलिङ्गकेनान्वयव्यतिरेकिलिङ्गेन वा, लाघवसहकृतेन=तत्तदुपमानेन तत्तत्पदवाच्यत्वज्ञानापेक्षयैकानुमानेन तत्तत्पदवाच्यत्वज्ञाने लाघवमिति लाघवज्ञानसहकृतेन । इतराप्रवृत्तिनिमित्तकत्वे सति=गवयत्वेतरप्रवृत्तिनिमित्ताभावकत्वे सति, अनवतारदशायाम्=अनुत्पत्तिकाले । **उपमानानुमानयोरिति** । उपमानानुमानयोर्मध्ये, एकमेव प्रमाणमङ्गीकर्तव्यमित्येकप्रमाणकल्पनाप्रसक्तावित्यर्थः ॥

**तस्मादुपमानम्मानान्तरम् ॥**

**इति वेदान्तपरिभाषायामुपमानपरिच्छेदः ॥ ३ ॥**

**शि० म०**–नन्वस्मिन्मते गवयेन गामुपमिनोमीत्यनुव्यवसायबलादेव विजातीयज्ञानसिद्धिः । ततश्च तत्करणं मानान्तरं कल्प्यते इति चेत् न, उक्तानुव्यवसायस्यास्मदभिमतसादृश्यबुद्धिविषयत्वात् । न हि गवयेन गामुपमिनोमीत्यनुव्यवसायो वाच्यत्वज्ञानविषयः । अत एव कमलेन लोचनमुपमिनोमीति लोकव्यवहारः । अन्यथा समयपरिच्छेदस्य तत्राभावेन तथा व्यवहाराभावप्रसङ्गः । तस्मान्न संज्ञासंज्ञिसंबन्धबुद्धिरुपमानफलम् । ततश्चोपमिनोमीत्यनुव्यवसायबलात् सादृश्यबुद्धिरेवोपमितिः । तत्करणं च तन्निरूपितसादृश्यज्ञानमित्युपमानं मानान्तरमिति तदेतत्सर्वमभिप्रेत्योपसंहरति–**तस्मादिति** ॥

इति श्रीधर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते
वेदान्तशिखामणावुपमानपरिच्छेदः ॥ ३ ॥

**म० प्र०**—अस्मिन्मते=न्यायमते । विजातीयज्ञानसिद्धिः=उपमितित्वधर्मविशिष्टज्ञानसिद्धिः, ततश्च=विजातीयज्ञानरूपकार्य्यस्य सिद्धत्वादेव । अस्मदभिमतसादृश्यबुद्धिविषयत्वात्=अनेन सदृशी मदीया गौरित्याद्यस्मदभिमतबुद्धिविषयत्वात् । **वाच्यत्वज्ञानविषय इति** । न चैवमपि गवा गवयमुपमिनोमीत्यनुव्यवसायाच्छक्तिज्ञानरूपविजातीयज्ञानसिद्धिः स्यादिति वाच्यम् । तादृशानुव्यवसायानङ्गीकारादङ्गीकारेऽप्यत एवेत्यादिवक्ष्यमाणप्रकारेण तस्य शक्तिज्ञानाविषयकत्वात् । अत एव=उक्तानुव्यवसायस्य शक्तिज्ञानाविषयकत्वादेव, अन्यथा=गवयेन गामुपमिनोमीत्यनुव्यवसायस्यानेन सदृशी मदीया गौरित्याद्यस्मदभिमतबुद्धिविषयकत्वानङ्गीकारे । **सनयपरिच्छेदस्येति** । उपमानप्रमाणजन्यगवादिपदशक्तिज्ञानस्य तत्र गवि लोचनादौ चाभावेनासत्त्वेनेत्यर्थः । तथा व्यवहाराभावप्रसङ्गः=गवयेन गामुपमिनोमि कमलेन लोचनमुपमिनोमीत्यादिव्यवहाराभावप्रसङ्गः । तस्मात्=तथा व्यवहारापसक्तिरूपदूषणादेव । ततश्च=गामुपमिनोमीत्याद्यनुव्यवसायस्यानेन सदृशी मदीया गौरित्याद्यस्मदभिमतबुद्धिविषयकत्वादेव । तत्करणम्=सादृश्यबुद्ध्यात्मकोपमितिकरणम् । तन्निरूपितेति=गोनिरूपितेत्यर्थः ॥

इति श्रीमद्ब्रह्मविज्ञानाभिधविद्याप्रदगुरुप्रसादलब्धोदासीनामरदासशब्दवाच्याविर्भूतायां वेदान्तपरिभाषाख्यग्रन्थस्य शिखामण्याख्यटीकायाश्च मणिप्रभाख्यायां व्याख्यायामुपमानपरिच्छेदः ॥ ३ ॥



# अथागमपरिच्छेदः ४.



**अथागमो निरूप्यते ॥**

**शि० म०**—उपमानानन्तरं शब्दस्य बहुवादिसंमतत्वादर्थापत्तेः प्राक् शब्दो निरूप्यते इत्याह—**अथेति** ॥

म० प्र०—यत्प्रसादादियं भाति प्रभा हृदि शिखामणेः।
नत्वा तु तान् गुरून्भक्त्या व्याकरोमि शिखामणिम् ॥ १ ॥

उपमानानन्तरमागममेव निरूपणीयत्वेन समर्थयति—**उपमानानन्तरमिति** ।

**यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणम् ॥**

**शि० म०**—केचित्तु स्वसमानविषयवाक्यार्थयथार्थज्ञानजन्यत्वमिति कारणद्वारकं प्रमाणशब्दलक्षणमाचक्षते। नैतत्सारम्, शुकबालादिवाक्ये अव्याप्तेः। न चेश्वरज्ञानं तद्वाक्यार्थविषयं तत्रास्त्येवेति वाच्यम्, ईश्वरानङ्गीकर्तृमते तथाप्यव्याप्तेः। किंच नेदं प्रमाणशब्दस्य लक्षणम् , शुकादिप्रयोगस्थले क्लृप्तपदावलीज्ञानादेवान्यत्र शब्दरचनोपपत्तौ गौरवेण च क्लृप्तवाक्यार्थज्ञानस्याहेतुत्वात्। किंच इदमसंभवि, सिद्धान्ते वियदादिवन्नित्यशब्दस्य प्रतिप्रयोगं भिन्नभिन्नानुपूर्वीघटितपदवाक्यभेदेऽपि स्वरूपेण तज्जन्यत्वाभावात् । न चानुपूर्वीविशिष्टतया जन्यत्वं घटज्ञानानन्तरज्ञानविषयत्वरूपायास्तदुच्चारणानन्तरोच्चारणविषयत्वलक्षणाया वाऽऽनुपूर्व्या उपाधित्वेनानादितया वाक्यार्थज्ञानाजन्यत्वात्। ततश्च कारणद्वारकं प्रमाणशब्दलक्षणं न युक्तमित्यभिसंधाय प्रकारान्तरेण लक्षणमाह—**यस्येति**। मानान्तराबाधिततात्पर्यविषयीभूतपदार्थसंसर्गबोधकत्वं यस्य वाक्यस्य तद्वाक्यं प्रमाणशब्द इत्यर्थः । शब्दसमानार्थके प्रमाणान्तरे प्रमाणशब्दलक्षणं मा प्रसाङ्क्षीदिति **वाक्यस्य** इत्युक्तम्। पदार्थसंसर्गबोधकवाक्यत्वस्याग्निना सिञ्चेदित्ययोग्यवाक्येऽपि गतत्वात् **अबाधितेति** संसर्गविशेषणम्। ब्रह्मपरवाक्यातिरिक्तसकलवाक्येषु स्वार्थसंसर्गस्य नेह नानाऽस्तीत्यादिना बाधितत्वादव्याप्तिरित्यत उक्त **मानान्तरेणेति**। सजातीयमानान्तरेणेत्यर्थः। तथा च पारमार्थिकतत्त्वावेदकैर्वेदान्तैर्घटायनादिसंसर्गस्य यागस्वर्गादिसाध्यसाधनभावस्य च बाधेऽपि सजातीयैर्व्यावहारिकतत्त्वावेदकैः प्रमाणान्तरैर्बाधाभावान्नाव्याप्तिः ॥

म० प्र०—केचित्=चिन्तामणिकाराः, शुक्तिरजतादिविषयक 'इदं रजतम्' इत्यादिशब्देऽतिव्याप्तिवारणाय **यथार्थेति**। यथार्थविशेषणज्ञानजन्यविशिष्टबुद्धावतिव्याप्तिवारणाय **वाक्यार्थेति** ।

घटमानयेति वाक्ये पटमानयेति वाक्यार्थज्ञानजन्यत्वाभावाचालनीन्यायेनासंभववारणाय **स्वसमानविषयेति**। वाक्यविषयाभिन्नविषयकेति तदर्थः। स्वसमानविषयवाक्यार्थविषयकयथार्थानुभवजन्यवाक्यार्थविषयकस्मृतावतिव्याप्तिवारणाय स्वसमानविषयवाक्यार्थयथार्थज्ञानत्वेन जन्यत्वं विवक्षणीयमिति स्मृतौ नातिव्याप्तिरिति। कारणद्वारकम्=स्वसमानविषयकवाक्यार्थयथार्थज्ञानघटकम्। एतत्=उक्तलक्षणम, सारं=सम्यक्, तद्वाक्यार्थविषयम्=शुकादिवाक्यार्थविषयम्, तत्र=तदा शुकादिवाक्योचारणपूर्वकाले इति यावत्। तथापि=ईश्वराङ्गीकर्तृमतेऽतिव्याप्त्यभावेऽपि, शुकादिप्रयोगस्थले=शुकादिसंबन्धिप्रयुज्यमानवाक्यस्वरूपे शुकादिसंबन्धिवाक्योच्चारणपूर्वकाले इति वा, क्लृप्तपदावलीज्ञानादेव=वाक्यकारणत्वेन निश्चितपदसमुदायज्ञानादेव, अन्यत्र=विज्ञपुरुषेऽपि, शब्दरचनोपपत्तौ=शब्दोत्पत्तिसंभवे शब्दोच्चारणसंभवे इति वा। **वक्त्रिति**=विज्ञवाक्यवक्तृपुरुषेत्यर्थः। अहेतुत्वात्=प्रमाणशब्दनिरूपितकारणत्वाभावात्। इदम्=उक्तप्रमाणशब्दलक्षणम्, प्रतिप्रयोगम्=प्रतिवाक्यम्, तज्जन्यत्वाभावात्=वाक्यार्थज्ञानजन्यत्वाभावात्। आनुपूर्वीविशिष्टतया=वाक्यार्थज्ञानजन्यानुपूर्वीयुक्तत्वेन। जन्यत्वम्=शब्दप्रमाणस्य वाक्यार्थज्ञानजन्यत्वम्। **घटज्ञानानन्तरेति**। अम्पदान्तघटपदोत्तरमानयपदमिति घटपदज्ञानानन्तरज्ञानविषयत्वरूपाया इत्यर्थः। **तदुच्चारणेति**। द्वितीयान्तघटपदोच्चारणानन्तरानयपदोच्चारणविषयत्वरूक्षणाया इत्यर्थः। **उपाधित्वेनेति**। जातिरूपसामान्यस्यानादित्ववदुपाधिरूपसामान्यस्याप्यनादित्वमिति भावः। ततश्च=स्वसमानविषयवाक्यार्थयथार्थज्ञानजन्यत्वाभावादेव। बोधकत्वमित्यस्य बोधकत्वे सतीत्यर्थः। यस्य वाक्यस्येत्यस्य तु वाक्यत्वमित्यर्थः। इत्यभिप्रेत्य स्वनिष्कृष्टलक्षणस्य कृत्यमाह—**शब्दसमानार्थके इति**। शब्दविषयाभिन्नविषयके इत्यर्थः। प्रमाणान्तरे=प्रत्यक्षादौ। मा प्रसाङ्क्षीत्=अतिप्रसक्तो मा भवेत्। सजातीयमानान्तरेण=व्यावहारिकतत्त्वावेदकत्वेन साजात्यवन्मानान्तरेण। तथा च=सजातीयमानान्तरार्थकमानान्तरशब्दादाने सति, सजातीयैः=व्यावहारिकतत्त्वावेदकत्वेन सजातीयैः॥

**शि० म०—अर्थवादवाक्ये 'स प्रजापतिरात्मनो वपामुदखिदत्' इत्यादौ श्रूयमाणपदार्थसंसर्गस्य व्यवहारदशायामपि बाधात् तात्पर्य्यविषय इत्युक्तम्। यद्वा योग्यशब्दत्वमिह प्रमाणलक्षणम्, योग्यत्वं च तात्पर्य्यविषयसंसर्गाऽबाधः। प्रमास्वरूपयोग्यशब्दमात्रस्य लक्षणत्वादनासन्नादौ नातिप्रसङ्गः। अथवा तात्पर्य्यविषयाबाधितसंसर्गगोचरशाब्दज्ञानजनकत्वं लक्षणम्। शाब्दज्ञानं च पदज्ञानत्वेन पदज्ञानजन्यं तात्पर्य्यज्ञानत्वेन तात्पर्यज्ञानजन्यं वा। तात्पर्य्यज्ञानकारणत्वं चाकरे स्फुटम्॥**

**म० प्र०**—सः=यजमानः, प्रजापतिः=भाविप्रजापतित्ववान्, आत्मनः=स्वस्य, वपां=त्वचम्, उदखिदत्=शरीराद्विभक्तवान्। तथा च यजमानकर्तृकवपाकर्मकनिस्सारणमित्यर्थः। पशुयागे हि 'तूबरोऽश्मश्रुपुरुषोऽपोढश्रृङ्गानडुह्यपि' इति हेमचन्द्रकोशादजातश्रृङ्गतूबरपशुवपानिष्कासनस्य वेदविहितस्य यजमानवपानिष्कासने आरोपद्वारा तूबरपशुवपायामेतादृशी तूबरवपा भवति, यस्याः निःसार-

णेन यजमानवपाया निःसारणं भवतीति प्राशस्त्यं स प्रजापतिरित्यादिवाक्येन बोध्यते इति भावः **बाधादिति ।** अव्याप्तिरिति शेषः । **तात्पर्यविषयेत्युक्तमिति ।** स प्रजापतिरित्यादिवाक्येऽव्याप्तिवारणाय तात्पर्य्यविषयेत्युक्तमित्यर्थः । तात्पर्य्यविषयेत्युक्ते हि यजमानवपाया निःसारणे स प्रजापतिरित्यादिवाक्यस्य तात्पर्य्यं नास्ति, किन्तु तूबरपशुवपाप्राशस्त्ये इति नाव्याप्तिरिति भावः । प्रमाणलक्षणं=प्रमाणशब्दलक्षणम् । नन्वासत्त्याकाङ्क्षाशून्यशब्दस्यापि प्रत्यक्षयोग्यशब्दत्वादनासन्नशब्दादावतिव्याप्तिरित्याशङ्क्याह—**योग्यत्वं चेति ।** शब्दनिष्ठयोग्यत्वं चेत्यर्थः। तात्पर्यविषयसंसर्गाबाधः=स्वबोधकतासंबन्धेन तात्पर्यविषयसंसर्गवत्त्वं तात्पर्य्यविषयसंसर्गविषयकबोधजनकत्वं वा । ननु शब्दनिष्ठैतादृशयोग्यता किमित्याश्रीयते इत्याशङ्क्याह—**प्रमास्वरूपयोग्यशब्दमात्रस्येति ।** प्रमास्वरूपनिष्ठजन्यतानिरूपितजनकतावच्छेदकासत्त्यादिमच्छब्दत्वस्यैव, लक्षणत्वात्=प्रमाणशब्दलक्षणत्वाद्, अनासन्नादौ=आसत्तिशून्यवाक्यादावित्यर्थः । **पदज्ञानत्वेनेति ।** तेन पदज्ञानस्य विषयविधया स्वप्रत्यक्षजनकत्वेऽपि नातिव्याप्तिरिति भावः । आकरे=भाष्ये ॥

**वाक्यजन्ये च ज्ञाने आकाङ्क्षायोग्यताऽऽसत्तयस्तात्पर्य्यज्ञानं चेति चत्वारि कारणानि ॥**

**शि० म०**—वैशेषिकास्तु—शब्दो न पृथक् प्रमाणमनुमानेनैव तदर्थसिद्धेः । तथा हि । लौकिकानि गामानयेत्यादीनि वैदिकानि च "ज्योतिःष्टोमेन स्वर्गकामो यजेत" इत्यादीनि तात्पर्य्यविषयपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षायोग्यताऽऽसत्तिमत्पदकदम्बत्वात्पटमानयेत्यादिवाक्यवत् । एते पदार्थास्तात्पर्य्यविषयमिथःसंसर्गवन्तः योग्यपदस्मारितत्वात्संप्रतिपन्नवत् । न च शब्द एव संसर्गप्रतीतिं जनयतु अविशेषादितिं वाच्यम्, अनुमानस्य क्लृप्तप्रमाणभावतया तस्यैव करणत्वौचित्यात् । तस्मादनुमानविधया प्रमाणम्, न स्वातन्त्र्येणेति । तन्निराकरोति—**आकाङ्क्षेति ।** वाक्यजन्यज्ञाने आकाङ्क्षायोग्यताऽऽसत्तयः कारणानीति अतो वाक्यं पृथक्प्रमाणमित्यर्थः । तथा च यादृशज्ञाने योग्यतादेः सहकारित्वं तादृशं क्लृप्तविज्ञानविजातीयं सिद्धमिति तदवच्छिन्नज्ञानजनकमानस्य मानान्तरत्वमास्थेयम् । अन्यथा शब्दप्रामाण्यप्रद्वेषिमते योग्यतादेः सर्वसिद्धं सहकारित्वं भज्येतेति भावः । नन्वस्त्येवाकाङ्क्षादिघटितलिङ्गजन्यसंसर्गानुमितौ आकाङ्क्षादेरुपयोगः। लिङ्गान्तरजन्यानुमितौ तु जिज्ञासालक्षणाकाङ्क्षायास्सिषाधयिषाविरहसहकृतासिद्ध्यभावरूपपक्षतासंपादनद्वारा, अन्वयबोधाभावलक्षणायाश्च पक्षतात्वेन, वाक्यार्थपर्य्यवसन्नयोग्यताज्ञानस्याबाधितत्वज्ञानत्वेन, पदार्थस्मृतिरूपाया आसत्तेर्विशेषणज्ञानत्वेन पक्षज्ञानत्वेन वा उपयोगः । ततश्च न विजातीयज्ञानसिद्धिरित्यपरितोषादाह—**तात्पर्य्यज्ञानमिति ।**

न हि तात्पर्य्यज्ञानस्यापि कथंचिदनुमितावुपयोगः। अनुमितित्वावच्छेदेनाहेतुत्वात्। न च तात्पर्य्यविशेषितसाध्यानुमितित्वावच्छेदेन विशेषणज्ञानत्वेन हेतुत्वमिति युक्तम्। तथापि तदविशेषितसाध्यानुमितेस्तात्पर्यज्ञानाजन्यत्वेन तस्य शब्दसहकारिताभङ्गप्रसङ्गात्। किंच असत्यपि व्याप्तिज्ञाने सत्स्वाकाङ्क्षादिषु चतुर्षु कारणेषु संसर्गज्ञानस्यानुभवसिद्धत्वान्न शब्दस्यानुमानेऽन्तर्भावः। अपिच यदि शब्दप्रामाण्ये अवश्यं प्रद्वेषः तर्ह्यनुमानमपि पृथक्प्रमाणं न स्यात्। तत्रापि क्लृप्तप्रमाणभावस्य मनआदेः प्रत्यक्षस्य प्रमाणत्वौचित्यात्। यदि च तत्र साक्षात्करोमीत्यनुव्यवसायाभावादनुमिनोमीत्यनुव्यवसायाच्च पृथक् प्रमाणमनुमानमिति मतं तदा शब्दादमुमर्थं प्रत्येमीत्यनुव्यवसायात्सोऽपि पृथगिति तुल्यम्। तस्मात्सर्वेऽपि लौकिका वैदिकाः शब्दाः स्वातन्त्र्येण प्रमाणमिति संक्षेपः॥

म० प्र०—वैशेषिकाः=कणादमतानुसारिणः। तदर्थसिद्धेः=शब्दप्रमाणस्य पदार्थसंसर्गज्ञानरूपप्रयोजनसिद्धेः, संप्रतिपन्नवत्=घटमानयेति वाक्यवत्, अविशेषात्=प्रमाणत्वेन तुल्यत्वात्। अनुमानविधया उक्तानुमानकल्पनाद्वारा, स्वातन्त्र्येण=शब्दत्वेन। तत्=वैशेषिकोक्तम्, यादृशज्ञाने=शाब्दत्वविशिष्टे, सहकारित्वं=सहकारिकारणत्वम्। **तदवच्छिन्नेति**=शाब्दत्वावच्छिन्नेत्यर्थः। अन्यथा=शाब्दत्वावच्छिन्नज्ञानजनकमानस्य मानान्तरत्वानङ्गीकारे। लिङ्गान्तरजन्यानुमितौ=आकाङ्क्षाद्यघटितधूमादिजन्य 'पर्वतो वह्निमान्' इत्याद्यनुमितौ। परममूलोक्ताकाङ्क्षामभ्युपगम्याह=**जिज्ञासेति**। न च परममूलोक्तजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा न तु जिज्ञासाऽऽकाङ्क्षा परममूलोक्तेति वाच्यम्। जिज्ञासाया मूलोक्ताकाङ्क्षाघटकत्वाज्जिज्ञासायामभ्युपचारेणाकाङ्क्षाव्यवहाराज्जिज्ञासासिषाधयिषेत्युभयोः पदयोरेकार्थकत्वेन सिषाधयिषाविरहसहकृतसिद्ध्यभावरूपपक्षतासंपादनद्वारोपयोग इति भावः। **द्वारेति**। सर्वेषां तृतीयान्तानामुपयोग इत्यनेनान्वयः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षेति जरन्नैयायिकोक्ताकाङ्क्षामभ्युपगम्योपयोगमाह—**अन्वयबोधाभावलक्षणायाश्चेति**। सिद्ध्यभावान्वयबोधाभावशब्दयोरेकार्थकत्वेनान्वयबोधाभावरूपाकाङ्क्षायाः पक्षतात्वेनोपयोग इति भावः। **वाक्यार्थपर्य्यवसन्नयोग्यताज्ञानस्येति**। बाधनिश्चयाभावो योग्यतेति नवीनमते योग्यताया वाक्यार्थपर्य्यवसन्नत्वाभावेनैकपदार्थेऽपरपदार्थवत्त्वं योग्यतेति प्राचीनमते वाक्यार्थरूपयोग्यताज्ञानस्येत्यर्थः। **अबाधितत्वज्ञानत्वेनेति**। पक्षधर्मत्वं सपक्षसत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति पञ्चरूपोपपन्नान्वयव्यतिरेकिहेतोः स्वसाध्यं साधयितुं क्षमत्वेन हेतोरबाधितत्वज्ञानस्याप्यपेक्षितत्वेनाबाधितत्वज्ञानत्वेन योग्यताज्ञानस्योपयोग इति भावः। अनुमितित्वावच्छेदेनाहेतुत्वात्=तात्पर्यविशेषितसाध्यकायां यस्यां कस्यांचिदनुमितौ तात्पर्य्यज्ञानस्य हेतुत्वेऽप्यनुमितित्वावच्छिन्ना-

नुमितौ तात्पर्य्यज्ञानस्य कारणताया अभावात् । तात्पर्य्यविशेषितसाध्यानुमितित्वावच्छेदेन=लौकिकानि गामानयेत्यादीनि वैदिकानि च ज्योतिःष्टोमेन स्वर्गकामो यजेतेत्यादीनि पदानि तात्पर्य्यविषयपदार्थसंसर्गप्रमापूर्वकाणीत्यादितात्पर्य्यनिष्ठविशेषणतानिरूपितविशेष्यतावत्साध्यकानुमितित्वावच्छेदेन, तस्य=तात्पर्य्यज्ञानस्य । शब्दसहकारिताभङ्गप्रसङ्गात्=शब्दजन्यत्वे सति शब्दजन्यज्ञानजनकत्वरूपशब्दसहकारितानाशप्रसङ्गात् । तत्रापि=व्याप्तिज्ञानजन्यवह्न्यादिविषयकज्ञानेऽपि । प्रत्यक्षस्य=प्रत्यक्षप्रमाणस्य । तत्र=वह्न्यादौ व्याप्तिज्ञानजन्यवह्न्यादिविषयकज्ञाने वा ॥

**तत्र पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा । क्रियाश्रवणे कारकस्य तस्य श्रवणे क्रियायाः करणश्रवणे इतिकर्त्तव्यतायाश्च जिज्ञासाविषयत्वात् ॥**

**शि० म०**–आकाङ्क्षादिकं शाब्दज्ञानेऽसाधारणकारणमित्युक्तम्, तत्र प्रथमनिर्दिष्टत्वेन प्रथमं शिष्यजिज्ञासितामाकाङ्क्षां निरूपयति तत्रेति । ननु कदाचिज्जिज्ञासाविषयत्वे हि तद्बलेन योग्यत्वं कल्प्येत तदेव कुत इत्याशङ्क्य क्रियावाक्ये तावत्तदुपपादयति–**क्रियाश्रवणे इति। इतिकर्तव्यताया इति।** अङ्गस्येत्यर्थः॥

**म० प्र०**–तत्र=आकाङ्क्षादिचतुर्षु मध्ये । परममूले **पदार्थानामिति** । इदं हि वाक्यार्थानामित्यस्याप्युपलक्षणम्–तथा चाङ्गप्रधानवाक्यार्थेषु नातिव्याप्तिरिति–तद्बलेन=योग्यतां विना पदार्थेषु जिज्ञासाविषयत्वानुपपत्त्या,तदेव=जिज्ञासाविषयत्वमेव । परममूले **क्रियाश्रवण इति।** आनयेति क्रियायाः वाचकशब्दश्रवणे घटादिकर्मकारकस्य जिज्ञासाविषयत्वं घटमिति कर्मकारकबोधकशब्दश्रवणे आनयनादिक्रियाया जिज्ञासाविषयत्वम् "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति स्वर्गकरणबोधकशब्दश्रवणे प्रयाजाद्यङ्गस्य जिज्ञासाविषयत्वमित्यर्थः । परममूले **जिज्ञासाविषयत्वादिति।** जिज्ञासाविषयत्वरूपफलोपलम्भाजिज्ञासाविषयत्वयोग्यत्वं भवतीति भावः ॥

**अजिज्ञासोरपि वाक्यार्थबोधाद्योग्यत्वमुपात्तम् । तदवच्छेदकं च क्रियात्वकारकत्वादिकमिति नातिव्याप्तिः । गौरश्वः पुरुषो हस्तीत्यादौ अभेदान्वये च समानविभक्तिकपदप्रतिपाद्यत्वं तदवच्छेदकमिति तत्त्वमस्यादिवाक्येषु नाव्याप्तिः ॥**

**शि० म०**–ननु जिज्ञासाविषयत्वमेवाकाङ्क्षाऽस्तु लाघवादावश्यकत्वाच्चेत्यत आह–**अजिज्ञासोरिति** । ननु जिज्ञासाविषयत्वयोग्यत्वमवच्छेदकापरिचये दुर्ग्रहमित्यत आह–**तदवच्छेदकमिति** । नन्वस्त्वाकाङ्क्षा लोकवेदयोः क्रियापदेषु घटमानयेत्यादिषु 'समिधो यजति' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिषु चाङ्गप्रधानवाक्येषु तत्र क्रियाकर्मकरणेतिकर्त्तव्यतात्वानां जिज्ञासाविषयत्वयोग्यत्वावच्छेदकानां सत्त्वात् । तथापि तद्रहितेषु नीलो घटो नीलमुत्पलं तत्त्व-

मसि अहं ब्रह्मास्मि अयमात्मा इत्यादिषु सिद्धार्थवाक्येषु कथमाकाङ्क्षेत्यत आह— **अभेदान्वये चेति**। अभेदान्वयप्रतियोगिनौ तत्त्वंपदार्थावित्यर्थः। न चैवमननुगमः। अवच्छेदकाननुगमेऽपि वह्निजन्यत्वादिवत्तदवच्छेद्ययोग्यत्वलक्षणाकाङ्क्षाया अनुगतत्वात् ॥

म० प्र०—परममूले **अजिज्ञासोरपीति**। तथा च वाक्यार्थज्ञाने जिज्ञासारहितपुरुषस्य वाक्यजन्यज्ञाने पदार्थानां परस्परजिज्ञासाविषयत्वाभावेऽपि तद्योग्यतासत्त्वान्नान्याप्तिरिति भावः। अवच्छेदकापरिचये=जिज्ञासाविषयत्वयोग्यतावच्छेदकाज्ञाने सति। **दुर्ग्रहमिति**। पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यतावच्छेदकस्य ज्ञाने तु पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वस्यापि क्वचिद्घटमानयेत्यादिवाक्ये पदार्थाः परस्परजिज्ञासाविषयत्वयोग्यत्ववन्तः क्रियात्वाद्यन्यतमत्वात्पटमानयेतिवाक्यघटकपदार्थवदित्यनुमानात्क्वचिदाप्तवाक्याज्ज्ञानं भवत्यतो जिज्ञासाविषयतायोग्यतावच्छेदकमवश्यं वाच्यमिति भावः। क्रियापदेषु=घटमानयेत्यादिषु। घटमानयेत्यादिवाक्यघटकक्रियापदार्थेषु। वाक्येषु=वाक्यार्थेषु। तत्र=पदार्थेषु वाक्यार्थेषु च। तद्रहितेषु=क्रियात्वादिरहितेषु, सिद्धार्थवाक्येषु=सिद्धार्थवाक्यघटकपदार्थेषु। परममूले **तदवच्छेदकमिति**। पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यतावच्छेदकमित्यर्थः। परममूले **वाक्येष्विति**=वाक्यघटकपदार्थेषु। परममूले **नाव्याप्तिरिति**। न च गोपुरुषहस्त्यादिपदार्थेषु समानविभक्तिकपदप्रतिपाद्यत्वरूपजिज्ञासाविषयत्वयोग्यतावच्छेदकसत्त्वेन गौरश्वः पुरुषो हस्तीत्यादिवाक्यादपि गोऽश्वाद्यभेदविषयकशाब्दबोधः स्यादिति वाच्यम्। गवाद्यभेदस्य बाधितत्वेन गवाद्यभेदे योग्यताया अभावादिति। एवम्=नानाविधानां क्रियात्वकारकत्वादीनां जिज्ञासाविषयत्वयोग्यतावच्छेदकत्वे सति। **अननुगम इति**। जिज्ञासाविषयत्वयोग्यतावच्छेदकस्यैकविधत्वाभाव इत्यर्थः। तथा च क्रियात्वादिरूपजिज्ञासाविषयत्वयोग्यतावच्छेदकानामनेकविधत्वेन जिज्ञासाविषयत्वयोग्यतारूपाकाङ्क्षाज्ञानं प्रति क्रियात्वकारकत्वसमानविभक्तिकपदप्रतिपाद्यत्वज्ञानानामेकधर्मत्वेन कारणत्वं न स्यात्। न च जिज्ञासाविषयत्वयोग्यत्वरूपाकाङ्क्षाज्ञाने क्रियात्वादीनां क्रियात्वाद्यन्यतमत्वेन हेतुत्वमिति वाच्यम्। अन्यतमत्वस्य निराकृतत्वादिति भावः। अवच्छेदकाननुगमेऽपि=जिज्ञासाविषयत्वयोग्यतावच्छेदकानामनेकविधत्वेऽपि। **वह्निजन्यत्वादिवदिति**। तृणजन्यत्वविशिष्टवह्निं प्रति तृणत्वेन कारणत्वमरणिनिर्मन्थनजन्यत्वविशिष्टवह्निं प्रत्यरणिनिर्मन्थनत्वेन कारणत्वं मणितरणिकिरणसंयोगजन्यत्वविशिष्टवह्निं प्रति मणितरणिकिरणसंयोगत्वेन कारणत्वमिति तृणत्वारणिनिर्मन्थनत्वमणितरणिकिरणसंयोगत्वादीनां वह्निकारणतावच्छेदकानां नानात्वेऽपि वह्निनिष्ठजन्यताया एकरूपत्ववदित्यर्थः ॥

**एतादृशाकाङ्क्षाभिप्रायेणैव बलाबलाधिकरणे सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्र वैश्वदेवयागस्यामिक्षान्वितत्वेन न वाजिनाकाङ्क्षेत्यादिव्यवहारः ॥**

**शि० म०**—नन्वन्वयबोधाभाव एवाकाङ्क्षा तस्याः प्रागभावरूपतया शाब्दज्ञान-कारणत्वेन क्लृप्तत्वादित्यत आह—**एतादृशेति । बलाबलाधिकरण इति ।** तृतीये स्थितम् । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थ-विप्रकर्षात् । अत्र श्रुत्यादीनामेकविषयत्वसमवायेन विरोधे सति बलाबलं विचार्य्यते । तत्र श्रुतिवाक्यविरोधोदाहरणम् 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति ॥

**म० प्र०**—तस्याः=अन्वयबोधाभावरूपाकाङ्क्षायाः, तृतीये=पूर्वमीमांसातृतीयाध्यायतृतीय-पादे । **समवाये इति ।** श्रुत्यादीनां मध्ये द्वयोः समानविषयत्वेन विरोधे सति परस्य दौर्बल्यम् । कुत इत्याशङ्क्याह—**अर्थविप्रकर्षादिति ।** परस्य स्वार्थबोधने पूर्वव्यवधानेन प्रवृत्तेरित्यर्थः । अयं भावः । एकत्र विनियुक्तस्य निराकाङ्क्षत्वादन्यत्र विनियोगोऽनुपपन्न एव परन्तु विनियोजकप्रमाणयोः समबलत्वेऽन्यत्र विनियोगत्यागायोगादगत्याऽऽकाङ्क्षोत्पादनेन विनियुक्तस्य विनियोगः स्वीक्रियते । यथा खादिरो यूपो भवतीति वाक्येन क्रतौ विनियुक्तस्य खादिरत्वस्य खादिरं वीर्य्यकामस्येति वाक्येन फले विनियोगः, यत्र तु प्रमाणयोरतुल्यबलत्वं तत्राकाङ्क्षोत्पादनेन विनियुक्तविनियोगो न स्वीक्रियते । यथा "कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्यस्या ऋचः 'ऐन्द्रया गार्ह-पत्यमुपतिष्ठते' इत्यत्र द्वितीयाश्रुत्या स्वान्यप्रमाणनिरपेक्षया गार्हपत्योपस्थानशेषत्वबोधकया इन्द्र-प्रकाशनसामर्थ्यरूपलिङ्गप्राप्तमिन्द्रशेषत्वं बाध्यते इति । अत्र=श्रुतिलिङ्गेत्यादिसूत्रे, एकविषयत्व-समवायेन=एकविषयत्वाभिन्नसंबन्धेन, तत्र=प्रमाणानां विरोधोदाहरणेषु मध्ये, पयसि=दुग्धे, आनयति=आनयेत्प्रक्षिपेत्, तप्तदुग्धं दधिसंसृष्टं कुर्य्यादिति यावत् । **सेति ।** तप्ते पयसि दधिप्रक्षे-पेण घनीभूतो भाग आमिक्षेत्युच्यते । परिशिष्टजलांशो वाजिनशब्दवाच्यः सा आमिक्षा विश्वदेव-ताका वाजिनं तु वाजिसंज्ञकदेवेभ्यो देयमित्यर्थः ॥

**शि० म०**—तत्र संदेहः किं वाजिनस्य विश्वदेवशेषत्वमुत वाजिनामकदेवता-न्तरशेषत्वमिति । किं तावत्प्राप्तं विश्वदेवशेषत्वमिति कुतः, वाजिभ्यो वाजिनमिति वाक्याद्वाजिनस्य विश्वदेवाङ्गत्वावगमात् । न च वाजिभ्य इति देवतान्तरश्रवणात्कथ-मस्य विश्वदेवसंबन्ध इति वाच्यम्, वाजमन्नमामिक्षा तदेषामस्तीति व्युत्पत्त्या वाजिशब्दस्य तत्संबन्धिविश्वदेवप्रतिपादकत्वात् । न चामिक्षाया एव श्रुत्या देवता-सबन्धो न वाजिनस्य, तस्य दुर्बलप्रमाणवाक्यगम्यत्वादिति वाच्यम्, वैश्वदेवीपद-स्यामिक्षापदसापेक्षत्वेन तस्यापि वाक्यगम्यत्वात् । अस्तु वा आमिक्षासम्बन्धस्य श्रौतत्वं तथापि न वाजिनबाधः, श्रुतिवाक्ययोः शब्दत्वाविशेषेण तुल्यबलत्वात् । तस्मान्नामिक्षया वाजिनबाधः, किंतु तया सह विकल्पः समुच्चयो वेति । एवं प्राप्ते राद्धान्तः—विश्वेषां देवानामामिक्षयैव संबन्धः युक्तस्तस्याः वैश्वदेवीति तद्धितश्रुत्यव-

गम्यत्वात् । न चामिक्षापदसापेक्षत्वाद्वाक्यगम्यत्वं तद्धितस्यास्या इति सर्वनामार्थे स्मरणेन तस्यामिक्षावाचकत्वात् । न चैवमामिक्षापदवैयर्थ्यं सन्निहितार्थावलम्बिनोऽस्येति सर्वनाम्नः कोऽर्थ इत्याकाङ्क्षायां विशेषसमर्पकत्वात् । अत एवायं घट इत्यत्रायमिति पदस्य विशेषसमर्पकघटपदापेक्षायामपि न श्रुतित्वहानिः । न च वाजिनपदं विशेषसमर्पकं येनामिक्षावाजिनयोस्तुल्यो देवतासंबन्धः । किंच न वाजिपदाद्विश्वदेवोपस्थितिः तस्याश्वे रूढत्वात् । अपिच न वाजिनस्य विश्वदेवैः संबन्धः । तत्र ह्यामिक्षायां निरपेक्षसाधनत्वान्न समुच्चयः, नापि विकल्पः । तस्याष्टदोषदुष्टत्वात् । ततश्च विश्वेषां देवानां श्रुत्यवगतामिक्षावरुद्धत्वेन नैराकाङ्क्ष्यान्न वाक्येन वाजिनसंबन्धः । तदुक्तं भट्टपादैः—"श्रुत्याऽऽमिक्षैव शेषो हि नैषां वाक्येन वाजिनम् । तद्दुर्बलप्रमाणत्वात्तया श्रुत्या निराकृतम् ॥" इति ॥

म० प्र०—तत्र=सा वैश्वदेव्यामिक्षेत्यादिवाक्ये । वाजिनस्य=परिशिष्टजलस्य, वाजिभ्यो वाजिनमिति वाक्यात्=सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यनयोः समभिव्याहाररूपवाक्यात् । **वाजमिति** । वाजमित्यस्य विवरणमन्नमन्नमित्यस्य विवरणमामिक्षेति । **तत्संबन्धीति**=आमिक्षासंबन्धीत्यर्थः । श्रुत्या=तद्धितश्रुत्या । देवतासंबन्धः=विश्वदेवसंबन्धः । तस्य=वाजिनसंबन्धस्य, तस्यापि=आमिक्षासंबन्धस्यापि । **न वाजिनबाध इति** । वाजिनद्रव्यस्य विश्वदेवैः संबन्धस्यामिक्षया बाधोऽभावो नेत्यर्थः । तया=आमिक्षया । विकल्पः=वाजिनस्य विकल्पः । तस्याः=आमिक्षायाः । वैश्वदेवीति तद्धितश्रुत्यवगम्यत्वात्=वैश्वदेवीशब्दघटकाण्रूपतद्धितश्रुत्यवगमात् । **सापेक्षत्वादिति** । तद्धितश्रुतेरिति शेषः । **वाक्यगम्यत्वमिति** । वैश्वदेवयागे विश्वदेवामिक्षासंबन्धस्य वाक्यगम्यत्वं न केवलं श्रुतिगम्यत्वं श्रुतेरामिक्षापदसापेक्षत्वेन निरपेक्षत्वाभावादिति भावः । स्मरणेन=साऽस्य देवतेति पाणिनिस्मृत्या ज्ञातत्वेन । तस्य=तद्धितस्य । **आमिक्षावाचकत्वादिति** । तद्धितश्रुतेरामिक्षापदसापेक्षत्वं नेति भावः । अत एव=श्रुतेः स्वप्रामाण्यायेतरापेक्षाभावादेव, न श्रुतित्वहानिः=स्वप्रामाण्यायेतरापेक्षाभाववत्त्वश्रुतित्वाभावो नास्ति । यत्र स्वप्रामाण्यायेतरसापेक्षत्वं तत्र श्रुतित्वहानिरिति भावः । एकस्मिन्यागे उभयोर्द्रव्ययोः संबन्धः समुच्चयेन विकल्पेन वा वाच्य उभयमप्यत्र नास्तीत्याह—**तत्रेति** । वैश्वदेवयागे इत्यर्थः । **न समुच्चय इति** । वैश्वदेवयागे वाजिनस्य समुच्चयो नास्ति विकल्पश्च नास्तीत्यर्थः । तस्य=विकल्पस्य । **अष्टदोषदुष्टत्वादिति** । यदा आमिक्षाया विश्वदेवैः सह सबन्धस्तदा वाजिशास्त्रे स्वार्थानुष्ठापकत्वलक्षणप्रामाण्यप्रयोजकनिर्दोषत्वादौ सत्यपि प्रामाण्यपरित्याग एको दोषः । स्वार्थाननुष्ठापकत्वलक्षणप्रामाण्याभावप्रयोजकदोषे चासत्यपि प्रामाण्याभावाभ्युपगम इति द्वितीयो दोषः । पुनश्च यदा वाजिनस्य विश्वदेवैः सह संबन्धस्तदाऽऽमिक्षाशास्त्रे वाजिशास्त्रोक्तदोषद्वयं वाजिशास्त्रे तु परित्यक्तप्रामाण्याभ्युपगमः स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ । एवं प्रयोगद्वयेन वाजिशास्त्रे चत्वारो दोषा आमिक्षाशास्त्रे दोषद्वयम् । पुनश्च यदा विश्वदेवैरामिक्षासंबन्धस्तदाऽऽमिक्षा-

शास्त्रे परित्यक्तप्रामाण्याभ्युपगमः स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयमेवं प्रयोगत्रयेण शास्त्रेषु विकल्पस्याष्टदोषापादकत्वादित्यर्थः । श्रुत्यवगतामिक्षावरुद्धत्वेन=तद्धितश्रुत्यवगतामिक्षासंबन्धेन । **श्रुत्येति** । तद्धितश्रुत्यवगतामिक्षैवैषां विश्वेषां देवानां शेषो भोगसाधनं वाक्यप्रमाणेन वाजिनमेषां न शेषः। ननु वाजिनद्रव्यस्य विश्वदेवैः सह संबन्धः कुतो न भवतीत्याशङ्क्य हेतुगर्भितवाजिनविशेषणमाह-**तया श्रुत्या निराकृतमिति** । तद्धितश्रुत्या विश्वदेवैः सह वाजिनद्रव्यसंबंधस्य निराकृतत्वादित्यर्थः । तस्य निराकृतत्वे हेतुमाह-**तद्दुर्बलप्रमाणत्वादिति** । श्रुत्यपेक्षयातस्य वाक्यस्य दुर्बलप्रमाणत्वादित्यर्थः ॥

**ननु तत्रापि वाजिनस्य जिज्ञासाऽविषयत्वेऽपि तद्योग्यत्वमस्त्येव प्रदेयद्रव्यत्वस्य यागनिरूपितजिज्ञासाविषयतायोग्यतावच्छेदकत्वादिति चेत् ॥**

**शि० म०-प्रदेयद्रव्यत्वं यागनिरूपितजिज्ञासाविषयत्वयोग्यतावच्छेदकम्, तच्चामिक्षावद्वाजिनेऽप्यविशिष्टमिति कथं नैराकाङ्क्ष्यमिति चोदयति-नन्विति ॥**

**म०प्र०**-परममूले-**तत्रापीति** । वैश्वदेवयागेऽपि वाजिनद्रव्यस्य जिज्ञासाविषयत्वाभावेऽपि वाजिनद्रव्यस्य जिज्ञासाविषयत्वयोग्यत्वमस्त्येवेत्यर्थः । परममूले-**अवच्छेदकत्वादिति** । तथा च वैश्वदेवयागस्य साकाङ्क्षत्वाद्वैश्वदेवयागे वाजिनान्वयापत्तिरिति भावः ॥

**न, स्वसमानजातियपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वेन वाजिनद्रव्यस्य स्वसमानजातीयान्वयबोधसहकृतत्वेन तादृशावच्छेदकत्वाभावात्, आमिक्षायां तु नैवं वाजिनान्वयस्य तदाऽनुपस्थानात् ॥**

**शि० म०**-न हि प्रदेयद्रव्यत्वं तदवच्छेदकं जनितान्वयबोधादपि वाक्यात्पुनरन्वयबोधापत्तेः, किंतु स्वसमभिव्याहृतपदस्मारितपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वम् । तत्त्वामिक्षायामेवेति परिहरति-**न स्वसमानजातीयेति** । नन्वस्तु वैश्वदेवयागे प्रथममेव वाजिनान्वयबोध इत्यामिक्षैव निराकाङ्क्षा स्यादित्याशङ्क्य श्रौतामिक्षासंबन्धात् तत्सापेक्षानन्तरप्रवृत्तवाक्यप्रमाणकवाजिनान्वयस्य प्रथममनुपस्थितत्वान्नामिक्षाया नैराकाङ्क्ष्यमित्याह-**आमिक्षायामिति** ॥ ननु यस्य वाक्ये स्वतःप्रामाण्यबुद्ध्या प्रथमं वाजिनान्वयबोधः तदा आमिक्षायां नैराकाङ्क्ष्यं दुर्वारमिति चेत् न, प्रमाणमूलान्वयबोधाभावसहकृतप्रदेयद्रव्यत्वस्यैवात्र जिज्ञासाविषयत्वयोग्यतावच्छेदकत्वेन विवक्षितत्वात् ॥

**म० प्र-स्वसमभिव्याहृतपदेति** । आमिक्षादिपदेन सह समभिव्याहृतं सहोच्चरितं यद्वाजिनादिपदं तेनोपस्थितवाजिनादिपदार्थान्वयबोधाभावविशिष्टप्रदेयद्रव्यत्वमित्यर्थः । **तत्त्वा-**

**मिक्षायामेवेति** । येन क्रमेण पाठस्तेनैव क्रमेण पदार्थोपस्थितिस्तेनैव क्रमेणान्वयबोध इति नियमसत्त्वेनामिक्षान्वयबोधकाले वैश्वदेवयागे वाजिनान्वयबोधाभावस्य सत्त्वेन स्वसमभिव्याहृतपदस्मारितवाजिनपदार्थान्वयबोधाभावविशिष्टद्रव्यत्वमामिक्षायामेव न तु वाजिने उक्तनियमाद्वैश्वदेवयागे वाजिनान्वयबोधकाले आमिक्षान्वयबोधस्य सत्त्वेन वाजिनद्रव्ये स्वसमभिव्याहृतामिक्षापदस्मारितामिक्षापदार्थान्वयबोधविरहविशिष्टप्रदेयद्रव्यत्वाभावादिति भावः । परममूले—**वाजिनद्रव्यस्येति** । वाजिनद्रव्यस्य, स्वं=वाजिनं तस्य समानजातीयः प्रदेयद्रव्यत्वेन सदृशामिक्षापदार्थस्तस्य यो वैश्वदेवयागेऽन्वयबोधस्तद्विशिष्टत्वेन तादृशस्य वाजिनद्रव्यनिष्ठप्रदेयद्रव्यत्वस्य जिज्ञासाविषयत्वयोग्यतावच्छेदकत्वाभावादित्यर्थः । ननु वाजिनद्रव्यनिष्ठप्रदेयद्रव्यत्वे जिज्ञासाविषयत्वयोग्यतावच्छेदकत्वाभावः स्वसमानजातीयान्वयबोधसहकृतत्वज्ञाप्यः कुत इत्याशङ्क्याह-परममूले—**स्वसमानजातीयपदार्थान्वयबोधविरहसहकृतेति** । स्वमामिक्षा तस्याः समानजातीयः प्रदेयद्रव्यत्वेन सदृशः पदार्थो वाजिनपदार्थस्तदन्वयबोधाभावविशिष्टप्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वेन जिज्ञासाविषयत्वयोग्यतावच्छेदकत्वेनेत्यर्थः । **निराकाङ्क्षा स्यादिति** । वैश्वदेवयागे वाजिनस्यान्वितत्वेनामिक्षायामेव तादृशावच्छेदकाभावः किं न स्यादिति भावः । श्रौतामिक्षासंबन्धादित्यस्य प्रथममनुपस्थितत्वादित्यनेनान्वयः । **तत्सापेक्षेति** । श्रुतिसापेक्षं श्रौतामिक्षासंबन्धोत्तरप्रवृत्तं च यद्वाक्यं तत्प्रमाणकवाजिनान्वयस्येत्यर्थः । **न नैराकाङ्क्ष्यमिति** । तथा च मिक्षायां न तादृशावच्छेदकाभाव इति भावः । परममूले **नैवमिति** । स्वसमानजातीयान्वयबोधविशिष्टप्रदेयद्रव्यत्वं नेत्यर्थः । परममूले तदा=प्रथमश्रुतामिक्षान्वयबोधकाले, परममूले अनुपस्थानात्=उपस्थित्यभावात् । यस्य=यादृशपुरुषस्य, वाक्ये=वाजिभ्यो वाजिनमिति वाक्ये, स्वतः=श्रुतिलिङ्गकल्पनां विनैव, प्रथमम्=आमिक्षान्वयबोधात्पूर्वकाले, आमिक्षायां नैराकाङ्क्ष्यम्=वैश्वदेवयागे वाजिनद्रव्यान्वयेन वैश्वदेवयागनिरूपितामिक्षाविषयकाकाङ्क्षाभावः । **प्रमाणमूलेति** । प्रमाणमूलकस्वसमानजातीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वस्यैवेत्यर्थः । श्रुतिकल्पनां विनैव वाक्येन वाजिनान्वयबोधः प्रमाणमूलको न भवति श्रुतिप्रमाणनिरपेक्षवाक्यस्याप्रमाणत्वादिति भावः । अत्र=मूले आमिक्षायां वा ॥

**उदाहरणान्तरेष्वपि दुर्बलत्वप्रयोजक आकाङ्क्षाविरह एव द्रष्टव्यः ॥**

**शि० म०—एवं श्रौतामिक्षान्विते वैश्वदेवयागे वाजिनस्य निराकाङ्क्षत्वात् तदङ्गत्वबोधकस्य वाजिनवाक्यस्य दुर्बलत्वमित्युक्तम्। संप्रत्यन्यत्रापि तदभावप्रयुक्तमेव दौर्बल्यमित्याह—उदाहरणान्तरेष्विति । ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्याद्युदाहरणान्तरेष्वित्यर्थः । तत्र ह्यैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र श्रुत्या मन्त्रस्य "कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्यस्य गार्हपत्याङ्गत्वावगमे निराकाङ्क्षत्वात् इन्द्रशेषत्वे लिङ्गस्य न प्रामाण्यम् ॥**

म० प्र०--श्रौतामिक्षान्विते=श्रौतामिक्षाऽन्विता यस्मिन्स तथा श्रौतामिक्षयाऽन्वितः श्रौतामिक्षान्वित इति वा तस्मिन्, तदङ्गत्वबोधकस्य=वाजिननिष्ठवैश्वदेवयागाङ्गत्वबोधकस्य । अन्यत्र=लिङ्गादिषु । तदभावप्रयुक्तमेव=आकाङ्क्षाभावप्रयुक्तमेव । तत्र=उदाहरणान्तरेषु मध्ये श्रुतिलिङ्गविरोधोदाहरणे । **ऐन्द्र्येति** । "कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्यैन्द्र्यर्क्करणकगार्हपत्यनामकाग्निकर्मकस्तवनं कुर्यादित्यर्थः । श्रुत्या=गार्हपत्यशब्दोत्तरश्रूयमाणद्वितीयाश्रुत्या । **कदा चनेति** । हे इन्द्र कदाचन कस्मिन्कालेऽपि, न स्तरीरसि=हिंसको नासि । किंतु, दाशुषे=आहुतिं दत्तवते यजमानाय सश्चसि=प्रीयसे प्रसन्नो भवसीत्यर्थः । **लिङ्गस्य न प्रामाण्यमिति** । ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र हि "कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्यनया ऋचा इन्द्र उपस्थेय उत गार्हपत्य इति संशये भो इन्द्र कदाचिदपि घातको न भवसि किंत्वाहुतिं दत्तवते यजमानाय प्रीयसे इतीन्द्रप्रकाशनसामर्थ्यलिङ्गादिन्द्र उपस्थेय इति पूर्वपक्षस्य प्राप्तौ सिद्धान्तः गार्हपत्यमित्यत्र प्रत्यक्षद्वितीयाश्रुत्या गार्हपत्योपस्थाने विनियुक्तमन्त्रस्य पुनर्विनियोगाकाङ्क्षानुदयाद्विनियोजकं लिङ्गं न प्राप्नोति येनेन्द्रोपस्थाने मन्त्रो विनियुज्येतेति भावः ॥

**शि०म०--तथा 'यज्ञायज्ञीये साम्नि ऐरं कृत्वोद्गेयम्' इति श्रुत्या इरापदप्राप्तौ गिरापदस्य निराकाङ्क्षत्वात्तत्प्रापकवाक्यस्य दौर्बल्यम् । प्रतिष्ठाकामदर्शपूर्णमासप्रयोगे एकविंशतिसंख्यासामिधेन्यनुवचनानामेकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येति श्रुत्या अङ्गत्वावगतौ पञ्चदशसंख्यासामिधेन्यनुवचनानामाकाङ्क्षाभावात्तदङ्गत्वबोधकस्य प्रकरणस्य श्रुत्या बाधः । गोदोहनान्विते पशुकामप्रयोगे चमसप्रापकस्य क्रमस्य यजमानस्य याज्येत्यत्र श्रुत्या ऋतुयागेषु याज्याया यजमानकर्तृत्वावगतौ हौत्रसमाख्याया दुर्बलत्वम् ॥**

म० प्र०--श्रुतिवाक्ययोर्विरोधे वाक्यदौर्बल्योदाहरणमाह--**यज्ञायज्ञीये इत्यादिना** । यज्ञायज्ञीयसंज्ञकसाम्नि ऐरमिराया इरापदस्येदमैरमिरापदारूढं साम कृत्वोद्गेयमित्यर्थः । इति श्रुत्या=ऐरमित्यत्र तद्धितश्रुत्या, गिरापदस्य=समभिव्याहाररूपवाक्यप्राप्तगिरापदस्य, तत्प्रापकवाक्यस्य=गिरापदप्रापकवाक्यस्य । श्रुतिप्रकरणविरोधे प्रकरणदौर्बल्योदाहरणमाह--**प्रतिष्ठाकामेति** । प्रतिष्ठाकामसंबन्धिदर्शपूर्णमासानुष्ठाने इत्यर्थः । **एकविंशतिसंख्यासामिधेन्यनुवचनानामिति** । समिधामाधाने करणीभूता ऋचः सामिधेन्यः एकविंशतिसंख्याकसामिधेनी ऋङ्मन्त्राणामित्यर्थः । **एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येति** । अनुवचनाश्रितैकविंशतिसंख्यया प्रतिष्ठां भावयेदित्यर्थः । इति श्रुत्या=इत्यत्रैकविंशतिशब्दोत्तरद्वितीयाश्रुत्या, अङ्गत्वावगतौ=प्रतिष्ठाकामसंबन्धिदर्शपूर्णमासाङ्गत्वावगतौ, पञ्चदशसंख्यासामिधेन्यनुवचनानाम्=पञ्चदश सामिधेन्यो भवन्तीत्यत्र श्रूयमाणपञ्चदशसङ्ख्याकसामिधेन्यनुवचनानाम्, तदङ्गत्वबोधकस्य प्रकरणस्य=पञ्चदशसामिधेनीनामङ्गत्वबोधकोभयाकाङ्क्षारूपप्रकरणस्य । श्रुतिस्थानविरोधे

थानदौर्बल्योदाहरणमाह—**गोदोहनान्विते इति** । गोदोहनमात्रविशिष्टपशुकामपुरुषसंबन्धिकर्मणीत्यर्थः । क्रमस्य=सन्निधिरूपस्थानप्रमाणस्य, श्रुत्या बाध इत्यन्वयः । चमसेनापः प्रणयति गोदोहेन पशुकामस्येत्यत्र गोदोहशब्दोत्तरश्रूयमाणतृतीयाश्रुत्या गोदोहसंज्ञकपात्रस्य पशुफलककर्माङ्गत्वावगतौ चमससंज्ञकपात्रस्याकाङ्क्षाभावाच्चमसनिष्ठाङ्गत्वबोधकस्थानस्य तृतीयाश्रुत्या बाध इति भावः । यस्मिन् गुणः कारकतामापद्यते स आश्रय इत्युक्ताश्रयत्ववदप्कर्मकगोदोहमात्रकरणकप्रणयेन पशून् भावयेदिति गोदोहेन पशुकामस्येति वाक्यार्थः । श्रुतिसमाख्याविरोधे समाख्यादौर्बल्योदाहरणमाह—**यजमानस्य याज्येति** । यजेति प्रेषानन्तरं पठ्यमाना ऋग् याज्या यजमानकर्तृकपाठवती याज्येति तदर्थः । श्रुत्या=षष्ठीश्रुत्या, ऋतुयागेषु=वसन्ताद्यृतुदेवताकयागेषु, यजमानकर्तृकत्वावगतौ=यजमानकर्तृकपाठवत्त्वावगतौ, हौत्रसमाख्यायाः=हौत्रं काण्डमित्यत्र काण्डबोधकहौत्रशब्दरूपसमाख्याया याज्याया होतृकर्तृकपाठवत्त्वाकाङ्क्षाभावाद्धोतृकर्तृकपाठवत्त्वबोधकहौत्रसमाख्याया दुर्बलत्वमिति भावः ॥

**शि० म०—तथा स्योनं ते सदनं कृणोमीत्यस्य तस्मिन् सीदेत्यस्य च पुरोडाशसदनकरणप्रतिष्ठापनयोः लिङ्गेन प्रत्येकमेव विनियुक्तत्वान्न सकलमन्त्रस्य वाक्याद्विकल्पेन समुच्चयेन वा सदनकरणप्रतिष्ठापनयोः प्रयोगः । सूक्तवाक्यनिगदस्य इदं हविरजुषेतामावीवृधेतामित्यादेरग्नीषोमादिपदवत्तदेकवाक्यतापन्नस्य व्यवस्थया पर्वद्वये प्रयोगः । न तु प्रकरणात्ततो विच्छित्याऽन्यत्रापि प्रयोगः ॥**

म० प्र०—लिङ्गवाक्ययोर्विरोधे वाक्यदौर्बल्योदाहरणमाह—**तथा स्योनमिति** । विकल्पेन=सदनकरणं कदाचित्पूर्वांशेन कदाचिदुत्तरांशेनैवं पुरोडाशप्रतिष्ठापनमपि कदाचित्पूर्वांशेन कदाचिदुत्तरांशेनेति विकल्पेन, समुच्चयेन=उभयांशेन पुरोडाशसदनकरणप्रतिष्ठापनयोः करणमिति समुच्चयेन । प्रयोगः=संबन्धः । अत्रेदं बोध्यम् । स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ” इत्यंशद्वयम् । भोः पुरोडाश, ते=तव, स्योनं=समीचीनम्, सदनं=स्थानम्, कृणोमि=करोमि, तच्च स्थानं घृतस्य धारया सुशेवं=सुष्ठु सेवितुं योग्यं कल्पयामि । भोः व्रीहीणां मेध=व्रीहिसारभूत सुमनस्यमानः=समाहितमनस्कस्त्वं तस्मिन्समीचीनस्थाने, सीद=उपविश प्रतितिष्ठ स्थिरो भवेति तदर्थः । अयं सर्वोऽपि मन्त्रः पुरोडाशस्थानकरणं पुरोडाशस्थापने च किं विनियुज्यते किं वाऽर्द्धद्वयं क्रमेणोभयत्र व्यवस्थितमिति तत्र संशये तस्मिन्निति तच्छब्देन प्रकृतवाचिना पूर्वोत्तरांशयोरेकवाक्यत्वाद्वाक्यार्थद्वयाभावात्सर्वोऽपि मन्त्रः पुरोडाशस्थानकरणस्याङ्गम् । तत्र सर्वेणानेन मन्त्रेण पुरोडाशस्थानं कुर्यादिति विनियोजिका श्रुतिः कल्पनीया । तथा सर्वेणानेन मन्त्रेण पुरोडाशस्थापनं कुर्यादिति विनियोजिका श्रुतिः कल्पनीया । मन्त्रस्य पुरोडाशसदनाङ्गत्ववत्पुरोडाशस्थापनाङ्गत्वस्यापि तद्वाक्यबोधितत्वादिति पूर्वपक्षप्राप्तौ राद्धान्तः । पूर्वोत्तरार्द्धयोः परस्परान्वयेन संपन्नै-

कवाक्यस्य पुरोडाशसदनस्थापनकरणे शक्तिमकल्पयित्वा सर्वमन्त्रस्य पुरोडाशसदनस्थापनकरणे विनियोक्तुमनर्हत्वाल्लिङ्गकल्पनव्यवधानेन श्रुतिं प्रति वाक्यस्य विप्रकृष्टत्वेन प्रत्यक्षलिङ्गेन वाक्यबाधादर्द्धद्वयं क्रमेणोभयत्र व्यवस्थितमिति। अत्राप्याकाङ्क्षाविरह एव वाक्यदौर्बल्यप्रयोजक इति। वाक्यप्रकरणयोर्विरोधे प्रकरणदौर्बल्योदाहरणमाह—**सूक्तवाक्यनिगदस्येति** । मन्त्रो द्विविधः। करणमन्त्रोऽनुवादकमन्त्रश्च। तत्र यं मन्त्रमुच्चार्य्य कर्म क्रियते स करणमन्त्रः। कर्मसमाप्त्यनन्तरं येन मन्त्रेण स्तुतिमात्रं क्रियते सोऽनुवादकमन्त्रस्तथा च द्विविधमन्त्रस्वरूपऋक्समुदायरूपसूक्तवाक्यसंबन्ध्यनुवादकमन्त्रस्येत्यर्थः । **अग्नीषोमादिपदवदिति** । यथा पौर्णमासीकालिक 'आग्नेयाग्नीषोमीयोपांशु' इति यागत्रयात्मकपूर्णमासे एवाग्नीषोमपदस्य प्रयोगो नामावस्याकालिक 'आग्नेयदधियागपयोयाग' इति यागत्रयात्मकदर्शेऽग्नीषोमपदस्य प्रयोगस्तत्र सोमदेवताया अभावात्। यथा चेन्द्राग्निपदस्योक्तयागत्रयात्मकदर्श एव प्रयोगो नोक्तयागत्रयात्मकपूर्णमासयागे इन्द्राग्निपदस्य प्रयोगस्तत्रेन्द्रदेवताया अभावात्तद्वत्, तदेकवाक्यतापन्नस्य=अग्नीषोमादिपदैकवाक्यतापन्नस्येदं हविरजुषेतामवीवृधेतामित्यादिसूक्तवाक्यनिगदस्यापि, पर्वद्वये=उक्तयागत्रयात्मकदर्शे उक्तयागत्रयात्मकपूर्णमासे च, व्यवस्थया=यथायोग्यं प्रयोगो न तूभयाकाङ्क्षालक्षणप्रकरणादग्नीषोमपदादिदं हविरजुषेतामित्यादिकं पृथक्कृत्य, अन्यत्रापि=दर्शेऽपीदं हविरित्यादेः पाठो न तु इन्द्राग्निपदात्पृथक्कृत्येदं हविरित्यादेरुक्तपूर्णमासे प्रयोग इत्यर्थः। अयमाशयः। अग्नीषोमाविदं हविरजुषेतामवीवृधेतामहो ज्यायोऽक्रातामिन्द्राग्नी इदं हविरजुषेतामवीवृधेतामहो ज्यायोऽक्रातामिति सूक्तवाक्यं श्रूयते। तत्र देवतावाचकाग्नीषोमादिपदैकवाक्यतापन्न 'इदं हविरजुषेताम्' इत्यादिपदानि तत्तद्देवतावाचकपदाद्विच्छिद्य दर्शादिषु प्रकरणविशेषात्प्रयोक्तव्यानि उत तत्तद्देवतापदेनैकवाक्यतया तत्तद्देवतापदवदेव व्यवस्थितानीति संशयेऽग्नीषोममन्त्रगतमपीदंह विरित्यादिकमुक्तयागत्रयात्मकदर्शेऽग्नीषोमपदपरित्यागेन पठनीयम्, तथेन्द्राग्निमन्त्रगतमपीदं हविरित्यादिकमिन्द्राग्निपदपरित्यागेनोक्तयागत्रयात्मकपूर्णमासे पठनीयम्। तथा सतीदं हविरित्यादिमन्त्रभागानां दर्शपूर्णमासशेषत्वबोधकदर्शपूर्णमासप्रकरणपाठोऽनुगृहीतो भवतीति पूर्वपक्षे राद्धान्तः। अग्नीषोमपदघटितमन्त्रभागस्येदं हविरित्यादिरूपस्येन्द्राग्निपदान्वयाश्रवणात्प्रकरणेन प्रथमं शेषशेषिवाचकपदानां सहोच्चारणरूपं वाक्यं कल्प्यते। वाक्येन त्वग्नीषोमपदघटितमन्त्रभागस्येदं हविरित्यादेरिन्द्राग्निप्रकाशनसामर्थ्यरूपं लिङ्गं कल्प्यते। लिङ्गेन चानेनेदं हविरित्यादिनाऽग्नीषोममन्त्रभागेनेन्द्राग्निविषयकस्तुतिं कुर्यादिति श्रुतिः कल्पनीया। एवमिन्द्राग्निपदघटितमन्त्रशेषस्याप्यग्नीषोमपदान्वयाश्रवणात्प्रकरणेन प्रथमं शेषशेषिवाचकपदानां सहोच्चारणरूपवाक्यं कल्पनीयमुक्तवाक्येन चेन्द्राग्निमन्त्रभागस्येदं हविरित्यादेरग्नीषोमदेवताप्रकाशनसामर्थ्यरूपं लिङ्गं कल्पनीयं लिङ्गेन त्विन्द्राग्निमन्त्रभागेनेदं हविरित्यादिनाऽग्नीषोमविषयकस्तुतिं भावयेदिति श्रुतिः कल्पनीयेति प्रकरणेन विनियोगे प्रकरणं श्रुत्यादित्रिभिर्व्यवधीयते वाक्येन विनियोगे त्वग्नीषोमपदसमभिव्याहाररूपवाक्यस्य श्रूयमाणत्वादुक्तवाक्यं श्रुतिलिङ्गाभ्या-

मेव व्यवधीयते इति प्रकरणस्य वाक्येन बाधितत्वात्तत्तद्देवतावाचकपदशेषो दर्शादिषु यथायोग्यं व्यवस्थित इति । अत्रापि मन्त्रभागं विच्छिद्य दर्शादिष्वप्रयोगे आकाङ्क्षाविरह एव कारणमिति ॥

**शि० म०–विदेवनादीनामभिषेचनीयसन्निधावाम्नातानामपि प्रकरणाद्राजसूयाङ्गत्वावगमेन निराकाङ्क्षत्वान्न सन्निधानादभिषेचनीयाङ्गत्वम् । पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे समाम्नातस्य शुन्धध्वमिति मन्त्रस्य सन्निधानात्सांनाय्यपात्राङ्गत्वेनान्वितस्य निराकाङ्क्षत्वान्न पुरोडाशपात्राङ्गत्वमिति समाख्यायास्ततो दौर्बल्यम् ॥**

म० प्र०–स्थानप्रकरणविरोधे स्थानदौर्बल्योदाहरणमाह–**विदेवनादीनामिति** । अत्र विदेवनशब्दो लोके जूआ इति ख्यातस्य वाचकः । अत्रादिपदेन जयशुनाशेपाख्यानयोर्ग्रहणम् । राजसूययागे हि पश्विष्टिसोमयागादयो बहवो यागा उक्तास्तत्राभिषेचनीयसंज्ञकसोमयागस्तथा चाभिषेचनीयसंज्ञकसोमयागसन्निधौ पठितानामपि विदेवनादीनां प्रकरणप्रमाणाद्राजसूयाङ्गत्वनिश्चयेनेत्यर्थः । अयमाशयः । अक्षैर्दीव्यति राजन्यं जिनाति शौनाशेपमाख्यापयतीति बह्वृचब्राह्मणे श्रूयते । राजन्यं=राजानम्, जिनाति=जयेत्, शुनाशेपविषय आख्यानं शौनाशेपमिति तदर्थः । तत्र किं विदेवनादयः सर्वे राजसूयाङ्गमुत राजसूयान्तर्गताभिषेचनीयसंज्ञकसोमयागाङ्गमिति संशये सन्निधिपाठरूपस्थानप्रमाणाद्विदेवनादयोऽभिषेचनीयसंज्ञकसोमयागाङ्गमेवेति पूर्वपक्षे राद्धान्तः । राजसूययागस्य कथंभावाकाङ्क्षायां विहितविदेवनादयः प्रकरणप्रमाणेन राजसूययागशेषा एव, राजसूययागश्च बहुयागात्मक इति तत्रत्यसर्वयागशेषा एव न त्वभिषेचनीयसंज्ञकसोमयागमात्रस्य शेषाः अभिषेचनीयसंज्ञकसोमयागस्य ज्योतिःष्टोमविकृतित्वेनातिदिष्टप्राकृताङ्गैरेव कथंभावाकाङ्क्षानिवृत्तेरभिषेचनीयस्य विदेवनादिषु कथंभावाकाङ्क्षाभावादिति । स्थानसमाख्याविरोधे समाख्यादौर्बल्योदाहरणमाह–**पौरोडाशिकसमाख्याते इति** । पुरोडाशं कपालोपरि पक्वान्नविशेषमधिकृत्य प्रवृत्तं काण्डं मन्त्रवृन्दं पौरोडाशिकं पौरोडाशिकशब्दरूपसमाख्यावाच्ये दर्शपूर्णमासकाण्डे दर्शपूर्णमाससम्बन्धिमन्त्रवृन्दे इत्यर्थः । सन्निधानात्=स्थानप्रमाणात् । सान्नाय्यपात्राङ्गत्वेन=दधिदुग्धपात्रशेषत्वेन । अयं भावः । पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे शुन्धध्वं दैव्याय कर्मणे इत्यादिमन्त्रः पठ्यते । तत्र स मन्त्रः किं पुरोडाशपात्राङ्गमुत सान्नाय्यशब्दवाच्यदधिदुग्धपात्राङ्गमिति संशये पौरोडाशिकमिति समाख्याते काण्डेऽस्य मन्त्रस्य पठितत्वात् पुरोडाशपात्राङ्गमेवायं मन्त्र इति पूर्वपक्षे राद्धान्तः प्रवर्त्तते । पौरोडाशिकसमाख्यायां प्रकृतिः पुरोडाशमभिधत्ते, तद्धितप्रत्ययश्च काण्डेम् । न चैतावता कृत्स्नपुरोडाशपात्राणां सन्निधिरत्र प्रत्यक्षः, किंत्वर्थात् प्रकल्प्यस्तेन सन्निधिना पुरोडाशपात्रसन्निध्यन्यथानुपपत्त्या परस्पराकाङ्क्षारूपकृत्स्नपुरोडाशपात्रप्रकरणं प्रकरणेन वाक्यं वाक्येन लिङ्गं लिङ्गेन श्रुतिं कल्पयित्वा पुरोडाशपात्रेषु मन्त्रस्य विनियोग इति समाख्यया विनियोगे स्थानादिपञ्चभिर्विप्रकर्षः । सान्नाय्य-

पात्राणां शोधनमन्त्रेण सन्निधिस्तु प्रत्यक्षः । इध्माबर्हिःसंपादनस्य मुष्टिनिर्वापस्य चान्तराले सान्नाय्यपात्राण्युक्तानि । मन्त्रश्चायमिध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्येऽनुवाके पठयते । तेन प्रत्यक्षसन्निधिना प्रकरणादीनां साक्षात्परंपरया च चतुर्णां कल्पनात्सन्निधिः प्रकरणादिचतुर्भिः सन्निकृष्यते । तस्मात्स्थानप्रमाणेन समाख्यां बाधित्वा सान्नाय्यपात्रशेष एव मन्त्र इति । अत्र स्थानं सन्निधिः क्रम इत्यनर्थान्तरम् । इध्माशब्दो हि काष्ठवाचकः । बर्हिःशब्दः कुशावाचक इति॥

**शि० म०–तथा च सर्वत्रोक्तायाः आकाङ्क्षायाः अभावः दुर्बलत्वप्रयोजकः, न त्वजनितान्वयबोधत्वलक्षणाकाङ्क्षाविरहः । तस्याः सर्वत्राभावादिति भावः । अत्रेदमालोचनीयम् । जिज्ञासाविषयत्वयोग्यत्वं नाकाङ्क्षा । घटः कर्मत्वम् आनयनं कृतिः अग्निः करणत्वम् ओदनं कर्मता पाकः कृतिरिष्टसाधनमित्यत्र क्रियात्वादेस्तदवच्छेदकस्य सत्त्वेन साकाङ्क्षत्वापत्तेः । न चेष्टापत्तिः, ततोऽप्यन्वयबोधप्रसङ्गात् । स्वरूपायोग्यत्वान्नान्वयबोध इति चेन्न, साकाङ्क्षत्वेनैव शब्दस्य स्वरूपयोग्यताया अप्यापातात् । किंचान्वयबोधोत्तरकालमपि पदार्थेषु योग्यतालक्षणाकाङ्क्षासत्त्वात्पुनरन्वयबोधापत्तिः । न चान्वयबोधाभावसहकृतजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षेति विवक्षितमतो नोक्तदोष इति वाच्यम्, अन्वयबोधानन्तरमनेन शब्देन पुनर्जानीयामितीच्छाया अन्वयबोधदर्शनात् । किंचैवमाकाङ्क्षैव हेतुर्न स्यात्, अन्वयबोधाभावस्य प्रतिबन्धकाभावतया पृथक् कारणत्वेन कारणतावच्छेदकत्वायोगात् ॥**

**म० प्र०–अजनितान्वयबोधत्वलक्षणेति** । अजनितोऽन्वयबोधो येन शब्देन शब्दार्थेन वा स तथा तस्य भावस्तत्त्वं प्रकृतान्वयबोधाजनकत्वस्वरूपेत्यर्थः । तस्याः=प्रकृतान्वयबोधाजनकत्वलक्षणाकाङ्क्षायाः। **सर्वत्राभावादिति**। प्रकृतान्वयबोधो वैश्वदेवयागेन वाजिनान्वयबोधस्तदजनकत्वं वैश्वदेवयागे वाजिनान्वयबोधात्पूर्वं वाजिनद्रव्येऽस्ति । एवं प्रकृतान्वयबोध इन्द्रोपस्थानेनैन्द्रया ऋचोऽन्वयबोधस्तदजनकत्वमिन्द्रोपस्थाने ऐन्द्रया ऋचोऽन्वयबोधात्पूर्वमैन्द्रमन्त्रेऽस्तीति वाजिनादौ सर्वत्र सत्त्वादित्यर्थः। ततोऽपि=घटः कर्मत्वमित्यादिशब्दादपि। स्वरूपायोग्यत्वात्=शाब्दबोधनिष्ठकार्य्यतानिरूपितशब्दनिष्ठकारणतावच्छेदकद्वितीयान्तादिविलक्षणशब्दत्वाभावात्। **पुनरन्वयबोधापत्तिरिति**। शङ्काकर्तृनैयायिकमते त्वन्वयबोधोत्तरकाले योग्यतादीनां सत्त्वेऽप्यन्वयबोधाननुभावकत्वरूपाकाङ्क्षाभावान्न पुनरन्वयबोध इति भावः । अन्वयबोधाभावसहकृतेति=सामानाधिकरण्यसंबन्धेनान्वयबोधाभावविशिष्टजिज्ञासाविषयत्वयोग्यत्वमित्यर्थः । नोक्तदोषः=विशेषणाभावेन विशिष्टाभावसत्त्वात्पुनरन्वयबोधापत्तिरूपदोषो न । **अन्वयबोधदर्शनादिति** । तव मते पूर्वोक्ताकाङ्क्षाभावेन पुनरन्वयबोधो न स्यादिति भावः । एवम्=अन्वयबोधाभावसहकृतेति विशेषणादाने सति । पूर्वोक्ताकाङ्क्षायाः शाब्दबुद्धिं प्रति हेतुत्वं तदा स्याद्यद्यन्वयबोधाभावस्य कारणतावच्छेदकत्वं स्यादन्वयबोधाभावस्य तु कारणतावच्छेदकत्वमेव नास्ति,

यत्र स्वतन्त्रकारणत्वं तत्र कारणतावच्छेदकत्वाभाव इति व्याप्तेरन्वयबोधः प्रतिबन्धकस्तदाभावः कारणमित्यन्वयबोधाभावस्य प्रतिबन्धकाभावत्वेन स्वातन्त्र्येणैव कारणत्वादित्यभिप्रेत्य न स्यादिति प्रतिज्ञायां हेतुमाह—**अन्वयबोधाभावस्येति** ॥

**शि० म०**—अन्यथा सिद्ध्यभावसहकृतसिषाधयिषाविषयत्वयोग्यत्वमेवानुमितिहेतुः स्यात्तथा च सिषाधयिषाविरहसहकृतसिद्ध्यभावः पक्षतेति सिद्धान्तो भज्येत । ततश्च न युक्तं जिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षेति। अत्र ब्रूमः । जिज्ञासाविरहसहकृतान्वयबोधाभाव आकाङ्क्षा । अजिज्ञासितान्वयबोधके वाक्ये विशेष्याभावात्, जनितान्वयबोधे च विशेषणाभावात्, विशिष्टाभावसत्त्वेन नान्वयबोधानुपपत्तिः । न चैवं घटः कर्मत्वमित्यादावपि तत्सत्त्वेनान्वयबोधापत्तिः क्रियाकर्मान्वयबोधविशेषे तादृशपदस्य स्वरूपायोग्यत्वात् । न च साकाङ्क्षत्वेन तदप्यापाद्यमित्युक्तमिति वाच्यम् । अन्वयबोधविशेषे पदविशेषत्वेनैव हेतुत्वात् । ननु अजिज्ञासितेऽपि वाजिनादौ विशेष्याभावसत्त्वेन साकाङ्क्षत्वापत्तौ बलाबलाधिकरणोक्तं नैराकाङ्क्ष्यं विरुद्ध्येतेति चेन्न, न हि नैराकाङ्क्ष्यपदेन शाब्दज्ञानोपयोग्याकाङ्क्षाभावस्तत्राभिप्रेतः, किंतु श्रुतिकल्पनानुकूलजिज्ञासालक्षणाकाङ्क्षाभावः ॥

**म० प्र०**—अन्यथा=प्रतिबन्धकाभावस्य कारणतावच्छेकत्वस्वीकारे । ननु प्रतिबन्धकाभावस्य स्वतन्त्रकारणत्वानभ्युपगमरूपलाघवेन सिद्ध्यभावसहकृतसिषाधयिषाविषयत्वयोग्यत्वस्यानुमितिहेतुत्वमस्तु को दोष इत्याशङ्क्याह—**तथा चेति** । सिद्ध्यभावसहकृतसिषाधयिषाविषयत्वयोग्यत्वस्यानुमितिहेतुत्वस्वीकारे सतीत्यर्थः । ततश्च=उक्तदोषवृन्दादेव । **जिज्ञासाविरहेति** । पदार्थानां योऽन्वयस्तद्विषयिका वाक्यार्थयोर्योऽन्वयस्तद्विषयिका वा या जिज्ञासा तदभावविशिष्टो यः पदार्थवाक्यार्थान्यतरान्वयबोधः स शाब्दबुद्धिप्रतिबन्धकस्तदभाव आकाङ्क्षेत्यर्थः । अजिज्ञासितान्वयबोधके=मुमुक्षोरनिष्टान्वयबोधजनके गणिकावाक्यादौ । **विशेष्याभावादिति** । स्वजनकतासंबन्धेनान्वयबोधरूपविशेष्याभावाद्विशिष्टाभावसत्त्वेनेत्यर्थः । विशेषणाभावात्=जिज्ञासाविरहरूपविशेषणाभावात् । तत्सत्त्वेन=विशेषणाभावेन वा विशेष्याभावेन वा विशेषणविशेष्योभयाभावेन वा विशिष्टाभावसत्त्वात्पूर्वोक्ताकाङ्क्षासत्त्वेन । क्रियाकर्मान्वयबोधविशेषे=घटमानयेत्यादिवाक्यजन्ये निरूपकतासंबन्धेन घटकर्मतावदानयनमित्यादिबोधविशेषे । तादृशपदस्य=घटः कर्मत्वमित्यादिशब्दस्य, तदपि=स्वरूपयोग्यत्वमपि, अन्वयबोधविशेषे=निरूपकतासंबन्धेन कर्मतावदानयनमित्यन्वयबोधविशेषे । पदविशेषत्वेन=द्वितीयान्तपदाव्यवहितोत्तरानयपदत्वेन । **अजिज्ञासितेऽपीति** । वैश्वदेवयागे आमिक्षाया अन्वितत्वेन वैश्वदेवयागस्याजिज्ञासिते वाजिनादौ जिज्ञासाविरहरूपविशेषणसत्त्वेऽपि वैश्वदेवयागेन वाजिनान्वयबोधरूपविशेष्याभावेन विशेष्याभावप्रयुक्तविशिष्टाभावसत्त्वेन वाजिनादौ साकाङ्क्षत्वापत्त्या नैराकाङ्क्ष्यमनुपपन्नं भवेदि-

त्यर्थः । तत्र=वाजिनादौ । **श्रुतिकल्पनानुकूलेति** । वाजिनस्य विश्वदेवशेषत्वबोधिका का श्रुतिरैन्द्रऋच इन्द्रशेषत्वबोधिका का श्रुतिरित्येवं श्रुतिकल्पनाजनकजिज्ञासालक्षणाकाङ्क्षाभावो वाजिनादिनिष्ठो नैराकाङ्क्ष्यशब्देनाभिहित इत्यर्थः ॥

**शि० म०—अन्यथाऽशब्दरूपे लिङ्गे प्रकरणादौ नैराकाङ्क्ष्यवचनमसमञ्जसं प्रसज्येत । न च वाक्यस्य श्रुतिवत्प्रामाण्यान्न श्रुतिकल्पनापेक्षा, येन तदुपयोग्याकाङ्क्षाभावपरो नैराकाङ्क्ष्यशब्दः स्यादिति वाच्यम् । चोदनालक्षणोऽर्थो धर्म इति धर्मस्य श्रुतिप्रमाणत्वव्यवस्थापनेन सर्वत्र श्रुतेरेव विनियोजकत्वात् । तदुक्तं बलाबलाधिकरणे भट्टपादैः । "विनियोक्त्री श्रुतिस्तावत्सर्वेष्वेतेषु सुस्फुटा । धीस्तस्याः सन्निकर्षेण विप्रकर्षेण च स्थिता॥" इति । ननु नैराकाङ्क्ष्यस्यानुमित्यर्थापत्त्योरदोषतया श्रुतिकल्पनाप्रतिबन्धकत्वाभावाच्छाब्दज्ञानानुकूलाकाङ्क्षाभावपर एव नैराकाङ्क्ष्यशब्दस्तत्रेति चेत्सत्यम् ॥**

म० प्र०—अन्यथा=नैराकाङ्क्ष्यशब्देन शाब्दज्ञानोपयोग्याकाङ्क्षाभावस्वीकारे । **असमञ्जसं प्रसज्येतेति** । प्रसक्तं हि प्रतिषिध्यते इति न्यायात्कस्मिंश्चिल्लिङ्गे प्रकरणादौ च शाब्दज्ञानोपयोग्याकाङ्क्षाप्रसक्त्यभावेन कस्मिंश्चिल्लिङ्गे प्रकरणादौ च नैराकाङ्क्ष्यवचनमनुपपन्नं स्यादिति भावः । **वाक्यस्येति** । यथा श्रुतेरज्ञातज्ञापकत्वरूपप्रामाण्यमितरनिरपेक्षं तद्वद्वाक्यस्यापि शब्दत्वाविशेषादितरनिपेक्षाज्ञातज्ञापकत्वरूपप्रामाण्यान्न श्रुतिकल्पनापेक्षा, येन श्रुतिकल्पनापेक्षावत्त्वरूपहेतुना तदुपयोग्याकाङ्क्षाभावपरः श्रुतिकल्पनाजनकाकाङ्क्षाभावपरो नैराकाङ्क्ष्यशब्दः स्यादित्यर्थः । चोदनालक्षणः=चोदना विधिः लक्षणं प्रमाणं यस्मिन् धर्मे स तथा विधिप्रमाणक इति यावत् । अर्थः=सुखाधिकदुःखाजनकः, श्रुतिप्रमाणत्वव्यवस्थापनेन=विधिप्रमाणकत्वनिरूपणेन । सर्वत्र=निखिलशेषेषु श्रुत्यादिषड्विधसर्वप्रमाणेषु मध्ये इति वा । **विनियोक्त्रीति** । यतस्तस्याः श्रुतेर्धीर्ज्ञानं सन्निकर्षेण=साक्षाद्विप्रकर्षेण=व्यवहितत्वेन लिङ्गादिकल्पनान्तरं श्रुतिकल्पनया स्थितमतः सर्वेष्वेतेषु श्रुत्यादिनिखिलप्रमाणेषु मध्ये श्रुतिरेव विनियोक्त्रीत्यर्थः । शब्दज्ञानानुकूलाकाङ्क्षाभावपरनैराकाङ्क्ष्यशब्दाङ्गीकारेऽशब्दरूपलिङ्गप्रकरणादौ नैराकाङ्क्ष्यवचनं व्यर्थं स्याल्लिङ्गप्रकरणादावुक्तनैराकाङ्क्ष्यस्य सर्वदा सत्त्वात् । एतादृशनैराकाङ्क्ष्यस्य सर्वदा सत्त्वेन कदापि लिङ्गादिना श्रुतिकल्पना च न स्यात्तथा च लिङ्गप्रकरणादौ विनियोजकत्वमपि न स्यादित्यन्यथेत्यादिग्रन्थनिर्दिष्टपूर्वोक्तदोषमुद्धर्त्तुकामः शङ्कते—**नन्विति** । अनुमित्यर्थापत्त्योः=स्योनं ते सदनं कृणोमीत्यादिमन्त्रः अनेन मन्त्रेण पुरोडाशसदनं कुर्यादिति श्रुतिविहितपुरोडाशसदनकरणशेषत्ववान् मन्त्रत्वे सति शेषत्वप्रकाशने समर्थत्वाद्यन्नैवं तन्नैवं घटादिवत् । यदि स्योनं ते सदनं कृणोमीत्यादिमन्त्रनिष्ठपुरोडाशसदनकरणशेषत्वबोधिका श्रुतिर्न स्यात्तदैतन्मन्त्रनिष्ठपुरोडाशसदनकरणशेषत्वप्रकाशनसामर्थ्यं व्यर्थं स्यादित्येतन्मन्त्रनिष्ठपुरोडाशसदनकरणशेषत्वप्रकाशनसामर्थ्यमेतन्मन्त्रनिष्ठपुरोडाशसदनकरणविनियोगं बोधयन्तीं श्रुति-

मन्तरेण व्यर्थं सदुक्तमन्त्रस्य पुरोडाशसदनकरणे विनियोजिकां श्रुतिं कल्पयतीत्यनुमित्यर्थापत्तिरूपयोः श्रुतिकल्पनयोः । **तत्रेति** । लिङ्गप्रकरणादावित्यर्थः । लिङ्गादिषु शाब्दज्ञानानुकूलाकाङ्क्षाभावरूपनैराकाङ्क्ष्यस्य सर्वदा सत्त्वेऽपि तादृशनैराकाङ्क्ष्यस्य शाब्दज्ञानप्रतिबन्धकत्वेन श्रुतिकल्पनारूपानुमित्यर्थापत्त्यप्रतिबन्धकत्वेन पुरुषेच्छया श्रुतिकल्पनासंभवेन कल्पितश्रुतिसहकृतलिङ्गप्रकरणादीनां विनियोजकत्वसंभवेनान्यथेत्यादिपूर्वग्रन्थोक्तदोषो नास्तीति शङ्काकर्तुराशयः ॥

**शि० म०**—नैराकाङ्क्ष्यं न दोष इति तथापि न कल्पिता श्रुतिर्विनियोजिका, नैराकाङ्क्ष्योत्तरकालं कल्पितस्य वचनस्य पौरुषत्वेनाप्रमाणत्वात् । तदुक्तं मन्त्राधिकरणे—"निराकाङ्क्ष्योत्तरकालं कल्पितमपि पौरुषेयत्वादप्रमाणं स्यात्" इति। इयं चाकाङ्क्षा स्वरूपसती हेतुः। नन्वियं पक्षतापर्यवसन्नेति कथं शाब्दज्ञानासाधारणकारणमिति चेत्, न तावद्विशेषणसंकरः । तत्र ह्यनुमितिगोचरेच्छा सिषाधयिषा, जिज्ञासा तु शाब्दज्ञानेच्छा, अनेन शब्देनामुमर्थं जानीयामित्येवंरूपा । नाप्यन्वयबोधाभावः साधारणमनुमितौ हि सिद्धिमात्रस्य प्रतिबन्धकत्वात् सिद्ध्यभावमात्रं हेतुः, शाब्दज्ञाने तु तज्जन्यशाब्दज्ञानाभावः प्रमाणान्तरेण वाक्यान्तरेण वाऽवगतेऽपि वाक्यार्थज्ञानोत्पत्त्या फलबलेन तज्जन्यशाब्दज्ञानस्यैव प्रतिबन्धकत्वात्। न चैवमन्वयबोधाभावस्य प्रागभावरूपतया नासाधारण्यम् , तत्तत्प्रागभावत्वेन साधारण्येऽपि विशेषणान्तरविशिष्टतया तस्यासाधारणत्वात्। तस्माज्जिज्ञासाविरहसहकृतान्वयबोधाभाव एवाकाङ्क्षा सैव च शाब्दज्ञानकारणमित्यास्तामतिविस्तरः ॥

**म० प्र०**—न दोषः=अनुमित्यर्थापत्त्योर्दोषो न, वचनस्य=श्रुतिवचनस्य। **अप्रमाणत्वादिति** । यद्यपि लिङ्गप्रकरणादिषु शाब्दज्ञानोपयोग्याकाङ्क्षाभावरूपनैराकाङ्क्ष्यं न श्रुतिकल्पनाप्रतिबन्धकमिति सत्यं तथापि पुरुषेच्छया कल्पिता श्रुतिर्विनियोजिका न भवति लिङ्गप्रकरणादिषु शाब्दज्ञानानुकूलाकाङ्क्षाभावरूपनैराकाङ्क्ष्योत्तरकालं पुरुषेच्छया कल्पितश्रुतेः पौरुषेयत्वादप्रमाणत्वेन कल्पितश्रुतिसहकृतनिराकाङ्क्षलिङ्गादीनां विनियोजकत्वाभावेनान्यथेत्यादिपूर्वग्रन्थोऽग्यदोषः पूर्वपक्षिणस्तदवस्थः। मम तु लिङ्गप्रकरणादिषु श्रुतिकल्पनानुकूलजिज्ञासालक्षणाकाङ्क्षायाः सत्त्वेन साकाङ्क्षलिङ्गादिमूलककल्पनाविषयश्रुतेः प्रमाणत्वेन प्रमाणश्रुतिद्वारा लिङ्गप्रकरणादीनां विनियोजकत्वसंभवेन लिङ्गप्रकरणादीनां श्रुतिकल्पनाद्वारा विनियोजकत्वाभावरूपो दोषो नास्तीति सिद्धान्तिन आशयः। कल्पितमपि=कल्पितश्रुतिवचनमपि, इयं=जिज्ञासाविरहसहकृतान्वयबोधाभावरूपाकाङ्क्षा, पक्षतापर्यवसन्ना=सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतारूपा, इति=जिज्ञासाविरहसहकृतान्वयबोधाभावरूपाकाङ्क्षायाः उक्तपक्षतारूपत्वात्, तत्र=सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतायाम्, सिद्धिमात्रस्य साध्यनिश्चयत्वावच्छिन्ननिखिल-

साध्यनिश्चयस्य, सिद्ध्यभावमात्रम्=साध्यनिश्चयाभावत्वावच्छिन्नसाध्यनिश्चयाभावः, तज्जन्यशाब्दज्ञानाभावः=प्रकृतशब्दजन्यशाब्दज्ञानाभावः, अस्य हेतुरित्यनेनान्वयः। **प्रमाणान्तरेणेति।** प्रत्यक्षादिप्रमाणेन कलशवद्भूतलमित्यादिवाक्येन वा घटभूतलादिपदार्थज्ञानेऽपि पुनः केनचिद्घटवद्भूतलमित्यादिवाक्योच्चारणे कृते उच्चरितवाक्यार्थज्ञानोत्पत्त्या फलबलेन शाब्दज्ञानरूपकार्यानुपपत्त्या प्रकृतशब्दजन्यतद्विशेष्यकतत्प्रकारकशाब्दबोधं प्रति प्रकृतशब्दजन्यतद्विशेष्यकतत्प्रकारकशाब्दज्ञानस्यैव प्रतिबन्धकत्वादित्यर्थः। **न चैवमिति।** जिज्ञासाविरहविशिष्टान्वयबोधाभावरूपाकाङ्क्षास्वीकारे, नासाधारण्यम्=आकाङ्क्षायाः शाब्दबोधमात्रकारणत्वं न स्यात्प्रागभावस्य कार्य्यत्वावच्छिन्ननिखिलकार्य्यं प्रति कारणत्वेनान्वयबोधाभावस्य प्रागभावरूपत्वादित्यर्थः। तत्तत्प्रागभावत्वेन=तस्य तस्य प्रत्यक्षादिरूपान्वयबोधस्य यः प्रागभावस्तस्य प्रागभावत्वेन, विशेषणान्तरविशिष्टतया=जिज्ञासाविरहरूपविशेषणान्तरविशिष्टत्वेन, तस्य=अन्वयबोधाभावस्य। असाधारणत्वात्=शाब्दबोधमात्रकारणत्वात्॥

**योग्यता च तात्पर्य्यविषयसंसर्गाबाधः। वह्निना सिञ्चेदित्यादौ तादृशसंसर्गबाधान्नातिव्याप्तिः। स प्रजापतिरात्मनो वपामुदखिददित्यादावपि तात्पर्य्यविषयीभूतपशु ( वपायाग ) प्राशस्त्याबाधात् योग्यता। तत्त्वमस्यादिवाक्येष्वपि वाच्याभेदबाधेऽपि लक्ष्यस्वरूपाभेदे बाधाभावाद्योग्यता॥**

शि० म०—योग्यतां निरूपयति—**योग्यता चेति।** तात्पर्यविषयसंसर्गो योग्यतेत्यर्थः। तात्पर्य्यविषयपदस्य प्रयोजनमाह—**स प्रजापतिरित्यादिना।** संप्रदायमतेनाह—**वाच्याभेदबाधेऽपीति।** इयं योग्यता न स्वरूपसती हेतुः शाब्दभ्रमोच्छेदात्। किंतु ज्ञायमाना। तज्ज्ञानं च संशयनिश्चयसाधारणं कारणम्। ततश्च तत्संशयविपर्य्ययोर्न शाब्दज्ञानानुपपत्तिः॥

म० प्र०—**संप्रदायमतेनेति।** परममूलकर्तृधर्मराजाध्वरीन्द्रमते शक्त्युपस्थितविशेष्ययोरेवाभेदान्वयेन वाध्यार्थाभेदबाधेऽपीत्युक्त्यनुपपत्त्या लक्षणाभ्युपगन्तृप्राचीनमते वाच्यार्थभेदबाधेऽपीत्याद्युक्तिसम्भवेन सम्प्रदायमतेनेत्युक्तमिति भावः। **शाब्दभ्रमोच्छेदादिति।** स्वरूपसत्याः योग्यतायाः शाब्दबोधहेतुत्वे वह्निना सिञ्चतीत्यादिवाक्याद् भ्रमात्मकशाब्दबोधो न स्याद्योग्यतायास्तत्राभावादित्यर्थः। साधारणम्=अन्यतरत्। तत्संशयविर्ययोः=योग्यतासंशययोग्यतानिश्चयभ्रमान्यतरयोः सतोः॥

**आसत्तिश्चाऽव्यवधानेन पदजन्यपदार्थोपस्थितिः॥**

शि० म०—प्राभाकरास्तु न पदजन्यपदार्थोपस्थितिः शाब्दज्ञानाङ्गम्, किन्तु उपस्थितिमात्रं लाघवात्। न चासत्तेः पदविशेषजन्योपस्थितित्वेनाहेतुत्वे घटः कर्मत्वमित्यादावन्वयबोधप्रसङ्गः, तस्य स्वरूपायोग्यत्वात्। न चैवमोदनं पचती

त्यत्र मानान्तरोपस्थितकलापस्याप्यन्वयबोधापत्तिः, तात्पर्यज्ञानेनैव तन्नियमोपपत्तेः। अन्यथा दैववशस्मृतकलापपदोपस्थितस्य तव मतेऽप्यन्वयबोधापत्तिर्दुर्वारा। किंच पदजन्या सा न शाब्दधीहेतुः, द्वारमित्यादौ व्यभिचारात्। ततश्च न पदजन्या पदार्थोपस्थितिरासत्तिरिति। तदेतन्निराचष्टे-**आसत्तिश्चेति**। अयं भावः। पदज्ञानजन्यान्वयप्रतियोग्युपस्थितिरेवासत्तिः। सैव चान्वयबोधाङ्गम्। अन्यथा संस्कारोपस्थितं तीरमादाय घोषादिपदैरेवान्वयबोधसंभवे लक्षणोच्छेदापत्तिः। किंच यदि वृत्त्यऽनुपस्थितस्यान्वयबोधस्तदा समवायसंबन्धेन घटादिपदैरेवाकाशोपस्थितिसंभवादाकाशादिपदानां तत्र शक्तिः। न कल्प्येत। न च वृत्तिधीरपि शाब्दधीहेतुः, लाघवेन पदजन्यपदार्थोपस्थितित्वेन हेतुत्वे अतिरिक्तकारणाकल्पनादिति॥

म० प्र०-पदजन्यपदार्थोपस्थितिः=एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेन शक्तिलक्षणान्यतरसंबन्धेन पदजन्यपदार्थस्मृतिः। उपस्थितिमात्रम्=केनचिच्चक्षुरादिनिमित्तेन पदार्थज्ञानमात्रम्। तस्य=घटः कर्मत्वमित्यादिपदस्य। **एवमिति**। पदार्थोपस्थितेः पदविशेषकारणजन्योपस्थितित्वेन शाब्दबोधाहेतुत्वे, मानान्तरोपस्थितकलापस्य=प्रत्यक्षादिप्रमाणान्तरज्ञातस्य "कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः" इति मेदिनीकोशोक्तसंहत्यादिपदार्थकलापस्योदनं पचतीति वाक्यादन्वयबोधापत्तिरित्यर्थः। तन्नियमोपपत्तेः=तस्य कलापान्वयबोधस्य नियमो नियमनं निवारणं तस्योपपत्तेः, अन्यथा=तात्पर्यज्ञानेन कलापान्वयबोधनिवारणानङ्गीकारे, उपस्थितस्य=स्मृतकलापस्य, सा=पदार्थोपस्थितिः, द्वारमित्यादौ व्यभिचारात्=पिधानपदजन्यपिधानोपस्थित्यभावेऽपि पिधानरूपार्थाध्याहारेण द्वारमिति शब्दाच्छाब्दबोधसंभवेन व्यतिरेकव्यभिचारात्, तदेतत्=प्राभाकरोक्तम्। परममूले **अव्यवधानेनेति**। अव्यवधानविशिष्टा या पदजन्यपदार्थोपस्थितिः सा आसत्तिः। अव्यवधानविशिष्टं यत्पदं तज्जन्यपदार्थोपस्थितिरासत्तिरिति तु न। गिरिर्भुक्तं वह्निमान् देवदत्तेनेत्यादौ गिरिभुक्तपदयोरव्यवधानसत्त्वेनातिव्याप्तेः, किंच मौनिकृतरेखासु पदाभावेन पदाव्यवधानासंभवादासत्त्यभावप्रसङ्गादव्यवधानवैशिष्ट्यस्य पदार्थोपस्थितावेवान्वय इत्यर्थः। **पदज्ञानेति**। पदज्ञानजन्याव्यवधानेनान्वयनिरूपकपदार्थोपस्थितिरित्यर्थः। सैव=उक्तासत्तिरेव, अन्वयबोधाङ्गम्=वाक्यार्थबोधकारणम्, अन्यथा=शक्तिलक्षणान्यतररूपवृत्तिधीसहकृतपदज्ञानजन्यान्वयनिरूपकपदार्थोपस्थितिरूपासत्तेर्वाक्यार्थज्ञानकारणत्वानङ्गीकारे पदार्थज्ञानमात्रस्य वाक्यार्थज्ञानकारणत्वाङ्गीकारे वा, समवायसंबन्धेन=घटादिपदानामाकाशे समवायसंबन्धसत्त्वेन। आकाशादीत्यादिपदेन गगनादिपदानां ग्रहः। तत्र=आकाशे। **न कल्प्येतेति**। इदमुपलक्षणम्। वृत्त्याऽनुपस्थितस्याप्यन्वयबोधाङ्गीकारे घटादिपदाद्घटादिपदानामाकाशे समवायसंबन्धसत्त्वेनाकाशस्मृतौ घटमानयेत्यादिवाक्यादाकाशान्वयबोधापत्तिरिति दूषणमपि द्रष्टव्यम्। उक्तदोषद्वयं पूर्वपक्षी निराकरोति-**वृत्तिधीरपीति**। शक्तिलक्षणान्यतरज्ञानमपीत्यर्थः। तथा च घटादिपदानामाकाशे शक्तिलक्षणान्यतरज्ञानाभावेन घटमानये-

त्यादिवाक्यान्नाकाशे शाब्दबोधापत्तिरिति भावः । **लाघवेनेति** । वृत्तिधियः स्वातन्त्र्येण कारणत्वे गौरवं मम नये तु वृत्तिधियः सहकारिकारणत्वान्न गौरवमिति भावः । अतिरिक्त-कारणाकल्पनात्=आकाङ्क्षाद्यतिरिक्तपदशक्तिज्ञानरूपशाब्दस्वतन्त्रकारणाकल्पनात् ॥

**मानान्तरेणोपस्थापितपदार्थस्यान्वयबोधाभावात्पदजन्येति । अत एवाश्रुतपदार्थस्थले तत्तत्पदाध्याहारः द्वारमित्यादौ 'पिधेहि' इति ॥**

**शि० म०-यदुक्तं द्वारमित्यादौ व्यभिचार इति तत्राह-अत एवेति । न चार्थविशिष्टपदकल्पनाद्वरमावश्यकार्थकल्पनमिति वाच्यम् । उक्तन्यायेन पदज-न्यपदार्थोपस्थितित्वेन हेतुत्वसिद्धौ तत्कल्पनागौरवस्य प्रामाणिकत्वेनादोषत्वात् । अन्यथा पिधानांशे शाब्दत्वं न स्यात्, अनुमितित्वे परामर्शजन्यत्ववच्छाब्दत्वे पदज्ञानजन्यत्वस्य प्रयोजकत्वात् ॥**

म० प्र०-कल्पनात्=अनुमित्यर्थापत्तिरूपज्ञानात् । उक्तन्यायेन=लक्षणोच्छेदापत्त्याऽऽकाशा-दिपदानामाकाशे शक्तिकल्पनाभावरूपदूषणाभिधानेन च, तत्कल्पनागौरवस्य=यदि पिधेहीति पदं न स्यात्तदा द्वारकर्म्मकपिधानविषयकशाब्दबुद्धिर्नोत्पद्येतातः पिधानबोधकक्रियापदमावश्यक-मित्यर्थापत्तिरूपार्थविशिष्टपदकल्पनारूपगौरवज्ञानस्य, अदोषत्वात्=कार्य्यकारणभावबुद्ध्यप्रतिब-न्धकत्वात्, अन्यथा=पिधेहिपदानध्याहारे । पदजन्येत्यस्य मानान्तरोपस्थापितपदार्थान्वयबोधनिव-र्त्तनरूपप्रयोजनमाह-परममूले **मानान्तरेणेति** । शब्दप्रमाणातिरिक्तप्रत्यक्षादिप्रमाणेनेत्यर्थः । परममूले **अन्वयबोधाभावादिति** । अन्वयबोधाभावमभिप्रेत्येत्यर्थः । परममूले अत एव= मानान्तरेणोपस्थापितपदार्थस्यान्वयबोधाभावादेव । परममूले अश्रुतपदार्थस्थले=विवक्षिताश्रुतपदार्थ-लौकिकवाक्ये । परममूले **तत्तत्पदाध्याहार इति** । अस्याग्रे संगच्छत इति शेषः ॥

**अत एव 'इषे त्वा' इत्यादौ छिनद्मि इति पदाध्याहारः ॥**

**शि० म०-इषे त्वेत्यादाविति । भेदलक्षणे स्थितम् । समेषु वाक्यभेदः स्यात् यान्यसमवेतार्थानि वाचनिकविनियोगवन्ति यथा इषे त्वोर्जे त्वेत्यादीनि । तेषु संदेहः किं प्राग् दृष्टार्थमन्त्रावधेरेकमन्त्रत्वमुत यावदेव मिथस्संबन्धमिषे त्वेति तावदेकं यजुः अन्यत्तु यजुरन्तरमिति किं प्राप्तमेकं यजुरिति कुत एकार्थत्वात् । न च निराकाङ्क्षत्वान्नैकमन्त्रत्वं साकाङ्क्षत्वे सत्येकप्रयोजनत्वस्यैवैकमन्त्रत्वे तन्त्रत्वादिति वाच्यम् । एकप्रयोजनानां प्रत्येकं तत्साधनशक्त्यभावेन विभज्यमानसाकाङ्क्षत्वात् ॥**

म० प्र०-मानान्तरेणोपस्थापितपदार्थस्यान्वयबोधाभावादेव विवक्षिताश्रुतपदार्थवैदिकवाक्ये-ऽप्यन्वययोग्यपदार्थोपस्थापकपदाध्याहारः संगच्छते इत्याह-परममूले **अत एवेति** । भेदलक्षणे=मन्त्रभेदप्रतिपादकधर्ममीमांसाद्वितीयाध्याये प्रथमपादे । स्थितं=सन्यवहितवक्ष्य-माणसूत्रे विद्यमानम्, समेषु=स्वातन्त्र्येण प्रकृतार्थबोधकत्वेन तुल्यमन्त्रेषु परस्परनिरपेक्ष-

मन्त्रेष्विति वा । वाक्यभेदः=मन्त्रभेदः । यानि=यादृशवाक्यानि । असमवेतार्थानि=ब्राह्मणभागेन विनियोगात्पूर्वम् असमवेतः क्वचित्क्रियायामनन्वितोऽर्थो येषां तान्यसमवेतार्थानि क्रियानन्वितार्थानीति यावत् । वाचनिकविनियोगवन्ति=वचनादिषे त्वेति शाखामाच्छिनत्तीत्यादिब्राह्मणवाक्यादागतो वाचनिको वाचनिकश्चासौ विनियोगः शाखाच्छेदनादिभिः सह संबन्धस्तद्वन्ति। तेषु=तादृशमन्त्रेषु । येषु मन्त्रेषु कर्मसमवेतार्थप्रकाशकनिर्वपामीत्यादिक्रियापदमस्ति तेषु परिमाणसंशयाभावेऽपि यत्रेषे त्वोर्जे त्वेत्यादिषु क्रियापदाभावेन लौकिकविनियोगनिश्चयाभावाद्वाचनिकविनियोगोऽकाम्यते तेषु परिमाणसंशय इत्यभिप्रेत्य संशयस्वरूपमाह—**किं प्रागित्यादिना ।** संहितायामिषे त्वोर्जे त्वेत्यादिमन्त्राणामग्रे इष्टार्थैकमन्त्रोऽस्ति स एवावधिस्तन्मन्त्ररूपावधेः प्रागित्यर्थः । यावदेव=यत्परिमाणकम् । मिथस्संबन्धम्=मिथः परस्परं संबन्धो यस्य यजुषस्तन्मिथःसंबन्धं परस्परसंबन्धवदिति यावत्, इषे त्वेति=इषे त्वेत्याकारकम् । तावत्=तत्परिमाणकम्, एकं यजुः=एकमन्त्रः । अन्यत्तु=ऊर्जे त्वेत्याकारकं तु, यजुरन्तरम्=मन्त्रान्तरम् । एकं यजुः=इष्टार्थमन्त्रावधेः प्रागिषे त्वोर्जे त्वेत्यादिपदसमुदाय एकमन्त्रः । एकार्थत्वात्=एकादृष्टरूपप्रयोजनकल्पने लाघवेनादृष्टरूपैकप्रयोजनकत्वात् उरु प्रथस्वेत्यादिमन्त्रवदिषे त्वेत्यादिषु क्रियापदाभावेनेषे त्वेत्यादिमन्त्रार्थप्रतीत्यभावादिषे त्वेत्यादीनामनुष्ठेयार्थस्मारकताऽसंभवेन नानेकमन्त्रत्वमिति भावः । हे पुरोडाश उरु यथा स्यात्तथा, प्रथस्व=वृद्धिं प्राप्नुहीति उरुप्रथस्वमन्त्रार्थः । निराकाङ्क्षत्वात्=इषे त्वेत्यादीनां भिन्नप्रयोजनकत्वेन परस्पराकाङ्क्षाशून्यत्वात् । नन्विषे त्वेत्यादीनां निराकाङ्क्षत्वेऽप्येकमन्त्रत्वमस्तु को दोषः इत्याशङ्क्याह—**साकाङ्क्षत्वे सतीति।** तन्त्रत्वात्=प्रयोजकत्वात् । इषे त्वेत्यादीनामदृष्टप्रयोजनकत्वेन परस्परसाकाङ्क्षत्वेन निराकाङ्क्षत्वमसिद्धमित्यभिप्रेत्य न च वाच्यमिति प्रतिज्ञायां हेतुमाह—**एकप्रयोजनानामिति** । एकप्रयोजनकानां मन्त्राणां मध्ये । प्रत्येकम्=एकैकमन्त्रस्य । तत्साधनशक्त्यभावेन=एकादृष्टरूपार्थसंपादन सामर्थ्याभावेन विभज्यमानानां सतां वाक्यानां साकाङ्क्षत्वादित्यर्थः । वाक्यानां विभागे सति साकाङ्क्षत्वनिर्णयो भवतीति भावः ॥

शि० म०—नन्वसिद्धमेकप्रयोजनत्वं विनियोगभेदेन प्रयोजनभेदावगमात् । अन्यथा एकमन्त्रत्वे प्रतीकभेदेन विनियोगभेद इषे त्वेति शाखामाच्छिनत्ति ऊर्जे त्वेत्यनुमार्ष्टीत्येवमादिः कथं स्यादिति चेत् । किमर्थाभिधानलक्षणप्रयोजनस्य भेदः उतादृष्टलक्षणस्य । नाद्यः, वायवः स्थ इत्यादिवदिषे त्वेत्यादावश्रुतक्रियापदे तदयोगात् । न च क्रियापदाध्याहारादर्थाभिधानभेद इति वाच्यम् । तत्र तदध्याहारकल्पने गौरवान्मानाभावाच्च । न द्वितीयः, कल्पनीयादृष्टस्य लाघवादेकस्यैव कल्प्यत्वात् । न च प्रतीकभेदेन विनियोगभेदानुपपत्तिः । मन्त्रावृत्त्याऽपि तदुपपत्तेः । ततश्च मन्त्रैक्यमित्येवमुत्सूत्रे पूर्वपक्षे प्राप्ते ब्रूमः । इषे त्वेत्येकं यजुः, ऊर्जे त्वेत्यपरमिति युक्तम्, शब्दभेदेन भिन्नवाक्यरूपावगमेन निराकाङ्क्षत्वात् ॥

म० प्र०—एकप्रयोजनत्वम्=इषे त्वेत्यादिवाक्यानामदृष्टरूपैकप्रयोजनकत्वम्। विनियोग-भेदेन=शाखाच्छेदनादिभिः सह संबन्धभेदेन, अन्यथा=इषे त्वेत्यादीनामेकादृष्टरूपप्रयोजनकत्व-स्वीकारे, प्रतीकभेदेन=इषे त्वेत्यादिरूपमन्त्रबोधकेतिशब्दघटितशब्दविशेषेण। इत्येवमादिः= इत्येवमादिब्राह्मणवाक्यबोधितः। **अर्थाभिधानेति**। कर्मसमवेतार्थविषयकबोधजनने-त्यर्थः। **वायव इति**। भो वायवो यूयं स्थितिं कुरुथेत्यर्थः। तदयोगात्=कर्मसमवेतार्था-भिधानलक्षणदृष्टप्रयोजनकत्वायोगात्, तत्र=इषे त्वेत्यादिमन्त्रेषु। **तदध्याहारेति**। क्रिया-पदानुमित्यर्थापत्त्यन्यतरात्मकाध्याहारेत्यर्थः। मन्त्रावृत्त्या=इषे त्वेत्याद्येकमन्त्रस्य पुनः पाठेन। तदु-पपत्तेः=शाखाच्छेदनादौ संबन्धविशेषोपपत्तेः। उत्सूत्रे=सूत्रादुद्बहिरुत्सूत्रं तस्मिन्सूत्रानुक्ते इति यावत्। **इषे इति**। हे शाखे इषेऽन्नाय त्वा त्वां छिनद्मीत्यर्थः। एकं यजुः=एकमन्त्रः। शब्दभेदेन=इषे त्वेति शाखामाच्छिनत्तीत्यादिविनियोजकब्राह्मणवाक्यभेदेन। भिन्नवाक्यरूपागमेन= इषे त्वेति भिन्नं वाक्यमूर्जे त्वेति भिन्नं वाक्यमिति भेदविशिष्टवाक्यानां स्वरूपनिश्चयेन। **निराकाङ्क्षत्वादिति**। इषे त्वेत्यादीनां परस्पराकाङ्क्षाभावादित्यर्थः॥

**शि० म०—यत्तु एकप्रयोजनत्वाद्विभज्यमानसाकाङ्क्षत्वमिति, तन्न प्रथममेव रूपभेदेन विनियोगप्रयोजनभेदसिद्धौ तदुत्तरकालिकस्य प्रयोजनकल्पनागौरवस्य तद्भेदापरिपन्थित्वात्। न च मन्त्रभेदस्यादृष्टभेदेऽप्युपपत्तेः कथमेतावताऽऽच्छिनद्मि अनुमार्ज्मीति क्रियापदाध्याहारसिद्धिरिति वाच्यम्। करणत्वेन चोदितेषु मन्त्रेषु कल्पनीयस्य प्रयोजनस्य क्रियानिर्वर्त्तनोपायस्यैव कल्प्यत्वेनार्थप्रकाशनस्यैव तत्का-र्यत्वकल्पनात्। तस्य च क्रियापदाध्याहारं विनाऽनुपपत्तेः। यथाहुः। यावता विना चोदितकरणसामर्थ्यं नास्ति तावदनाम्नातमपि कल्पनीयं छिनद्मीत्यादीति॥**

म० प्र०—पूर्वपक्षिणैकप्रयोजनानामित्यादिवाक्येनेषे त्वेत्यादिवाक्यानां साकाङ्क्षत्वमेकादृष्ट-प्रयोजनकत्वं चोक्तं तन्निराकरोति—**यत्त्विति**। प्रथममेव=इषे त्वेत्यादीनां शाखाच्छेदनादिविनियोगभेदशाखाच्छेदनाद्यर्थाभिधानलक्षणप्रयोजनभेदकल्पनागौरवज्ञानात्प्रथममेव। रूपभेदेन=इषे त्वेति शाखामाच्छिनत्तीत्यादिविनियोजकब्राह्मणवाक्यस्वरूपभेदेन, विनियोगप्रयोज-नभेदसिद्धौ=इषेत्वेत्यादीनां शाखाच्छेदनादिविनियोगभेदशाखाच्छेदनाद्यर्थाभिधानलक्षणप्रयोजनभेद-सिद्धौ विनियोगाभिन्नप्रयोजनभेदसिद्धाविति वा, तदुत्तरकालिकस्य=रूपभेदेनेषे त्वेत्यादीनां शाखाच्छेदनविनियोगभेदशाखाच्छेदनाद्यर्थाभिधानलक्षणप्रयोजनभेदसिद्ध्युत्तरकालिकस्य, प्रयोजन-कल्पनागौरवस्य=इषे त्वेत्यादीनां विनियोगप्रयोजनभेदकल्पनागौरवज्ञानस्य। तद्भेदापरिपन्थित्वात्= विनियोगभेदप्रयोजनभेदसिद्ध्यप्रतिबन्धकत्वात्। एतावता=मन्त्रभेदान्यथानुपपत्तिरूपहेतुना, करण-त्वेन चोदितेषु=मन्त्रो द्विविधः करणमन्त्रोऽनुवादकमन्त्रस्तयोर्मन्त्रयोर्मध्ये करणमन्त्रेषु ब्राह्मणवाक्येन छेदनादिक्रियाकरणत्वेन विहितेष्विषे त्वेत्यादिषु, कल्पनीयस्य=अनुमित्यर्थापत्त्यन्यतरात्मककल्पना-योग्यस्य। क्रियानिर्वर्त्तनोपायस्य=छेदनादिक्रियाजननानुकूलस्य, कल्प्यत्वेन=भट्टपादैर्बोधितत्वेन,

अर्थप्रकाशनस्यैव=मन्त्रार्थज्ञानस्यैव । तत्कार्य्यत्वकल्पनात्=मन्त्रकार्य्यत्वप्रकारकानुमित्यर्थापत्त्यन्यतरात्मकज्ञानात् । तस्य च=मन्त्रार्थज्ञानलक्षणमन्त्रप्रयोजनस्य तु, यावता=यादृशशब्देन । चोदितकरणसामर्थ्यं=ब्राह्मणवाक्यविहितकरणमन्त्रनिष्ठार्थप्रकाशनानुकूलसामर्थ्यम् । तावत्=तादृशशब्दस्वरूपम् ॥

**अत एव विकृतिषु सूर्य्याय जुष्टं निर्वपामीति पदप्रयोगः ॥**

**शि० म०–विकृतिष्विति । अग्नये त्वा जुष्टं निर्वपामीति व्रीहीणां मेध सुमनस्यमान इति मन्त्रावुदाहृत्य किमिमौ सौर्य्ययागादिषु ऊहितव्यावुत नेति संशयेऽग्निव्रीहिपदयुक्तमन्त्रयोर्द्रव्यदेवताप्रकाशकतया प्रकृतौ दृष्टार्थकयोरप्यैन्द्र्या गार्हपत्यप्रकाशकत्ववत् नीवारसूर्य्यादिप्रकाशकत्वस्य गुणवृत्त्यैवोपपत्तेः न तत्प्रकाशनार्थमूह इति प्रापय्याग्निव्रीहिपदयोर्देवतादिवाचिपदविवक्षया प्रयुक्तयोरैन्द्रीवन्मन्त्रस्वरूपविवक्षया प्रकृतावप्रयुक्तया तत्स्थाने सूर्य्यनीवारपदप्रक्षेपो विकृताविति नवमे राद्धान्तितम् । तथा चार्थाध्याहारपक्षे मानान्तरोपस्थितसूर्य्यादिकमादाय मन्त्रस्यान्वयबोधकत्वसंभवान्न सूर्य्यादिपदोहाप्राप्तिरित्येतदधिकरणविरोधः स्यादिति भावः । नन्वासत्तिः पदजन्यत्वविशेषिताऽपि न शाब्दज्ञाने हेतुः । अनासन्ने तद्भ्रमेण शाब्दभ्रमाभावप्रसङ्गादिति चेत् न, तात्पर्य्यभ्रमेण योग्यताभ्रमेण वा तदुपपत्तेः । न चैवमासत्तेः स्वरूपसत्या हेतुत्वे विशेषणज्ञानत्वेन कारणत्वापत्तौ शाब्दज्ञानासाधारणकारणत्वं न स्यादिति वाच्यम्, पदज्ञानजन्यपदार्थोपस्थितित्वेनैव हेतुत्वाभ्युपगमात् । अत एव विशेष्यधीरपि शाब्दहेतुरिति दिक् ॥**

**म० प्र०–**परममूले=**अत एवेति** । शब्दाध्याहारस्य प्रामाणिकत्वादेव, विकृतिषु=सौर्य्ययागादिषु, सूर्य्याय जुष्टं निर्वपामीतिपदप्रयोगः=अग्नये त्वा जुष्टं निर्वपामि व्रीहिणां मेध सुमनस्यमान इति मन्त्रयोरग्निपदव्रीहिपदस्थाने सूर्य्यपदनीवारपदप्रक्षेपसंभवेन सूर्य्याय जुष्टं निर्वपामि नीवाराणां मेध सुमनस्यमान इत्यनयोर्मन्त्रयोः स्वरूपं सम्भवतीत्यर्थः । **अग्नये इति** । हे पुरोडाश अग्नये=अग्निदेवतायै, त्वा=त्वां, जुष्टं=प्रीतिपूर्वकं यथास्यात्तथा, निर्वपामि=संपादयामि प्रक्षिपामीति वा । व्रीहीणां मेध भो व्रीहीणां सार सुमनस्यमानः=सुष्ठु प्रसन्नस्त्वं भवेत्यर्थः । उदाहृत्य=पठित्वा । ऊहितव्यौ श्रुताग्न्यादिपदत्यागपूर्वकाश्रुतसूर्यादिपदान्तरकल्पनरूपोहनव्यापारयोग्यौ, दृष्टार्थकयोः=द्रव्यदेवताज्ञानलक्षणदृष्टप्रयोजनकयोः । **ऐन्द्र्या इति** । यथेन्द्रपदस्येन्द्रलक्षणार्थप्रकाशकत्वेऽपि गौण्या वृत्त्येन्द्रसदृशगार्हपत्यसंज्ञकाग्निदेवताप्रकाशकत्वेनैन्द्र्याः "कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्यृचो गार्हपत्यप्रकाशकत्वं तद्वदग्निपदव्रीहिपदयोरग्निव्रीहिलक्षणार्थप्रकाशकत्वेऽपि गौण्या वृत्त्या सूर्य्यनीवारबोधकत्वसंभवेनाग्न्यादिपदघटितोक्तमन्त्रयोरपि सूर्य्यनीवारबोधकत्वोपपत्तेरित्यर्थः । तत्प्रकाशनार्थम्=सूर्य्यादिज्ञानार्थम् । ऊहः=श्रुताग्न्यादिपदत्यागपूर्वकाश्रुताग्न्यादिपदस्थानीयसूर्य्यादिपदकल्पनम् । प्रापय्य=पूर्वपक्षं कृत्वा, ऐन्द्रीवत्=ऐन्द्र्यामृचीन्द्रशब्दस्य श्रुतेन्द्रपदातिरिक्तपदप्रक्षेपेणैन्द्री-

विलक्षणस्वरूपं न स्यादित्यैन्द्रीस्वरूपविवक्षया प्रयुक्तत्ववत्।तत्स्थाने=अग्न्यादिपदस्थाने। **विकृताविति**। विकृतिपठनीय अग्नयेत्वेत्यादिमन्त्रयोरित्यर्थः। नवमे=जमिनिकृतधर्ममीमांसानवमाध्याये। **मन्त्रस्येति**। किमिमावित्यादिपूर्ववाक्यं उभयोर्मन्त्रयोः प्रकृतत्वेन मन्त्रयोरित्यर्थः। अन्वयबोधकत्वसंभवात्=सूर्य्यनीवाराद्यन्वयबोधकत्वसंभवात्। आसत्तिः=स्वरूपसत्यासत्तिः, पदजन्यत्वविशेषिताऽपि=पदजन्यत्वनिष्ठविशेषणतानिरूपितविशेष्यतावत्यपि, अनासन्ने=आसत्तिशून्ययोर्गिरिर्भुक्तं वह्निमान् देवदत्तेनेत्यत्र गिरिवह्निमत्पदार्थयोर्भुक्तदेवदत्तपदार्थयोश्च। तद्भ्रमेण=आसत्तिभ्रमेण। शाब्दभ्रमाभावप्रसङ्गात्=पदार्थोपस्थितिरूपासत्तेः स्वरूपसत्याः शाब्दबोधहेतुत्वाङ्गीकारेणासत्तिज्ञानस्य शाब्दबोधहेतुत्वानङ्गीकारादासत्तिभ्रमाच्छाब्दभ्रम इति प्राचीनगाथासिद्धशाब्दभ्रमाभावप्राप्तेः। भ्रमात्मकशाब्दबोधं प्रति तात्पर्यभ्रमस्य योग्यताभ्रमस्य वा कारणतयोक्तप्राचीनगाथाया निर्युक्तिकत्वेनाश्रद्धेयत्वमित्यभिप्रेत्याह--**नेति**। तात्पर्य्यभ्रमेण=गिरिर्भुक्तमिति पदयोः परस्परान्वययोग्यगिरिभुक्तपदार्थविषयकप्रतीतिजननयोग्यत्वमिति तात्पर्य्यभ्रमेण, योग्यताभ्रमेण गिरिभुक्तपदार्थौ परस्परान्वययोग्याविति योग्यताभ्रमेण, तदुपपत्तेः=भ्रमात्मकशाब्दबोधोपपत्तेः। अनासन्नेऽर्थे शाब्दबोध एव न भवति, क्वचिद् भ्रमात्मकशाब्दबोधस्तु तात्पर्य्यादिभ्रमेणैव भवतीति भावः। पदज्ञानजन्यपदार्थोपस्थितित्वेनैवेति=यथा घटत्वावच्छिन्नघटनिष्ठकार्य्यतानिरूपितकपालनिष्ठकारणता कपालत्वावच्छिन्नैव न तु द्रव्यत्वाद्यवच्छिन्ना तथा शाब्दबुद्धित्वावच्छिन्नशाब्दबुद्धिनिष्ठकार्य्यतानिरूपितपदज्ञानजन्यपदार्थोपस्थितिनिष्ठकारणता पदज्ञानजन्यपदार्थोपस्थितित्वावच्छिन्नैव न तु विशेषणज्ञानत्वावच्छिन्नाऽन्यथा विशेष्यबोधकपदज्ञानजन्यविशेष्यधियः शाब्दबुद्ध्यहेतुत्वापत्तिरिति भावः। अत एव=पदज्ञानजन्यपदादार्थोपस्थितित्वेनोपस्थितेः शाब्दबोधहेतुत्वादेव, विशेष्यधीरपि=कर्मत्वादीनां ज्ञानमपि॥

**पदार्थश्च द्विविधः शक्यो लक्ष्यश्चेति। तत्र शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः॥**

**शि० म०**-केचित्तु गौणवृत्तिविषयस्यापि पृथक्पदार्थतया तेन सह पदार्थस्य त्रैविध्यमिति, तच्च गौण्या वृत्तेर्लक्षितलक्षणान्तर्भावस्य वक्ष्यमाणतया तद्विषयस्य पदार्थस्य लक्ष्य एवान्तर्भावादयुक्तमित्याशयेनाह-**पदार्थश्चेति**। पदनिष्ठवृत्तिविषय इत्यर्थः। ननु गौणस्य लक्ष्यान्तर्भावे लक्ष्यस्यापि तदन्तर्भावावश्यंभावात्तेन रूपेण विभागः किं न स्यादविशेषादित्याशङ्क्य शक्यो गौणश्चेति विभागकरणे केवललक्षणाया गौण्यन्तर्भावाभावेन लक्ष्यासंग्रहापत्तिरित्यभिप्रेत्याह-**शक्यो लक्ष्यश्च इति**। शक्तिविषयत्वं शक्यत्वं तन्निरूपणाधीनानिरूपणमित्यतस्तां निरूपयति-**शक्तिर्नामेति**। लक्षणां व्यावर्तयति--**मुख्येति**। पदतत्संबन्धिमात्रानिरूप्येत्यर्थः। लक्षणा तु पदसंबन्धिपदार्थान्तरेणान्वयानुपपत्त्या च निरूप्येति नातिव्याप्तिः। प्राभाकरास्तु कार्य्यान्वित एवार्थे पदसामर्थ्यं न त्वितरा-

न्विते केवले वा, तत्र पदानामज्ञातसंगतित्वादिति तदेतान्निराकरोति–अर्थेषु इति । विषयत्वं सप्तम्यर्थः । तथा च पदनिष्ठशक्तिः केवलार्थविषयिणीत्यर्थः । कार्य्यान्विते च शक्तिरग्रे निराकरिष्यते इति भावः ॥

म० प्र०–पृथक्पदार्थतया=शक्यलक्ष्यपदार्थाभ्यां भिन्नपदार्थत्वेन, तत्र=कैश्चिदुक्तम्, तद्विषयस्य=गौणवृत्तिविषयस्य । गौणस्य=गौण्या वृत्या ज्ञातो गौणः तस्य गौणवृत्तिविषयस्य । **तदन्तर्भावेति** । गौणान्तर्भावेत्यर्थः । तेन रूपेण=शक्यो गौणश्चेति गौणत्वेन रूपेण । अविशेषात्=गौणलक्ष्ययोः परस्परान्तर्भावस्य तुल्यत्वात् गौरवाभावस्य तुल्यत्वादिति वा, लक्ष्यासंग्रहापत्तेः=केवललक्षणालक्ष्यस्य गौणपदेनाग्रहणापत्तेः । **तन्निरूपणेति** । शक्तिनिरूपणेत्यर्थः । ताम्=शक्तिम् । परममूले **तत्रेति** । शक्यलक्ष्ययोर्मध्ये शक्ये इत्यर्थः । वृत्तौ मुख्यत्वमेवाह–**पदतत्संबन्धिमात्रनिरूप्येति** । एतत्पदस्यैतदर्थे शक्तिरिति पदपदार्थसंबन्ध्यर्थाभ्यामेव स्वरूसंबन्धविशेषलक्षणनिरूप्यत्वसंबन्धवतीत्यर्थः । तथा च वृत्तित्वे सति पदपदार्थमात्रनिरूप्यत्वं शक्तित्वमिति भावः । **पदसंबन्धीति** । गङ्गादिपदसंबन्धिप्रवाहादिघोषादिपदार्थान्तरेत्येतदुभयनिरूपितान्वयानुपपत्तिनिरूप्या। चकारेण गङ्गादिपदगङ्गादिपदलक्षणारूपसंबन्धवत्तीरादिपदार्थनिरूप्येत्यर्थः । तथा च गङ्गादिपदगङ्गादिपदवाच्यार्थसंबन्धितीरादिगङ्गादिपदवाच्यघोषादिपदार्थान्तरान्वयानुपपत्तीति त्रितयनिरूप्या लक्षणेति भावः । कार्य्यान्विते=आनयनादिलक्षणकार्य्यसंबद्धे । इतरान्विते=क्रियेतरघटत्वादिसंबद्धे । केवले=इतरानन्वितशुद्धव्यक्तौ । तत्र=केवलेतरान्वितयोः । **केवलार्थेति**=कार्य्यानन्वितार्थेत्यर्थः ॥

**यथा घटपदस्य पृथुबुध्नोदराद्याकृतिविशिष्टे वस्तुविशेषे वृत्तिः । सा च शक्तिः पदार्थान्तरम्, सिद्धान्ते कारणेषु कार्य्यानुकूलशक्तिमात्रस्य पदार्थान्तरत्वात् ॥**

शि० म०–शक्तिस्संकेतस्स च सर्वेश्वरेच्छा अनेन पदेनेममर्थं जानीयादित्येवंरूपा न तु पदार्थान्तरं मानाभावादिति नैयायिकाः प्राहुः । तान् प्रत्याह–**सा च शक्तिरिति** । कैमुतिकन्यायमाह–**सिद्धान्त इति** । न च कारणतावच्छेदकातिरिक्तशक्तौ मानाभावः, दाहादिलक्षणकार्य्यानुपपत्तेरेव प्रमाणत्वात् । न च वह्निस्वरूपात्प्रतिबन्धकाभावसहकृतात्तदुत्पत्तिः प्रतिबन्धकाभावस्याभावतया अहेतुत्वात् ॥

म० प्र०–परममूले **पृथुबुध्नोदराद्याकृतिविशिष्टे इति** । 'बुध्नो गिरिशमूलयोः" इति हेमचन्द्राभिधानादत्र बुध्नशब्दोऽधोभागवाचकः । बुध्नं चोदरं च बुध्नोदरे पृथुनी च ते बुध्नोदरे पृथुबुध्नोदरे पृथुबुध्नोदरे आदी येषामवयवानां ते पृथुबुध्नोदरादयः पृथुबुध्नोदरादिभिः सहिता आकृतिर्घटत्वादिजातिः पृथुबुध्नोदराद्याकृतिस्तया विशिष्ट इत्यर्थः । कार्येतरान्विते स्वमते शक्तिरिति भावः। परममूले **सा चेति** । कार्यानन्वितार्थविष-

यिणी पदनिष्ठा त्वित्यर्थः । कैमुतिकन्यायम्=येषां मते शक्तिमात्रस्य पदार्थान्तरता तेषां मते पदनिष्ठा शक्तिः पदार्थान्तरमिति किमुत वक्तव्यमित्यादिवाक्यघटककिमुतशब्दादागतः कैमुतिकः कैमुतिकश्चासौ न्यायः पदनिष्ठशक्तेः पदार्थान्तरत्वं कैमुतिकन्यायस्तम् । **मानाभाव इति** । दाहोत्पत्तौ वह्निः समर्थः इत्युक्तौ दाहनिष्ठकार्य्यतानिरूपितवह्निनिष्ठकारणतावच्छेदकवह्नित्वलक्षणसामर्थ्यमेव वह्नौ भाति न तु तदतिरिक्तशक्तिरिति भावः । तदुत्पत्तिः=दाहोत्पत्तिः, अहेतुत्वात्=दाहकारणताऽभावात् ॥

**शि० म०**—अनुमानमपि । 'वह्निरदृष्टातीन्द्रियस्थितिस्थापकेतरभावाश्रयः गुणित्वात् घटवत्' इति ।

" न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥"

"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥"

"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।"

इत्यादिश्रुतिस्मृतिवचनान्यपि शक्तौ मानम् । तदुक्तं चित्सुखाचार्य्यैः । "पराऽस्य शक्तिर्विविधाः सर्गाद्या भावशक्तयः ।" इति श्रुतिस्मृतिमभिता शक्तिः केन निवार्य्यते ॥

**म० प्र०**—**वह्निरिति** । यथाश्रुतं गुरुत्वमादाय घटे साध्यसमन्वयो बोध्यः । वह्निद्व्यणुकेन्धनसंयोगमदृष्टवदात्मसंयोगं वाऽऽदाय सिद्धसाधनार्थान्तरवारणाय **अदृष्टेति** । वह्निनिष्ठोष्णस्पर्शमादाय सिद्धसाधनार्थान्तरवारणाय **अतीन्द्रियेति** । स्थितिस्थापकेनार्थान्तरसिद्धसाधनवारणाय **स्थितिस्थापकेतरेति** । स्वाश्रयसंयोगसंबन्धेन वह्निवृत्त्यदृष्टरूपप्रतिबन्धकाभावेनार्थान्तरसिद्धसाधनवारणाय **भावेति** । स्वमदृष्टरूपप्रतिबन्धकाभावस्तदाश्रय आत्मा तस्य संयोगो वह्नाविति संबन्धबोधकवाक्यार्थः । वह्निद्व्यणुकैकत्वेन भर्जनकपालस्थवह्निनिष्ठानुद्भूतरूपेण वा सिद्धसाधनार्थान्तरवारणाय भावपदेन दाहानुकूलभावग्रहणस्यावश्यकत्वेन दाहानुकूलेति भावविशेषणेनैव स्थितिस्थापकेन सिद्धसाधनार्थान्तरवारणसंभवात्साध्ये स्थितिस्थापकप्रतियोगिकभेदो न निवेशनीयः । न चैवं जलादावुक्तसाध्याभावेन गुणित्वस्य सत्त्वेन च गुणित्वहेतौ साध्याभाववद्वृत्तित्वरूपो व्यभिचार इति वाच्यम् । गुणित्वशब्दस्य दाहजनकत्वसमानाधिकरणकगुणित्वार्थकतया व्यभिचाराभावादिति । **घटवदिति** । गुरुत्वे दाहानुकूलत्वाभावेन गुरुत्वमादाय घटादौ साध्यसमन्वयाभावाल्लक्षणयाऽदृष्टवदात्मवदित्यर्थः । तथा चादृष्टमादायात्मनि साध्यसमन्वय इति । **न तस्येति** । तस्य=ईश्वरस्य, कार्यम्=स्थूलशरीरम्, करणं च=इन्द्रियं च, न विद्यते=न भवति, अस्य=ईश्वरस्य, शक्तिः=मायाख्या शक्तिः, परा=स्वकार्यापेक्षयोत्कृष्टा, विविधैव=विचित्रकार्य्यकारित्वान्नानाविधैव । सा त्वैतिह्यमात्रसिद्धा न प्रमाणमात्रसिद्धेत्याह—**श्रूयते इति** । ज्ञानलक्षणबलेन या सृष्टिक्रिया साऽपीश्वरस्य स्वाभाविकी

अनादिरूपा तस्या मायात्मकत्वाद्यद्वा ज्ञानस्य चैतन्यस्य बलं मायावृत्तिप्रतिविम्बतत्वं तस्य क्रिया नाम विम्बत्वेन ब्रह्मणो जनकता ज्ञातृताऽपि स्वाभाविकी। यद्वा ज्ञानलक्षणबलं सर्जनादिक्रिया च ब्रह्मणो यया मायया सा स्वाभाविकीति मायाविशेषणमित्यर्थः। अचिन्त्यज्ञानगोचरा=वीर्य्यादि-पदार्थस्य शरीरादिकार्य्यजनने कथं शक्तिरित्यचिन्त्याश्च ता ज्ञानगोचरा अनुमित्यादिज्ञानविषया अचिन्त्यज्ञानगोचराः। ताः=अचिन्त्यज्ञानगोचराः, सर्गाद्याः=सृष्ट्याद्यनुकूलाः, भावशक्तयः= भावरूपाः शक्तयः। अलुप्तशक्तिरित्यस्याग्रे 'अचिन्त्यशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महे-श्वरस्य' इति पाठो बोध्यः। विधिज्ञाः=वेदार्थज्ञाः। **पराऽस्य शक्तिरिति**। अनेन "पराऽस्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुतिसूचनम्। सर्गाद्याभावशक्तय इत्यनेन तु "शक्तयः सर्व-भावानाम्" इत्यादिस्मृतिसूचनमिति ध्येयम्॥

**सा च तत्तत्पदजन्यपदार्थज्ञानरूपकार्य्यानुमेया। तादृश-शक्तिविषयत्वं शक्यत्वम्॥**

**शि० म०**—ननु प्रमाणाभावान्नास्त्यर्थविषयिणी पदानां शक्तिः, येन सा पदार्थान्तरमिति विचार्य्यते इत्यत आह—**सा चेति**। यद्वा नन्वस्तु निरुक्ता शक्तिस्तथापि शक्यत्वं दुर्वचनम्, न तावच्छक्तिविषयत्वमन्वयस्यापि शक्यत्वा-पत्तेः। नापि ज्ञायमानशक्तिविषयत्वं तथा तज्ज्ञापकं न तावत्प्रत्यक्षं गत्वादिवदनु-पलम्भात्, न चानुमानं तद्व्याप्यलिङ्गाभावादित्यत आह—**सा चेति**। **तादृशेति**=ज्ञायमानेत्यर्थः॥

**म० प्र०**—ननु पूर्वोक्तानुमानेन पूर्वोक्तश्रुतिस्मृतिभ्यां चार्थनिष्ठशक्तिरेव सिद्धा न त्वर्थ-विषयिणी पदनिष्ठा शक्तिरपीत्यभिप्रेत्य शङ्कते—**ननु प्रमाणाभावादिति**। अर्थविषयिण्यां पदानां शक्तौ मानाभावादित्यर्थः। येन=प्रमाणसिद्धपदनिष्ठशक्तिसद्भावेन हेतुना, सा=अर्थ-विषयिणी पदानां शक्तिः, तथा=शक्यत्वम्, तज्ज्ञापकम्=पदनिष्ठशक्तिविषयकज्ञानजनकम्। प्रत्यक्षं=प्रत्यक्षप्रमाणम्, गत्वादिवत्=श्रोत्रजन्यगत्वादिविषयकप्रत्यक्षात्मकोपलम्भवत्, अनुप-लम्भात्=पदनिष्ठशक्तिविषयकप्रत्यक्षात्मकज्ञानाभावात्, **तद्व्याप्येति**=शक्तिव्याप्येत्यर्थः। परममूले **अनुमेयेति**। पदार्थज्ञानं पदनिष्ठस्वानुकूलशक्तिपूर्वकं पदजन्यपदार्थज्ञानरूपकार्य्यत्वाद्व्य-तिरेके घटवदिति व्यतिरेकिलिङ्गजन्यानुमितिविषयेत्यर्थः॥

**तच्च जातेरेव न व्यक्तेः। व्यक्तीनामानन्त्येन गुरुत्वात्। कथं तर्हि गवादिपदाद्व्यक्तिभानमिति चेत् जातेर्व्यक्तिसमानसंवि-त्संवेद्यतयेति ब्रूमः॥**

**शि०म०**—ननु व्यक्तिरेव नामाख्यातपदवाच्या आलम्भप्रोक्षणविशसनादिचोद-नायाः गामभ्याजेत्यादिलौकिकचोदनाया हननादिप्रतिषेधस्य च तत्रैव सम्भवात्। कथं तर्हि जातिलाभ इति चेत् आक्षेपात्। न च जातिरेव वाच्या तत्संबन्धाच्च व्यक्तिलाभ

इति वैपरीत्यमपि, जातेर्व्यक्तिव्यभिचारेण तदनाक्षेपकत्वात्, तस्मात् व्यक्तिरेव नामाख्यातपदवाच्या नेत्याह-**तच्चेति**। अयं भावः। किं शुद्धव्यक्तेर्वाच्यत्वं जातिविशिष्टव्यक्तेर्वा। नाद्यः, शब्दान्निर्विकल्पकधीप्रसङ्गात्। न द्वितीयः, नागृहीतविशेषणान्यायेन प्रथमगृहीतजातेरेव नामादिपदवाच्यत्वौचित्यात्। किंच तव मतेऽपि संगतिग्रहः सर्वव्यक्तिविषयः उत एकव्यक्तिविषयः। नाद्यः, अतीतानागतव्यक्तीनामशक्यज्ञानत्वात्। न द्वितीयः, इयं व्यक्तिस्तद्विषया इयं नेत्यत्र नियामकाभावात्। भावे वा संगतिग्रहस्यान्यविषयत्वेनापूर्वव्यक्तिलाभाभावप्रसङ्गादिति। ननु व्यक्तेर्नामादिपदाशक्यत्वे कथं तदुच्चारणानन्तरं तत्प्रत्ययः कथं वा पशुमानय पशुमालभेतेत्यादिचोदना न चानेकव्यक्तिवाचकत्वे गौरवम्। आलम्भादिचोदनानुपपत्त्या व्यक्तिवाचकत्वसिद्धौ तद्गौरवस्यादोषत्वादित्याशयेनाक्षिपति-**कथं तर्हीति** जातिभानसामग्र्या व्यक्तिभासकत्वस्य प्रत्यक्षस्थले दर्शनेन जातिशक्तिज्ञानादुपपन्नो व्यक्तिलाभ इत्याह-**जातेरिति**॥

म० प्र०-व्यक्तिरेव=धर्म्येव। अत्र नामपदमुपलक्षणं नामोत्तरविधीयमानप्रत्ययस्यापि। एवमाख्यातपदं धातुधातूत्तरविधीयमानप्रत्ययमात्रस्योपलक्षणमिति ध्येयम्। **आलम्भेति**। आलम्भो हिंसनं स्पर्शनं वा प्रोक्षणं मन्त्रोच्चारणपूर्वकजलसेकक्रिया विशसनं हिंसनमेतद्विषयिकाया अग्नीषोमीयं पशुमालभेत व्रीहीन् प्रोक्षतीत्यादिनोदनाया इत्यर्थः। अभ्याज=आनय, हननादिप्रतिषेधस्य=ब्राह्मणं न हन्यात् न हिंस्यात्सर्वा भूतानीत्यादिहननादिप्रतिषेधस्य, तत्रैव=व्यक्तावेव, तर्हि=जातौ शक्त्यनङ्गीकारे, जातिलाभः=जातिविषयकज्ञानम्। **आक्षेपादिति**। जातिभानं विना व्यक्तिविषयकसविल्पकभानमनुपपद्यमानं जातिभानं कल्पयतीत्यर्थापत्तिप्रमाणादित्यर्थः। तत्संबन्धात्=जात्या साकं व्यक्तेस्तादात्म्यसंबन्धान्मतान्तरे समवायसंबन्धात्। व्यक्तिव्यभिचारेण=घटध्वंसोत्तरकाले घटप्रागभावकाले च जातेर्वृत्तिमत्त्वेन। मीमांसकमतमाश्रित्य समाधानमाह-**नेत्याहेति**। **धीप्रसङ्गादिति**। जातेः शब्दादनुपस्थितत्वादिति शेषः। नागृहीतविशेषणान्यायेन=नागृहीतविशेषणा विशिष्टबुद्धिरिति न्यायेन। तव मते=व्यक्तिशक्तिवादिनस्तव मते। संगतिग्रहः=शक्तिज्ञानम्। ननु नियामकाभावादिति कथनमनुपपन्नं यत्र व्यवहारादिना शक्तिग्रहः सा व्यक्तिर्विषयो नान्येति नियामकसत्त्वादित्याशङ्क्याह-**भावे वेति**। अपूर्वव्यक्तिलाभाभावप्रसङ्गात्=घटादिपदात्कदाचिदपि पूर्वाज्ञातघटादिविषयकबोधाभावप्रसङ्गात्। **तदुच्चारणेति**। नामाद्युच्चारणेत्यर्थः। तत्प्रत्ययः=व्यक्तिज्ञानम्। तद्गौरवस्य=अनेकव्यक्तिविषयकशक्तिकल्पनागौरवस्य, जातिभानसामग्र्याः=संयुक्ततादात्म्यरूपायाः प्रत्यक्षात्मकजातिज्ञानसामग्र्याः। व्यक्तिभासकत्वस्य=व्यक्तिविषयकज्ञानजनकत्वस्य, प्रत्यक्षस्थले=घटत्वादिजातिप्रत्यक्षकाले। **व्यक्तिलाभ इति**। व्यक्तिज्ञानमित्यर्थः। यथा जातिशक्तिज्ञानाज्जातेर्ज्ञानमेवं जातिशक्तिज्ञानादेव व्यक्तेरपि ज्ञानं संभवति जातिभानसामग्र्या व्यक्तिभासकत्वनियमादिति भावः। परममूले **जाते-**

**व्यक्तिसमानसंवित्संवेद्यतयेति।** जातिसंबन्धिनी या व्यक्तिस्तस्याः समाना एका संवित् शाब्दजातिभानजनकजातिशक्तिज्ञानरूपा संवित्तया जन्यं यज्ज्ञानं जातिविषयकशाब्दबोधरूपं ज्ञानं तद्विषयतया व्यक्तिविशेष्यकजातिप्रकारकशाब्दबोधं प्रति जातिविषयकशक्तिज्ञानत्वेन हेतुत्वादित्यर्थः ॥

**यद्वा गवादिपदानां व्यक्तौ शक्तिः स्वरूपसती न तु ज्ञाता, जातौ तु सा ज्ञाता हेतुः। न च व्यक्त्यंशे शक्तिज्ञानमपि कारणं गौरवात् ॥**

**शि० म०**—जातिव्यक्त्योरैक्यात्तयोरेकसंवित्तिवेद्यत्वं जातिभानसामग्र्या व्यक्तिभानसामग्रीनैयत्याद्वा जातिभानसामग्र्या व्यक्तिभासकत्वनियमाद्वा। नाद्यः, असिद्धेः। न द्वितीयः, स्मृतिस्थले व्यभिचारात्। प्रकृते व्यक्तिशक्तिज्ञानाभावेन तत्साहित्याभावाच्च। न तृतीयः, अन्यभानसामग्र्या अन्यभासकत्वेऽतिप्रसङ्गात्। प्रत्यक्षस्थले च संयोगसंयुक्ततादात्म्यादेर्व्यक्तिजातिभासकत्वस्य सत्त्वात्। ततश्च जातिभानसामग्र्या न व्यक्तिलाभ इत्यरुचेराह—**यद्वेति**। ननु गवादिपदानां शक्तिर्यदि व्यक्तावपि सा ज्ञाता एव अन्यथा त्वप्रमाणिकत्वापत्तिरित्याशङ्क्य शक्तिसत्त्वेऽपि तज्ज्ञानं न व्यक्तिशक्तिज्ञानत्वेन जातिविशिष्टविषयशक्तिज्ञानत्वेन वा हेतुः। किंतु जातिविषयशक्तिज्ञानत्वेन लाघवादित्याह—**जाताविति** ॥

**म० प्र०**—ऐक्यात्=अभेदात्, नैयत्याद्वा=यदा जातिभासकसामग्री तदा व्यक्तिभानसामग्री यदा व्यक्तिभानसामग्री तदा जातिभानसामग्रीति तयोः सामग्र्योः समव्यापकत्वाद्वा, स्मृतिस्थले व्यभिचारात्=यदा जातेरेव स्मृतिर्न व्यक्तेस्तदा व्यक्तिविषयकसंस्काररूपव्यक्तिभानसामग्र्यभावो यदा व्यक्तेरेव स्मरणं न जातेस्तदा जातिविषयकसंस्काररूपजातिभानसामग्र्यभाव इति जातिव्यक्तिभानसामग्र्योः प्रत्येकजातिव्यक्तिस्मृतिकाले परस्परव्यभिचारात्, प्रकृते=गवादिशब्दे, तत्साहित्याभावाच्च=जातिव्यक्तिभानसामग्र्योः जातिव्यक्तिशक्तिज्ञानरूपयोरेककालवृत्तित्वरूपसाहित्याभावाच्च जातिव्यक्तिभानसामग्र्योः साहित्यं तदा स्याद्यदि जातिशक्तिज्ञानवद्व्यक्तिशक्तिज्ञानमपि स्यात्तस्य त्वयाऽनङ्गीकृतत्वेन तयोः साहित्यं नास्तीति भावः। अतिप्रसङ्गात्=घटभासकसामग्र्याः पटभासकत्वप्रसङ्गात्। जातिव्यक्त्योः प्रत्यक्षकाले जातिव्यक्तिभासकजातिशक्तिज्ञानरूपसामग्रीभिन्नसामग्र्याः संयुक्ततादात्म्यादेः सत्त्वेन शाब्दजातिभानजनकजातिशक्तिज्ञानरूपैकसामग्र्या न व्यक्तिभासकत्वमित्याह—**प्रत्यक्षस्थले इति**। व्यक्तिजात्योः प्रत्यक्षकाले इत्यर्थः। अत्र चकारस्य सत्त्वादित्यत ऊर्ध्वं संबन्धो बोध्यः। **इत्यरुचेरिति**। इदमुपलक्षणम्। जातावेव गवादिशब्दशक्तिस्वीकारे गवादिपदात्कदापि व्यक्तिज्ञानं न स्यात्तत्कारणशक्तिज्ञानाभावादित्यरुचेरपीति। परममूले **स्वरूपसतीति**। गवादिपदनिष्ठा गवादिव्यक्तिविषयकसामर्थ्यरूपा शक्तिः। स्वरूपेण विद्यमानैव शाब्दधीहेतुरित्यर्थः। अन्यथा=व्यक्तिशक्तिज्ञानानङ्गीकारे। शक्तिसत्त्वेऽपि=व्यक्तिशक्तिज्ञानत्वेऽपि, तज्ज्ञा-

नम्=व्यक्तिशक्तिज्ञानम्, हेतुः=शाब्दधीकारणम् । **लाघवादिति** । प्रथमकल्पे व्यक्तीनामनन्तत्वात्तज्ज्ञानस्यानन्तत्वेन गौरवं द्वितीये तु शरीरकृतगौरवं स्पष्टमेवेति भावः । परममूले गौरवात्=उभयशक्तिज्ञानस्य कारणत्वकल्पने गौरवात् ॥

**जातिशक्तिमत्त्वज्ञाने सति व्यक्तिशक्तिज्ञानं विना व्यक्तिधीविलम्बाभावाच्च। अत एव न्यायमतेऽपि अन्वये शक्तिः स्वरूपसतीति सिद्धान्तः। ज्ञायमानशक्तिविषयत्वमेव वाच्यत्वमिति जातिरेव वाच्या। अथवा व्यक्तेर्लक्षणयाऽवगमः॥**

**शि० म०—जातिशक्तिमत्त्वज्ञान इति** । तथा चान्वयव्यतिरेकाभ्यां जातिशक्तिज्ञानं व्यक्तिज्ञानेऽपि कारणमिति नातिप्रसङ्ग इति भावः। ननु सा शक्तिरेका वा नाना वा । नान्त्यः, जातिव्यक्तितत्संबन्धेषु प्रत्येकशक्तिकल्पनायां गौरवात् । नाद्यः, ज्ञायमानशक्तिविषयत्वेन व्यक्तेरपि शक्यत्वप्रसङ्ग इत्यत आह—**ज्ञायमानेति** । पदशक्तिज्ञाननिष्ठपदार्थोपस्थितिहेतुतावच्छेदकावच्छिन्नविषयतावच्छेदकत्वं शक्यत्वमित्यर्थः। ननु गवादिपदानां व्यक्तिशक्तौ मानाभावः। न च पदोच्चारणानन्तरं जातिप्रतीतिवत्तत्प्रतीतेरनुभवसिद्धत्वात्सैव मानमिति युक्तम्, लक्षणयाऽपि तदुपपत्तेः । अन्यथा तीरादावपि स्वरूपसच्छक्त्यभ्युपगमापत्तिः। अत एव नान्वयेऽपि पदस्य स्वरूपसती शक्तिः । तस्य वाक्यगम्यत्वेन पदस्य तत्र सामर्थ्याभावात् । न च वाक्ये शक्तिरिष्टा। तस्मिन्पक्षे शक्तिविषयत्वं शक्यत्वमिति लक्षणमपि लध्वित्यपरितोषादाह—**अथवेति** ॥

**म० प्र०**—नन्वावश्यकत्वाद्गौरवं न दोष इत्याशङ्क्याह—परममूले **जातीति**। जातिशक्तिज्ञानरूपाया जातिभासकसामग्र्या जातिभिन्नव्यक्तिभासकत्वस्वीकारेऽतिप्रसङ्ग इति नाशङ्कनीयमित्याह—**तथा चेति** । व्यक्तिशक्तिज्ञानाभावेन व्यक्तिधीविलम्बाभावे सतीत्यर्थः। अन्वयव्यतिरेकाभ्याम्=जातिशक्तिज्ञाने सति व्यक्तिज्ञानं जातिशक्तिज्ञानाभावे व्यक्तिज्ञानाभाव इत्यन्वयव्यतिरेकाभ्याम् । **नातिप्रसङ्ग इति** । अन्यत्रान्वयव्यतिरेकाभ्यां कार्य्यकारणभावस्य निश्चितत्वादिति शेषः। तत्तद्व्यक्तिविषयकस्वरूपसच्छक्तिसहकृतजातिशक्तिज्ञानमेव व्यक्तिशाब्दज्ञाने कारणमिति भावः। ज्ञायमानशक्तिविषयत्वमित्यस्यार्थमाह—**पदशक्तिज्ञाननिष्ठेति** । पदनिष्ठा या शक्तिस्तस्या यज्ज्ञानं घटो घटपदवाच्य इत्याद्याकारकं तन्निष्ठा या पदार्थोपस्थितिहेतुता तस्या अवच्छेदकं पदशक्तिज्ञानत्वं तदवच्छिन्नं पदशक्तिज्ञानं तस्य घटनिष्ठविषयताया अवच्छेदकत्वं घटत्वे इति लक्षणसमन्वयः। न च पदशक्तिज्ञाननिष्ठपदार्थोपस्थितिहेतुतावच्छेदकावच्छिन्नविषयतायाः पदेऽपि सत्त्वात्तदवच्छेदकपदत्वस्यापि शक्यत्वं स्यादिति वाच्यम् । विषयतापदेन मुख्यविशेष्यताख्यविषयताया विवक्षितत्वान्मुख्यविशेष्यताख्यविषयता घटादावेव न घटपदादाविति न पदत्वस्य शक्यत्वमिति । तत्प्रतीतेः=घटादिव्यक्तिज्ञानस्य, सैव=घटादिव्यक्तिप्रतीतिरेव, तदुप-

पत्तेः=घटादिव्यक्तिप्रतीत्युपपत्तेः, अन्यथा=घटादिव्यक्तौ स्वरूपसच्छक्त्यभ्युपगमे, लक्षणया घटादिव्यक्तिप्रतीत्यनङ्गीकारे इति वा, अत एव=वक्ष्यमाणहेतोरेव, तस्य=अन्वयस्य, तत्र=अन्वये। नन्वन्वये वाक्यस्य शक्तिरस्त्वित्याशङ्क्याह—**न चेति**। अनन्यलभ्यस्यैव शब्दार्थत्वादिति शेषः। तस्मिन्पक्षे=व्यक्तौ स्वरूपसच्छक्त्यनङ्गीकारपक्षे। परममूले **लक्षणयाऽवगम इति**। तथा च घटत्वादिजातेः शक्त्योपस्थितिर्घटादिव्यक्तेस्तु लक्षणयोपस्थितिरिति भावः॥

**यथा नीलो घट इत्यत्र नीलशब्दस्य नीलगुणविशिष्टे लक्षणा, तथा जातिवाचकस्य तद्विशिष्टे लक्षणा। तदुक्तम्। अनन्यलभ्यः पदार्थ इति। एवं शक्यार्थो निरूपितः। अथ लक्ष्यपदार्थो निरूप्यते। तत्र लक्षणाविषयो लक्ष्यः। लक्षणा द्विविधा। केवललक्षणा लक्षितलक्षणा चेति। तत्र शक्यसाक्षात्संबन्धः, केवललक्षणा। यथा गङ्गायां घोष इत्यत्र प्रवाहसाक्षात्संबन्धिनि तीरे गङ्गापदस्य केवललक्षणा। यत्र शक्यपरंपरासंबन्धेनार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा। यथा द्विरेफपदस्य रेफद्वयशक्तस्य भ्रमरपदघटितपरंपरासम्बन्धेन मधुकरे वृत्तिः॥**

**शि० म०**—ननु शक्तिलक्षणाभ्यां जातिव्यक्त्युपस्थितौ युगपद्वृत्तिद्वयविरोधः। न च लक्षणयोभयोरुपस्थितिः। अन्यलक्षणाया अन्यानुपस्थापकत्वात्। जातेश्च शक्यत्वेन लक्षणायास्तद्विषयत्वायोगादित्याशङ्क्य स्वातन्त्र्येण जातेश्च शक्यत्वेऽपि व्यक्तिविशेषणत्वेन व्यक्तिलक्षणाविषयत्वमविरुद्धमिति दृष्टान्तमाह—**यथेति**। लक्ष्यस्य शक्याधीननिरूपणत्वात् तन्निरूपणानन्तरं लक्ष्यार्थो निरूप्यते इति प्रतिजानीते—**अथेति**। **लक्षणेति**। शक्यसबन्धो लक्षणा, तद्विषयो लक्ष्य इत्यर्थः। **यत्रेति**। शक्यपरंपरासंबन्धो लक्षितलक्षणा, यतस्तत्पदं स्वशक्यपरंपरासंबन्धिनमेवार्थं प्रत्याययतीति नासंभवः। तादृशपदमुदाहरति—**यथेति**॥

**म० प्र०**—वृत्तिद्वयविरोध इति। इदं त्वापाततः। गङ्गायां घोषमत्स्यौ स्त इत्यत्र गङ्गापदे वृत्तिद्वयाङ्गीकारादिति। लक्षणया=घटादिव्यक्तौ लक्षणया, उभयोः=घटादिव्यक्तिघटत्वादिजात्योः। अन्यलक्षणायाः=घटादिव्यक्तिलक्षणायाः। अन्यानुपस्थापकत्वात्=घटत्वादिजातिविषयकज्ञानाजनकत्वात्। **शक्यत्वेनेति**। यस्य यत्पदशक्यत्वं तस्य तत्पदलक्षणाविषयत्वायोग्यत्वमिति भावः। स्वातन्त्र्येण=व्यक्त्यविशेषणत्वेन। परममूले **तदुक्तमिति**। मीमांसकैरिति शेषः। परममूले अनन्यलभ्यः=लक्षणादिलभ्यभिन्नः, पदार्थः=पदशक्तिगम्यः, लक्ष्यस्य=लक्ष्यनिरूपणस्य, शक्याधीननिरूपणत्वात्=लक्षणाविषयो लक्ष्यो लक्षणा च शक्यसंबन्ध इति शक्यनिरूपणे हि लक्षणाज्ञानं तज्ज्ञाने हि लक्ष्यज्ञानमिति शक्याधीननिरूपणकत्वात्। परममूले **अथेति**। शक्य-

निरूपणानन्तरमित्यर्थः। परममूले **तत्रेति।** निरूपणीये लक्ष्ये सतीत्यर्थः। शक्यसम्बन्धः=गङ्गादिपदशक्यभगीरथखातावच्छिन्नजलप्रवाहादिप्रतियोगिकतीराद्यनुयोगिकः संबन्धः। न च शक्यसंबन्धरूपलक्षणायास्तीरादिवृत्तित्वेन कथं गङ्गादिपदवृत्तित्वमिति वाच्यम्, स्वप्रतियोगिवाचकतादिसंबन्धेन शक्यसंबन्धरूपलक्षणायाः पदवृत्तित्वादिति। परममूले **तत्रेति।** केवललक्षणालक्षितलक्षणयोर्मध्ये इत्यर्थः। लक्षितलक्षणोदाहरणासंभवस्तु नाशङ्कनीय इत्याह—**यत इति।** तत्पदं=द्विरेफादिपदम्, स्वशक्येन=रेफद्वयादिना, परंपरासंबन्धिनं=स्वशक्यघटितभ्रमरपदप्रतिपाद्यत्वादिरूपपरंपरासंम्बन्धवन्तमेवार्थं बोधयतीत्यर्थः। परममूले भ्रमरपदघटितपरंपरासंबन्धेन=स्वशक्यघटितभ्रमरपदप्रतिपाद्यत्वादिसंबन्धेन॥

**गौण्यपि लक्षितलक्षणैव। यथा सिंहो माणवक इत्यत्र सिंहशब्दवाच्यसंबन्धिक्रौर्य्यादिसंबन्धेन माणवकस्य प्रतीतेः। प्रकारान्तरेण लक्षणा त्रिविधा। जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति। शक्यमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिस्तत्र जहल्लक्षणा। यथा विषं भुङ्क्ष्वेत्यत्र हि स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्षिता॥**

**शि० म०**—नन्विदं गौणवृत्तावतिव्यापकं तस्या अपि सिंहशब्दवाच्यसिंहत्वसमानाधिकरणक्रौर्य्यादिसंबन्धेन देवदत्तप्रत्यायकत्वादित्याशङ्क्य लक्ष्यत्वान्न दोष इत्याह—**गौण्यपीति।** शक्यसंबन्धिमात्रविषया वृत्तिर्जहल्लक्षणा। सा च यद्यपि गङ्गायां घोषः प्रतिवसतीत्यत्र प्रसिद्धलक्षणास्थले गङ्गापदेऽपि तथापि गङ्गातीरत्वस्य पूर्वमुपस्थितस्य कदाचिल्लक्ष्यतावच्छेदकत्वात्सा अजहत्स्वार्थापीति यत्र लक्षणा जहत्स्वार्थैव तदुदाहरति—**यथा विषं भुङ्क्ष्वेति।** यद्यपि विषभक्षणं कर्त्तव्यत्वान्वययोग्यं परंतु कृतं सत्सद्यो व्यापादयतीति नान्वयानुपपत्तिः। तथापि पितुः शत्रुगृहान्नभोजननिवृत्तौ तात्पर्य्यात्तदनुपपत्त्या वाक्यस्य तत्र लक्षणेति ध्येयम्॥

**म० प्र०**—क्रौर्य्यादिसंबन्धेन=क्रौर्य्यादिसजातीयक्रौर्य्यादिसंबन्धेन, इत्यत्र=इत्याकारकवाक्यघटकगङ्गापदे। स्थले=अधिकरणे, पूर्वमुपस्थितस्य=शाब्दबोधात्पूर्वं ज्ञातस्य। **अजहत्स्वार्थेति।** गङ्गापदाच्छक्यार्थसंबन्धी यदि तीरत्वेन रूपेण गृहीतस्तदा गङ्गापदात्तीरत्वेन तीरबोधो यदि तु गङ्गातीरत्वेन रूपेण गङ्गापदशक्यार्थसम्बन्धी गृहीतस्तदा तेनैव रूपेण गङ्गातीरस्मरणं शाब्दबोधश्च। न च गङ्गायां घोष इत्यादौ गङ्गापदाद्गङ्गातीरत्वेन बोधे गङ्गापदे जहत्स्वार्थत्वहानिरिति वाच्यम्। तीरत्वेन तीरे गङ्गापदलक्षणायामेव जहत्स्वार्थत्वसंमतत्वाद्गङ्गापदाद्गङ्गातीरत्वेन तीरमाने त्वजहत्स्वार्थैव लक्षणा। एवं यष्टीः प्रवेशय मञ्चाः क्रोशन्तीत्यादावपि यष्ट्यादिपदादिना यष्टिधरपुरुषमञ्चस्थपुरुषत्वादिना पुरुषबोधेऽजहत्स्वार्थैव लक्षणेति भावः। कर्तव्यत्वान्वययोग्यम्=कृतिसाध्यत्वेन सह यो विषभक्षणस्यान्वयस्तद्योग्यम्, परंतु=किंतर्हि,

कृतं सत्=विषभक्षणं कृतिविषयः सत् । सद्यः=शीघ्रम् । व्यापादयति=मारयति, तदनुपपत्त्या=पितुः शत्रुगृहान्नभोजननिवृत्तौ तात्पर्यानुपपत्त्या, वाक्यस्य=विषं भुङ्क्ष्वेति वाक्यस्य । तत्र=शत्रुगृहान्नभोजननिवृत्तौ । न च वाक्यस्य शक्याभावेन कथं वाक्ये शक्यसंबन्धरूपा लक्षणेति वाच्यम् । शक्यसंबन्धो लक्षणेत्यस्य ज्ञाप्यसंबन्धो लक्षणेत्यर्थकत्वेन वाक्यज्ञाप्येन विषभक्षणानुकूलकृतिमत्त्वादिस्वरूपेण संबन्धस्यैकाधिकरणवृत्तित्वरूपस्य शत्रुगृहान्नभोजननिवृत्तौ सत्त्वात् । न चैवमपि ज्ञाप्यार्थस्य भक्षणस्य शत्रुगृहान्नभोजननिवृत्तौ प्रविष्टत्वादजहत्स्वार्थैव लक्षणा स्यादिति वाच्यम्।शत्रुगृहान्नभोजननिवृत्तावित्यस्य शत्रुगृहव्यवहारनिवृत्तावित्यर्थकत्वेन जहत्स्वार्थायाः सम्भवादिति ॥

**यत्र शक्यार्थमन्तर्भाव्यैवार्थान्तरप्रतीतिस्तत्राजहल्लक्षणा । यथा शुक्लो घट इत्यत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्तते । यत्र हि विशिष्टवाचकशब्दः स्वार्थैकदेशं विहायैकदेशे वर्तते तत्र जहदजहल्लक्षणा । यथा सोऽयं देवदत्त इत्यत्र हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वम् । यथा वा तत्त्वमसि इत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वंपदवाच्येनान्तःकरणविशिष्टेनैक्यायोगादैक्यसिद्ध्यर्थं स्वरूपे लक्षणेति सांप्रदायिकाः । वयं तु ब्रूमः । सोऽयं देवदत्तस्तत्त्वमसीत्यादौ विशिष्टवाचकानां पदानामेकदेशपरत्वेऽपि न लक्षणा, शक्त्युपस्थितविशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवान्वयबोधाविरोधात् । यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः ॥**

शि० म०–शक्यार्थमिति । शक्यार्थविशिष्टविषयत्वं लक्षणम् । तेन काकेभ्यो दधि रक्ष्यतामित्यत्र नातिव्याप्तिः । काकादेः शक्यार्थस्य विशेष्यत्वेन जहदजहल्लक्षणायास्तद्विशिष्टविषयत्वाभावात् । यत्र हीति । शक्यैकदेशमात्रविषयवृत्तित्वं जहदजहल्लक्षणालक्षणमिह विवक्षितं न तु विशिष्टवाचकत्वघटितं तस्य व्यर्थत्वात् । न च काकेभ्यो दधि रक्ष्यतामित्यत्राव्याप्तिः शुनकादेरेकदेशत्वाभावादिति वाच्यम् । सांप्रदायिकमते तस्यानुदाहरणत्वात् । ग्रन्थकृन्मते तु शक्याशक्यविशेष्यकवृत्तित्वस्य तल्लक्षणत्वात् । नन्वाकृतिः शब्दार्थ इत्यभ्युपगमाद्देवदत्तादेः शक्यैकदेशत्वाभावादसंभव इति चेन्नाकृतिविशिष्टव्यक्तिवाचकत्ववादिमतेनैतल्लक्षणप्रणयनात्, सिद्धान्ते च जहदजहल्लक्षणाया एवासिद्धेः लक्षणात्रैविध्यस्य च मतान्तराभिप्रायत्वात् ॥

म० प्र०-शक्यार्थविशिष्टविषयत्वम्=शक्यार्थनिरूपितवैशिष्ट्यवद्विषयकत्वम्, तेन=शक्यार्थविशिष्टविषयकत्वस्याजहल्लक्षणात्वेन, इत्यत्र=एतद्वाक्यघटककाकपदनिष्ठजहदजहल्लक्षणायाम्। अतिव्याप्त्यभावे हेतुमाह-**काकादेरिति।** विशेष्यत्वेन=दध्युपघातकत्वविशेषणविशेष्यत्वेन, तद्विशिष्टविषयत्वाभावात्=शक्यार्थविशिष्टविषयकत्वाभावात्। यतः काकादेर्दध्युपघातकत्वविशेषणविशेष्यत्वमतः काकपदनिष्ठजहदजहल्लक्षणायां शक्यार्थविशिष्टविषयकत्वं नास्तीति भावः। अत्र काकपदे जहदजहल्लक्षणाकथनं तत्रातिव्याप्तिवारणं च स्वमतेनैव, न तु सांप्रदायिकमतेन। तन्मते काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्याजहल्लक्षणावत्त्वेन जहदजहल्लक्षणावत्त्वादिकथनासंभवादिति बोध्यमिति। इह=मूले, तस्य=लक्षणे विशिष्टवाचकशब्दनिवेशस्य, तस्य=काकपदस्य, आकृतिः=देवदत्तत्वादिजातिलक्षणो धर्मः, असंभवः=शक्यैकदेशमात्रविषयकवृत्तित्वमिति लक्षणासंभवः। **एतल्लक्षणेति।** शक्यैकदेशेत्यादिलक्षणेत्यर्थः। सिद्धान्ते=मूलकारमते। **असिद्धेरिति।** तत्त्वमस्यादिवाक्यघटकतत्त्वमादिपदेष्विति शेषः। लक्षणात्रैविध्यस्य=तत्त्वमस्यादिवाक्यघटकत्वमादिपदेषु तृतीयलक्षणाकथनस्य। **मतान्तरेति**=सांप्रदायिकमतेत्यर्थः॥

**यत्र पदार्थैकदेशस्य विशेषणतयोपस्थितिः तत्रैव स्वातन्त्र्येणोपस्थितये लक्षणाभ्युपगमः। यथा नित्यो घट इत्यत्र घटपदात् घटत्वस्य शक्त्या स्वातन्त्र्येणानुपस्थितया तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा। एवमेव तत्त्वमस्यादिवाक्येऽपि न लक्षणा शक्त्या स्वातन्त्र्येणोपस्थितयोस्तत्त्वंपदार्थयोरभेदान्वये बाधकाभावादन्यथा गेहे घटः घटे रूपं घटमानयेत्यादौ घटत्वगेहत्वादेरभिमतान्वयबोधयोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वं लक्षणयैव स्यात्। तस्मात्तत्त्वमसीति वाक्ये आचार्य्याणां लक्षणोक्तिरभ्युपगमवादेन बोध्या॥**

शि०म०-ननु विशेषणपरेऽपि नित्यो घट इत्यादौ लक्षणा न स्यादविशेषादित्यत आह-**यत्र पदार्थैकदेशस्येति। स्वातन्त्र्येणेति।** विशेषणत्वेन शक्त्युपस्थितस्य घटत्वादेरन्यान्विततया निराकाङ्क्षत्वेन स्वतन्त्रोपस्थितेराकाङ्क्षोत्थापकतया तस्या एवान्वयबोधाङ्गत्वादिति भावः। ननु विशिष्टवाचकपदस्य विशेष्यपरत्वेऽपि लक्षणैव, तदेकदेशत्वसाम्याल्लाघवेन शक्यैकदेशपरत्वस्य तत्र प्रयोजकत्वात्। अत एव न्यायः। पदार्थः पदार्थेनान्वेति, न तु तदेकदेशेनेति। तथा चानित्यो घटः सोऽयं देवदत्तस्तत्त्वमसीत्यादावपि लक्षणेत्यत आह-**अन्यथेति। घटादिपदानामिति।** न चात्राप्यनुमतिः अपसिद्धान्ताद्विशेष्यस्यैकदेशत्वेऽपि शक्त्यैव

स्वातन्त्र्येणोपस्थिततया अन्वयबोधोपपत्तौ पुनस्तदुपस्थितये एव लक्षणाकल्पनस्याप्रामाणिकत्वाच्चेति भावः ॥

म० प्र०—विशेषणपरे=विशेषणे घटत्वादिविशेषणे परं तात्पर्यं यस्य पदस्य वाक्यस्य वा तत्तथा तस्मिन्, अविशेषात्=एकदेशपरत्वस्य तुल्यत्वात्, अन्यान्विततया=व्यक्त्यन्विततया, आकाङ्क्षोत्थापकतया=मम कुत्रान्वयो भवतीत्याकाङ्क्षोत्पादकतया, तस्या एव=स्वातन्त्र्यणोपस्थितेरेव । परममूले **यत्रेति** । यस्मिन्विशेषणपरे वाक्ये इत्यर्थः। परममूले **तत्रैवेति** । तादृशविशेषणपरवाक्यघटकपदे एवेत्यर्थः । परममूले **लक्षणाभ्युपगम इति** । स्वातन्त्र्येणोपस्थितपदार्थस्यान्वययोग्यत्वाद्यस्मिन्वाक्ये पदार्थैकदेशस्य शक्त्यैव स्वातन्त्र्येणोपस्थितिर्न तादृशवाक्यघटकपदे शक्यैकदेशमात्रविषयवृत्तित्वरूपजहदजहल्लक्षणा यादृशवाक्ये पदार्थैकदेशस्य शक्त्या विशेषणतयोपस्थितिस्तादृशवाक्यघटकपदे पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायात्स्वातन्त्र्येणोपस्थितपदार्थस्यान्वययोग्यत्वात्पदार्थैकदेशस्य स्वातन्त्र्येणोपस्थितये शक्यैकदेशमात्रविषयवृत्तित्वरूपजहदजहल्लक्षणाभ्युपगम इति भावः । तदेकदेशत्वसाम्यात्=विशेष्यविशेषणपरपदयोः शक्यैकदेशपरत्वस्य तुल्यत्वात्, लाघवेन=पदस्य विशेषणपरत्वे सति शक्यैकदेशपरत्वापेक्षया शक्यैकदेशपरत्वे लाघवेन, तत्र=जहदजहल्लक्षणायाम्, अत एव=विशेष्यविशेषणपरोभयविधशब्दे जहदजहल्लक्षणास्वीकारादेव । **न्याय इति** । विशेष्यपरपदे जहदजहल्लक्षणास्वीकारे हि लक्ष्यव्यक्त्यंशस्य पदार्थत्वेनानित्यादिपदार्थेन सह घटपदत्वविशिष्टैकदेशघटादेरन्वयोऽपि संभवति । अन्यथा घटपदवाच्यघटत्वविशिष्टैकदेशघटादेः पदार्थैकदेशत्वेनानित्यादिपदार्थेन सह घटपदवाच्यघटत्वविशिष्टैकदेशघटादेरन्वयो न स्यादिति भावः । परममूले **एवमेवेति** । विशेषणस्य स्वातन्त्र्येणोपस्थितये विशेषणपरपदे एव लक्षणाभ्युपगमेन विशेष्यपरपदे लक्षणानभ्युपगमप्रकारेणैवेत्यर्थः । परममूले **वाक्येऽपीति** । वाक्यघटकतत्त्वंपदयोरपीत्यर्थः । परममूले **अन्यथेति** । विशेष्यपरपदेऽपि लक्षणास्वीकारे इत्यर्थः । परममूले **इति वाक्ये इति** । एतादृशवाक्यघटकतत्त्वंपदयोरित्यर्थः । अत्रापि=लक्षणया घटादिपदानां विशेष्यमात्रपरत्वमित्यस्मिन्नर्थेऽपि, अनुमतिः=संमतिः ॥

**जहदजहल्लक्षणोदाहरणं तु काकेभ्यो दधि रक्ष्यतामित्यादिकमेव । तत्र शक्यकाकपरित्यागेनाशक्यदध्युपघातकत्वपुरस्कारेणाकाके काके च काकशब्दस्य प्रवृत्तेः । लक्षणाबीजं तु तात्पर्य्यानुपपत्तिरेव, न त्वन्वयानुपपत्तिः । काकेभ्यो दधि रक्ष्यतामित्यत्रान्वयानुपपत्त्यभावात् । गङ्गायां घोष इत्यादौ तात्पर्य्यानुपपत्तेरपि संभवात् । लक्षणा च न पदमात्रवृत्तिः किंतु वाक्यवृत्तिरपि ॥**

**शि० म०**—तर्हि जहदजहल्लक्षणाया निर्विषयत्वापत्तिरित्याशङ्क्य विशिष्टवाचकत्ववादिमतेन स्वयं तद्विषयमाह—**जहदजहल्लक्षणोदाहरणं त्विति।** **छत्रिणो** यान्तीत्यादिकमादिपदग्राह्यम्। **शक्येति।** शक्यतावच्छेदकेत्यर्थः। ननु काकेभ्यो दधि रक्ष्यतामित्यादौ लक्षणाया न शक्यसंबन्धिमात्रविषयत्वं जहल्लक्षणात्वप्रसङ्गात्। न च शक्याशक्यविषयत्वं तदनुगतलक्ष्यतावच्छेदकस्याप्रतीतेरित्याशङ्क्य दध्युपघातकत्वमेव स्वार्थसंबन्धिशक्याशक्यवृत्तिलक्ष्यतावच्छेदकमित्याह—**अशक्येति।** एवं लक्षणा निरूपिता। संप्रति तद्बीजं निरूपयति—**लक्षणाबीजं त्विति।** एवकारव्यावर्त्यमाह—**न त्विति।** किमन्वयानुपपत्तिस्तद्बीजं तात्पर्यविषयान्वयानुपपत्तिर्वा। नाद्य इत्याह—**काकेभ्य इति।** न द्वितीयः, लाघवावश्यकत्वाभ्यां तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वौचित्यात्। ननु तात्पर्यविषयान्वयानुपपत्तिर्गुर्व्यपि गङ्गायां घोष इत्यादौ क्लृप्तत्वाल्लक्षणाबीजं न तु तात्पर्यानुपपत्तिरित्यत आह—**गङ्गायामिति।** लक्षणा पदमात्रवृत्तिर्वृत्तित्वाच्छक्तिवदिति नैयायिकास्तान्प्रत्याह—**लक्षणा चेति।** उक्तानुमानं च शक्तित्वेन सोपाधिकमिति भावः॥

**म० प्र०**—तर्हि=तत्त्वंपदादौ जहदजहल्लक्षणानङ्गीकारे, जहदजहल्लक्षणायाः=शक्याशक्यविशेष्यकवृत्तित्वरूपजहदजहल्लक्षणायाः, निर्विषयत्वापत्तिः=विषयोदाहरणयोरभावापत्तिः। **छत्रिणो यान्तीत्यादिकमिति।** अत्र छत्रिपदस्यैकसार्थवाहिषु लक्षणैकसार्थवाहित्वेन रूपेण छत्रितदन्ययोर्बोधात्। छत्रिशब्दे लक्षणाभिधानं तु वाक्यलक्षणावादिमताभिप्रायेण। नैयायिकमते तु छत्रपदस्यैकसार्थवाहित्वे लक्षणा प्रत्ययार्थश्च संबन्धी। तथा चैकसार्थवन्तो गच्छन्तीत्यन्वयबोधः। एकसार्थवाहित्वं चैकसार्थ एव, न त्वेकसार्थगन्तृत्वमेकसार्थवाहित्वस्यैकसार्थगन्तृत्वरूपत्वे हि छत्रशब्दलक्ष्यार्थस्य नैराकाङ्क्ष्येण यान्तीत्यनेनानन्वयापत्तेरिति। **तदनुगतेति**=शक्याशक्यवृत्तीत्यर्थः। **स्वार्थेति**=काकादिपदार्थेत्यर्थः। परममूले **अकाके इति।** दध्युपघातके शुनकादावित्यर्थः। **तात्पर्यविषयेति।** वक्त्रिच्छारूपतात्पर्यविषयतीरादीत्यर्थः। शक्तित्वेन सोपाधिकं=शक्तित्वाभिन्नोपाधिविशिष्टम्। न च पदमात्रवृत्तित्वस्य पदत्वे सत्त्वेन पदत्वे शक्तित्वाभावेन च शक्तित्वस्य साध्याव्यापकत्वमिति वाच्यम्, साधनावच्छिन्नसाध्यव्यापकत्वस्य विवक्षितत्वात्।

**यथा गम्भीरायां नद्यां घोष इत्यत्र गम्भीरायां नद्यामिति पदद्वयसमुदायस्य तीरे लक्षणा। ननु वाक्यस्याशक्ततया कथं शक्यसंबन्धरूपा लक्षणा। उच्यते। शक्त्या यत्पदसम्बन्धेन ज्ञाप्यते तत्संबन्धो लक्षणा। शक्तिज्ञाप्यश्च यथा पदार्थः तथा वाक्यार्थोऽपीति न काचिदनुपपत्तिः॥**

**शि० म०**—ननु शक्तेः पदमात्रवृत्तित्वे शक्तित्वं न प्रयोजकं लाघवेन सामान्यधर्मस्य वृत्तित्वस्यैव तत्प्रयोजकत्वादित्याशङ्क्य चित्रगुमानय गम्भीरायां नद्यां घोष इत्यादौ गवादिपदे लक्षणा न चित्रादिपदे इत्यत्र नियामकाभावेन पदसमुदाये एव तत्र लक्षणायास्त्वया स्वीकर्त्तव्यतया गुर्वपि शक्तित्वं तत्र प्रयोजकमित्याह—**यथा गम्भीरायामिति** । शक्यसंबन्धो लक्षणा, वाक्ये च शक्त्यनाश्रये तत्कल्पनं बाधितमिति चोदयति—**नन्विति** । शक्यसंबन्ध एव लक्षणा स्वशक्तिज्ञाप्यं चेह शक्यपदेन विवक्षितं शक्तिज्ञाप्यश्च पदार्थज्ञानद्वारा वाक्यार्थोऽपीति वाक्ये लक्षणा युक्तेत्याह—**उच्यते इति** । ननु शक्यसंबन्धत्वापेक्षया स्वशक्तिज्ञाप्यसंबन्धत्वं गुर्विति चेन्न, वाक्यलक्षणायाः प्रमाणान्तरसिद्धत्वेन तत्साधारणगुरुलक्षणप्रणयनस्य न्याय्यत्वात् । न च ज्ञाप्यसंबन्धत्वमेव लक्षणालक्षणमस्तु तस्य वाक्यलक्षणासाधारणत्वात्ततश्च लक्षणे स्वशक्तिपदं व्यर्थमिति वाच्यम् । तथा सति गाव्यादेरपभ्रंशस्य लक्षणापत्तौ साधुत्वापत्तेः, वृत्तिमत्त्वस्यैव शब्दसाधुत्वप्रयोजकत्वात् । न च वाक्यस्य स्वनिष्ठशक्त्यभावेन कथं स्वशक्तिज्ञाप्यसंबन्धरूपा लक्षणा स्यादिति वाच्यम् । शक्त्याश्रयपदस्यैव समुदायरूपेण वाक्यत्वाभ्युपगमात् । यद्वा ज्ञाप्यसंबन्ध एव । न चापभ्रंशस्य साधुत्वापत्तौ यज्ञे प्रयोगापत्तिः, व्याकरणव्युत्पाद्यत्वस्य साधुत्वव्यवहारप्रयोजकत्वात्, व्याकरणं च प्रकृतिप्रत्ययानुख्यायिका स्मृतिरिति नात्माश्रयः । ततश्चोपपन्ना वाक्ये लक्षणेति तदेतत् सर्वमभिप्रेत्याह—**न काचिदनुपपत्तिरिति** ॥

**म० प्र०**—उपाधेः साध्यव्यापकत्वे सति साध्यव्याप्यत्वरूपसाध्यसमनियतत्वनियमाच्छक्तित्वस्योक्तसाध्यसमनियतत्वाभावेन नोपाधित्वमित्यभिप्रेत्याशङ्कते—**ननु शक्तेरिति** । लाघवेन=लक्षणाभिन्नत्वे सति वृत्तित्वस्य शक्तित्वस्वरूपत्वाल्लक्षणाभिन्नत्वे सति वृत्तित्वरूपशक्तित्वस्य पदमात्रवृत्तित्वप्रयोजकत्वापेक्षया सामान्यधर्मवृत्तित्वस्य पदमात्रवृत्तित्वप्रयोजकत्वे लाघवेन । अस्याग्रे संभवति सामान्यधर्मे विशेषधर्मे तदन्याय्यमिति न्यायात्, संभवति लघौ गुरौ तदन्याय्यमिति न्यायाच्चेति शेषः । तत्प्रयोजकत्वात्=पदमात्रवृत्तित्वप्रयोजकत्वात्, तत्र=चित्रगुमानयेत्यादिवाक्ये, गुर्वपि=वृत्तित्वापेक्षया गुरुभूतमपि, तत्र=पदमात्रवृत्तित्वे, तत्कल्पनम्=शक्यसंबन्धरूपलक्षणाकल्पनम्, बाधितम्=अनुपपन्नम्, स्वशक्तिज्ञाप्यं=पदशक्तिज्ञानजन्यज्ञानविषयः, इह=लक्षणालक्षणवाक्ये, पदार्थज्ञानद्वारा=पदार्थोपस्थितिद्वारा । परममूले **शक्त्या यत्पदसंबन्धेनेति** । पदसंबन्धेन शक्त्या पदनिष्ठार्थसंबन्धरूपया शक्त्या यज्ज्ञाप्यते=स्वज्ञानजन्यज्ञानविषयीक्रियते तत्संबन्धो लक्षणेत्यर्थः । शक्यसंबन्धत्वापेक्षया=शक्यसंबन्धत्वरूपलक्षणालक्षणापेक्षया, स्वशक्तिज्ञाप्यसंबन्धत्वं=पदशक्तिज्ञानजन्यज्ञानविषयसंबन्धत्वरूपलक्षणालक्षणम् । **प्रमाणान्तरेति** । लक्षणा वाक्यवृत्तिः शक्तिभिन्नत्वे सति वृत्तित्वाद्व्यञ्जनावद्गम्भीरायां

नद्यामित्यादिपदसमुदायो लक्षणावान् शब्दत्वाद्गङ्गायां घोष इत्यत्र गङ्गापदवदित्यादिनियामकाभावसहकृतानुमानप्रमाणातिरिक्तेन शब्दभावनायामर्थवादवाक्यज्ञाप्यप्राशस्त्यमितिकर्त्तव्यतात्वेनान्वेतीत्यादिप्राचीनवाक्यरूपेण प्रमाणान्तरेण सिद्धत्वेन=निश्चितत्वेनेत्यर्थः । **तत्साधारणेति**=वाक्यलक्षणावृत्तीत्यर्थः । ज्ञाप्यसंबन्धत्वम्=पदार्थोपस्थितिरूपज्ञानजन्यशाब्दज्ञानविषयसंबन्धत्वम्, तस्य=ज्ञाप्यसंबन्धत्वरूपलक्षणालक्षणस्य, साधारणत्वात्=वृत्तित्वात् । तथा सति=ज्ञाप्यसंबन्धत्वस्य लक्षणालक्षणत्वे सति लक्षणालक्षणे शक्त्यनिवेशे सतीति यावत् । **गाव्यादेरिति** । गावीशब्दो हि गोबोधक आदिपदगृहीतगोपुतिलाशब्दोऽपि गोबोधक इति । लक्षणापत्तौ=ज्ञाप्यं गौस्तत्संबन्धस्य पुरुषे सत्त्वेन गावीशब्दस्य पुरुषे लक्षणाप्राप्तौ । **साधुत्वापत्तेरिति** । यस्य नयेऽपभ्रंशशब्दानां शक्तिलक्षणे न स्तः शक्तिभ्रमादपभ्रंशशब्देभ्यो गवाद्यर्थबोधस्तन्नयेनेदं समाधानमिति भावः । **वाक्यत्वाभ्युपगमादिति** । शक्तिमत्पदसमुदायस्य वाक्यत्वात्पदानां शक्तिरेव वाक्यशक्तिरिति भावः । समुदायरूपेण=समुदायघटकत्वेन रूपेण, आनुख्यायिका=बोधिका । **नात्माश्रय इति** । साधुत्वबोधकं व्याकरणमिति व्याकरणलक्षणकरणेन साधुत्वज्ञाने साधुत्वज्ञानापेक्षारूपात्माश्रयो नास्तीत्यर्थः । ततश्च=ज्ञाप्यसंबन्धस्य लक्षणालक्षणत्वादेव ॥

**एवमर्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये लक्षणा । 'सोऽरोदीत्' इत्यादिनिन्दार्थवाक्यानां निन्दितत्वे लक्षणा । अर्थवादगतपदानां प्राशस्त्ये लक्षणाभ्युपगमे एकेन पदेन लक्षणया तदुपस्थितिसम्भवे पदान्तरवैयर्थ्यं स्यात् ॥**

**शि० म०**—ननु चित्रगुमानय गम्भीरायां नद्यां घोष इत्यादावपि गवादिपद एव लक्षणा । न च नियामकाभावः, विशेष्यपदत्वस्य नियामकत्वात् । अत एवाभेदान्वयस्थले नीलो घट इत्यादौ विशेषणविभक्तिस्साधुत्वार्था। न च पदान्तरवैयर्थ्यं चित्रगोस्वामिनि गम्भीरनदीतीरादौ तात्पर्य्यद्योतकत्वात् । अत एव प्रजयतीत्यादावुपसर्गस्य प्रकृष्टे जये तात्पर्य्यद्योतकत्वं न तु शक्तिर्न लक्षणा वा । ततश्च वाक्ये न लक्षणेत्यत आह—**एवमिति । अर्थवादवाक्यानामिति** । न हि विश्वरूपो वै त्वाष्ट्र इत्यादावनेकपदसंदर्भात्मके अर्थवादवाक्ये विशेष्यपदं लाक्षणिकं विशेषणपदं तु द्योतकमिति नियमोऽस्ति । विशेष्यपदानामपि नानात्वात्तथा चार्थवादस्थले वाक्यलक्षणायाः क्लृप्तत्वेन लोकेऽपि गम्भीरायां नद्यामित्यादौ वाक्य एव लक्षणेति भावः ॥

**म० प्र०**—**नियामकत्वादिति** । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमादिति शेषः । अत एव=विशेष्यपदत्वस्य लक्षणानियामकत्वादेव । परममूले **प्रशंसारूपाणामिति** । बलवदनिष्टाऽननुबन्धित्वरूपप्रकृष्टत्वबोधजनकरूपाणामित्यर्थः । द्योतकम्=तात्पर्यद्योतकम् ॥

**एवं च विध्यपेक्षितप्राशस्त्यरूपपदार्थप्रत्यापकतया अर्थवाद-पदसमुदायस्य पदस्थानीयतया विधिपदेनैकवाक्यत्वं भवतीत्यर्थवादवाक्यानां पदैकवाक्यता। क्व तर्हि वाक्यैकवाक्यता। यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकङ्क्षावशेन महावाक्यार्थबोधकत्वं तत्र वाक्यैकवाक्यता॥**

शि० म०–अर्थवादे पदैकवाक्यताप्रसिद्धिरपि तत्र वाक्यलक्षणायां मानमित्याह–एवं चेति। अन्यथा तव मते अर्थवादान्तर्गतस्य कस्यचिदेव पदस्य प्रशस्तत्वनिन्दितत्वरूपार्थप्रत्यापकतया तस्यैव पदैकवाक्यत्वापत्तावर्थवादपदसमुदाये तत्प्रसिद्धिर्न स्यादिति भावः। प्रसङ्गाद्वाक्यैकवाक्यतां निरूपयितुमाकाङ्क्षामुद्भावयति–क्व तर्हीति। यद्वा तत्प्रसिद्धिर्न वाक्यलक्षणायां प्रमाणं पदमात्रवृत्तिलक्षणावादिमते एवार्थवादान्तर्गतस्य पदस्य सतः पदान्तरद्योतिततात्पर्य्यविषयप्राशस्त्यार्थप्रतिपादकतया पदैकवाक्यत्वसंभवात्। अन्यथा वाक्यस्यापि सतः पदैकवाक्यत्वे कुत्रापि वाक्यैकवाक्यता न स्यादित्याक्षिपति–क्व तर्हीति। न हि वाक्ययोः सतोरेकवाक्यत्वं वाक्यैकवाक्यत्वं किंतु वाक्यार्थबोधकयोः। तथा चार्थवादस्य वाक्यत्वेऽपि प्राशस्त्यरूपार्थबोधकतया वाक्यार्थानुभावकत्वाभावान्न वाक्यैकवाक्यतेत्याह–यत्रेति॥

म० प्र०–पदैकवाक्यताप्रसिद्धिः=पदस्य वाक्येन सहैकवाक्यतैकार्थबोधकत्वं पदैकवाक्यता तस्याः प्रसिद्धिः। परममूले **पदस्थानीयतयेति**। पदार्थविषयकबोधजनकत्वरूपपदकार्य्यकारित्वेन पदरूपतयेत्यर्थः। परममूले **विधिपदेनेति**। विधिवाक्येनेत्यर्थः। तत्प्रसिद्धिः=पदैकवाक्यताप्रसिद्धिः। **वादिमते एवेति**। अस्य पदैकवाक्यत्वसंभवादित्यनेनान्वयो बोध्य इति। सतः=विद्यमानस्य, अन्यथा=उक्तप्रकारेणार्थवादान्तर्गतपदलक्षणानङ्गीकारे, एकवाक्यत्वम्=एकवाक्यार्थबोधकत्वम्। **वाक्यार्थबोधकयोरिति**। वाक्यार्थबोधकयोर्वाक्ययोः सतोरेकवाक्यत्वं वाक्यैकवाक्यत्वमित्यन्वयः। प्राशस्त्यरूपार्थबोधकतया=प्राशस्त्यरूपप्राशस्त्यपदार्थबोधकतया। अर्थवादवाक्यानां प्राशस्त्यपदार्थबोधकत्वमेव न तु वाक्यार्थबोधकत्वमिति भावः। अनुभावकत्वाभावात्=अनुभवजनकत्वाभावात्॥

**यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिवाक्यानाम् 'समिधो यजति' इत्यादिवाक्यानां च परस्परापेक्षिताङ्गाङ्गिभावबोधकतयैकवाक्यता॥**

शि० म०–विशेष्ये विशेषणमिति न्यायेन पदार्थसमूहालम्बनादेव वैशिष्ट्यावगाहिमहावाक्यार्थज्ञानोपपत्तौ मध्ये नावान्तरवाक्यार्थबोध इति वाक्यैकवाक्यतायां लोके कश्चिद्विप्रतिपद्येतापीत्यतो निःसंदिग्धवैदिकवाक्यमुदाहरति–यथेति।

**परस्परेति।** प्रकृतीनां दर्शपूर्णमासादीनां स्वप्रकरणस्थाङ्गैर्निवृत्तोपकाराकाङ्क्षाणामनारभ्याधीताङ्गैर्विकृतीनां चातिदिष्टाङ्गैः परिपूर्णांशानां शरमयादिभिः सह नष्टाश्वदग्धरथवदुत्थिताकाङ्क्षाविरहेऽपि रक्तः पटो भवतीतिवदुत्थापितपरस्पराकाङ्क्षासत्त्वादित्यभिप्रायः॥

म० प्र०—ननु वाक्यैकवाक्यतायां घटमानयेत्यादिलौकिकवाक्ययोरुदाहरणत्वसंभवेनालं वाक्यैकवाक्यतायां वैदिकवाक्ययोरुदाहरणत्वमित्यत आह—**विशेष्ये विशेषणमिति।** घटमानयेत्यत्राख्यातार्थविशेष्यकृतौ विशेषणं धात्वर्थस्तत्र विशेषणं कर्मत्वं तत्र विशेषणं घट इत्यनेन प्रकारेण युगपदेव वाक्यार्थज्ञानोत्पत्तिरित्यर्थः। कश्चित्=प्राचीनः। **विप्रतिपद्येतापीति**। घटमानयेत्यादौ प्रथमं घटीया कर्मतेति बोधस्तत आनयनानुकूला कृतिरिति प्रत्येकवाक्यार्थज्ञानानन्तरं महावाक्यार्थज्ञानं न भवति। किंतु तावत्पदार्थानां स्मरणादेकदैव खलेकपोतन्यायेन क्रियाकर्मभावादिरूपेणान्वयविषयकशाब्दबोधो भवतीति प्राचीनाः। नवीनास्तु यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते। तथा च विशिष्टस्य वैशिष्ट्यमिति न्यायात्प्रथमं प्रत्येकवाक्यार्थबोधानन्तरमेव महावाक्यार्थबोध इति प्राहुरिति भावः। ननु परममूले परस्परापेक्षिताङ्गाङ्गिभावबोधकतयैव वाक्यानामेकवाक्यतेत्यङ्गीकाराद्दर्शपूर्णमासादिप्रकृतियागानामनारभ्याधीतपर्णमयत्वाद्यङ्गेष्वाकाङ्क्षाभावेन दर्शपूर्णमासादिप्रकृतिबोधकवाक्यानामनारभ्याधीताङ्गबोधकवाक्यानां चैकवाक्यता न स्यात्तथा विकृतीनां शरमयादिष्वाकाङ्क्षाभावेन विकृतिबोधकवाक्यानां शरमयाद्यङ्गबोधकवाक्यानां चैकवाक्यता न स्यादिति चेन्नेत्यभिप्रेत्य हेतुमाह—**प्रकृतीनामिति।** प्रकृतीनामनारभ्याधीताङ्गैः सहोत्थिताकाङ्क्षाविरहेऽपि विकृतीनां च शरमयादिभिः सहोत्थिताकाङ्क्षाविरहेऽपीत्यन्वयः। प्रकृतीनां=समुपदिष्टसकलाङ्गकानाम्, स्वप्रकरणस्थाङ्गैः=प्रयाजानुयाजादिरूपदर्शपूर्णमासप्रकरणस्थाङ्गैः। अनारभ्याधीताङ्गैः=दर्शपूर्णमासावनारभ्य यस्य पर्णमयी जुहूर्भवतीत्यादिवाक्ये पठितैर्जुह्वाद्यङ्गैः, विकृतीनाम्=अनुपदिष्टसकलाङ्गकानाम्, अतिदिष्टाङ्गैः=प्रकृतिवद्विकृतिः कर्तव्येत्यतिदिष्टप्रयाजाद्यङ्गैः, परिपूर्णांशानाम्=परिप्राप्तांशानाम्। शरमयादिभिः=शरमयाद्यङ्गैः। व्यतिरेकिदृष्टान्तमाह—**नष्टाश्वदग्धरथवदिति।** नष्टाश्वदग्धरथपुरुषयोरुत्थिताकाङ्क्षावदित्यर्थः। उत्थिताकाङ्क्षाविरहेऽपि=पदार्थान्तरप्रयोज्यान्वयानुभावकत्वरूपायाः पदार्थान्तरव्यतिरेकप्रयुक्ताजनितान्वयबोधकत्वरूपाया वोत्थिताकाङ्क्षाया अभावेऽपि। **रक्तः पटो भवतीतिवदिति।** पटो भवतीत्युक्ते पटस्य स्वान्वयार्थं रक्तादिपदार्थविषयकोत्थिताकाङ्क्षाभावेऽपि कथंभूतः पट इत्याकाङ्क्षोत्थापनेन रक्तपदार्थस्य पटपदार्थेनान्वयवदित्यर्थः॥

**तदुक्तं भट्टपादैः। "स्वर्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥" इति। एवं द्विविधोऽपि पदार्थो निरूपितः। तदुपस्थितिश्चासत्तिः॥**

**शि० म०**—ननु वेदेऽपि नावान्तरवाक्यार्थबोधानन्तरं महावाक्यार्थज्ञानम्। तथा सति वाक्ययोर्जनितान्वयबोधत्वेन निराकाङ्क्षतया महावाक्यार्थबोधो न स्यादिति चेत् न, अवान्तरवाक्यार्थबोधानन्तरं तदनुकूलाकाङ्क्षाभावेन वाक्याभ्यां पुनरवान्तरवाक्यार्थज्ञानाभावेऽप्यजनिततात्पर्य्यविषयमहावाक्यार्थबोधाभ्यां ताभ्यामेव संहताभ्यां महावाक्यार्थबोधसंभवात्। अत्र सदाचार्य्यसंमतिमाह—**तदुक्तमिति**। न च वेदेऽपि विशेष्ये विशेषणमिति न्यायेन प्रथमत एव विशिष्टवैशिष्ट्यावगाहिमहावाक्यार्थबोधोऽस्तु लाघवादिति वाच्यम्। तथा सति कर्मस्वरूपज्ञानानन्तरं फलान्वयबोधः, ततः शेषशेषिभावान्वयबोध इति राद्धान्तभङ्गापत्तेः। उत्पत्त्युत्पन्नशिष्टगुणविभागानुपपत्तेश्चेति। **तदुपस्थितिरिति**। शक्तिलक्षणान्यतरसंबन्धेन पदजन्यपदार्थस्मृतिरासत्तिरित्यर्थः॥

**म० प्र०**—तथा सति=प्रत्येकवाक्यार्थबोधानन्तरं महावाक्याथबोधाङ्गीकारे सति। **तदनुकूलेति**। अवान्तरवाक्यार्थबोधानुकूलेत्यर्थः। वाक्याभ्याम्=अवान्तरवाक्याभ्याम्, अजनिततात्पर्य्यविषयमहावाक्यार्थबोधाभ्याम्=अजनितोऽनुत्पादितस्तात्पर्य्यविषयमहावाक्यार्थबोधो याभ्यां वाक्याभ्यां ते तथा ताभ्याम्। **ताभ्यामेवेति**। अवान्तरवाक्याभ्यामेव। सहिताभ्याम्=एकज्ञानविषयत्वरूपमेलनवद्भ्याम। परममूले **स्वार्थबोधे समाप्तानामिति**। प्रथमं स्वार्थबोधे जनकतां प्राप्तानाम्, वाक्यानाम्=अवान्तरवाक्यानामङ्गाङ्गिभावाद्यपेक्षया पुनः संहत्य=मिलित्वा, एकवाक्यत्वं=वाक्यैकवाक्यत्वं संपद्यते इत्यर्थः। प्रथमतः=अवान्तरवाक्यार्थबोधात्प्राक्, लाघवात्=खण्डवाक्यार्थबोधानन्तरमहावाक्यार्थबोधाङ्गीकारापेक्षया प्रथममेव महावाक्यार्थबोधाङ्गीकारे लाघवात्, तथा सति=प्रथममेव महावाक्यार्थबोधाङ्गीकारे सति, कर्मस्वरूपज्ञानानन्तरम्=आग्नेयोऽष्टाकपालो भवतीत्याद्युत्पत्तिविधिना कर्मस्वरूपज्ञानानन्तरम्, फलान्वयबोधः=दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्याद्यधिकारविध्यवगतफलस्य कर्मणा सह संबन्धज्ञानम्, ततः शेषशेषिभावान्वयबोधः=पश्चात्प्रकरणसहकृतविनियोगविधिना शेषशेषिभावान्वयबोधः। **उत्पत्तीति**। कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिरिति लक्षणलक्ष्ये कर्मोत्पत्तिवाक्ये विहितो गुण उत्पत्तिशिष्टो गुणो यथाऽष्टाकपालादिः, उत्पन्ने कर्मणि विनियोगविधिना विहितो गुण उत्पन्नशिष्टो गुणस्तयोर्विभागासिद्धेरित्यर्थः॥

**सा च शाब्दबोधे हेतुः। तथैवान्वयव्यतिरेकदर्शनात्। एवं महावाक्यार्थबोधेऽवान्तरवाक्यार्थबोधो हेतुः। तथैवान्वयाद्यवधारणात्॥**

**शि० म०**—नन्वस्तु पदार्थोपस्थितिरासत्तिः, तथापि न तज्ज्ञानं शाब्दज्ञाने हेतुः मानाभावात्। नापि स्वरूपसती, पदार्थानां शाब्दज्ञाने विशेषणत्वेन भासमानतया तदुपस्थितेर्विशेषणज्ञानत्वेन हेतुत्वापत्तौ शाब्दज्ञानासाधारणकारणताभ्युपगमभङ्गा-

पत्तेरित्यत आह—**सा चेति**। आसत्तिरेव हेतुर्न तु तज्ज्ञानम्। तथा च पदजन्यपदार्थोपस्थितित्वेन हेतुत्वादसाधारणमिति भावः। न च तेन रूपेण हेतुत्वे मानाभाव इत्याह—**तथैवेति**। न च विशेषणज्ञानत्वेन हेतुत्वं विशेष्यधियोऽहेतुत्वापातात्। न चेष्टापत्तिः, यावदन्वयप्रतियोग्युपस्थितावेवान्वयबोधः तदभावे नेत्यन्वयव्यतिरेकविरोधादित्यर्थः। एवं शाब्दज्ञानकारणानि निरूप्य तद्विशेषकारणमाह—**एवमिति**।न चोक्तन्यायेन वैदिकमहावाक्यार्थज्ञान एवावान्तरवाक्यार्थज्ञानं हेतुः न तु लोकेऽपि, तत्र समूहालम्बनात्तदुपपत्तौ विरोधाभावादिति वाच्यम्, वैदिकस्थले लाघवेन महावाक्यार्थज्ञानत्वस्यैवावान्तरवाक्यार्थज्ञानजन्यतावच्छेदकतया क्लृप्तत्वेन लोके समूहालम्बनमात्रान्महावाक्यार्थज्ञानस्यैवासिद्धेः। अन्यथा कदाचिदाकाङ्क्षादिवशाद्यत्रावान्तरवाक्यार्थज्ञानं तत्र तन्न स्यात्। यदि च पदार्थसमूहालम्बनादपि महावाक्यार्थज्ञानं तदा तदजन्यमहावाक्यार्थज्ञानत्वं तज्जन्यतावच्छेदकमिति न व्यभिचार इति बोध्यम् ॥

म० प्र०—शाब्दज्ञाने विशेषणत्वेन भासमानतया=शाब्दज्ञाननिरूपितविशेषणत्वविशिष्टविषयतावत्त्वेन, तथा च=आसत्तेः स्वरूपेण हेतुत्वे सति, तेन रूपेण=पदजन्यपदार्थोपस्थितित्वेन रूपेण, हेतुत्वे=आसत्तेः कारणत्वे। परममूले **तथैवान्वयव्यतिरेकदर्शनादिति**। पदजन्यपदार्थोपस्थितिसत्त्वे शाब्दबोधसत्त्वं पदजन्यपदार्थोपस्थित्यभावे शाब्दबोधाभाव इति पदजन्यपदार्थोपस्थित्यन्वयव्यतिरेकप्रयोज्यशाब्दबोधान्वयव्यतिरेकदर्शनादित्यर्थः। यावदन्वयप्रतियोग्युपस्थितौ=निखिलान्वयनिरूपकपदार्थानां स्मृतौ। परममूले **एवमिति**। यथा शाब्दबोधे आकाङ्क्षादिकं कारणमेवं तथेत्यर्थः। परममूले **तथैवेति**। आकाङ्क्षाद्यन्वयव्यतिरेकवदित्यर्थः। परममूले **अन्वयाद्यवधारणादिति**। अवान्तरवाक्यार्थबोधसत्त्वे महावाक्यार्थबोधसत्त्वमवान्तरवाक्यार्थबोधाभावे महावाक्यार्थबोधाभाव इत्यवान्तरवाक्यार्थबोधान्वयव्यतिरेकप्रयोज्यमहावाक्यार्थबोधान्वयव्यतिरेकनिश्चयादित्यर्थः। उक्तन्यायेन=तथा सति कर्मस्वरूपज्ञानानन्तरमित्यादिवाक्योक्तयुक्त्या, लोके=लौकिकमहावाक्यार्थज्ञाने, तत्र=लौकिकमहावाक्ये। तदुपपत्तौ=महावाक्यार्थबोधापत्तौ, वैदिकस्थले=वैदिकमहावाक्यस्वरूपे, लाघवेन=वैदिकमहावाक्यार्थबुद्धित्वेऽवान्तरवाक्यार्थज्ञानकार्य्यतावच्छेदकत्वापेक्षया सामान्यमहावाक्यार्थबुद्धित्वेऽवान्तरवाक्यार्थज्ञानकार्य्यतावच्छेदकत्वे लाघवेन। लोके=लौकिकमहावाक्ये। **असिद्धेरिति**। लाघवादवान्तरवाक्यार्थज्ञाननिष्ठजनकतानिरूपितजन्यतावच्छेदकत्वं महावाक्यार्थज्ञानत्वस्यैव न तु वैदिकमहावाक्यार्थज्ञानत्वस्येति लौकिकमहावाक्ये समूहालम्बनमात्रान्महावाक्यार्थज्ञानमेव न भवतीति भावः। अन्यथा=अवान्तरवाक्यार्थज्ञानस्य महावाक्यार्थज्ञानं प्रति हेतुत्वानङ्गीकारे किन्तु समूहालम्बनस्यैव महावाक्यार्थज्ञानं प्रति हेतुत्वस्वीकारे इति यावत्। यत्र=यस्मिन्काले, तत्र=तस्मिन्काले। तन्न स्यात्=महावाक्यार्थज्ञानं न स्यात्, तदा=तर्हि।

तदजन्यमहावाक्यार्थज्ञानत्वम्=समूहालम्बनाजन्यमहावाक्यार्थज्ञानत्वम्, तज्जन्यतावच्छेदकम्=अवान्तरवाक्यार्थज्ञाननिष्ठजनकतानिरूपितजन्यतावच्छेदकम् । **इति न व्यभिचार इति।** तथा च समूहालम्बनाजन्यमहावाक्यार्थबुद्धित्वावच्छिन्नं प्रत्यवान्तरवाक्यार्थज्ञानत्वेन हेतुत्वं समूहालम्बनजन्यमहावाक्यार्थबुद्धित्वावच्छिन्नं प्रति समूहालम्बनत्वेन हेतुत्वमिति, समूहालम्बनावान्तरवाक्यार्थबुद्धिनिष्ठकारणतानिरूपितकार्य्यतावच्छेदकभेदेन न कारणयोर्व्यभिचार इति भावः ॥

**क्रमप्राप्तं तात्पर्यं निरूप्यते । तत्र तत्प्रतीतीच्छयोच्चारितत्वं न तात्पर्यम्, अर्थज्ञानशून्येन पुरुषेणोच्चारिताद्वेदादर्थाभानप्रसङ्गात्। अयमध्यापकोऽव्युत्पन्न इति विशेषदर्शनेन तात्पर्य्यभ्रमस्याप्यभावात् ॥**

**शि० म०—मौनिश्लोकादावव्याप्तिरिति दोषे सत्येव दोषान्तरमाह—अर्थज्ञानशून्येनेति। तत्र किं तात्पर्य्यज्ञानं प्रमारूपं भ्रमरूपं वा तत्राद्यं निराकृत्य द्वितीयं निरस्यति—अयमिति विशेषदर्शनेनेति। विरोधिदर्शनेनेत्यर्थः ॥**

म० प्र०—परममूले **तत्रेति।** तात्पर्य्ये निरूपणीये सतीत्यर्थः। नन्वर्थज्ञानशून्यपुरुषोच्चारितवेदवाक्यादेस्तत्प्रतीतीच्छयोच्चरितत्वरूपतत्तात्पर्य्याभावेऽप्यनेनैतदर्थप्रतीतीच्छयैतद्वाक्यमुच्चरितमिति श्रोतुस्तदीयतात्पर्य्यज्ञानादर्थज्ञानशून्यपुरुषोच्चरितवेदवाक्याद्यर्थज्ञानं भवष्यतीत्याशङ्क्याह—**तत्र किमिति।** श्रोतृपुरुषे इत्यर्थः। तत्र=पक्षद्वयोर्मध्ये इत्यर्थः। निराकृत्य=अर्थज्ञानशून्येनेत्यादिवाक्येन निरस्य, विरोधिदर्शनेन=भ्रमविरोध्यध्यापकनिष्ठाव्युत्पत्तिज्ञानेन ॥

**न चेश्वरतात्पर्यज्ञानात्तत्र शाब्दबोध इति वाच्यम् । ईश्वरानङ्गीकर्तुरपि तद्वाक्यार्थप्रतिपत्तिदर्शनात् । उच्यते । तत्प्रतीतिजननयोग्यत्वं तात्पर्य्यम्। गेहे घट इति वाक्यं गेहे घटसंसर्गप्रतीतिजननयोग्यं न तु पटसंसर्गप्रतीतिजननयोग्यमिति तद्वाक्यं घटसंसर्गपरं न तु पटसंसर्गपरमिति व्यपदिश्यते ॥**

**शि० म०—न चेति।** यद्यपि साक्षात्कण्ठताल्वादिप्रेरकत्वाभावान्नोच्चारयितृत्वमीश्वरस्य तथापि तत्प्रेरकतामात्रमुच्चारयितृत्वं तच्च कण्ठताल्वादिव्यापारानुकूलकृतिमत्त्वादीश्वरेऽपीति भावः । अव्युत्पन्नोदीरितपदवाक्यश्राविणस्सांख्यमीमांसकादेरपौरुषेयत्वानिश्चयवतस्तात्पर्यात् शाब्दज्ञानदर्शनेन व्यभिचारान्न तात्पर्य्यज्ञानं हेतुरित्याह—**ईश्वरेति। तदिति।** स्वार्थसंसर्गानुभवजननस्वरूपयोग्यत्वं तात्पर्य्यमित्यर्थः। न तु फलोपधानम्। तस्मिन् सति तात्पर्य्यज्ञानं सति च तस्मिन्वाक्यार्थज्ञानफलमित्यन्योन्याश्रयात्। न केवलमिदं तात्पर्यं शाब्दज्ञानोपयोगि किंतु

व्यवहारोपयोगि चेत्याह—गेहे इति । पटसंसर्गपरमिति व्यपदिश्यत इत्यन्वयः । अन्यन्था इतिशब्दोपात्तहेतुविशेषापत्तेः ॥

**म० प्र०**—ननु माऽस्त्वर्थज्ञानशून्यपुरुषतात्पर्य्यज्ञानादर्थज्ञानशून्यपुरुषोच्चरितवेदवाक्यादर्थबोधस्तथापीश्वरीयतात्पर्य्यज्ञानात्तत्पुरुषोच्चरितवेदवाक्यायर्थज्ञानं भविष्यतीश्वरस्य साक्षात्कण्ठताल्वादिप्रेरकत्वाभावेऽपि कण्ठताल्वादिप्रेरकतामात्रेण वेदवाक्याद्युच्चारयितृत्वसंभवादित्याशङ्क्य परिहरति—परममूले **न चेति** । परममूले **तत्रेति** । अर्थज्ञानशून्यपुरुषेणोच्चारितवेदादिवाक्यश्रोतरि पुरुषे इत्यर्थः । तत्प्रेरकतामात्रम्=कण्ठताल्वादिप्रेरकतैव न तु साक्षात्कण्ठताल्वादिप्रेरकतेति मात्रपदार्थः । तच्च=कण्ठताल्वादिप्रेरकत्वं तु, अपौरुषेयत्वनिश्चयवतः=मीमांसकादेरीश्वरानङ्गीकारेण वेदस्येश्वररूपपुरुषप्रणीतत्वाभावनिश्चयवतः, तात्पर्य्यात्=तात्पर्य्यज्ञानात्, व्यभिचारात्=ईश्वरीयतात्पर्यज्ञानस्य व्यतिरेकव्यभिचारात्, तात्पर्यज्ञानम्=ईश्वरतात्पर्यज्ञानम् । परममूले **तद्वाक्येति** । अर्थज्ञानशून्यपुरुषवाक्येत्यर्थः । **स्वार्थेति** । पदार्थसंसर्गानुभवस्य वाक्यार्थसंसर्गानुभवस्य वोत्पत्तिनिरूपितकारणतावच्छेदकधर्माक्रान्तत्वमित्यर्थः । ननु कार्य्यवैशिष्ट्यं योग्यत्वशब्दार्थं विहाय किमिति योग्यत्वशब्देन स्वरूपयोग्यत्वस्य ग्रहणं क्रियते इत्याशङ्क्याह—**न खिति** । फलोपधानम्=कार्य्यवैशिष्ट्यम् तस्मिन्सति=वाक्यार्थबोधरूपकार्य्यज्ञाने सति, सति च तस्मिन्=तात्पर्य्यज्ञाने सति तु, अन्यथा=पूर्वोक्तान्वयानङ्गीकारे किंतु पटसंसर्गपरं व्यपदिश्यते इत्यन्वयाङ्गीकारे इति यावत्, इतिशब्दोपात्तहेतुविशेषापत्तेः=पूर्वेतिशब्दनिष्ठहेतुपरत्ववदुत्तरेतिशब्दोपात्तहेतुविशेषज्ञानापत्तेः ॥

**ननु सैन्धवमानयेत्यादि वाक्यं यदा लवणानयनप्रतीतीच्छया प्रयुक्तं तदाऽप्यश्वसंसर्गप्रतीतिजनने स्वरूपयोग्यतासत्त्वाल्लवणपरत्वदशायामप्यश्वादिसंसर्गज्ञानापत्तिरिति चेन्न । तदितरप्रतीतीच्छयाऽनुच्चरितत्वस्यापि तात्पर्य्यं प्रति विशेषणत्वात् । तथा च यद्वाक्यं यत्प्रतीतिजननयोग्यत्वे सति यदन्यप्रतीतीच्छयाऽनुच्चरितं तद्वाक्यं तत्संसर्गपरमित्युच्यते । शुकादिवाक्येऽव्युत्पन्नोच्चारितवेदवाक्यादौ च तत्प्रतीतीच्छाया एवाभावेन तदन्यप्रतीतीच्छयोच्चरितत्वाभावेन लक्षणसत्त्वान्नाव्याप्तिः । न चोभयप्रतीतीच्छयोच्चरितेऽव्याप्तिः तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वस्य विवक्षितत्वात् ॥**

**शि० म०**—नन्विति । श्वेतो धावतीत्यादिवाक्यमादिपदग्राह्यम् । लवणपरत्वेति । लवणमात्रप्रतीतीच्छयोच्चरितत्वज्ञानदशायामश्वादिसंसर्गप्रतीतिजनकत्वलक्षणतात्पर्य्यप्रतीतिसंभवेन तद्वाक्यादश्वादिसंसर्गानुभवापत्तिः तत्परत्वव्यवहारापत्तिश्चेत्यर्थः । तत्प्रतीतिजनकत्वे सति तदन्यप्रतीतीच्छयाऽनुच्चरितत्वं तात्पर्य्य

विवक्षितमित्याह—**तदितरेति** । ननु प्रथमेन तत्पदेनाश्वस्य द्वितीयेन लवणस्य परामर्शे लवणपरे वाक्ये दोषतादवस्थ्यमित्याशङ्क्य सर्वनाम्नो बुद्धिस्थवाचकत्वनियमेन द्वितीयतत्पदेन प्रथमतत्पदोक्तस्यैव परामर्श अन्यथा यस्यकस्यचित्परामर्शे पटान्यघटप्रतीतीच्छयोच्चरितस्य घटमानयेत्यस्य तत्परत्वानापत्तिरित्याह—**तथा चेति** । भोजनप्रकरणे प्रयुक्तस्य सैन्धवमानयेत्यस्य वाक्यस्याश्वान्यलवणप्रतीतीच्छयोच्चरितत्वान्न तत्संसर्गज्ञानं नापि तदा तत्परत्वव्यवहार इति भावः । अव्युत्पन्नवाक्ये पूर्वोक्तामव्याप्तिमुद्धरति—**शुकादीति** । **तदन्यमात्रेति** । अत्रानुच्चरितत्वमप्रतिसंहितत्वं तेनैकपरतया प्रतिसंहिते मौनिलिखितनानार्थश्लोके नातिप्रसंगः ॥

म० प्र०—श्वेतशब्दः श्वेतगुणवाचकः श्वा शुनक इत एतस्मात्स्थानादितीत्यर्थबोधकोऽपि श्वेतशब्दः इत्यभिप्रेत्य परममूलस्थादिपदार्थमाह—**श्वेतो धावतीति** । **प्रतीतिजनकत्वलक्षणेति**=प्रतीतिजननयोग्यत्वलक्षणेत्यर्थः । तद्वाक्यात्=सैन्धवमानयेति वाक्यात्, तत्परत्वव्यवहारापत्तिश्च=सैन्धवमानयेति वाक्यमश्वादिसंसर्गपरमित्यश्वादिसंसर्गपरत्वव्यवहारापत्तिश्च। **तत्प्रतीतिजनकत्वे सतीति**। लवणसंसर्गबोधजननयोग्यत्वसमानाधिकरणकलवणान्यप्रतीतीच्छयोच्चरितत्वाभाव इत्यर्थः । दोषतादवस्थ्यम्=ननु सैन्धवमानयेत्यादिवाक्याशङ्कितदोषः स्थित एव, तत्परत्वानापत्तिः=घटसंसर्गपरत्वाभावापत्तिः, तत्संसर्गज्ञानम्=अश्वादिसंसर्गज्ञानम्, तदा=भोजनकाले, तत्परत्वव्यवहारः=सैन्धवमानयेति वाक्यमश्वादिसंसर्गपरमित्यश्वादिसंसर्गपरत्वव्यवहारः।नन्वश्वलवणोभयप्रतीतीच्छयोच्चरिते सैन्धवमानयेति वाक्ये लवणान्याश्वप्रतीतीच्छयाऽनुच्चरितत्वाभावात् सैन्धवमानयेति वाक्येऽश्वलवणोभयपरत्वदशायामव्याप्तिरित्याशङ्क्य परिहरति ।परममूले **न चेति**। परममूले **तदन्यमात्रेति** । तदन्यदेव तदन्यमात्रं तदन्यस्यैव प्रतीतीच्छयाऽनुच्चरितत्वस्येत्यर्थः । यद्युभाभ्यां तच्छब्दाभ्यां लवणस्यैव ग्रहणं तदाऽश्वलवणोभयपरे सैन्धवमानयेति वाक्येऽव्याप्तिशङ्कोपपन्ना तन्निराकरणं चोपपन्नं भवति। यदि तूभाभ्यां तच्छब्दाभ्यां प्रकृताश्वलवणयोर्ग्रहणं तदा सैन्धवमानयेति वाक्ये अश्वलवणोभयपरत्वदशायामव्याप्तिशङ्कादिकमनुपपन्नमिति भावः । ननु तदितरप्रतीतीच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वं तात्पर्यमिति तात्पर्य्यलक्षणस्य लवणरूपार्थपरत्वेन प्रतिसंहिते नानार्थकपदघटिते सैन्धवमानयेत्यादिवाक्ये अश्वान्यलवणरूपार्थप्रतीतीच्छयाऽनुच्चरितत्वमादायातिव्याप्तिस्तत्राश्वान्यलवणरूपार्थप्रतीतीच्छयाऽनुच्चरितत्वस्य सत्त्वादित्याशङ्क्याह—**अत्रेति** । उक्ततात्पर्य्यलक्षणे इत्यर्थः । अप्रतिसंहितम्=एतादृशरेखोपन्यासः कर्तव्यो येन रेखोपन्यासेन लवणरूपार्थप्रतीतिः स्यादित्यादिप्रतिसंधानविषयत्वाभावः । तेन=अनुच्चरितत्वशब्देन प्रतिसंहितत्वरूपार्थस्याभिप्रेतत्वेन, एकपरतया प्रतिसंहिते=लवणरूपैकार्थपरत्वेन प्रतिसंधानविषये। **नातिप्रसंग इति** । सर्वनाम्नो बुद्धिस्थवाचकत्वनियमेन द्वितीयतत्पदेनाश्वग्रहणे प्रथमतत्पदेनाप्यश्वस्यैव परामर्शसंभवात्सैन्धवमानयेति वाक्यस्य लवणपरत्वदशायामश्वान्यलवणप्रतीतीच्छयोक्त-

प्रतिसंधानविषयत्वाभावाभावेनाश्वान्यलवणप्रतीतीच्छयाऽनुच्चरितत्वशब्देनाप्रतिसंहितत्वस्य विवक्षितत्वादश्वान्यलवणरूपप्रतीतीच्छयाऽनुच्चरितत्वमादायातिप्रसङ्गो नास्तीति भावः ॥

**उक्तप्रतीतिमात्रजननयोग्यतायाश्चावच्छेदिका शक्तिः । अस्माकं तु मते सर्वत्र कारणतायाः शक्तेरेवावच्छेदकत्वात् ॥**

**शि० म०—ननु तत्प्रतीतिजननस्वरूपयोग्यतावच्छेदकं तत्प्रतीतीच्छयोच्चरितत्वमेवान्यस्य तादृशस्याभावात्तथा च परमेश्वरप्रद्वेषिमते वेदवाक्यादावव्याप्तिरित्यत आह—उक्तेति । तर्हि शक्तिकल्पने गौरवमित्यत आह—अस्माकं त्विति । तथा च वाक्यनिष्ठवाक्यार्थज्ञानकारणता किंचिदवच्छेद्या कारणतात्वाद्वह्निनिष्ठदाहकारणतावदित्यनुमानं शक्तौ मानमिति भावः ॥**

म० प्र०—तादृशस्य=तत्प्रतीतिजननस्वरूपयोग्यतावच्छेदकस्य । न च तदन्यप्रतीतीच्छयाऽनुच्चरितत्वरूपावच्छेदकस्य सत्त्वेनान्यस्य तादृशस्याभावादिति कथनमयुक्तमिति वाच्यम् ।तदन्यप्रतीतीच्छयाऽनुच्चरितत्वापेक्षया तत्प्रतीतीच्छयोच्चरितत्वे लाघवेन तत्प्रतीतीच्छयोच्चरितत्वस्यैवावच्छेदकत्वौचित्यात्तदन्यप्रतीतीच्छयाऽनुच्चरितत्वाप्रतिसंधानेऽपि तत्प्रतीतीच्छयोच्चरितज्ञाने सति वाक्यादन्वयबोधदर्शनाच्चेति । तथा च=तत्प्रतीतीच्छयोच्चरितत्वादन्यस्य तत्प्रतीतिजननस्वरूपयोग्यतावच्छेदकस्याभावे सति । **अव्याप्तिरिति**।अन्यतात्पर्य्यलक्षणं वाच्यमिति भावः । परममूले **उक्तप्रतीतिमात्रेति**।शाब्दप्रतीतिमात्रेत्यर्थः । परममूले योग्यतायाः=शब्दनिष्ठयोग्यतायाः । तर्हि=तत्प्रतीतीच्छयोच्चरितत्वरूपावच्छेदकसत्त्वे सति,शक्तिकल्पने=तत्प्रतीतीच्छयोच्चरितत्वादन्यशब्दनिष्ठशाब्दबोधजनकतावच्छेदकशक्तिकल्पने । परममूले **शक्तेरेवावच्छेदकत्वादिति** । तथा च यथा वह्न्यादिनिष्ठदाहादिजनकतावच्छेदिका शक्तिरेव तथा शब्दनिष्ठशाब्दजनकतावच्छेदिका शक्तिरेवेति नाप्रसिद्धार्थकल्पनरूपगौरवदोष इति भावः। **किंचिदवच्छेद्येति**।न च वाक्यनिष्ठवाक्यार्थज्ञानकारणता वाक्यत्वेनावच्छेद्याऽस्तु किं शक्तिकल्पनयेति वाच्यम् । अवच्छेदकस्यान्यूनानतिरिक्तवृत्तिस्वरूपत्वेन वाक्यत्वस्यानर्थकवाक्येऽपि सत्त्वेनातिरिक्तवृत्तित्वादवच्छेदकत्वासंभवादिति ॥

**इति न कोऽपि दोषः ॥**

**शि० म०—ननु न्यायमते शक्तेरनङ्गीकारादसंभवः । न च तन्मते तत्प्रतीतीच्छयोच्चरितत्वादिकमवच्छेदकमिति युक्तमननुगमादिति नेत्याह—इति न कोऽपि दोष इति । तथाप्यवच्छेदकत्वमनुगतमिति नोक्तदोषावकाश अन्यथा पदशक्त्यवगतेरिति भावः ॥**

म० प्र०—असंभवः=तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यतावच्छेदकशक्तेर्न्यायमतेऽनङ्गीकारेणोक्ततात्पर्यलक्षणासंभवः । तन्मते=नैयायिकमते । **उच्चरितत्वादिकमिति** । अत्रादिपदेन तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वं ग्राह्यम् । न च

शुकादिवाक्याव्युत्पन्नोच्चरितवेदवाक्यादौ चाव्याप्तेर्न तत्प्रतीतीच्छयोच्चरितत्वादिकं शब्दनिष्ठशाब्दजनकतावच्छेदकमिति वाच्यम्। नैयायिकमते ईश्वरेच्छामादायैवाव्याप्तिपरिहारोपपत्तेरिति। अननुगमात्=कस्यचिन्नये तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यतावच्छेदिका शक्तिः। कस्यचिन्नये तूक्तयोग्यताया अवच्छेदकं तत्प्रतीतीच्छयोच्चरितत्वं तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वं चेत्यवच्छेदकानां नानात्वेनानुगतावच्छेदकाभावप्रसङ्गात्। तथा चानुगतशब्दनिष्ठशाब्दजनकतावच्छेदकाभावेऽनुगतकार्य्यकारणभावबुद्धिरपि न स्यादिति भावः। तथापि=तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यताया अवच्छेदकानां नानात्वेऽपि, नोक्तदोषावकाशः=शब्दनिष्ठशाब्दजनकतावच्छेदकाननुगमदोषस्य तत्प्रयुक्तानुगतकार्य्यकारणभावबुद्ध्यभावरूपदोषस्य चावसरो न, अन्यथा=नानावच्छेदकनिष्ठानुगतावच्छेदकत्वानङ्गीकारे, पदशक्तौ=पदशक्तिनिष्ठशाब्दज्ञानकारणतायाम्। अगतेः=अनिश्चयात्। पदनिष्ठशाब्दज्ञानजनकतावच्छेदकशक्तिनिष्ठानुगतावच्छेदकत्वाभावे तत्पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितघटनिष्ठेश्वरेच्छीयविशेष्यतारूपायाः पदशक्तेस्तत्तत्पुरुषीयेच्छारूपाया वा पदशक्तेः पदनिष्ठशाब्दज्ञानजनकतावच्छेदकत्वविशिष्टाया नानात्वेनानुगतकार्य्यकारणभावनिर्वचनं न स्यान्नानाविधशक्तेरवच्छेदकत्वेऽनुगतत्वे तु पदार्थज्ञानत्वावच्छिन्नं प्रति पदशक्तिज्ञानत्वेन हेतुत्वमित्यनुगतकार्य्यकारणभावस्य निर्वचनमपि संभवतीति भावः॥

**एवं तात्पर्य्यस्य तत्प्रतीतिजनकत्वरूपस्य शाब्दज्ञानजनकत्वे सिद्धे चतुर्थवर्णके तात्पर्य्यस्य शब्दज्ञानहेतुत्वनिराकरणवाक्यं तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्य्यनिराकरणपरम्, अन्यथा तात्पर्य्यनिश्चयफलकवेदान्तविचारवैयर्थ्यप्रसङ्गात्॥**

**शि० म०—ननु तात्पर्यज्ञानस्य हेतुत्वेऽपसिद्धान्तः विवरणादौ तस्य निराकृतत्वादित्याशङ्क्य निरुक्ततात्पर्यज्ञानहेतुत्वस्यान्वयव्यतिरेकप्रमाणसिद्धत्वेन तद्वाक्यस्यान्यादृशतात्पर्यनिरासपरतयाऽप्युपपत्तेर्न विरोध इत्याह—एवमिति। तात्पर्यज्ञानमात्रेहेतुत्वनिरासपरत्वे बाधकमाह—अन्यथेति॥**

म० प्र०—हेतुत्वे=शाब्दज्ञानहेतुत्वे। तस्य=तात्पर्य्यज्ञाननिष्ठशाब्दबोधहेतुत्वस्य, तात्पर्य्यज्ञानहेतुत्वस्य=तात्पर्य्यज्ञाननिष्ठशाब्दबोधहेतुत्वस्य। तद्वाक्यस्य=तात्पर्यज्ञाननिष्ठशाब्दज्ञानहेतुतानिराकरणपरविवरणवाक्यस्य, अन्यादृशतात्पर्य्यनिरासपरतया=नैयायिकोक्ततत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्य्यनिराकरणपरतया। परममूले **चतुर्थवर्णके इति**। चतुर्थसूत्रस्य या भाष्यकृद्व्याख्या तदुपरि या पञ्चपादिका तदुपरि यद्विवरणं तत्रेत्यर्थः॥

**शि० म०—ननु न तावदिदं तात्पर्यं व्यवहारोपयोगि तदितरप्रतीतीच्छयाऽनुच्चरितत्वस्यैव तत्पदप्रवृत्तिनिमित्तत्वेन शेषवैयर्थ्यात्। न च गेहे घट इति वाक्ये पटसंसर्गार्थपरतावारणाय तत्प्रतीतिजनकत्वमुपात्तमिति वाच्यम्। घटसंसर्गपरस्य तस्य**

पटसंसर्गान्यप्रतीत्युद्देश्यकत्वेन तत एव तद्वारणात्, न हि कश्चित्पटसंसर्गेच्छया गेहे घट इति प्रयुङ्क्ते। शब्दप्रयोगे अवाचकपदप्रयोगस्यान्याय्यत्वात्। प्रयोगे वा पटसंसर्गपरत्वस्येष्टत्वात्। गङ्गादिपदवल्लक्षणया तस्य तत्प्रतीतिस्वरूपयोग्यत्वाच्च। अत एव नैतत्तात्पर्य्यं शाब्दज्ञानोपयोगि विशेष्यमात्रविषयतया तस्य हेतुत्वसंभवे विशिष्टविषयतया तत्त्वे गौरवात्। न च वैपरीत्यमहं सैन्धवमानयेति वाक्यस्याश्वसंसर्गप्रतीतिजनकज्ञाने लवणपरत्वज्ञानदशायामश्वानुभवासंभवात्॥

म० प्र०—इदं तात्पर्य्यम्=तत्प्रतीतिजनकत्वे सति तदितरप्रतीतीच्छयाऽनुच्चरितत्वरूपं तात्पर्य्यम्। **तत्पदेति**। तात्पर्य्यपदेत्यर्थः। शेषवैयर्थ्यात्=सत्यन्तशब्दवैयर्थ्यात्, तस्य=गेहे घट इति वाक्यस्य। **पटसंसर्गान्येति**। पटसंसर्गान्यघटसंसर्गेत्यर्थः। तत एव=तदितरप्रतीतीच्छयाऽनुच्चरितत्वरूपतात्पर्यज्ञानादेव। तद्वारणात्=पटसंसर्गपरतावारणात्। गेहे घट इति वाक्यस्य पटसंसर्गपरताया आपादनकाले तच्छब्देन पटसंसर्गस्य ग्राह्यत्वेन पटसंसर्गेतरघटसंसर्गप्रतीतीच्छयोच्चरितत्वमेव नानुच्चरितत्वमिति गेहे घट इति वाक्यस्य न पटसंसर्गपरतेति भावः। प्रयोगे वा=गेहे घट इति वाक्यस्य पटसंसर्गेच्छया प्रयोगे तु, तस्य=गेहे घट इति वाक्यघटकघटपदस्य। **तत्प्रतीतीति**=पटसंसर्गप्रतीतीत्यर्थः। अत एव=तत्प्रतीतिजनकत्वे सति तदितरप्रतीतीच्छयाऽनुच्चरितत्वरूपतात्पर्य्यस्य गेहे घट इति वाक्यं घटसंसर्गपरमित्यादिव्यवहारोपयोगित्वाभावादेव, एतत्तात्पर्य्यम्=पूर्वोक्तविशिष्टतात्पर्य्यज्ञानम्, विशेष्यमात्रविषयतया=तदितरप्रतीतीच्छयाऽनुच्चरितत्वरूपविशेष्यमात्रविषयकत्वेन, तस्य=पूर्वोक्तविशिष्टतात्पर्य्यज्ञानस्य, तत्त्वे=शाब्दज्ञानकारणत्वे, वैपरीत्यम्=तत्प्रतीतिजनकत्वं तात्पर्य्यपदप्रवृत्तिनिमित्तं तदितरप्रतीतीच्छयाऽनुच्चरितत्वं व्यर्थमिति वैपरीत्यम्। **असंभवादिति**। तत्प्रतीतिजनकत्वरूपतात्पर्य्यस्वीकारे तु सैन्धवमानयेति वाक्यस्य लवणपरत्वज्ञानकालेऽश्वानुभवः स्यादिति भावः॥

शि० म०—न च तत्प्रतीतिजननस्वरूपयोग्यत्वमेव तात्पर्य्यं तदवच्छेदकं च तदन्यप्रतीतीच्छयाऽनुच्चरितत्वम्। तथा च तज्ज्ञानमेव हेतुरिति वाच्यम्। लाघवेन तत्प्रतीतीच्छयोच्चरितत्वस्यैवावच्छेदकत्वौचित्यात्। किंच तदन्यप्रतीतीच्छयाऽनुच्चरितत्वाप्रतिसंधानेऽपि तत्प्रतीतीच्छयोच्चरितत्वज्ञाने सति वाक्यादन्वयबोधदर्शनान्न तज्ज्ञानमन्वयधीहेतुः। न च तेन तादृशानुच्चरितत्वमनुमाय ततोऽन्वयमनुभवतीति वाच्यम्। तद्व्याप्तिमविदुषोऽपि तेनान्वयबोधस्यानुभवसिद्धत्वात्। न च तदपि तस्य त्वयैव दूषितत्वात् एतदप्रतिसंधानेऽपि तदन्यप्रतीतीच्छयाऽनुच्चरितत्वज्ञानादन्वयबोधाच्च। तस्मान्नोक्ततात्पर्य्यं कारणमिति। अत्र ब्रूमः। तत्प्रतीतीच्छयोच्चरितत्वं तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वं च तात्पर्य्यम्। न च परस्परव्यभिचारान्नोभयमपि हेतुः स्यादिति वाच्यम्। तदन्यमात्रप्रतीत्युद्देश्यकत्वज्ञानविरोधिज्ञानविषयज्ञानत्वेनानुगतेन हेतुत्वाभ्युपगमात्॥

**म० प्र०**—तज्ज्ञानमेव=तदन्यप्रतीतीच्छयाऽनुच्चरितत्वरूपोक्ततात्पर्य्यावच्छेदकज्ञानजन्यतत्प्रतीतिजननरूपयोग्यत्वरूपतात्पर्य्यज्ञानमेव, हेतुः=शाब्दज्ञानकारणम् । लाघवेन=तदन्यप्रतीतीच्छयाऽनुच्चरितत्वनिष्ठोक्ततात्पर्यावच्छेदकत्वाभ्युपगमापेक्षया तत्प्रतीतीच्छयोच्चरितत्वनिष्ठोक्ततात्पर्यावच्छेदकत्वाभ्युपगमे शरीरकृतादिलाघवेन, तज्ज्ञानं=तदन्यप्रतीतीच्छयाऽनुच्चरितत्वरूपावच्छेदकज्ञानजन्योक्ततात्पर्य्यज्ञानम्, तेन=तत्प्रतीतीच्छयोच्चरितत्वरूपहेतुना, तादृशानुच्चरितत्वम्=तदन्यप्रतीतीच्छयाऽनुच्चरितत्वम् । अनुमाय=घटमानयेदं वाक्यं तदन्यप्रतीतीच्छयाऽनुच्चरितं तत्प्रतीतीच्छयोच्चरितत्वाद्यन्नैवं तन्नैवं पटमानयेति वाक्यवदित्यनुमाय । ततः=तदन्यप्रतीतीच्छयाऽनुच्चरितत्वज्ञानजन्योक्ततात्पर्य्यज्ञानात् । तद्व्याप्तिम्=तत्प्रतीतीच्छयोच्चरितत्वतदन्यप्रतीतीच्छयाऽनुच्चरितत्वयोर्व्याप्तिम्, तेन=तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यज्ञानेन । तदपि=तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्य्यमपि, तस्य=तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यस्य । **एतदिति** । तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्य्यज्ञानेऽपीत्यर्थः । **परस्परव्यभिचारादिति** । व्यभिचारश्च व्यापकाभाववद्वृत्तित्वम् । यत्र कारणाभावस्तत्र कार्य्याभाव इति शाब्दज्ञानरूपकार्य्याभावो व्यापकः स तु नास्ति तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वज्ञाने सति तत्प्रतीतीच्छयोच्चरितत्वरूपकारणाभावेऽपि शाब्दज्ञानरूपकार्य्यसत्त्वादेवं तत्प्रतीतीच्छयोच्चरितत्वज्ञाने सति तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वरूपकारणाभावेऽपि शाब्दज्ञानरूपकार्य्यसत्त्वादिति परस्परव्यतिरेकव्यभिचारात् । न च व्यभिचारस्य कारणाभावनिष्ठत्वेन कथं तादृशोच्चरितत्वानुच्चरितत्वनिष्ठो व्यभिचार इति वाच्यम् । व्यभिचारस्य स्वाश्रयप्रतियोगित्वसंबन्धेन तादृशोच्चरितत्वानुच्चरितत्वरूपतात्पर्य्यवृत्तित्वादित्यर्थः । **तदन्यमात्रप्रतीत्युद्देश्यकत्वेति** । तदन्यमात्रप्रतीत्युद्देश्यकत्वज्ञानं घटमानयेति वाक्यं घटान्यमात्रप्रतीत्युद्देश्यकमिति ज्ञानं तस्य विरोधिज्ञानं घटमानयेति वाक्यं घटप्रतीतीच्छयोच्चरितमिति घटान्यमात्रप्रतीतीच्छयाऽनुच्चरितमिति च तद्विषयौ तादृशोच्चरितत्वानुच्चरितत्वे तज्ज्ञानत्वेनेत्यर्थः ॥

**शि० म०**—न हि तत्प्रतीत्युद्देश्यकत्वज्ञाने तदन्यमात्रप्रतीत्युद्देश्यकत्वज्ञानमुदेति । न चोक्ततात्पर्य्यज्ञानं न कारणं मानाभावादिति वाच्यम् । सैन्धवमानयेति वाक्यस्य लवणपरत्वज्ञानदशायां सत्यामप्याकाङ्क्षादिघटितसामग्र्यामश्वपरत्वज्ञानविरहेणाश्वसंसर्गज्ञानाभावात् । अयमेति पुत्रो राज्ञः, पुरुषोऽपसार्य्यतामित्यत्रान्वयपरत्वसंदेहे तद्व्यतिरेकनिश्चये च शाब्दज्ञानप्रतिबन्धाच्च । केचित्तु तात्पर्य्यनिश्चयस्य शाब्दज्ञानप्रतिबन्धकतत्संशयतद्व्यतिरेकनिश्चयनिवृत्त्युपक्षीणत्वान्न हेतुत्वमिति तन्न, सिद्धान्ते प्रतिबन्धकाभावस्य हेतुत्वानभ्युपगमात् । किंच यत्संशयेत्यादिव्याप्तिबलात्तात्पर्य्यनिश्चयो हेतुः । न तु तद्व्यतिरेकज्ञानाभावः । तस्याभावत्वेन गुरुत्वात् । अन्यथा व्याप्तिनिश्चयस्याप्यनुमित्यहेतुत्वापत्तिरिति ॥

**म० प्र०**—ज्ञानयोर्विरोधित्वमेव स्फुटयति—**न हीति** । तत्प्रतीत्युद्देश्यकत्वज्ञाने=घटमानयेति वाक्यं घटसंसर्गप्रतीत्युद्देश्यकमिति ज्ञाने, तदन्यमात्रप्रतीत्युद्देश्यकत्वज्ञानम्=घटमानयेति

वाक्यं घटसंसर्गान्यपटादिसंसर्गप्रतीत्युद्देश्यकमिति ज्ञानम्, अन्वयपरत्वसंदेहे=राज्ञ इति षष्ठ्यन्त-पदार्थस्य पुरुषपदार्थेनान्वयः पुत्रपदार्थेन वाऽन्वयः इत्यन्वयपरत्वसंदेहे, तद्व्यतिरेकनिश्चये=षष्ठ्यन्तराजपदार्थस्य पुरुषपदार्थेन नान्वय इत्यन्वयाभावनिश्चये, शाब्दज्ञानप्रतिबन्धाच्च=राजसंबन्धी पुरुष इति शाब्दबुद्ध्यनुदयाच्च, तथा च यत्संशयव्यतिरेकौ यत्र प्रतिबन्धकौ तन्निश्चयस्तत्र हेतुरिति व्याप्तिबलात्तात्पर्य्यनिश्चयो हेतुरिति भावः। **अनभ्युपगमादिति**। तात्पर्य्यसंशयतात्पर्य्याभावनिश्चयौ शाब्दज्ञानप्रतिबन्धकौ तदभावः शाब्दज्ञानकारणमिति तात्पर्य्यसंशयव्यतिरेकनिश्चयरूपशाब्दज्ञानप्रतिबन्धकाभावस्य यद्यस्माकं नये शाब्दज्ञानकारणत्वं स्यात्तदा तात्पर्य्यनिश्चयस्य तात्पर्य्यसंशयव्यतिरेकनिश्चयरूपप्रतिबन्धकाभावसंपादकत्वेन शाब्दबुद्धिस्वतन्त्रकारणत्वं न स्यात्प्रतिबन्धकाभावस्य तु कारणत्वमेव नास्तीति तात्पर्य्यनिश्चयः शाब्दज्ञानस्य स्वतन्त्रमेव कारणमिति भावः। यत्संशयेत्यादिव्याप्तिबलात्=यत्संशयव्यतिरेकौ यत्र प्रतिबन्धकौ तन्निश्चयस्तत्र हेतुरिति व्याप्तिसामर्थ्यात्, तद्व्यतिरेकज्ञानाभावः=तात्पर्य्याभावज्ञानाभावः। तस्य=तात्पर्य्याभावज्ञानाभावस्य,गुरुत्वात्=तात्पर्य्यनिश्चयत्वे शाब्दबुद्धिकारणतावच्छेदकत्वापेक्षया तात्पर्य्याभावज्ञानाभावत्वे शाब्दज्ञानकारणतावच्छेदकत्वे गौरवात्, अन्यथा=तात्पर्य्याभावज्ञानाभावस्यैव शाब्दबुद्धिकारणत्वाभ्युपगमे। **अहेतुत्वापत्तिरिति**। व्याप्त्यभावज्ञानाभावस्यैवानुमितिहेतुत्वसम्भवादिति शेषः॥

**केचित्तु शाब्दज्ञानत्वावच्छेदेन न तात्पर्य्यज्ञानं हेतुरित्येवंपरं चतुर्थवर्णकवाक्यम्, तात्पर्य्यसंशयविपर्ययोत्तरशाब्दज्ञानविशेषे च तात्पर्य्यज्ञानं हेतुरेव, इदं वाक्यमेतत्परमुतान्यपरमिति तात्पर्य्यसंशये तद्विपर्यये च तदुत्तरवाक्यार्थनिश्चयस्य तात्पर्य-निश्चयं विनाऽनुपपत्तेरित्याहुः॥**

**शि० म०**—अभेदरत्नकारमतमाह—**केचित्त्विति**। अत्रेदमनभिमतिबीजम्। तात्पर्य्यज्ञानजन्यतावच्छेदकं शाब्दज्ञानत्वं लाघवात्। न तु तात्पर्य्यसंशयविपर्य्ययोत्तरशाब्दज्ञानत्वं गौरवात्। न चासत्यपि तात्पर्यनिश्चये तत्संशयादिविरहे शाब्दधीदर्शनेन व्यभिचारान्न हेतुत्वमिति वाच्यम्। उक्तलाघवेन तद्धेतुत्वकल्पनौ तदभावे शाब्दज्ञानस्यैवासिद्धेः। अन्यथा व्याप्तिनिश्चयोऽपि तत्संशयविपर्ययोत्तरानुमितौ हेतुः स्यादिति महद्वैषम्यमापद्येतेति॥

**म० प्र०**—परममूले **शाब्दज्ञानत्वावच्छेदेनेति**। शाब्दज्ञानत्वमवच्छेदः कार्य्यतावच्छेदकं यस्मिञ्छाब्दज्ञाने तत्तथा तेन। निरूपितत्वं तृतीयार्थस्तथा च शाब्दज्ञानत्वावच्छिन्नजन्यतानिरूपितहेतुतावत्तात्पर्य्यज्ञानमित्यर्थः। परममूले तात्पर्यसंशयविपर्ययोत्तरशाब्दज्ञानविशेष=तात्पर्यसंशयविपर्ययविरोधिज्ञानरूपतात्पर्यज्ञानोत्तरशाब्दज्ञानविशेषे, परममूले केचिदित्यनेन सूचितमस्वारस्यं स्फुटयति—**अत्रेति**। परममूले परममूलोक्तकेषांचिन्मते इत्यर्थः। अनभिमतिबीजम्=

अनङ्गीकारबीजम्, तात्पर्य्यज्ञानजन्यतावच्छेदकम्=तात्पर्य्यज्ञाननिष्ठजनकतानिरूपितजन्यतावच्छेदकम्। **विपर्य्ययेति**। तात्पर्य्याभावनिश्चयेत्यर्थः। गौरवात्=शाब्दज्ञानत्वे तात्पर्य्यनिश्चयकार्य्यतावच्छेदकत्वापेक्षया तात्पर्य्यसंशयतात्पर्य्याभावनिश्चयविरोधिज्ञानरूपतात्पर्यज्ञानोत्तरशाब्दज्ञानत्वे तात्पर्य्यज्ञानकार्य्यतावच्छेदकत्वे गौरवात्। उक्तलाघवेन=तात्पर्य्यज्ञानजन्यतावच्छेदकमित्यादिवाक्योक्तकार्य्यतावच्छेदकलाघवेन, तद्धेतुत्वक्लृप्तौ=तात्पर्य्यज्ञाननिष्ठशाब्दबुद्धिहेतुत्वनिश्चये, तदभावे=तात्पर्यनिश्चयाभावे, अन्यथा=तात्पर्य्यसंशयतात्पर्य्याभावनिश्चयविरोधिज्ञानरूपतात्पर्यज्ञानोत्तरशाब्दज्ञानत्वावच्छिन्नं प्रत्येव तात्पर्यनिश्चयस्य हेतुत्वाङ्गीकारे, तत्संशयविपर्ययोत्तरानुमितौ—व्याप्तिसंशयव्याप्त्यभावनिश्चयविरोधिज्ञानरूपव्याप्तिज्ञानोत्तरानुमितौ। **हेतुः स्यादिति**। न सर्वानुमिताविति शेषः। वैषम्यं=सिद्धान्तानुपपन्नत्वम्॥

**तच्च तात्पर्यं वेदे मीमांसापरिशोधितन्यायादेवावधार्य्यते। लोके तु प्रकरणादिना॥**

**शि० म०—नन्वेवमपि निरुक्तं तात्पर्यज्ञानं न हेतुः तस्य वाक्यार्थगर्भत्वेन प्रथमं दुर्ग्रहत्वात्। न च प्रमाणान्तरेण तद्ग्रहः। वैदिकवाक्यार्थस्यापूर्वादेर्मानान्तरायोग्यत्वात्, प्रमाणान्तरेण प्रथमं तद्ग्रहे च शब्दवैयर्थ्यादित्यत आह—तच्चेति। वाक्यार्थगर्भमपि तात्पर्य्यं वेदे लाघवानुगृहीतेनानुमानेन तदुपजीविना वा प्रमाणान्तरेण निश्चीयते यथा कपिञ्जलानालभेतेत्यत्र लाघवात्त्रित्वसंख्यापरत्वं न तु त्रित्वादिपरार्द्धपर्य्यन्तसंख्यापरत्वं गौरवात्। लोके तु तात्पर्य्यं प्रकरणादिलिङ्गकानुमानेन प्रत्यक्षादिना वाऽवधार्य्यते इत्यर्थः। न चैवं वाक्यार्थस्याप्यवगमेनाजनितान्वयबोधत्वलक्षणाकाङ्क्षाविरहाच्छाब्दज्ञानं न स्यादिति वाच्यम्। तथापि तच्छब्दजन्यवाक्यार्थज्ञानाभावात्तस्यैवाकाङ्क्षात्वादिति भावः॥**

**म० प्र०**—एवमपि=तात्पर्य्यनिश्चयस्योक्तव्यभिचाराभावेऽपि। उक्तरीत्या सामान्यशाब्दबुद्धित्वे कार्य्यतावच्छेदकत्वे लाघवेऽपीति वा। तस्य=उक्ततात्पर्य्यस्य। वाक्यार्थगर्भत्वेन=वाक्यार्थः=पदार्थसंसर्गः परस्परसंसृज्यमानपदार्थो वा गर्भे=कुक्षौ शरीरे वा यस्य तात्पर्यस्य तत्तथा तस्य भावस्तत्त्वं तेन। तत्प्रतीतीच्छयोच्चरितत्वे सतीत्यादिवाक्योक्ततात्पर्य्यलक्षणे तच्छब्दार्थसंसर्गग्रहणाद्वाक्यार्थघटितत्वेनेति यावत्। प्रथमम्=शाब्दबुद्धेः पूर्वम्। प्रमाणान्तरेण=सैन्धवमानयेति वाक्यं लवणपरं सूपे लवणं नास्तीति वाक्यानन्तरमुच्चार्य्यमाणत्वाद्यन्नैवं तन्नैवं गर्दभमानयेति वाक्यवदित्याद्यनुमानादिप्रमाणेन, तद्ग्रहः=शब्दार्थग्रहः। अपूर्वादेः=धर्माधर्मादेः। अत्रादिपदेन स्वर्गादिसाधनताविशिष्टयागादिर्गृह्यते इति। परममूले **मीमांसेति**। तर्कात्मकमानसव्यापारविशेषाभिन्नमीमांसया परिशोधितो निर्दुष्टः सहकृतो वा यो न्यायोऽनुमानं तस्मादित्यर्थः। प्रथमम्=शाब्दबुद्धेः पूर्वम्। तद्ग्रहे=शब्दार्थग्रहे। **शब्दवैयर्थ्यादिति**। शब्दप्रमाणप्रवृत्तेः पूर्वमेव शब्दार्थस्य गृहीतत्वेन शब्दप्रमाणस्य व्यर्थत्वादित्यर्थः। वेदे=वैदिकवाक्ये, लाघवानुगृहीतेन=यत्र प्रमाणवा-

क्यत्वं तत्र पदार्थसंसर्गपरत्वमिति सामान्यव्याप्तेः स्वर्गकामो यजेतेत्यादौ वैदिकवाक्यस्य बलवदनिष्टाननुबन्धित्वादिविध्यर्थसंसर्गपरत्वापेक्षयाऽपूर्वाभिन्नविध्यर्थसंसर्गपरत्वे लाघवमिति लाघवज्ञानसहकृतेन, अनुमानेन=स्वर्गकामो यजेतेत्यादिवैदिकवाक्यं विध्यर्थापूर्वसंसर्गपरं वैदिकप्रमाणवाक्यत्वाद्यन्नैवं तन्नैवं वन्ध्यासुतो युध्यतीत्यादिवाक्यवद्वैदिकवाक्यं पदार्थसंसर्गपरं प्रमाणवाक्यत्वात्पटमानयेत्यादिवाक्यवदित्याद्यनुमानेन, तदुपजीविना=अनुमानोपजीविना वैदिकवाक्यनिष्ठापूर्वसंसर्गपरत्वविषयकानुमित्युत्तरभाविनेति यावत्, प्रमाणान्तरेण=वैदिकवाक्यमपूर्वसंसर्गतात्पर्य्यकमित्याद्याप्तवाक्येन, निश्चीयते=पुरुषेण वैदिकवाक्यमपूर्वसंसर्गपरमिति निश्चयविषयः क्रियते । स्वयमपि लाघवानुगृहीतानुमानेन तात्पर्य्यनिश्चयोदाहरणमाह—**यथेति**। अत्र कपिञ्जलशब्दः "तित्तिरिः स्यात्कपिञ्जलः" इति त्रिकाण्डशेषात्तित्तिरेति ख्यातस्य वाचकस्तथा च लाघवात्कपिञ्जलानिति द्वितीयान्तकपिञ्जलशब्दस्य त्रित्वादिपरार्द्धपर्य्यन्तसंख्यावत्कपिञ्जलसंसर्गपरत्वापेक्षया त्रित्वसंख्यावत्कपिञ्जलसंसर्गपरत्वे लाघवमिति लाघवज्ञानसहकृतात्कपिञ्जलानालभेतेति वाक्यं पदार्थसंसर्गपरं प्रमाणवाक्यत्वादित्याद्यनुमानादित्यर्थः। लोके तु=लौकिकवाक्ये तु प्रकरणादिलिङ्गकानुमानेन=सैन्धवमानयेति वाक्यं लवणसंसर्गपरं लवणान्यबोधकान्यत्वे सति भोजनकाले उच्चरितत्वाल्लवणमानयेति वाक्यवदिति प्रकरणादिघटितलिङ्गकानुमानेन, प्रत्यक्षादिना=घटमानयेति वाक्यं घटप्रतीतीच्छयोच्चरितमित्यलौकिकमानसप्रत्यक्षादिना घटान्यमात्रप्रतीतीच्छयाऽनुच्चरितमित्यलौकिकमानसप्रत्यक्षादिना वा, आदिपदेनाप्तवाक्यं ग्राह्यमिति । **अजनितान्वयबोधत्वेति** । पदार्थान्तरव्यतिरेकप्रयुक्तानुत्पादितान्वयबोधकत्वेत्यर्थः । तथापि संसर्गबोधस्य मानान्तरजन्यत्वेऽपि । **तच्छब्देति** । घटमानयेत्यादिशब्देत्यर्थः । तस्यैव=तच्छब्दजन्यवाक्यार्थज्ञानाभावस्यैव ॥

**तत्र लौकिकवाक्यानां मानान्तरावगतार्थतयाऽनुवादकत्वम् ॥**

**शि० म०—ननु शाब्दज्ञानत्वावच्छेदेन तात्पर्य्यज्ञानस्य हेतुत्वे लौकिकवाक्यवद्वेदस्यानुवादकतापत्तिः, तात्पर्य्यग्रहे तद्घटकवाक्यार्थस्य भानात्। तथा च लौकिकवाक्यमनुवादकं न वैदिकमिति राद्धान्तो भज्येतेत्याशङ्क्य किमवश्यापेक्षणीयनिरपेक्षप्रमाणजनितसमानविषयावगतिविशिष्टार्थबोधकत्वमनुवादकत्वं वेदस्यापद्यते स्वानुपजीविप्रमाणजन्यसमानप्रकारविशेष्यकप्रमितिविषयत्वयोग्यार्थबोधकत्वं वा। नाद्यः, प्राभाकरसंमतस्यास्यास्माभिर्लोकेऽप्यनङ्गीकारादित्यभिप्रेत्य द्वितीयं दूषयति—तत्रेति । तयोर्मध्ये इत्यर्थः ॥**

**म० प्र०—शाब्दज्ञानत्वावच्छेदेनेति** । शाब्दज्ञानत्वावच्छिन्नजन्यतानिरूपिततात्पर्य्यनिश्चयनिष्ठजनकतास्वीकारे इत्यर्थः । तात्पर्य्यग्रहे=तापत्पर्य्यग्रहकाले । **तद्घटकेति**=तात्पर्य्यघटकेत्यर्थः । **अवश्यापेक्षणीयेति** । सर्ववादिसंमतत्वेनानुमानादिहेतुत्वेन चावश्यापेक्षणीयनिरपेक्षप्रमाणं प्रत्यक्षप्रमाणं तज्जनिततुल्यविषयकावगतिरग्निनिष्ठहिमनाशकत्वबुद्धिस्त-

द्विशिष्टार्थबोधकत्वमग्निनिष्ठहिमनाशकत्वबुद्धिविशिष्टाग्निनिष्ठहिमनाशकत्वरूपार्थविषयकबोधजनकत्वमग्निर्हिमस्य भेषजमिति वाक्ये इत्यनुवादकत्वमित्यर्थः । **स्वानुपजीवीति** । शब्दप्रमाणानधीनप्रत्यक्षादिप्रमाणजन्यतुल्यप्रकारविशेष्यकप्रमितिविषयतायोग्याग्निनिष्ठहिमनाशकत्वरूपार्थविषयकबोधजनकत्वमग्निर्हिमस्य भेषजमिति वाक्ये इत्यनुवादकत्वमित्यर्थः। **अनङ्गीकारादिति** । लौकिकानुवादकवाक्यानामप्यवगतिविशिष्टार्थविषयकबोधजनकत्वासंभवादिति शेषः ॥

**वेदे तु वाक्यार्थस्यापूर्वतया नानुवादकत्वम् ॥**

शि० म०—अपूर्वतयेति । स्वानुपजीविप्रमाणजन्यसमानप्रकारविशेष्यकप्रमितिविषयत्वायोग्यतयेत्यर्थः। तथा च तात्पर्य्यग्राहकेण वैदिकानीमानि पदानि स्वर्गकामनियोज्यकयागविषयकनियोगपराणीत्यवगमेऽपि स्वर्गकामनियोज्यकं यागविषयकं कार्यमित्यनवगमान्न वेदस्यानुवादकत्वमिति भावः ॥

म० प्र०—तात्पर्यग्राहकेण=पूर्वोक्तलाघवसहकृतानुमानादिना तात्पर्यग्राहकेण । **नियोज्यकेति** । यः कार्य्यं स्वकीयत्वेन बुध्यते स नियोज्य इति लक्षणलक्षितनियोज्यवानित्यर्थः। नियोगपराणि=कार्य्यप्रतिपादकानि, कार्य्यं=कृतिसाध्यमपूर्वम् ॥

**तत्र लोके वेदे च कार्य्यपराणामिव सिद्धार्थानामप्यपूर्वतया प्रामाण्यम्, पुत्रस्ते जातः कन्या ते गर्भिणी इत्यादिषु सिद्धार्थेष्वपि पदानां सामर्थ्यावधारणात् ॥**

शि० म०—नन्वस्त्वाकाङ्क्षादिसहकारिवशाच्छब्दस्य पृथक् प्रामाण्यं तथापि न वेदान्तानां ब्रह्मणि प्रामाण्यं तेषां सिद्धार्थबोधकत्वात् । कार्यान्विते एव संगतिग्रहेण तत्पराणामेव सर्वत्र प्रामाण्यावधारणात्। तथा हि। प्रयोजकवृद्धोदीरित 'गामानय' इति वाक्यश्रवणसमनन्तरभाविप्रयोज्यवृद्धसमवेतगवानयनचेष्टामुपलभमानो बालस्तया तत्कारणं गवानयनगोचरप्रवृत्तिमनुमाय तदनुमिते च कार्य्यसंसृष्टपदार्थज्ञाने वाक्यस्य सामर्थ्यमन्वयव्यतिरेकाभ्यां प्रतिपद्यते पुनश्च गां पश्य गां बधान अश्वमानयेत्यादिप्रयोगान्तरेषु आवापोद्वापाभ्यां गवि गोपदसामर्थ्यं गृह्णन् कार्यान्विते एव गृह्णाति। अन्यथा प्रथमावगतकार्य्यान्वितव्युत्पत्तिबाधापत्तेः । न च सिद्धार्थेऽपि प्रथमं व्युत्पत्तिग्रहः। हानोपादानक्रियानन्विताबुभुत्सिततया वक्तृविवक्षाभावेन शब्दस्यैव तत्राप्रयोगात्। प्रयोगे वा अनभिहितक्रियापदत्वात्तस्मान्न बालो व्युत्पद्यते लिङ्गचेष्टादेरभावात्। तस्मात्कार्य्यान्वितार्थेषु पदानां शक्तिस्ततश्च सिद्धार्थानां न प्रामाण्यमिति। तदेतन्निराकरोति—तत्रेति । इदमत्राकूतम्। कार्य्यान्विते प्रथमं वाक्यसामर्थ्यग्रहेऽपि न तदनुरोधात्तत्रैव पदवाच्यत्वं गौरवात् । अन्यथा प्रमाणान्तरग्राह्यत्वस्याव्यभिचारात् तद्विशिष्टस्य वाच्यत्वप्रसङ्गः, किंच कार्य्यान्वितत्वमितरान्वितत्वं वा

न वाच्यतावच्छेदकं कार्य्यस्य तद्वाचकलिङ्गादिलभ्यत्वात्, अन्वयस्य च वाक्यादेव लाभात्, अनन्यलभ्यः शब्दार्थ इति न्यायात्, अन्यथाऽन्वयविशेषोऽपि वाच्यः स्यादिति वाक्यस्यानुवादकत्वापत्तिः। किंच कार्य्यस्य कार्यान्तराभावान्न कार्य्यान्वयोऽवच्छेदकः। यत्तु केवलार्थे पदशक्तिग्रहे वाक्यस्य प्रथमगृहीता शक्तिः कार्य्यान्विते बाध्येतेति तदयुक्तमिष्टत्वात्। पुत्रस्ते जात इत्यादौ भूतार्थेऽपि प्रथमं व्युत्पत्तिग्रहाच्च। न च तत्र व्युत्पत्तिग्रहाभावः हर्षादेस्तल्लिङ्गत्वात्। न च सुखप्रसवादिनाऽपि तदुत्पत्तिः। पुत्रपादाङ्कितपटप्रदर्शनवत्सुखप्रसवसूतकस्याभावात्। ततश्च परिशेषात्पुत्रजन्मसिद्धौ तत्र पदवाच्यत्वग्रहः। ततश्च "दृष्टचैत्रसुतोत्पत्तेश्चरणाङ्कितवाससा। वार्त्ताहारेण यातस्य परिशेषविनिश्चितिः॥" इति॥

म० प्र०—तत्पराणामेव=कार्य्यपराणां वाक्यानामेव, सर्वत्र=वेदे लोके च, बालः=अव्युत्पन्नपुरुषः, तया=चेष्टया, तत्कारणम्=क्रियाकारणम्, प्रवृत्तिम्=प्रवृत्त्याख्ययत्नम्, अनुमाय=अयं प्रयोज्यवृद्धः गवानयनगोचरप्रवृत्तिमान् गवानयनगोचरचेष्टावत्त्वान्मद्वदित्यनुमाय। इयं क्रिया प्रयत्नजन्या विलक्षणक्रियात्वात्स्वीयक्रियावदित्यनुमाय वा, तदनुमिते=अयं प्रयोज्यवृद्धःकार्य्यसंसृष्टपदार्थगोचरज्ञानवान् प्रवृत्तिमत्त्वान्मद्वदिति प्रवृत्त्यनुमिते, अन्वयव्यतिरेकाभ्याम्=गामानयेति वाक्यसत्त्वे आनयनसंसृष्टगोपदार्थगोचरज्ञानसत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्याम्,आवापोद्वापाभ्याम्=कस्यचित्पदस्योपादानमावापः कस्यचित्पदस्य त्याग उद्वापस्ताभ्याम्, गवि=कार्य्यान्वितगोपदार्थे, कार्यान्विते एव गृह्णाति=कालान्तरेऽपि कार्य्यान्विते एव गोपदार्थे सामर्थ्यं गृह्णाति। क्रियापदं विना कालान्तरेऽपि वाक्यार्थज्ञानासंभवादिति शेषः। अन्यथा=कालान्तरे कार्य्यान्वितगोपदार्थादौ शक्तिग्रहानङ्गीकारे। **प्रथमावगतेति**। प्रयोजकवृद्धोदीरित 'गामानय' इति वाक्यश्रवणकालावगतेत्यर्थः। व्युत्पत्तिग्रहः=शक्तिग्रहः। तत्र=सिद्धार्थे। ननु ब्रह्मणि हानोपादानक्रियाभावेऽपि श्रोतुर्बुभुत्सिततया वक्तृविवक्षासत्त्वेन सिद्धार्थेऽपि प्रयोगो भवत्येवेत्याशङ्क्याह—**प्रयोगे वेति**। तस्मात्=सिद्धार्थबोधकवाक्यात्, लिङ्गचेष्टादेः=शक्तिग्रहहेतुभूतचेष्टादेः। परममूले **तत्रेति**। वैदिकवाक्यानामनुवादकत्वाभावे सतीत्यर्थः। **वाक्यसामर्थ्येति**। वाक्यघटकपदशक्तीत्यर्थः। तदनुरोधात्=कार्य्यान्विते प्रथमं पदशक्तिग्रहानुरोधात्, तत्रैव=कार्य्यान्विते एव, पदवाच्यत्वम्=पदशक्तिः, गौरवात्=पदार्थत्वस्य शक्तिविषयतावच्छेदकत्वापेक्षया कार्य्यान्वितपदार्थत्वस्य शक्तिविषयतावच्छेदकत्वे गौरवात्। अन्यथा=कार्य्यान्वयस्याव्यभिचारेण प्रथमगृहीतकार्य्यान्विते एव पदवाच्यत्वाङ्गीकारे गौरवानङ्गीकारे इति वा, तद्विशिष्टस्य=प्रमाणान्तरग्राह्यत्वविशिष्टस्य। **वाच्यत्वप्रसङ्ग इति**। प्रत्यक्षादिना सामान्यतो गृहीत एव शक्तिग्रहसंभवेनात्यन्ताज्ञाते शक्तिग्रहासंभवात् प्रमाणान्तरग्राह्यत्वस्याव्यभिचारेण तद्विशिष्टस्य वाच्यत्वं स्यादेवेति भावः। कार्य्यान्वितत्वं=कार्य्यान्वयः,वाच्यतावच्छेदकं=शक्तिविषयतावच्छेदकम्, अन्यथा=अनन्यलभ्यः शब्दार्थ इति न्यायानङ्गीकारे, अन्वयविशेषः=वाक्यार्थत्वेनाभिमतानयनादिप्रतियोगिकान्वयः, वाच्यः=पदवाच्य-

लिङर्थे कार्य्ये लिङ्पदस्य शक्तिग्रहो न स्याल्लिङर्थकार्य्ये कार्य्यान्तरान्वयाभावादिति । कार्य्यान्वयो न वाच्यतावच्छेदक इत्याह—**कार्य्यस्ये** । लिङर्थापूर्वस्येत्यर्थः । भूतार्थेऽपि=सिद्धार्थेऽपि । तत्र=सिद्धार्थे । हर्षादेः=चैत्रनिष्ठहर्षमुखप्रसादादेः । तल्लिङ्गत्वात्=चैत्रो हर्षवान् मुखप्रसादवत्त्वान्मद्वत् चैत्र-हर्ष इष्टलाभज्ञानजन्यः हर्षत्वान्मद्धर्षवत् चैत्रीयमिष्टज्ञानमेतद्वाक्यजन्यमेतद्वाक्यान्वयव्यतिरेकप्रयोज्या-न्वयव्यतिरेकवत्त्वाद्यत्र यदन्वयव्यतिरेकप्रयोज्यान्वयव्यतिरेकवत्त्वं तत्र तज्जन्यत्वमिति सामान्यव्याप्त्या वटवदित्यव्युत्पन्नपुरुषस्य शक्तिग्राहकलिङ्गत्वात्, तदुत्पत्तिः=चैत्रनिष्ठहर्षादिलिङ्गोत्पत्तिः । तत्र=पुत्रे, पदवाच्यत्वग्रहः=अगृहीतपुत्रपदशक्तिकपुरुषनिष्ठपुत्रपदवाच्यत्वज्ञानम्, वार्ताहारेण=दूतेन ॥

**अत एव वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यम् । यथा चैतत्तथा विषयपरिच्छेदे वक्ष्यते । तत्र वेदान्तानां नित्यसर्वज्ञपरमेश्वर-प्रणीतत्वेन प्रामाण्यमिति नैयायिकाः ॥**

**शि० म०—अत एवेति** । यत एव सिद्धार्थे वाक्यानां प्रामाण्यमित्यर्थः । ननु तथापि वेदान्तानां ब्रह्मणि न प्रामाण्यं तेषां प्रतिपत्तिविधिपरत्वेन तत्परत्वा-भावात् । सत्यं ज्ञानमित्येवमादीनां च विध्यपेक्षितविषयसमर्पकत्वात्, तथा च "वाचं धेनुमुपासीत" इतिवन्न विषयब्रह्मपरा वेदान्ता इति । तत्राह—**यथा चेति** । ननु वेदान्तिमते वेदमात्रस्य पुरुषाधीनोत्पत्तिकतया पुंदोषवत्त्वसंभवाल्लौकिक-वाक्यवद्वेदान्तानां न प्रामाण्यमित्याशङ्क्य स्वयं प्रकारान्तरेण वेदान्तानां प्रामाण्यं साधयितुं प्रथमं पराभिमतं तत्प्रकारमनूद्य दूषयति—**तत्रेत्यादिना** । वेदान्तग्रहणं वेदमात्रोपलक्षणम् । **नित्येति** । स्वतन्त्रेति शेषः । सर्वज्ञेश्वरप्रणीतत्वस्य वेदान्तिभि-रप्यभ्युपगमादित्यवधेयम् । वेदस्य पुरुषाधीनोत्पत्तिकत्वेन पुंदोषादप्रामाण्यं स्यादित्यत उक्तं—**सर्वज्ञेति** । यदि मन्वादयोऽपि सर्वज्ञास्तदा तत्प्रणीतत्वेन नानात्वाद्गौरवेण न तत्प्रणीतत्वमिति भावः ।

**म० प्र०**—प्रतिपत्तिविधिपरत्वेन=उपासनाविधिपरत्वेन । तत्परत्वाभावात्=ब्रह्मपरत्वाभावात् । **विषयेति**=उपासनाविषयेत्यर्थः । तत्प्रकारं=वेदनिष्ठप्रमाण्यनिश्चयकारणम् । परममूले **तत्रेति** । वादिषु मध्ये इत्यर्थः ॥

**वेदानां नित्यत्वेन निरस्तसमस्तपुंदूषणतया प्रामाण्यमिति मीमांसकाः । अस्माकं तु मते वेदो न नित्यः उत्पत्तिमत्त्वात् । उत्पत्तिमत्त्वं च "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः" इत्यादिश्रुतेः । नापि वेदानां त्रिक्षणावस्थायित्वम् ॥**

**शि० म०**—भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषाभाव एव प्रामाण्ये हेतुः ॥ तत्र हेतुमाह—**नित्यत्वेनेति** । किं वर्णनित्यत्वं वेदस्य निर्दोषत्वे हेतुरुतानु-पूर्वीविशिष्टवेदनित्यत्वं वा । नाद्यः, लौकिकवाक्यस्यापि निर्दोषतापत्तेः ।

न द्वितीयः,वर्णानामनित्यत्वेन तत्समूहात्मकपदस्य तत्समुदायस्य च वाक्यस्यानित्यतया तत्संदोहात्मकवेदस्य सुतरामनित्यत्वादित्यभिप्रेत्य वेदानित्यत्वे हेत्वन्तरमाह—**अस्माकं त्विति**। "ऋचः सामानि जज्ञिरे" इत्यादिश्रुतिरादिपदग्राह्या। नन्वियं श्रुतिर्न वेदोत्पत्तिपरा वेदस्य त्रिक्षणमात्रावस्थायित्वेन तदुत्पत्तेर्लोकसिद्धत्वात्। नापि सर्वेश्वराधीनोत्पत्तिपरा पुरुषत्वेन सर्वेश्वरस्यापि वेदोत्पादकत्वानुमानात्। तस्मात्स्वतन्त्रपुरुषाधीनोत्पत्तिपरैव श्रुतिः। महत्पदस्य स्वतन्त्रवाचित्वादित्याशयवतो नैयायिकस्याशङ्कां निराकरोति—**नापीति**॥

म० प्र०—तत्र=भ्रमादिदोषवत्पुरुषजन्यत्वसंबन्धेन वेदनिष्ठभ्रमाद्यभावे। परममूले **वेदानां नित्यत्वेनेति**। वेदानां जन्यत्वाभ्युपगमे ईश्वरस्यापि भक्तपक्षपातादिसंभवाद्दोषवदीश्वरप्रणीतत्वावश्यंभावाद्बौद्धप्रणीतागमवद्वेदेऽपि दोषप्रसङ्गाद्वेदानामजन्यत्वेन निरस्तसमस्तपुंदूषणतया प्रामाण्यमिति भावः। वर्णनित्यत्वम्=वर्णनिष्ठजन्यत्वाभावः। अनित्यत्वेन=अजन्यत्वाभावेन, तत्समूहात्मकपदस्य=वर्णसमुदायात्मकपदस्य,तत्समुदायस्य=पदसमुदायस्य। **तत्संदोहात्मकेति**=वाक्यसमुदायात्मकेत्यर्थः। वेदानित्यत्वे=वेदनिष्ठाजन्यत्वाभावे, हेत्वन्तरं=प्रागभावप्रतियोगित्वरूपहेत्वपेक्षयाऽन्यहेतुम्। वस्तुतस्तु हेत्वन्तरमित्यस्य स्थाने हेतुमिति पाठः सम्यगिति। परममूले **अस्माकं त्विति**। तुशब्द उक्तपक्षाभ्यां वेदानामनित्यत्वेऽपि प्रलयकालपर्यन्तावस्थायित्वे सति दोषविनिर्मुक्तत्वरूपवैलक्षण्यद्योतनार्थः। परममूले **अस्येति**। अस्य=परमात्मनो महतो व्यापकस्य, भूतस्य निःश्वसितम्=निःश्वसितमिव निःश्वसितमित्यर्थः। **ऋच इति**। अत्र बहुवचनमृगादिघटकवाक्याध्यायादिषु बहुत्वाभिप्रायेण। जज्ञिरे=उत्पन्ना बभूवुः। **त्रिक्षणमात्रावस्थायित्वेनेति**। इदं कथनं तु प्राचीनस्य कस्यचिदाचार्य्यस्याभिप्रायेण। नवीनमते शब्दस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वकथनेन द्विक्षणमात्रावस्थायित्वादिति। अनुमानात्=ईश्वरो वेदादिरूपशब्दोत्पादकः पुरुषत्वाद्यत्र पुरुषत्वं तत्र शब्दोत्पादकत्वमिति सामान्यव्याप्त्याऽस्मदादिवदित्यनुमानात्। **वाचित्वादिति**। यत्र पूज्यत्वरूपमहत्त्वं तत्र स्वतन्त्रत्वमिति व्याप्तेरिति शेषः॥

**य एव वेदो देवदत्तेनाधीतः स एव मयाऽधीत्यादिप्रत्यभिज्ञाविरोधात्। अत एव गकारादिवर्णानामपि न क्षणिकत्वम्, सोऽयं गकार इति प्रत्यभिज्ञाविरोधात्। तथा च वर्णपदवाक्यसमुदायस्य वेदस्य वियदादिवत्सृष्टिकालिकोत्पत्तिकत्वं प्रलयकालिकध्वंसप्रतियोगित्वं च, न तु मध्ये वर्णानामुत्पत्तिविनाशौ अनन्तगकारकल्पनायां गौरवात्। अनुच्चारणदशायां वर्णानामनभिव्यक्तिस्तदुच्चारणरूपव्यञ्जकाभावान्न विरुध्यते अन्धकारस्थघटानुपलम्भवत। उत्पन्नो गकार इत्यादि-**

**प्रत्यक्षं तु सोऽयं गकार इत्यादिप्रत्यभिज्ञाविरोधादप्रमाणं वर्णाभिव्यञ्जकध्वनिगतोत्पत्तिनिरूपितपरंपरासंबन्धविषयत्वेन प्रमाणं वा ॥**

शि० म०—अनेकवर्णसमुदायगर्भस्य वेदस्य स्वरूपतः क्षणिकत्वं वर्णक्षणिकत्वाद्वा। तत्राद्यं दूषयति—**य एवेति**। द्वितीयं निरस्यति—**अत एवेति**। अतःशब्दार्थमाह—**सोऽयमिति**। ननु वेदस्य क्षणिकत्वाभावे नित्यत्वापत्तौ उत्पत्तिश्रुतिर्निर्विषया स्यादित्यत आह—**तथा चेति**। परमते उत्पत्तौ निराकृतायामित्यर्थः। शब्दस्य नाशकत्वाभिमतशब्दान्तरादीनामन्तराऽसंभवेऽपि बहुकालस्थायित्वाभ्युपगमे कदापि नाशो न स्यादित्यत आह—**प्रलयेति**। तथा च प्रलयकाल एव नाशक इति भावः। ननु वेदस्य वर्णानां च न वियदादिवदुत्पत्तिमत्त्वम्, इदानीं गकार उत्पन्न इदानीं विनष्ट इति प्रतीतिविरोधात्। न च प्रत्यभिज्ञया उत्पादविनाशप्रतीतिबाधः, बहुप्रतीतिबाधकल्पने गौरवेण "त्यजेदेकं कुलस्यार्थे" इति न्यायेन प्रत्यभिज्ञाबाधस्यैवोचितत्वात्। ततश्च वेदस्य वर्णादीनां च मध्येऽप्युत्पादविनाशावित्याशङ्क्याह—**न त्विति**। सजातीयानन्तवेदकल्पनायां च गौरवं बोध्यम्। तथा चोत्पादविनाशप्रतीतीनामुक्तगौरवपराहतं प्रामाण्यं तद्बहुत्वं चान्धबहुत्ववन्न प्रयोजकमिति भावः। शब्दस्य स्थायित्वे बाधकमाशङ्क्य निराकरोति—**अनुच्चारणेति**। ननु न्यायमते उत्पादादिप्रतीतयः प्रत्यभिज्ञयाऽपि सोऽयं गकार इति तद्गत्वावच्छिन्नभेदविषयतया गत्वजातिघटितपरंपरासंबन्धविषयत्वेन प्रमाणं तव मते तासामप्रामाण्यं स्यादित्यत आह—**वर्णाभिव्यञ्जकेति**। श्यामो नष्टो रक्त उत्पन्न इतिवदिति भावः ॥

म० प्र०—उत्पत्तौ निराकृतायाम्=त्रिक्षणमात्रावस्थायित्वरूपहेतुनिराकरणेन नैयायिकोक्तलोकसिद्धोत्पत्तौ निराकृतायाम्। **शब्दान्तरेति**। युगपदुत्पन्नककारादिशब्दातिरिक्तवर्णात्मकशब्देत्यर्थः। अन्तरा=मध्ये संसारे इति यावत्। **असंभवेऽपीति**। अस्यादौ सोऽयं ककारः इत्यादिप्रत्यभिज्ञाबलादित्यस्य शेषो बोध्यः। स्थायित्वे=प्रलयपर्यन्तावस्थायित्वे, बाधकम्=सर्वदा वर्णानां ज्ञानापत्तिरूपबाधकम्। **न्यायमते इति**। उत्पन्नो गकार इत्याद्युत्पादादिप्रतीतयस्तद्गत्वावच्छिन्नगकारादिभेदविषयतया प्रमाणं सोऽयं गकार इत्यादिप्रत्यभिज्ञाऽपि गकारादिसमवेतगत्वादिसमवायित्वरूपगत्वादिजातिघटितपरंपरासंबन्धविषयकत्वेन प्रमाणमित्यर्थः। परममूले **ध्वनिगतेति**। उत्पत्त्याश्रयध्वन्यभिव्यञ्ज्यत्वरूपोत्पत्तिघटितपरम्परासम्बन्धविषयकत्वेनेत्यर्थः ॥

**तस्मान्न वेदानां क्षणिकत्वम्। ननु क्षणिकत्वाभावेऽपि वियदादिप्रपञ्चवदुत्पत्तिमत्त्वेन परमेश्वरकर्तृकतया पौरुषेयत्वसि-**

द्वावपौरुषेयत्वं वेदानामिति तवापि सिद्धान्तो भज्येतेति चेन्न। न हि तावत्पुरुषेणोच्चार्य्यमाणत्वं पौरुषेयत्वम्, गुरुमतेऽपि अध्यापकपरंपरया पौरुषेयत्वापत्तेः। नापि पुरुषाधीनोत्पत्तिकत्वं नैयायिकाभिमतपौरुषेयत्वानुमाने अस्मदादिना सिद्धसाधनापत्तेः। किंतु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वम् ॥

शि० म०—उपसंहरति—**तस्मादिति**। ननु वेदो न क्षणिको नापि वियदादिवदुत्पादविनाशशीलः किंतु नित्य एव उत्पत्तिश्रुतिश्चाभिव्यक्तिपरा, अन्यथा परमेश्वरकर्तृकत्वे तस्य पौरुषेयत्वापत्तौ अपसिद्धान्त इति जैमिनीयः शङ्कते—**नन्विति**। अस्य महत इत्यादिश्रुतिर्वेदोत्पत्तिपरैव तत्परत्वे बाधकाभावात्। यत्तु वेदस्य पौरुषेयत्वं बाधकमिति तद्द्वेधा विकल्प्य दूषयति—**न हीत्यादिना**। मौनिश्लोको न पौरुषेयः स्यादिति दोषे सत्येव दोषान्तरमाह—**गुरुमते इति**। **सजातीयेति**। आनुपूर्व्या साजात्यम्। न च मौनिश्लोकेऽव्याप्तिः, तस्यापि कदाचित्केनचिदुच्चरितत्वात्। अन्यथा तस्यालीकत्वापत्तेः। उच्चारणपदस्य प्रतिसंधानपरत्वाद्वा ॥

म० प्र०—अन्यथा=उत्पत्तिश्रुतेर्वेदाभिव्यक्तिपरत्वानङ्गीकारे, अपसिद्धान्तः=वेदनिष्ठाङ्गीकृतापौरुषेयत्वत्यागापत्तिः, जैमिनीयः=व्यासशिष्यः पूर्वकाण्डवाक्यविचारकर्त्राचार्य्यमतस्वीकर्तृपुरुषः, बाधकं=वेदोत्पत्तौ बाधकम्, द्वेधा विकल्प्य=किं पुरुषेणोच्चार्यमाणत्वरूपं पौरुषेयत्वमपसिद्धान्तापत्तिद्वारा वेदोत्पत्तौ बाधकमुत पुरुषाधीनोत्पत्तिकत्वमिति मनसि द्वेधा विकल्प्य, मौनिश्लोकः=मौनिस्मृतः श्लोकः मौनिकृतः श्लोको वा। परममूले पौरुषेयत्वानुमाने=वेदः पौरुषेयो वाक्यत्वाद्भारतादिवदित्यनुमाने। परममूले **सिद्धसाधनापत्तेरिति**। अस्मदाद्यभ्युपेतपुरुषाधीनोत्पत्तिकत्वरूपपौरुषेयत्वस्य तेन साधनादिति शेषः। ननु शब्देषु पदत्वादिना साजात्यस्य सत्त्वात्सजातीयोच्चारणानपेक्षोच्चारणविषयत्वरूपपौरुषेयत्वासंभव इत्याशङ्क्याह—**आनुपूर्व्येति**। तस्यापि=मौनिकृतश्लोकस्यापि, अन्यथा=मौनिकृतश्लोकस्य कदाचित्केनचिदुच्चरितत्वानङ्गीकारे। परममूले **सजातीयोच्चारणानपेक्षेति**। आनुपूर्व्या साजात्यवत् उच्चारणं सजातीयोच्चारणं सजातीयोच्चारणस्यानपेक्षा यस्योच्चारणस्य तत्तथा तादृशोच्चारणविषयत्वमित्यर्थः ॥

तथा च सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं विरचितवान्, न तु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वम् ॥

शि० म०—ननु मा भूत् क्षणिको वेदः, तथापि स्वतन्त्रपुरुषप्रणीतः सर्वे-

श्वरप्रणीतत्वात् वेदभिन्नतत्प्रणीतवाक्यवत् । अन्यथा परमेश्वरस्य माणवकवदुच्चारणसापेक्षत्वेन तस्यास्मदादितुल्यत्वापत्तौ सर्वज्ञत्वसर्वशक्तिताभ्युपगमभङ्गप्रसङ्गः । ततश्च पौरुषेयो वेद इत्यत आह–**तथा चेति** । सर्गाद्यकाले सर्वेश्वरः पूर्वसर्गसिद्धेयमानुपूर्वी वेदस्येति ज्ञात्वा तत्समानानुपूर्वीकं वेदं रचयामीति संकल्प्य तादृशं वेदम् आचख्यौ न तु तद्विजातीयानुपूर्वीकं ज्ञात्वा, सर्गाद्यसमये वेदस्य पूर्वसर्गसिद्धवेदसजातीयत्वात्तादृशवेदाध्ययनस्यैवाभ्युदयनिःश्रेयसहेतुत्वात्, अन्यथा तस्य वाग्वज्रतयाऽनर्थहेतुत्वापत्तेः ॥

म० प्र०–वाक्यवत्=गीतादिवाक्यवत्, अन्यथा=वेदस्य स्वतन्त्रपुरुषप्रणीतत्वानङ्गीकारे, ततश्च=वेदस्य स्वतन्त्रपुरुषप्रणीतत्वादेव । परममूले **तथा चेति** । उक्तविधपौरुषेयत्वाङ्गीकारे सतीत्यर्थः । तादृशंवेदं=पूर्वकल्पीयवेदानुपूर्वीविशिष्टं वेदम् । तद्विजातीयानुपूर्वीकं वेदं ज्ञात्वा न त्वाचख्याविन्त्यत्र हेतुमाह–**सर्गाद्यसमये इति** । सजातीयत्वात्=आनुपूर्व्या सजातीयत्वात् । सर्गाद्यसमये वेदस्यानुपूर्व्या सजातीयत्वं कुतोऽवगतमित्याशङ्क्याह–**तादृशवेदेति** । पूर्वकल्पीयवेदानुपूर्व्या तादृशवेदेत्यर्थः । अन्यथा=पूर्वसर्गसिद्धवेदानुपूर्व्या सजातीयवेदोत्पत्त्यनङ्गीकारे, तस्य=सर्गाद्यकालिकवेदस्य । **वाग्वज्रेतयेति** । "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥" इत्युक्तत्वादिति शेषः । अस्यार्थः । स्वरतः=उदात्तादिस्वरेण, हीनो=रहितो मन्त्रः, तथा वर्णतः=अकारादिना, हीनो मन्त्रो मिथ्या प्रयुक्तः=मिथ्या एव प्रयुक्तः स्यात्फलविधुर एव तस्य प्रयोग इति यावत् । स्वरादिना हीनमन्त्रस्य मिथ्या प्रयोग इति कथं ज्ञायते इत्यत आह–**न तमर्थमाहेति** । यतस्तमर्थं स्वाभिप्रेतार्थं स मन्त्रो नाह=न वक्ति अतो ज्ञायते तस्य मिथ्या प्रयोग इत्यर्थः । प्रत्युत स्वरादिवैपरीत्ये स्वरादिहीनमन्त्रस्यानर्थकारित्वमित्याह–**स वागिति** । स मन्त्रो वाग्वज्रो वाग्रूपो वज्रो भूत्वा यजमानं हिनस्ति, यथा विश्वरूपस्य पिता त्वष्टा इन्द्रवधकामनया वृत्रासुरोत्पादनायेन्द्रशत्रुर्वर्धस्वेति मन्त्रेणाहुतिं दत्तवान्, तत्रेन्द्रस्य शत्रुरिन्द्रशत्रुरित्युत्तरपदप्रधानतत्पुरुषस्वरस्य समासस्यान्त उदात्तः स्यादित्यर्थक "समासस्य" इति सूत्रबोधितान्तोदात्तस्योच्चारणीयत्वे इन्द्रः शत्रुः शातयिता नाशयिता यस्येति बहुव्रीहिस्वरस्याद्युदात्तस्योदात्तस्वरितयोगिपूर्वपदं प्रकृत्या स्यादित्यर्थक "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति सूत्रबोधितस्योच्चारणात् यजमानस्य त्वष्टुर्घातकत्वं मन्त्रस्येति सिद्धमिति ॥

**भारतादीनां तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्, एवं पौरुषेयापौरुषेयभेदेनागमो द्विविधो निरूपितः ॥**

**इति वेदान्तपरिभाषायामागमपरिच्छेदः ॥**

**शि० म०**–तथा चेश्वरः सर्वशक्तिरपि पूर्वसर्गसिद्धानुपूर्वीसमानानुपूर्वीकं वेदं रचयन्न स्वतन्त्र इति न वेदस्य पौरुषेयत्वमिति भावः । ननु नेदं पौरुषेयत्वव्यवहारप्रयोजकं भारतरामायणादावव्याप्तेः, तस्यापि शब्दजातीयोच्चारणसापेक्षत्वात् । न चानुपूर्व्या साजात्यं तत्र नेति वाच्यम्, तथापि पठ्यमानभारतादावव्याप्तेरित्याशङ्क्य साजात्यमानुपूर्व्यैव विवक्षितं सिद्धान्ते पठ्यमानाऽऽद्यभारतयोर्भेदाभावान्नाव्याप्तिरित्यभिप्रेत्याह–**भारतादीनां त्विति** ॥

इति श्रीधर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते
वेदान्तशिखामणावागमपरिच्छेदः ॥ ४ ॥

**म० प्र०**–अस्ति च पौरुषेयेषु भारतादिष्वेतल्लक्षणमित्याह–परममूले **भारतादीनामिति** । इदं=सजातीयोच्चारणानपेक्षोच्चारणविषयरूपपौरुषेयत्वम्, तस्यापि=भारतादेरपि । **शब्देति** । शब्दत्वेन सजातीया ये कोशव्याकरणस्थाः शब्दास्तेषां यदुच्चारणं तत्सापेक्षोच्चारणं व्यासादीनामुच्चारणं तद्विषयत्वादित्यर्थः । तत्र=भारतादिषु । **अव्याप्तेरिति** । आद्यभारतसजातीयभारतः पठ्यमानभारतस्तस्य यद्गुरोरुच्चारणं तत्सापेक्षोच्चारणं शिष्योच्चारणं तद्विषयत्वाद्भारतादीनामव्याप्तेरित्यर्थः । परममूले **आगम इति** । शब्दप्रमाणमित्यर्थः ॥

इति श्रीमद्ब्रह्मविज्ञानाभिधगुरुप्रसादलब्धोदासीनामरदासशब्दवाच्याविर्भूतायां
वेदान्तपरिभाषाख्यग्रन्थस्य शिखामण्याख्यटीकायाश्च मणिप्रभाख्यायां
व्याख्यायामागमपरिच्छेदः ॥ ४ ॥

---



# अथ अर्थापत्तिपरिच्छेदः ५.

इदानीमर्थापत्तिर्निरूप्यते । तत्रोपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः ॥

शि० म०–संगतिं दर्शयन् शिष्यावधानाय प्रतिजानीते–इदानीमिति । तत्रेति । अर्थापत्तौ निरूपणीयायामित्यर्थः । उपपाद्येति । उपपाद्यज्ञानत्वेन तज्जन्यज्ञानमर्थापत्तिरित्यर्थः । तेन तदनुव्यवसायादौ नातिव्याप्तिः । न च व्यतिरेक्यनुमितावतिव्याप्तिः, तस्याः प्रागेव निरस्तत्वात् । तदङ्गीकारे वा व्यतिरेकसहचारज्ञानजन्यान्वयव्याप्तिज्ञानस्यैव तत्र हेतुतया तदभावव्यापकाभावप्रतियोगित्वविषयकोपपाद्यज्ञानस्याहेतुत्वान्नातिव्याप्तिः । अस्तु वा व्यतिरेकसहचारज्ञानजन्यव्यतिरेकव्याप्तिज्ञानादनुमितिः । तथापि तस्य व्यभिचारज्ञानविरोधिज्ञानतया हेतुत्वेन तदभावव्यापकाभावप्रतियोगित्वज्ञानत्वेनाहेतुत्वान्नातिप्रसङ्ग इति दिक् ॥

म० प्र०–निराश्रया ये पतिता अधोगतौ य एव सोपानपथोऽस्ति तादृशाम् ।
गुरुर्यया वारिधिविश्वविश्रुतो विमुक्तयेऽसौ हृदयान्मयाऽऽदृतः ॥ १ ॥

संगतिमिति=मूलेऽवसरसंगतिमित्यर्थः । न च मूलेऽवसरवाचकशब्दाभावात्कथमवसरसंगतिप्रदर्शनमिति वाच्यम् । मूले इदानीमित्यस्यार्थापत्तिनिरूपणप्रतिबन्धकीभूतशब्दप्रमाणशिष्यजिज्ञासानिवृत्त्युत्तरकालरूपावसरवाचकत्वादिति । शिष्यावधानाय=अन्यत्र चित्तसंचारराहित्यपूर्वकप्रकृतग्रन्थशुश्रूषावत्त्वरूपशिष्यावधानाय । परममूले **इदानीमिति** । शब्दप्रमाणनिरूपणात्प्रागर्थापत्तिनिरूपणे प्रतिबन्धकीभूता या शब्दप्रमाणनिरूपणजिज्ञासा तन्निवृत्त्युत्तरकाले इत्यर्थः । परममूले **उपपादककल्पनमिति** । रात्रिभोजनादिरूपोपपादकज्ञानमित्यर्थः । परममूले **अर्थापत्तिरिति** । प्रमारूपार्थापत्तिरित्यर्थः । **उपपाद्यज्ञानत्वेनेति** । उपपाद्यज्ञानत्वावच्छिन्नोपपाद्यज्ञाननिष्ठोपपादकज्ञानीयजन्यतानिरूपितजनकतानिरूपितजन्यतावदुपपादकज्ञानमित्यर्थः । तेन=अर्थापत्तिलक्षणे उपपाद्यज्ञाननिष्ठोपपादकज्ञानीयजन्यतानिरूपितजनकताया उपपाद्यज्ञानत्वावच्छिन्नत्वस्य विवक्षितत्वेन । **तदनुव्यवसायादाविति** । पीनत्वादिरूपोपपाद्यमहं जानामीत्याकारकोपपाद्यज्ञानानुव्यवसाये, आदिपदगृहीतोपपाद्यज्ञानध्वंसोपपाद्यस्मृत्याश्चार्थापत्तिप्रमालक्षणस्यातिव्याप्तिर्नास्तीत्यर्थः । व्यतिरेक्यनुमितौ=साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमद्दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वादिरूपव्यतिरेकिलिङ्गजन्यायां देवदत्तो रात्रिभोजीत्याद्यनुमितौ, अतिव्याप्तिः=देवदत्तो रात्रिभोजीत्याद्यनुमितेः साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमदुपपाद्यदिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वादिज्ञानत्वेन पीनत्वादिज्ञानजन्यत्वेना-

र्थापत्तिप्रमालक्षणस्यातिव्याप्तिः, तस्याः=दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वादिव्यतिरेकिलिङ्ग-जन्याया देवदत्तो रात्रिभोजीत्याद्यनुमितेः, प्रागेव=अतीतानुमाननिरूपणग्रन्थ एव, तदङ्गीकारे वा=उक्तव्यतिरेकव्याप्तिमदुक्तलिङ्गजन्योक्तानुमितिस्वीकारे वा। **व्यतिरेकसहचारज्ञानेति**। साध्याभावसमानाधिकरणः साधनाभाव इत्याकारकव्यतिरेकसहचारज्ञानजन्यं यद्धेतुसमानाधिकरणा-त्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यादिरूपान्वयव्याप्तिविषयकज्ञानं तस्यैवेत्यर्थः। तत्र=व्यति-रेकव्याप्तिमल्लिङ्गजन्यानुमितौ। **तदभावव्यापकाभावेति**। उपपादकरात्रिभोजनादिरू-पसाध्यस्य योऽभावस्तस्य व्यापको योऽभावो दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वाद्यभावस्तस्य दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वादिनिष्ठं यत्प्रतियोगित्वं तद्विषयकमुपपादकरात्रिभोजनादिरू-पसाध्याभावव्यापकाभावप्रतियोगिदिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वादिकमित्याकारकं यदुपपा-द्यज्ञानं तस्याहेतुत्वाद्व्यतिरेकव्याप्तिमल्लिङ्गजन्यायां देवदत्तो रात्रिभोजीत्याद्यनुमितौ कारणत्वाभावा-न्नातिव्याप्तिः=व्यतिरेकव्याप्तिमल्लिङ्गजन्यानुमितावतिव्याप्त्यभाव इत्यर्थः। **व्यतिरेकसहचार-ज्ञानेति**। साध्याभावसमानाधिकरणः साधनाभाव इत्याकारकव्यतिरेकसहचारज्ञानजन्यं यत्साध्या-भावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिविषयकं ज्ञानं तस्मादित्यर्थः। तथापि=व्यतिरे-कसहचारज्ञानजन्यव्यतिरेकव्याप्तिज्ञानस्यानुमितिहेतुत्वेऽपि। तस्य=साध्याभावसाधनाभावसहचार-ज्ञानजन्यव्यतिरेकव्याप्तिज्ञानस्य। हेतुत्वेन=व्यतिरेकव्याप्तिमल्लिङ्गजन्यानुमितौ कारणत्वेन। **तद-भावेति**।रात्रिभोजनादिरूपोपपादकरूपसाध्याभावव्यापकदिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वा-दिरूपसाधनाभावप्रतियोगित्वप्रकारकज्ञानत्वेनाहेतुत्वाद्व्यतिरेकव्याप्तिमल्लिङ्गजन्यानुमितौ कारणत्वा-भावात् नातिप्रसङ्गः=व्यतिरेकव्याप्तिमल्लिङ्गजन्यानुमितावर्थापत्तिप्रमाणलक्षणस्यातिव्याप्तिर्नास्ती-त्यर्थः। व्यभिचारज्ञानविरोधिज्ञानत्वावच्छिन्नव्यभिचारज्ञानविरोधिज्ञाननिष्ठजनकतानिरूपितजन्यत्व-मेवानुमितित्वमिति भावः॥

**तत्रोपपाद्यज्ञानं करणम्॥**

**शि० म०–तत उपपाद्यज्ञानत्वेन तज्जन्यज्ञानत्वं फलभूतार्थापत्तिलक्षणम्। तत्क-रणत्वं चार्थापत्तिप्रमाणलक्षणम्। तत्करणं च नान्तःकरणं नचान्यत्, किंत्वनुमितौ व्याप्तिज्ञानमिव तत्संस्कारव्यापारकम् अनेन विना इदमनुपपन्नमित्युपपाद्यज्ञानमेवे-त्याह–तत्रेति॥**

**म० प्र०**–ततः=व्यतिरेकव्याप्तिमल्लिङ्गजन्यानुमितावर्थापत्तिप्रमालक्षणस्यातिव्याप्त्यभावात्। तत्करणत्वम्=उपपादकज्ञानरूपार्थापत्तिप्रमाकरणत्वम्। तत्करणं च=अर्थापत्तिप्रमाकरणं तु, अन्यत्=इन्द्रियादिकम्, व्याप्तिज्ञानमिव=व्याप्तिज्ञानसंस्कारव्यापारकव्याप्तिज्ञानमिव, तत्संस्कारव्या-पारकम्=उपपाद्यज्ञानसंस्कारव्यापारकम्। अनेन विना=रात्रिभोजनादिरूपोपपादकेन विना, इदमनुपपन्नं=रात्रिभोजनादिरूपोपपादकाभावव्यापकाभावप्रतियोगिदिवाऽभुञ्जानत्वसमानाधिकरणक पीनत्वादिकमसंभावितम्। परममूले–**तत्रेति**। उपपाद्यज्ञानोपपादकज्ञानयोर्मध्ये इत्यर्थः॥

उपपादकज्ञानं फलम्। येन विना यदनुपपन्नं तत्तत्रोपपाद्यम्। यस्याभावे यस्यानुपपत्तिस्तत्तत्रोपपादकम्। यथा रात्रिभोजनेन विना दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशपीनत्वमुपपत्तिरिति रात्रिभोजनमुपपादकम् ॥

शि० म०—ननूपपादकज्ञानं न फलम्, तस्य प्रागेव सिद्धत्वादित्याशङ्क्य सामान्यतः सिद्धावपि देवदत्तो रात्रौ भुङ्क्ते इत्युपपाद्याधिकरणव्यक्तिविशेषवृत्तितया तदसिद्धेस्तदेव फलमित्याह—**उपपादकेति**। ननु व्याप्यत्वमुपपाद्यत्वं व्यापकत्वम् उपपादकत्वम्, न हि पीनत्वस्य रात्रिभोजनव्याप्यत्वं प्रागवगतमित्याशङ्क्य तदभावव्यापकाभावप्रतियोगित्वमुपपाद्यत्वं तदभावव्याप्याभावप्रतियोगित्वमुपपादकत्वमित्याह—**येनेति** ॥

म० प्र०—ननु दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वादिरूपोपपाद्यज्ञानरूपमर्थापत्तिप्रमाणं न संभवत्यर्थापत्तिप्रमाणफलस्य दुर्वचत्वात्। न च रात्रिभोजनादिरूपोपपादकज्ञानं फलमिति वाच्यम्, तस्य रात्रिभोजनादिरूपोपपादकाभावव्यापकदिवाभुञ्जानत्वसमानाधिकरणकपीनत्वाद्यभावप्रतियोगिदिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वादिकमित्याकारकार्थापत्तिप्रमाणरूपोपपाद्यज्ञानात्प्रागेव रात्रिभोजनादिरूपोपपादकज्ञानस्योपपादकाभावज्ञानहेतुत्वेन रात्रिभोजनादिरूपोपपादकज्ञानस्यावश्यकत्वेन सिद्धत्वादित्यभिप्रेत्य शङ्कते—**नन्विति**। तस्य=रात्रिभोजनादिरूपोपपादकज्ञानस्य, प्रागेव=दिवाभुञ्जानत्वसमानाधिकरणकपीनत्वं रात्रिभोजनं विनाऽनुपपन्नमिति ज्ञानरूपार्थापत्तिप्रमाणात्प्रागेव, सामान्यतः=रात्रिभोजनमित्याकारकरात्रिभोजनरूपसामान्यधर्मप्रकारकत्वेन। **उपपाद्याधिकरणेति**। दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वाधिकरणेत्यर्थः। तदसिद्धेः=रात्रिभोजनादिरूपोपपादकज्ञानासिद्धेः। **तदेव**। दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वाश्रयदेवदत्तो रात्रौ भुङ्क्ते इति ज्ञानमेव, फलम्=अर्थापत्तिप्रमाणकार्य्यम्। **व्याप्यत्वमिति**। साध्यवदन्यावृत्तित्वादिरूपव्याप्त्याश्रयत्वं व्याप्यत्वम्, व्यापकत्वं च हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। तथा च दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वनिष्ठरात्रिभोजनव्याप्यत्वज्ञानं देवदत्तो रात्रिभोजीति ज्ञानात्पूर्वं नास्ति, उक्तव्याप्यत्वज्ञानस्वीकारे तु अन्वयिलिङ्गकानुमितिरेव स्यादिति भावः। **तदभावेति**। रात्रिभोजनादिरूपोपपादकाभावस्य व्यापकाभावो दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वाद्यभावस्तत्प्रतियोगित्वमित्यर्थः। **तदभावेति**। दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वादिरूपोपपाद्याभावस्य व्याप्याभावो रात्रिभोजनाद्यभावस्तत्प्रतियोगित्वमित्यर्थः। इदं हि लक्षणद्वयं मूलोक्तोपपाद्योपपादकलक्षणद्वयस्यैव निष्कर्षविशेष इति भावः। परममूले **तत्रेति**। तेनेत्यर्थः ॥

रात्रिभोजनकल्पनारूपायां प्रमितावर्थस्यापत्तिः कल्पनेति षष्ठीसमासेनार्थापत्तिशब्दो वर्त्तते। कल्पनाकरणपीनत्वादि-

**ज्ञाने अर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्तते इति फलकरणयोरुभयोस्तत्पदप्रयोगः । सा चार्थापत्तिर्द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति ॥**

शि० म०—नन्वर्थकल्पनाकरणत्वं चेदर्थापत्तिलक्षणं तर्हि तदेवार्थापत्तिपदप्रवृत्तिनिमित्तं वाच्यम्, व्यावृत्तिव्यवहारान्यतरस्य लक्षणप्रयोजनत्वात् । तथा च रात्रिभोजनादिकल्पनायास्तद्व्यवहारो न स्यादित्याशङ्क्य फलकरणयोर्ज्ञानपदप्रयोगवन्न विरोध इत्याह—**रात्रिभोजनेति** ॥

म० प्र०—अर्थकल्पनाकरणत्वम्=रात्रिभोजनादिरूपोपपादकार्थज्ञानकरणत्वम्, तर्हि=अर्थकल्पनाकरणत्वस्यार्थापत्तिप्रमाणलक्षणत्वे सति । तदेव=अर्थकल्पनाकरणत्वमेव । **वाच्यमिति** । न च संज्ञाजातिगुणादीनामन्यतमस्यैव शब्दप्रवृत्तिनिमित्तत्वेनार्थकल्पनाकरणत्वमर्थापत्तिपदप्रवृत्तिनिमित्तं वाच्यमिति कथमापाद्यते इति वाच्यम्, संज्ञाद्यन्यतमशब्दप्रवृत्तिनिमित्तेषु जातेर्धर्ममात्रपरत्वात् । तथा चार्थकल्पनाकरणत्वरूपधर्मस्यापि शब्दप्रवृत्तिनिमित्तत्वमुपपद्यते इति भावः । तद्व्यवहारः=अर्थापत्तिशब्देन व्यवहारः । परममूले **सा चेति** । उक्तलक्षणलक्षिता । परममूले अर्थापत्तिः=प्रमात्मकार्थापत्तिः । परममूले दृष्टार्थापत्तिः=चक्षुरादिनाऽपरोक्षीभूतार्थानुपपत्त्याऽऽपत्तिरुपपादकार्थज्ञानं दृष्टार्थापत्तिः । परममूले श्रुतार्थापत्तिः=श्रुतार्थानुपपत्त्याऽऽपत्तिरुपपादकार्थज्ञानं श्रुतार्थापत्तिः । यद्वा दृष्टार्थेन=इदं रजतमिति पुरोवर्त्तिप्रतिपन्नरजतनिष्ठ 'नेदं रजतम्' इति निषिध्यमानत्वरूपार्थेनाऽऽपत्तिरुपपादकमिथ्यात्वरूपार्थस्य ज्ञानं दृष्टार्थापत्तिः । एवं श्रुतार्थेन=बन्धनिष्ठज्ञाननिवर्त्यत्वार्थेनापत्तिरुपपादकमिथ्यात्वज्ञानं श्रुतार्थापत्तिः । तथा च शुक्तिरजतादिनिष्ठनिषिद्ध्यमानत्वादिरूपार्थाभावव्यापकमिथ्यात्वाद्यभावप्रतियोग्यर्थविषयकज्ञानत्वं दृष्टार्थापत्तित्वम् । एवं श्रुतबन्धनिष्ठज्ञाननिवर्त्यत्वाद्यभावव्यापकमिथ्यात्वाद्यभावप्रतियोग्यर्थविषयकज्ञानत्वं श्रुतार्थापत्तित्वमिति तयोर्लक्षणं बोध्यमिति । दृष्टार्थापत्तौ शुक्तिरजतादिनिषिद्ध्यमानत्वादिकं मिथ्यात्वादिना विनाऽनुपपन्नमिति ज्ञानं करणम् । श्रुतार्थापत्तौ तु बन्धनिष्ठज्ञाननिवर्त्यत्वादिरूपः श्रुतार्थो मिथ्यात्वादिना विनाऽनुपपन्न इति ज्ञानं करणमिति भावः ॥

**तत्र दृष्टार्थापत्तिर्यथा। इदं रजतमिति पुरोवर्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव निषिद्ध्यमानत्वं सत्यत्वेऽनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्यत्वात्यन्ताभाववत्त्वं मिथ्यात्वं कल्पयतीति । श्रुतार्थापत्तिर्यथा । श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तरकल्पनं यथा । तरति शोकमात्मविदित्यत्र श्रुतस्य शोकशब्दवाच्यबन्धजातस्य ज्ञाननिवर्त्यत्वस्यानुपपत्त्या बन्धस्य मिथ्यात्वं कल्प्यते इति । यथा वा शतवर्षजीवी देवदत्तो गेहे नेति वाक्यश्रवणानन्तरं जीविनो गृहासत्त्वं बहिःसत्त्वं कल्पयतीति ।**

श्रुतार्थापत्तिश्च द्विविधा। अभिधानानुपपत्तिरभिहितानुपपत्तिश्च। तत्र यत्र वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्याऽन्वयाभिधानोपयोगि पदान्तरं कल्प्यते तत्राभिधानानुपपत्तिः। यथा द्वारमित्यत्र पिधेहीत्यध्याहारः। यथा वा विश्वजिता यजेतेत्यत्र स्वर्गकामपदाध्याहारः॥

शि० म०—यद्यप्यन्यथाऽप्यस्त्येव दृष्टार्थापत्तिः श्रुतार्थापत्तिश्च, तथाप्यर्थापत्तिनिरूपणस्य प्रपञ्चस्य मिथ्यात्वादिसिद्धिः प्रयोजनमिति सूचयन्नुदाहरति—दृष्टार्थापत्तिरिति। स्वमतेन श्रुतार्थापत्तिमुदाहृत्य जैमिनीयस्यापि संमतां तामुदाहरति—यथा वेति। यत्र वाक्यैकदेशेति। याऽर्थापत्तिरन्वयाभिधानोपयोगिकल्पनानुकूला साऽभिधानानुपपत्तिरित्यर्थः। अन्यथा यथाश्रुतेऽर्थाध्याहाराऽयाप्त्यापत्तेरिति बोध्यम्। पदाध्याहारमतेनाह—यथेति। कृत्वा चिन्तामाश्रित्याह—यथा वा विश्वजितेति। स स्वर्गः स्यात् सर्वान्प्रत्यविशिष्टत्वादित्यत्र सूत्रे चतुर्थाध्याये स्वर्गपदाध्याहारस्य साधितत्वादिति भावः॥

म० प्र०—ननु दिवाऽभुञ्जानपुरुषनिष्ठपीनत्वादिज्ञानेन रात्रिभोजनादिज्ञानरूपप्रसिद्धार्थापत्त्युदाहरणं परित्यज्य शुक्तिरजतादिनिष्ठनिषिद्ध्यमानत्वादिज्ञानेन मिथ्यात्वादिज्ञानरूपाप्रसिद्धार्थापत्त्युदाहरणकथनमयुक्तमित्याशङ्क्याह—यद्यपीति। अन्यथाऽप्यस्त्येवेति। दिवाऽभुञ्जानदेवदत्तस्य रात्रिभोजनं विनाऽनुपपद्यमानपीनत्वज्ञानेन तदुपपादकरात्रिभोजनज्ञानं भवतीत्यनेन प्रकारेणापि दृष्टार्थापत्तिरस्त्येव, तथा शतवर्षजीवी देवदत्तो गेहे नास्तीति वाक्यश्रवणानन्तरं जीविदेवदत्तगृहासत्त्वज्ञानेन बहिःसत्त्वज्ञानं भवतीत्यनेन प्रकारेणापि श्रुतार्थापत्तिरस्त्येवेत्यर्थः। परममूले तत्रेति। द्विविधार्थापत्त्योर्मध्ये इत्यर्थः। परममूले तत्रैव=पुरोवर्तिशुक्त्यादावेव, परममूले सद्भिन्नत्वं=व्यावहारिकरजतभिन्नत्वम्, परममूले श्रुतस्य=ज्ञाननिवर्त्यत्वस्येत्यन्वयः। इयं हि बन्धमिथ्यात्वप्रमारूपा श्रुतार्थापत्तिरभिहितानुपपत्तिरूपा बोध्या। मिथ्यात्वादिसिद्धिरित्यत्र ज्ञाननिवर्त्यत्वादिरादिपदार्थः। जैमिनीयस्य=जैमिनिमतानुयायिनः, ताम्=श्रुतार्थापत्तिम्। परममूले गृहासत्त्वं=गृहावृत्तित्वज्ञानम्, इयमपि बहिःसत्त्वप्रमारूपा श्रुतार्थापत्तिरभिहितानुपपत्तिरूपा बोध्या—परममूले श्रुतार्थापत्तिः=प्रमारूपा श्रुतार्थापत्तिः। परममूले अभिधानानुपत्तिरिति। अभिधानानुपपत्तिज्ञानकारणकोपपादकपिधेहिपदादिज्ञानरूपार्थापत्तिरभिधानानुपपत्तिः। अभिहितार्थानुपपत्तिः=ज्ञानकरणकोपपादकमध्यवर्त्यपूर्वज्ञानरूपार्थापत्तिरभिहितानुपपत्तिरित्यर्थः। याऽर्थापत्तिरिति। कल्पनानुकूलेत्यत्र टाबन्तानुकूलपदमधिकमभिधानानुपपत्तिरूपार्थापत्तिप्रमालक्षणावसरेऽभिधानानुपपत्तिरूपार्थापत्तिप्रमाणलक्षणाभिधानस्यायुक्तत्वात्। तथा च द्वारनिष्ठकर्मतायाः पिधानादिक्रियया सहान्वय इति, यदभिधानं तस्योपयोगिपिधेहिपदादिज्ञानार्थापत्तिरभिधानानुपपत्तिरित्यर्थः। अन्यथा=यत्र वाक्यैकदेशेत्यादिमूलोक्ताभिधानानुपपत्तिप्रमालक्षणवाक्यस्य याऽर्थापत्ति-

रित्यादिवाक्योक्तार्थानङ्गीकारे, यद्वाऽन्यथेत्यस्यैव विवरणं यथाश्रुते इति । परममूले **यत्र वाक्येति**=यादृशवाक्येत्यर्थः । परममूले **तत्रेति** । तस्मिन्वाक्ये इत्यर्थः । **पदाध्याहारमतेनाहेति** । आकाङ्क्षितपदादिवाक्ये पदादेरेवाध्याहार इति ज्ञानप्रयोज्यकथनानुकूलवर्तमानकृत्याश्रय इत्यर्थः । **कृत्वा चिन्तामिति** । यद्यपि मीमांसकमते पदाध्याहारो नास्ति किंत्वर्थाध्याहारस्तथापि पदाध्याहारोऽपि संभवतीति मत्वा या चिन्ता तामाश्रित्येत्यर्थः । **स स्वर्ग इति** । इदं हि सूत्रं पूर्वमीमांसाचतुर्थाध्यायतृतीयपादे स्थितम् । चतुर्थाध्याये "स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्"इत्यत्र सूत्रे इत्यन्वयः । "विश्वजिता यजेत" इति वाक्यविहितविश्वजिन्नामकयागोऽफलः सफलो वेति संशये चोदनायां फलाश्रुतेः "कर्ममात्रं विधीयेत न ह्यशब्दं प्रतीयते" इति सूत्रेण विश्वजिन्नामककर्माफलमिति पूर्वपक्षमभिधाय "अपिवाऽम्नानसामर्थ्याच्चोदनार्थेन गम्येताऽर्थानामर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतोऽप्यसमर्थानामानन्तर्य्येऽप्यसंबन्धः तस्माच्छ्रुत्येकदेशः सः" इति सूत्रेण विश्वजिन्नामककर्मणः सफलत्वरूपं सिद्धान्तमभिधायायं विश्वजिद्यागः सर्वफलैः संबध्यते एकेन फलेन वेति संशये "तत्सर्वार्थमनादेशात्" इति सूत्रेण विश्वजिद्यागस्य सर्वफलैः संबन्धाभिधानरूपपूर्वपक्षं कृत्वा "एकं वा चोदनैकत्वात्" इति सूत्रेण विश्वजिद्यागस्यैकफलत्वं सिद्धान्तयामास । तच्चैकं फलं किमित्याकाङ्क्षायामाह—**स स्वर्ग इति** । चोदनाया विश्वजिता यजेतेति विधायके वाक्ये फलाश्रवणात्कर्मैव विधीयते हि यतोऽशब्दं शब्दागम्यं फलमानुमानिकं फलं न प्रतीयते नाङ्गीक्रियते इति प्रथमसूत्रार्थः । अपिवाऽम्नानसामर्थ्यात्=वेदवाक्यसामर्थ्यादेव, चोदनार्थेन=पुरुषप्रवृत्तिरूपाख्यातवाच्यभावनया, गम्येत=फलं कल्पनीयम्, यतोऽर्थानां=लिङ्शब्दवाच्यशब्दभावनानामर्थवत्त्वेन=पुरुषप्रवृत्तिरूपार्थवत्त्वेन, वचनानि=इतरवचनानि, प्रतीयन्ते=ज्ञायन्ते, अतस्तथाऽत्रापि भवितव्यमर्थतोऽन्तःकरणादसमर्थानां फलवाचकपदाभावात्तद्बोधासमर्थानां वाक्यानामानन्तर्य्येण स्वसमीपवर्त्तिवाक्यघटकफलवाचकपदेन सह संबन्धः कार्य्यः । तस्माच्छ्रुत्येकदेशः स वेदघटकपदस्यैव योजनान्न लौकिकवाक्यत्वशङ्केति भाव इति द्वितीयसूत्रार्थः । तत्=विश्वजिन्नामकं कर्म सर्वार्थं सर्वफलकम्, अनादेशात्=फलविशेषाश्रवणादिति तृतीयसूत्रार्थः । एकं वा=विश्वजित एकमेव फलम्, चोदनैकत्वात्=एकविधित्वादेको विधिरेकं फलमपेक्षत इति भाव इति चतुर्थसूत्रार्थः । सः एकोऽपि स्वर्गः=स्वर्ग एव सर्वान् प्रत्यविशिष्टत्वात्=वैलक्षण्यात् सर्वाभिलषणीयत्वादिति पञ्चमसूत्रार्थः । साधितत्वादिति=भाष्यकारादिभिरिति शेषः ॥

**ननु द्वारमित्यादावन्वयाभिधानात्पूर्वमिदमन्वयाभिधानं पिधानोपस्थापकपदं विना अनुपपन्नमिति कथं ज्ञानमिति चेन्न । अभिधानपदेन करणव्युत्पत्त्या तात्पर्य्यस्य विवक्षितत्वात् । तथा च द्वारकर्मकपिधानक्रियासंसर्गपरत्वं पिधानोपस्थापकपदं विना अनुपपन्नमिति ज्ञानं तत्रापि संभाव्यते ।**

अभिहितानुपपत्तिस्तु यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं कल्पयति तत्र द्रष्टव्या। यथा स्वर्गकामो ज्योतिः-ष्टोमेन यजेतेत्यत्र स्वर्गसाधनत्वस्य क्षणिकज्योतिःष्टोमयागगत-तयाऽवगतस्यानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यते॥

शि० म०—अन्वयाभिधानानुपपत्त्येत्यत्र भावव्युत्पत्तिमभिप्रेत्य शङ्कते—नन्विति। कल्प्यापूर्वमतेनाभिहितानुपपत्तिमुदाहरति—यथा स्वर्गकाम इति॥

म० प्र०—परममूले ननु द्वारमित्यादाविति। द्वारकर्मकं पिधानमित्यन्वयाभिधा-नात्प्राक् पिधानोपस्थापकपदं विना द्वारकर्मकं पिधानमित्यन्वयाभिधानमनुपपन्नमिति ज्ञानं कथ-मित्यर्थः। परममूले संसर्गपरत्वमिति। संसर्गविषयकतात्पर्य्यमित्यर्थः। परममूले तत्रा-पीति। अन्वयाभिधानात्पूर्वकालेऽपीत्यर्थः॥

न चेयमर्थापत्तिरनुमानेऽन्तर्भवितुमर्हति, अन्वयव्याप्त्यज्ञा-नेनान्वयिन्यनन्तर्भावात्, व्यतिरेकिणश्चानुमानत्वं प्रागेव निरस्तम्। अत एवार्थापत्तिस्थलेऽनुमिनोमीति नानुव्यवसायः, किन्त्वनेनेदं कल्पयामीति। नन्वर्थापत्तिस्थले इदमनेन विना-ऽनुपपन्नमिति ज्ञानं करणमित्युक्तम्, तत्र किमिदं तेन विनाऽनुप-पन्नत्वं तदभावव्यापकीभूताभावप्रतियोगित्वमिति ब्रूमः॥

शि० म०—नैयायिकमतं निराकरोति—न चेति। किमर्थापत्तेरन्वयिन्यन्त-र्भावः। उत व्यतिरेकिणि। तत्राद्यं निराकृत्य द्वितीयं निरस्यति—व्यतिरेकिण-श्चेति। नन्वर्थापत्तिस्थले लाघवेन क्लृप्तप्रमाणभावस्यानुमानस्यैव करणत्वं न त्वर्थापत्तेर्गौरवादित्यत आह—अत एवेति। ननु यद्यनुमिनोमीत्यनुव्यवसायाभा-वात्तत्र नानुमानं करणं तर्हि तद्विलक्षणानुव्यवसायाभावान्नार्थापत्तिरपि प्रमाणं स्यादिति चोदयति—किन्त्विति। ननु किं तेन विनाऽनुपपन्नत्वम्, न तावत्तदभाव-प्रयुक्ताभावप्रतियोगित्वम्, तद्धि तदभावजन्याभावप्रतियोगित्वं तदभावव्याप्याभाव-प्रतियोगित्वं वा नोभयमपीति शङ्कते—नन्विति। व्यापकत्वं प्रयुक्तत्वमिह विव-क्षितमित्याह—तदभावेति। यद्वा तेन विनाऽनुपपन्नत्वं हि तदभावव्यापकाभाव-प्रतियोगित्वम् अन्यानिरुक्तेः, तथा च व्यतिरेकव्याप्तिज्ञानं तवाप्यावश्यकं व्यभिचारज्ञानविरोधिज्ञानत्वेनानुमितिहेतुतया च क्लृप्तमित्यनुमितिमेव जनयेन्न विलक्षणप्रमितिमर्थापत्तिमित्याशयेनाक्षिपति—नन्विति। न ह्यत्र व्यतिरेकव्याप्ति-ज्ञानं नेति ब्रूमः, किन्त्वनेनेदं कल्पयामीति विलक्षणानुव्यवसायबलादर्थापत्तिविधया तत्प्रमाणमित्यभिप्रेत्य समाधत्ते—तदभावेति॥

म० प्र०—तत्र=अर्थापत्तिप्रमाणस्यान्वय्यनुमानान्तर्भावव्यतिरेक्यनुमानान्तर्भावपक्षयोर्मध्ये, आद्यम्=अर्थापत्तिप्रमाणस्यान्वय्यनुमानान्तर्भावपक्षम्, अर्थापत्तिस्थले=रात्रिभोजनकल्पनारूपप्रमा-

त्मकार्थापत्तिस्वरूपे। **न त्वर्थापत्तेरिति**। उपपाद्यज्ञानात्मकार्थापत्तिप्रमाणस्य नैव करणत्व-मित्यर्थः। **गौरवादिति**। क्लृप्तप्रत्यक्षादिप्रमाणभिन्नार्थापत्तिप्रमाणकल्पनारूपगौरवादित्यर्थः। परममूले **अत एवेति**। अर्थापत्तिप्रमाणस्यान्वय्यनुमानव्यतिरेक्यनुमानयोरन्तर्भावासंभवा-दित्यर्थः। परममूले **अर्थापत्तिस्थले इति**। प्रमारूपार्थापत्तिस्वरूपे इत्यर्थः। तत्र=अर्था-पत्तिप्रमायाम्। **तद्विलक्षणेति**। अनुमिनोमीत्यनुव्यवसायविलक्षणेत्यर्थः। अर्थापत्तिः= उपपाद्यज्ञानरूपप्रमाणाभिन्नार्थापत्तिः, किं तेन विनाऽनुपपन्नत्वम्=रात्रिभोजनेन विना दिवा-ऽभुञ्जानपुरुषवृत्तिपीनत्वनिष्ठानुपपन्नत्वं किम्। **तदभावप्रयुक्तेति**। रात्रिभोजनाभावप्रयुक्तो योऽभावो दिवाऽभुञ्जानपुरुषनिष्ठपीनत्वाभावस्तत्प्रतियोगित्वमित्यर्थः। तद्धि=तदभावप्रयुक्ताभाव-प्रतियोगित्वं हि। **तदभावजन्येति**। रात्रिभोजनाभावजन्यो योऽभावो दिवाऽभुञ्जानत्व-समानाधिकरणकपीनत्वाभावस्तत्प्रतियोगित्वमित्यर्थः। **तदभावव्याप्येति**। यत्र दिवा-ऽभुञ्जानत्वसमानाधिकरणकपीनत्वाभावस्तत्र रात्रिभोजनाभाव इति रात्रिभोजनाभावव्याप्यो योऽभावः पीनत्वाभावस्तत्प्रतियोगित्वं वेत्यर्थः। **नोभयमिति**। तदभावजन्याभावप्रतियोगित्वतदभाव-व्याप्याभावप्रतियोगित्वेत्येतदुभयविधान्यतररूपमपि तदभावप्रयुक्ताभावप्रतियोगित्वं न संभवती-त्यर्थः। दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वस्य ध्वंसादिरूपाभावं प्रति रात्रिभोजनप्रागभाव-रूपरात्रिभोजनाभावस्याकारणत्वात्तदभावजन्याभावप्रतियोगित्वाभिन्नतदभावप्रयुक्ताभावप्रतियोगित्व-रूपप्रथमपक्षासंभवः। रोगिणि दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वाभावसत्त्वेऽपि रात्रि-भोजनसत्त्वेन दिवाऽभुञ्जानत्वसमानाधिकरणकपीनत्वाभावनिष्ठरात्रिभोजनाभावनिरूपितव्याप्यभावेन तदभावव्याप्याभावप्रतियोगित्वाभिन्नतदभावप्रयुक्ताभावप्रतियोगित्वरूपद्वितीयपक्षासंभव इति भावः। व्यापकत्वरूपं प्रयुक्तत्वं विवक्षितं न तु तदभावजन्यत्वादिरूपमित्याह—**व्यापकत्वमिति**। इह=तेन विनाऽनुपपन्नत्वशरीरे। परममूले **तदभावव्यापकेति**। यत्र रात्रिभोजनाभावस्तत्र दिवाऽभुञ्जानत्वे सति पीनत्वाभाव इति रात्रिभोजनाभावव्यापको यो दिवाऽभुञ्जानत्वसमानाधि-करणकपीनत्वाभावस्तत्प्रतियोगित्वमित्यर्थः। अन्यानिरुक्तेरिति=अन्याकारस्य तेन विनाऽनुपपन्न-त्वस्य निर्वचनासंभवादित्यर्थः। अत्रेति=उत्तरमीमांसायां वेदान्तशास्त्रे इति यावत्, अर्थापत्ति-विध्या अर्थापत्तिप्रमाणत्वेन, तत्=व्यतिरेकव्याप्तिज्ञानम्॥

**एवमर्थापत्तेर्मानान्तरत्वसिद्धौ व्यतिरेके नानुमानान्तरम्। पृथिवीतरेभ्यो भिद्यते इत्यादौ गन्धवत्त्वमितरभेदं विनाऽनु-पपन्नमित्यादिज्ञानस्य कारणत्वात्। अत एवानुव्यवसायः पृथिव्यामितरभेदं कल्पयामीति॥**

**इति श्रीवेदान्तपरिभाषायामर्थापत्तिपरिच्छेदः॥**

**शि० म०—मानान्तरत्वेति**। तथा च व्यतिरेकि न मानान्तरमर्थापत्तिश्च पृथक् प्रमाणं तथोक्तमनुमानपरिच्छेदे। ननु पृथिव्यादावितरभेदसिद्धेरनन्याधीनत्वात्

व्यतिरेकि मानान्तरमित्याशङ्क्यार्थापत्तेरेव पीनत्वादिस्थले क्लृप्तप्रमाणभावतया सर्वत्र नैयायिकाभिमतव्यतिरेकस्थले सैव प्रमाणमित्याह—**पृथिवीति**। **ननु** तत्रानुव्यवसायबलादस्त्वनुपपत्तिज्ञानं करणमत्र तु न तथेत्यत आह—**अत एवेति**। यत एवानुपपत्तिज्ञानं तत्त्वेन करणमित्यर्थः॥

इति श्रीधर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते वेदान्तशिखामणावर्थापत्तिपरिच्छेदः॥ ९॥

**म० प्र०**—अनन्याधीनत्वात्=व्यतिरेकव्याप्तिज्ञानान्यानुपपत्तिज्ञानानधीनत्वात्, अन्याधीनत्वादिति पाठे तु अनुपपत्तिज्ञानान्यव्यतिरेकव्याप्तिज्ञानाधीनत्वादित्यर्थः। अर्थापत्तेः=पीनत्वाद्यधिकरणवृत्त्युपपाद्यज्ञानरूपार्थापत्तेरेवेत्यर्थः। तत्र=पीनत्वाद्यधिकरणवृत्तिरात्रिभोजनादिज्ञाने, अनुव्यवसायबलात्=दिवाऽभुञ्जाननिष्ठपीनत्वज्ञानेन रात्रिभोजनं कल्पयामीत्यनुव्यवसायबलात्। **अस्त्वनुपपत्तिज्ञानमिति**। दिवाऽभुञ्जाननिष्ठपीनत्वं रात्रिभोजनेन विनाऽनुपपन्नमिति ज्ञानं करणमस्त्वित्यर्थः। अत्र तु=पृथिवीनिष्ठेतरभेदनिश्चये तु, न तथा=पृथिव्यामितरभेदं कल्पयामीत्यनुव्यवसायाभावेनानुव्यवसायबलादनुपपत्तिज्ञानं करणं न भवति। परममूले। **अत एवेति**। उक्तानुपपत्तिज्ञानस्यानुपपन्नत्वज्ञानत्वेन करणत्वादेवेत्यर्थः। तत्त्वेन=अनुपपत्तिज्ञानत्वेन॥

इति श्रीमद्ब्रह्मविज्ञानाभिधगुरुप्रसादलब्धोदासीनामरदासशब्दवाच्याविर्भूतायां
वेदान्तपरिभाषाख्यग्रन्थस्य शिखामण्याख्यटीकायाश्च मणिप्रभाख्यायां
व्याख्यायामर्थापत्तिपरिच्छेदः॥ ९॥

---



# अथानुपलब्धिपरिच्छेदः ६.



इदानीं षष्ठं प्रमाणं निरूप्यते । ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम् । अनुमानादिजन्यातीन्द्रियाभावानुभवहेतावनुमानादावतिव्याप्तिवारणाय अजन्यान्तेति पदम् । अदृष्टादौ साधारणकारणेऽतिव्याप्तिवारणाय असाधारणेति पदम् । अभावस्मृत्यसाधारणहेतुसंस्कारेऽतिव्याप्तिवारणाय अनुभवेति विशेषणम् । न चाभावानुमितिस्थलेऽप्यनुपलब्ध्यैवाभावो गृह्यतां विशेषाभावादिति वाच्यम् । धर्माद्यनुपलब्धिसत्त्वेऽपि तदभावानिश्चयेन योग्यानुपलब्धेरेवाभावग्राहकत्वात् । ननु केयं योग्यानुपलब्धिः, किं योग्यस्य प्रतियोगिनोऽनुपलब्धिरुत योग्येऽधिकरणे प्रतियोग्यनुपलब्धिः । नाद्यः, स्तम्भे पिशाचादिभेदस्याप्रत्यक्षत्वापत्तेः । नान्त्यः, आत्मनि धर्माद्यभावस्य प्रत्यक्षत्वापत्तेरिति चेन्न, योग्या चासावनुपलब्धिश्चेति कर्मधारयाश्रयणात् ॥

शि० म०–ज्ञानाकरणकाभावानुभवकरणत्वमनुपलब्धिप्रमाणलक्षणम् । तत्करणत्वं च व्यापाराभावादसाधारणकारणत्वं विवक्षितमित्याह–**ज्ञानकरणेति** । भावानुभवकरणे चक्षुरादावतिव्याप्तिवारणाय **अभावपदम्** । ननु ज्ञानकरणाजन्येति व्यर्थमभावानुमितिस्थलेऽप्यनुपलब्ध्यैवाभावग्रहसंभवाल्लाघवेन केवलानुपलब्धेरेव प्रमाणत्वेन योग्यत्वविशेषणवैयर्थ्यादित्याशङ्क्य निराकरोति–**न चेति** ॥

म० प्र०–येषां कृपालेशत एष बोधो लब्धो मया शास्त्रविशेषवेद्यः ।
त्रेधाऽतिभक्त्या प्रणमाम्यहं तान् श्रीब्रह्मविज्ञानगुरून् शरण्यान् ॥ १ ॥

अभावानुमितिस्थले=अतीन्द्रियधर्माद्यभावानुमितिविशेष्यताख्यविषयतावति अतीन्द्रियधर्माद्यभावानुमितिकाले इति वा । अभावग्रहसंभवात्=प्रत्यक्षयोग्यप्रतियोगिकाभावग्रहसंभवात्, लाघवेन=योग्यानुपलब्धिनिष्ठप्रमाणत्वाभ्युपगमापेक्षया केवलानुपलब्धेः प्रमाणत्वस्वीकारे लाघवेन । परममूले अभावानुमितिस्थलेऽपीति=प्रत्यक्षायोग्यधर्मादिप्रतियोगिकाभावानुमितिविशेष्यताख्यविषयतावति । परममूले अनुपलब्ध्यैव=धर्मादिविषयकज्ञानविरोध्यज्ञानेनैव । परममूले विशेषाभावात्=अभावत्वेन तुल्यत्वात् । तथा च जन्यान्तविशेषणवैयर्थ्यमिति भावः । परममूले तदभावानिश्चयेन=धर्माप्रत्यक्षायोग्यत्वेन प्रत्यक्षप्रमाणजन्यधर्माद्यभावविषयकनिश्चयविरोध्यज्ञानेन । परममूले **योग्यानुपलब्धेरेवेति** । प्रत्यक्षयोग्यघटादिविषयकोपलम्भविरोध्यज्ञानस्यैवेत्यर्थः । यदिन्द्रिय-

जन्ययत्संसर्गकयत्प्रकारकानाहार्यघटाद्युपलब्धिविरोध्यज्ञानजन्ययोग्यघटादिप्रतियोगिकाभावप्रत्यक्षं प्रति तदिन्द्रियजन्यतत्संसर्गकतत्प्रकारकानाहार्यघटाद्युपलब्धिविरोध्यज्ञानं करणमिति भावः । संयोगेन घटवति भूतले संयोगसंसर्गघटत्वप्रकारकानाहार्य्यचाक्षुषघटोपलब्धिसत्त्वेऽपि त्वगिन्द्रियजन्यघटत्वप्रकारकानाहार्य्यघटोपलब्धिविरोध्यज्ञानसत्त्वेन घटाभावस्यानुपलब्ध्या प्रत्यक्षत्वापत्तिवारणाय **यदिन्द्रियजन्येति** । संयोगेन घटवति भूतले तादात्म्येन घटाभावसत्त्वेन संयोगेन घटाभावस्य प्रत्यक्षत्वापत्तिवारणाय **यत्संसर्गकेति** । संयोगेन घटवति भूतले द्रव्यप्रकारकोपलम्भविरोध्यज्ञानेन घटाभावप्रत्यक्षत्वापत्तिवारणाय **यत्प्रकारकेति** । आहार्य्यघटाभावप्रत्यक्षानुदयापत्तिवारणाय **अनाहार्य्येति** । परममूले पिशाचादिभेदस्य=पिशाचादिप्रतियोगिकान्योऽन्याभावस्य । परममूले **अप्रत्यक्षत्वापत्तेरिति** । योगजधर्मलक्षणप्रत्यासत्त्या धर्मादिप्रत्यक्षत्ववदनुष्ठानविशेषजन्यादृष्टविशेषेण पिशाचादिप्रत्यक्षत्वेऽपि लौकिकसन्निकर्षजन्यपिशाचादिप्रत्यक्षाभावेन पिशाचादिभेदस्य योग्यप्रतियोगिकत्वाभावात्प्रत्यक्षत्वं न स्यादिति भावः ॥

**अनुपलब्धेर्योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम् । यस्याभावो गृह्यते तस्य यः प्रतियोगी तस्य सत्त्वेनाधिकरणे तर्कितेन प्रसञ्जितमापादनयोग्यं यत्प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलम्भस्य तत्त्वं तदनुपलब्धियोग्यत्वम् ॥**

शि० म०–ननु अनुपलब्धेर्योग्यत्वं न प्रत्यक्षयोग्यत्वं तव मते तस्याः प्रत्यक्षत्वायोग्यत्वात् । न च योग्यानुपलब्धियोग्यत्वमात्माश्रयादित्यत आह–**अनुपलब्धेरिति** । नन्वन्यप्रतियोग्युपलब्धिप्रसञ्जनादन्याभावप्रत्ययापत्तिः । यत्र च न तत्प्रसञ्जनं तत्र नाभावग्रहः स्यादित्याशङ्क्य यत्प्रतियोगिसत्त्वप्रसञ्जनप्रयुक्तप्रसञ्जनयोग्यप्रतियोगिकत्वं यस्यानुपलम्भस्य सोऽनुपलम्भस्तदभावं प्रति योग्य इति तेन स एव गृह्यते नान्यस्याभाव इत्याह–**यस्येति** ॥

म० प्र०–प्रत्यक्षयोग्यत्वं=कदाचिल्लौकिकप्रत्यक्षविषयतावत्त्वम् । अभावस्यायोग्यत्वेन न प्रत्यक्षत्वमित्यभिप्रेत्य हेतुमाह–**तव मते इति** । यद्वा प्रमारूपाभावज्ञानविषयस्य प्रत्यक्षत्वेऽप्यनुपलब्धित्वस्य योग्यायोग्यानुपलब्धिसाधारणत्वेन करणस्वरूपानुपलब्धेर्न प्रत्यक्षत्वमित्यभिप्रेत्य हेतुमाह–**तव मते इति** । तस्याः=अनुपलब्धेः । योग्यानुपलब्धियोग्यत्वम्=प्रत्यक्षयोग्यघटादिविषयस्य याऽनुपलब्धिस्तस्या योग्यत्वं कारणतावच्छेदकशक्तिरूपधर्माक्रान्तत्वमनुपलब्धेर्योग्यत्वम् । तथा चानुपलब्धिपदेन धर्माद्यनुपलब्धेर्न ग्रहणमिति भावः । आत्माश्रयात्=योग्यत्वज्ञाने योग्यत्वज्ञानापेक्षारूपात्माश्रयात् । **अन्यप्रतियोग्युपलब्धिप्रसञ्जनादिति** । यत्तत्पदाभावेन पटादिरूपाभावप्रतियोगिन उपलब्धिप्रसञ्जनग्रहणनियमाभावात् घटरूपाभावप्रतियोगिनस्तर्कितं यत्सत्त्वं तेन तर्कितसत्त्वेन घटोपलब्धेर्यत्प्रसञ्जनं तस्मादन्याभावप्रत्ययापत्तिः=पटाद्यभावप्रत्ययापत्तिः स्यादि-

त्यर्थः । यत्र च=यदा तु यस्मिन्नधिकरणे त्विति वा, न तत्प्रसञ्जनम्=घटाद्युपलब्धिरूपानुपलब्धि-प्रतियोग्यापादनं न भवति । तत्र=तस्मिन्काले तदधिकरणे वा, नाभावग्रहः=घटाद्यभावज्ञानं न स्यात् । घटाद्युपलब्धेः प्रसञ्जनाभावेनानुपलब्धिनिष्ठयोग्यताया अभावादिति भावः । **यत्प्रतियोगीति**=यादृशघटादिरूपप्रतियोगीत्यर्थः । **प्रयुक्तेति**=अधीनेत्यर्थः । **प्रसञ्जनयोग्येति** । कदाचित्प्रसञ्जनविषयतावदुक्तप्रसञ्जनविषयताश्रयतावच्छेदकीभूतशक्तिरूपधर्मवद्वा, प्रतियोगि=निरूपकं घटकं वा यस्यानुपलम्भस्योपलम्भविरोध्यज्ञानस्येत्यर्थः । तदभावं प्रति=तत्प्रतियोगिकाभावप्रत्यक्षं प्रति । योग्यः=कारणतावच्छेदकीभूतशक्तिरूपधर्मवान् । परममूले आपादनयोग्यम्=कदाचिदापादनषिषयतावदुक्तापादनविषयताधिकरणतावच्छेदकीभूतशक्तिरूपयोग्यतावद्वा यदुपलब्धिरूपं प्रतियोगि यस्येति परममूलेऽन्वयः । प्रतियोगि=निरूपकं घटकं वा, अनुपलम्भस्य=उपलम्भविरोध्यज्ञानस्य ॥

**तथा हि । स्फीतालोकवति भूतले यदि घटः स्यात्तदा घटोपलम्भः स्यादित्यापादनसंभवात् तादृशभूतले घटाभावोऽनुपलब्धिगम्यः । अन्धकारे तु तादृशापादनाभावान्नानुपलब्धिगम्यता । अत एव स्तम्भे तादात्म्येन पिशाचसत्त्वे स्तम्भवत्तत्प्रत्यक्षतापत्त्या तदभावोऽनुपलब्धिगम्यः । आत्मनि धर्माधर्मसत्त्वेऽपि तस्यातीन्द्रियतया निरुक्तोपलम्भापादनासंभवान्न धर्माद्यभावस्यानुपलब्धिगम्यत्वम् । ननूक्तरीत्याधिकरणेन्द्रियसन्निकर्षस्थले अभावस्यानुपलब्धिगम्यत्वं त्वदनुमतं तत्र क्लृप्तेन्द्रियमेवाभावाकारवृत्तावपि करणमिन्द्रियान्वयव्यतिरेकानुविधानादिति चेन्न ॥**

शि० म०—नन्वन्धकारवति भूतले घटोपलब्धिप्रसञ्जनाभावेऽपि तद्योग्यत्वानपायात् तत्रापि तदभाव अनुपलब्धः स्यादिति शङ्क्याह—**तथा हीति** । तथा च प्रतियोगितद्व्याप्येतरयावत्प्रतियोग्युपलम्भकसमवहितत्वमेवानुपलब्धेः योग्यत्वं विवक्षितमिति नातिप्रसङ्गः । यद्वा योग्ये अधिकरणे प्रतियोग्यनुपलब्धिः योग्यानुपलब्धिः । तद्योग्यत्वं च प्रतियोगिसत्त्वप्रसञ्जनप्रयोज्यप्रतियोग्युपलब्धिप्रसञ्जनविषयत्वयोग्यत्वम् । योग्यतावच्छेदकं चाधिकरणस्य तादृशप्रतियोग्युपलम्भकसमवधानम् तेनान्धकारे घटाभाव आत्मनि धर्माद्यभावश्च नानुपलब्ध इति भावः । पूर्वोक्तदोषं निरस्यति—**अत एवेति** । इन्द्रियसन्निकर्षानन्तरं भूतलादावभावज्ञानमिति निर्विवादम्, तत्र क्लृप्तप्रमाणभावमिन्द्रियमेव करणं न तु कल्प्यानुपलब्धिगौरवादिति षष्ठप्रमाणप्रद्वेषी नैयायिकः प्रत्यवतिष्ठते—**नन्विति** ॥

म० प्र०—तद्योग्यतानपायात्=घटोपलब्धिप्रसञ्जनयोग्यतानिवृत्त्यभावात्, तत्रापि=अन्धकारवति भूतलेऽपि, तदभावः=घटाभावः, अनुपलब्धः=अनुपलब्धिप्रमाणजन्यज्ञानविषयः । परममूले तदा=

तर्हि, परममूले तादृशभूतले=स्फीतालोकवति भूतले। परममूले **तादृशापादनेति**। यद्यत्र घटः स्यात्तर्हि घटोपलम्भः स्यादित्यापादनेत्यर्थः। **प्रतियोगीति**। प्रतियोगितद्व्याप्यसंबन्धाभ्यामितरन्निखिलं यत्प्रतियोग्युपलम्भकं प्रकाशादिकं तत्समवहितत्वं वैशिष्ट्यमित्यर्थः। नातिप्रसङ्गः=अन्धकारवति भूतले उक्तघटाभावनिष्ठानुपलब्धिप्रमाणगम्यत्वप्रसक्तिर्नास्ति, तद्योग्यत्वं च=अधिकरणनिष्ठयोग्यत्वं च। **प्रयोज्येति**=अधीनेत्यर्थः। विषयत्वयोग्यत्वम्=कदाचिद्विषयतावत्त्वम्, तादृशप्रतियोगी=यस्याभावो गृह्यते तादृशो यः प्रतियोगी। परममूले अत एव=योग्यानुपलब्धेरभावग्रहहेतुत्वादेव। परममूले प्रत्यक्षत्वापत्त्या=प्रत्यक्षत्वापादनसंभवेन, तत्र=इन्द्रियसंनिकर्षानन्तरं भूतलादावभावज्ञाने॥

**तत्प्रतियोग्यनुपलब्धेरपि अभावग्रहहेतुत्वेन क्लृप्तत्वेन करणत्वमात्रस्य कल्पनात्। इन्द्रियस्य चाभावेन सह सन्निकर्षाभावेनाभावग्रहाहेतुत्वात्। इन्द्रियान्वयव्यतिरेकयोरधिकरणज्ञानाद्युपक्षीणत्वेनान्यथासिद्धेः। ननु भूतले घटो नेत्याद्यभावानुभवस्थले भूतलांशे प्रत्यक्षत्वमुभयसिद्धमिति तत्र वृत्तिनिर्गमनस्यावश्यकत्वेन भूतलावच्छिन्नचैतन्यवत् तन्निष्ठघटाभावावच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया घटाभावस्य प्रत्यक्षतैव सिद्धान्तेऽपीति चेत्सत्यम्॥**

शि० म०–विपरीतं गौरवमित्याह–**तत्प्रतियोग्यनुपलब्धेरिति**। **सन्निकर्षाभावेनेति**। न चेन्द्रियस्याभावेन समं संयुक्तविशेषणतासंबन्धः, तस्यानभ्युपगमात् प्रमाणाभावाच्चेति भावः। नन्विन्द्रियस्यान्वयव्यतिरेकाभ्यामभावग्रहहेतुत्वक्लृप्तौ तदनुरोधात् सन्निकर्षोऽपि कल्प्यते इत्याशङ्क्याह–**इन्द्रियेति**। प्रमाणचैतन्याभेदो हि ज्ञानस्य विषयांशे तव मते प्रत्यक्षत्वं तथा च चक्षुःसन्निकर्षद्वाराऽन्तःकरणस्य निर्गतत्वेन वृत्तिविषयोपाध्योरेकदेशस्थतया वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वेन भूतले घटाभाव इति ज्ञानस्य भूतलांशे प्रत्यक्षत्ववदभावांशे प्रत्यक्षत्वं स्यात्ततश्च कथमनुपलब्धेर्विजातीयप्रमाकरणत्वमिति चोदयति–**नन्विति**। यद्यप्यभाववृत्त्यवच्छिन्नचैतन्यस्य विषयचैतन्याभेदेऽप्यभावस्य प्रत्यक्षयोग्यत्वाभावाच्छब्दजन्यस्वनिष्ठधर्मादिज्ञानवन्न प्रत्यक्षत्वं प्रत्यक्षलक्षणे योग्यत्वस्यापि विषयविशेषणत्वेनोक्तत्वात्तथाप्यभ्युपेत्याह–**सत्यमिति**॥

**म० प्र०**–विपरीतं गौरवम्=वेदान्तिमते ह्यनुपलब्धेरभावग्रहहेतुत्वस्य क्लृप्तत्वात्तत्र करणत्वस्यैव कल्पनान्नैयायिकमते त्वनुपलब्धिनिष्ठेन्द्रियसहकारित्वकल्पना घटाद्यभावज्ञाननिरूपितेन्द्रियनिष्ठाप्रसिद्धकरणत्वकल्पना चेति प्रत्युत गौरवमित्यर्थः। परममूले तत्प्रतियोग्यनुपलब्धेः=अभावप्रतियोगिज्ञानस्य। अपिशब्दो दृष्टान्तार्थः। तथा च तत्र मते इन्द्रियस्या-

भावग्रहहेतुत्वं यथा क्लृप्तं तद्वदित्यर्थः । परममूले करणत्वमात्रस्येत्यस्मात्पूर्वं मयेति शेषः। तस्य=विशेषणतासंबन्धस्य, क्लृप्तौ=निश्चये सति, तदनुरोधात्=इन्द्रियनिष्ठाभावग्रहहेतुत्वनिश्चयानुरोधात्, सन्निकर्षोऽपि=इन्द्रियस्याभावेन सह संबन्धोऽपि । परममूले अधिकरणज्ञानादीत्यत्रादिपदेन प्रतियोगिज्ञानसंग्रहः । परममूले अन्यथासिद्धेः=इन्द्रियस्याभावग्रहहेतुत्वाभावेऽपीन्द्रियान्वयव्यतिरेकयोरुपपन्नत्वात् । परममूले तत्र=भूतले । परममूले **तन्निष्ठेति**=भूतलनिष्ठेत्यर्थः । विषयचैतन्याभेदेऽपि=अभावरूपविषयचैतन्याभेदेऽपि, न प्रत्यक्षत्वम्=अभावज्ञानस्य प्रत्यक्षत्वाभावः, प्रत्यक्षलक्षणे=ज्ञानगतप्रत्यक्षत्वलक्षणे । परममूले सत्यम्=अभावप्रतीतेः प्रत्यक्षत्वमिति सत्यम्, यद्यभावस्य प्रत्यक्षत्वयोग्यत्वाभावान्नाभावप्रतीतेः प्रत्यक्षत्वं तथाप्यभावनिष्ठप्रत्यक्षत्वे न तद्योग्यत्वं तन्त्रम्, किंतूक्तयोग्यानुपलब्धिगम्यत्वम् । तथा च नाभावप्रतीतेः प्रत्यक्षत्वेऽभ्युपेत्यवाद आश्रयणीय इति परममूलकर्तुरभिप्रायः ॥

**अभावप्रतीतेः प्रत्यक्षत्वेऽपि तत्करणस्यानुपलब्धेर्मानान्तरत्वात् । न हि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्षप्रमाणतानियतत्वमस्ति । दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य वाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमात् । ननु फलवैजात्यं विना कथं प्रमाणभेद इति चेन्न । वृत्तिवैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः । तथा च घटाभावाकारवृत्तिर्नेन्द्रियजन्या इन्द्रियस्य विषयविशेषणासन्निकर्षात् । किन्तु घटानुपलब्धिरूपमानान्तरजन्येति भवत्यनुपलब्धेर्मानान्तरत्वम्।नन्वनुपलब्धिरूपमानान्तरपक्षेऽभावप्रतीतेः प्रत्यक्षत्वे घटवति घटाभावभ्रमस्यापि प्रत्यक्षत्वापत्तौ तत्राप्यनिर्वचनीयघटाभावोऽभ्युपगम्येत । न चेष्टापत्तिः तस्य मायोपादानकत्वेऽभावत्वानुपपत्तिः, मायोपादानकत्वाभावे मायायाः सकलकार्य्योपादानत्वानुपपत्तिरिति चेत् ॥**

**शि०म०**-अनुपलब्धिर्न प्रत्यक्षज्ञानकरणं प्रत्यक्षप्रमाणभिन्नत्वादित्याशङ्केयमभिप्रेता । अभावज्ञानं प्रत्यक्षप्रमाणजन्यं प्रत्यक्षज्ञानत्वादिति वा । नाद्यः, तत्त्वमसीत्यादिवाक्ये व्यभिचारादित्यभिप्रेत्य द्वितीयं दूषयति-**अभावप्रतीतेरिति** । **न हीति** । प्रत्यक्षज्ञानं प्रत्यक्षप्रमाणजन्यमिति न नियमः । तत्त्वमस्यादिवाक्यजन्यज्ञाने व्यभिचारादिति भावः । नन्वौपनिषदे ब्रह्मणि प्रमाणान्तराप्रवृत्तेर्निमीलितनयनस्य च दशमत्वज्ञानात् भवतु तत्र प्रत्यक्षस्यापि ज्ञानस्य परोक्षप्रमाजन्यत्वम्, प्रकृतेऽभावप्रतीतेरिन्द्रियजन्यत्वं किं न स्यादित्याशङ्क्य पूर्वोक्तबाधकं स्मारयति-**तथा चेति** । **अनिर्वचनीयेति** । यद्यप्य-

भावस्येन्द्रियवेद्यत्ववादिमते सुतरामभावज्ञानस्य प्रत्यक्षत्वादिदं दूषणं समानमेव तथापि न्यायमते सर्वत्रारोपस्थले अन्यथाख्यात्यभ्युपगमान्न दोष इति भावः ॥

म० प्र०—इत्याशङ्क्येमित्यत्रेतीयमाशङ्क्येत्यन्वयः । व्यभिचारात्=प्रत्यक्षप्रमाणभिन्नत्वरूपहेतोर्व्यभिचारात् । नन्वभावप्रतीतेः प्रत्यक्षत्वे तत्करणस्य कथं मानान्तरत्वमित्याशङ्क्याह—परममूले **न हीति**। व्यभिचारात्=प्रत्यक्षज्ञानत्वरूपहेतोर्व्यभिचारात् । ननु प्रमाणभेदस्य प्रमारूपफलभेदायत्तत्वात्कथं प्रमारूपफलभेदं विना प्रमाणभेदसिद्धिरित्यभिप्रेत्य शङ्कते—परममूले **नन्विति**। परममूले **वृत्तिवैजात्यमात्रेणेति** । प्रत्यक्षत्वेन प्रमारूपफलस्य साजात्येऽपि भूतलाकारवृत्तेरिन्द्रियजन्यत्वादभावाकारवृत्तेरिन्द्रियाजन्यत्वाच्चेति वृत्तिवैजात्यमात्रेण प्रत्यक्षप्रमाणादनुपलब्धिरूपप्रमाणस्य वैजात्योपपत्तेरित्यर्थः । निमीलितनयनस्य चेत्यत्र चकारस्य दशमत्वज्ञानाच्चेत्यन्वयः । तत्र ब्रह्मणि दशमपुरुषे च । **परोक्षप्रमाणेति** । परोक्षप्रमाजनकशब्दप्रमाणेत्यर्थः । परममूले **तथा चेति**। वृत्त्यात्मकफलवैजात्ये सिद्धे सतीत्यर्थः । इदं दूषणम्=अनिर्वचनीयाभावरूपविषयापादनरूपं दूषणम्, आरोपस्थले=भ्रान्त्यात्मकारोपविशेष्यताख्यविषयतायोग्ये, न दोषः=अनिर्वचनीयाभावरूपविषयापादनरूपं दूषणं न ॥

**न, घटवति घटाभावभ्रमो न तत्कालोत्पन्नघटाभावविषयकः किन्तु भूतलरूपादौ विद्यमानो लौकिको घटाभावो भूतले आरोप्यते इत्यन्यथाख्यातिरेव आरोप्यसन्निकर्षस्थले सर्वत्रान्यथाख्यातेरेव व्यवस्थापनात् । अस्तु वा प्रतियोगिमति तदभावभ्रमस्थले तदभावस्यानिर्वचनीयत्वं तथापि तदुपादानं मायैव न ह्युपादानोपादेययोरत्यन्तसाजात्यं तन्तुपटयोरपि तन्तुत्वपटत्वादिना वैजात्यात् यत्किंचित्साजात्यस्य मायाया अनिर्वचनीयस्य घटाभावस्य मिथ्यात्वधर्मस्य विद्यमानत्वात् । अन्यथा व्यावहारिकं घटाभावं प्रति कथं मायोपादानमिति कुतो न शङ्केथाः । न च विजातीययोरप्युपादानोपादेयभावे ब्रह्मैव जगदुपादानं स्यादिति वाच्यम् ॥**

शि० म०—अत एवान्यथाख्यातिमवलम्ब्य परिहरति—**न घटवतीति आरोप्यसन्निकर्षस्थल इति** । आरोप्याद्यवभासस्थल इत्यर्थः । प्रत्यक्षस्थले अन्यथाख्यात्यभ्युपगमे यद्यपसिद्धान्त इति ब्रूयात्तदा पक्षान्तरमाह—**अस्तु वेति** । **अनिर्वचनीयत्वमिति** । इदं चाभावज्ञानस्य प्रत्यक्षज्ञानत्वमभ्युपेत्योक्तम् । वस्तुतस्तु अनुपलब्धाभावस्य प्रत्यक्षयोग्यत्वाभावान्नाभावज्ञानस्य प्रत्यक्षत्वमित्युक्तम् । तथा चानुमित्यादिस्थल इवात्रापि प्रतियोगिमति तदभावज्ञानस्यान्यथाख्यातित्वान्नानिर्वचनीयत्वमिति बोध्यम् । किमभावस्य सर्वाकारेण मायासाजात्यमापाद्यं

साजात्यमात्रं वा तत्राद्यं निराकृत्य द्वितीयं निरस्यति—**यत्किंचिदिति**। विजातीयाऽपि माया यद्युपादानं स्यात् तर्हि ब्रह्मणा किमपराद्धमित्याशङ्क्य निराकरोति—**न चेति**॥

**म० प्र०**—अत एव=अन्यथाख्यातिवादिमते उक्तदोषाभावादेव। परममूले रूपादावित्यत्रादिपदेन रसादिपरिग्रहः। परममूले आरोप्यसन्निकर्षस्थले=आरोप्यस्य भ्रान्तिज्ञानविषयस्य सन्निकर्षः सान्निध्यं यत्राधारे स तथा तादृशाधारे। आरोप्यादीत्यत्रादिपदेनाधारग्रहः। तथा चारोप्याधारयोर्योऽपरोक्षावभासस्तस्य विशेष्यताख्यविषयतावतीत्यर्थः। परममूले **व्यवस्थापनादिति**। तथा च नापसिद्धान्त इति भावः। **प्रत्यक्षस्थले इति**। निरुपाधिकप्रत्यक्षविषये इत्यर्थः। तथा च लोहितः स्फटिक इत्यादिसोपाधिकभ्रान्त्यात्मकप्रत्यक्षविषयेऽन्यथाख्यात्यभ्युपगमेऽपि निरुपाधिकभ्रमविषयेऽन्यथाख्यात्यभ्युपगमे तु सिद्धान्तहानिः स्यादिति भावः। परममूले **तदभावेति**=घटाभावेत्यर्थः। परममूले तदभावस्य=घटाभावस्य, इदं च=भ्रमविषयघटाद्यभावस्यानिर्वचनीयत्वकथनं च। यद्यभावज्ञानस्य प्रत्यक्षत्वं न स्यात्तर्हि भ्रान्तिज्ञानविषयघटाद्यभावस्य भ्रान्तिकालोत्पन्नानिर्वचनीयत्वकथनमेव व्यर्थं स्यादित्यभिप्रायेणाभ्युपेत्येत्युक्तमिति भावः। **अनुमित्यादिस्थल इवेति**। अनुमित्यादिविशेष्यताख्यविषयतावति पर्वतादौ भ्रमात्मकलिङ्गपरामर्शाद्वह्निविषयकानुमितेरन्यथाख्यातित्वं यथा तद्वदित्यर्थः। अत्रापि=भूतलादावपि, तदभावज्ञानस्य=घटाद्यभावज्ञानस्य नानिर्वचनीयत्वं=भ्रान्तिविषयघटाद्यभावस्य भ्रान्तिकालोत्पन्नानिर्वचनीयत्वं न। परममूले **अन्यथेति**। यत्किंचिन्मायासादृश्यमादाय भ्रान्तिविषयघटाद्यभावस्य मायोपादानकत्वानङ्गीकारे। परममूले **इति कुतो न शङ्केथा इति**। यत्र ग्रन्थे तस्य मायोपादानकत्वे अभावत्वानुपपत्तिरियमाशङ्का कृता तत्र ग्रन्थे व्यावहारिकघटाभावं प्रति कथं मायोपादानमिति त्वं कुतो न शङ्कां करोषीत्यर्थः॥

**प्रपञ्चविभ्रमाधिष्ठानत्वरूपस्य तस्येष्टत्वात्परिणामित्वरूपस्योपादानत्वस्य निरवयवे ब्रह्मण्यनुपपत्तेः। तथा च प्रपञ्चस्य परिणाम्युपादानं माया न ब्रह्मेति सिद्धान्त इत्यलमतिप्रसङ्गेन। स चाभावश्चतुर्विधः। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति। तत्र मृत्पिण्डादौ कारणे कार्य्यस्य घटादेरुत्पत्तेः पूर्वं योऽभावः स प्रागभावः। स च भविष्यतीति प्रतीतिविषयः॥**

**शि० म०**—ननु ब्रह्मणो विभ्रमाधिष्ठानत्वे मायैव सकलकार्य्योपादानामिति सिद्धान्तो विरुद्धचेतेत्याशङ्क्य तस्य परिणाम्युपादानपरत्वान्न विरोध इत्याह—**तथा चेति**। प्रागभावं लक्षयति—**तत्र मृत्पिण्डादाविति**। अत्र समवायिकारणमात्रवृत्तित्वे सति प्रतियोगिजनकाभावत्वं प्रागभावत्वमिति न भ्रमितव्यम्, तथा सति सत्यन्तवैयर्थ्यापत्तेः। न चैतावन्मात्रमेव लक्षणं मृत्पिण्डादावित्यादि-

वाक्यं नियताधिकरणपरमिति वाच्यम्। प्रागभावस्य कालेऽपि वृत्त्यभ्युपगमात्, जनकत्वस्य प्रागभावगर्भत्वेन आत्माश्रयाच्च। तस्मान्न प्रतियोगिजनकाभावत्वं प्रागभावत्वं किंतु कार्य्यसमवायिकालान्यावृत्तित्वे सति कार्य्योत्पत्तिपौर्वकालिकाभावत्वम्। ध्वंसेऽतिव्याप्तिवारणाय **कार्य्योत्पत्तिपौर्वकालिकेति**। अत्यन्ताभावादौ तद्वारणाय सत्यन्तम्। असंभवनिरासाय **कालेति**। अयं चाभावः कार्य्योत्पत्तेः पूर्वं तत्कारणत्वेनावश्यमभ्युपेयः, अन्यथोत्पत्त्यनन्तरं पुनः घटोत्पत्तिप्रसङ्गात्। न चोत्पन्नो घटः प्रतिबन्धकस्तस्य तत्कारणत्वे एव विश्रमादिति। तत्र मानान्तरमाह—**स चेति**। न चात्यन्ताभावेन भविष्यतीति प्रतीतेरन्यथासिद्धिः, विचित्रप्रतीतेर्विचित्रविषयत्वावश्यंभावादिति भावः॥

म० प्र०—विभ्रमाधिष्ठानत्वे=विभ्रमाधिष्ठानत्वरूपोपादानत्वस्वीकारे सति, तस्य=उक्तसिद्धान्तस्य। **न विरोध इति**। उक्तसिद्धान्तहानिर्नास्तीत्यर्थः। परममूले—**तथा चेति**। निरवयवब्रह्मणः परिणामासंभवे सतीत्यर्थः। परममूले **तत्रेति**। अभावेषु मध्ये इत्यर्थः। अत्र=मृत्पिण्डादावित्यादिमूले, तथा सति=मूलकारकस्य समवायिकारणेत्याद्युक्तार्थस्य विवक्षितत्वे सति, एतावन्मात्रमेव=सत्यन्तरहितमेव, प्रागभावगर्भत्वेन=जनकत्वमनन्यथासिद्धत्वे सति नियतपूर्ववृत्तित्वम्, पूर्ववृत्तित्वं च कार्य्यप्रागभावाधिकरणक्षणवृत्तित्वमिति प्रागभावघटितत्वेन, कार्य्यसमवायिकालान्यावृत्तित्वे सति=कार्य्योपादानकारणं कालश्चेत्येताभ्यामन्यावृत्तित्वे सति, तस्य=घटादिनिष्ठप्रतिबन्धकत्वस्य, तत्कारणत्वे=प्रागभावनिष्ठकारणत्वे, विश्रमात्=साधकत्वात्। प्रतिबन्धकत्वं च कारणीभूताभावप्रतियोगित्वम्। प्रकृते हि कारणीभूताभावो घटप्रागभावस्तत्प्रतियोगित्वं घटे इति प्रतिबन्धकत्वस्य प्रागभावनिष्ठघटनिरूपितकारणत्वसाधकत्वमेवेति भावः। प्रागभावेऽर्थापत्तिरूपं प्रमाणमुक्त्वा प्रागभावे प्रमाणान्तरमप्यस्तीत्यभिप्रेत्याह—**तत्रेति**। प्रागभावे इत्यर्थः। भविष्यतीति प्रतीतेरत्यन्ताभावेनान्यथासिद्धिरित्यन्वयः। तथा चात्यन्ताभावाभिन्नो योऽन्यथा प्रागभावातिरिक्तो विषयस्तेनोपपत्तिरित्यर्थः। भविष्यति=भविष्यत्कालिकसत्ताश्रय इत्यर्थः। विचित्रप्रतीतेः=घटो भविष्यति घटो विनष्टः घटोऽत्र नास्ति घटो न पट इत्यादिननानाविधप्रतीतेः॥

**तत्रैव घटस्य मुद्गरपातानन्तरं योऽभावः स ध्वंसाभावः। ध्वंसस्यापि स्वाधिकरणकपालनाशे नाश एव। न च घटोन्मज्जनापत्तिः घटध्वंसध्वंसस्यापि घटप्रतियोगिकध्वंसत्वात्॥**

शि० म०—ध्वंसं निरूपयति—**तत्रैवेति**। मृत्पिण्डादावित्यर्थः। तथा च कार्य्यसमवायिकालान्यावृत्तिप्रतियोग्यजनको योऽभावः। स प्रध्वंसः। स च घटो विनष्टः इत्यादिप्रतीतिविषय इति भावः। प्रध्वंसाभावोऽनन्त इति न्यायमतं निरस्यति—**ध्वंसस्यापीति**। ननु नाशकशून्यत्वाद् ध्वंसोऽविनाशीत्यत आह=**स्वाधिकरणेति**।

घटोन्मज्जनेति। प्रागभावध्वंसानाधारकालस्य प्रतियोगिकालत्वनियमादिति भावः॥ कालस्य ध्वंसानाधारत्वमसिद्धमित्याह–घटध्वंसध्वंसस्येति। यथा हि घटोत्पत्तेः पूर्वं घटो भविष्यति तद्ध्वंसो भविष्यतीति प्रतीतेर्लाघवादेकस्यैव प्रागभावस्य घटध्वंसप्रतियोगित्वं तद्वत् घटध्वंसध्वंसकाले घटो विनष्ट इति प्रतीतेर्लाघवाच्च तस्यैव घटप्रतियोगित्वमिति भावः॥

म० प्र०–कार्य्यसमवायिकालान्यावृत्तीति। कार्य्योपादानकारणकालेत्येताभ्यामन्यावृत्तीत्यर्थः। अनन्तः=नाशरहितः। प्रागभावध्वंसेति। प्रतियोगिप्रागभावाप्रतियोगिध्वंसेत्यर्थः। घटो भविष्यति=भविष्यत्कालिकसत्ताश्रयो घट एतत्कालिकप्रागभावप्रतियोगी घट इति यावत्, तद्ध्वंसो भविष्यति=भविष्यत्कालिकसत्त्वाश्रयो घटध्वंसः एतत्कालिकघटध्वंसप्रागभावप्रतियोगी घटध्वंस इति यावत्। घटध्वंसप्रतियोगित्वमिति। घटतद्ध्वंसेत्येतदुभयप्रतियोगिकत्वमित्यर्थः। न्यायनये हि घटादिध्वंसप्रागभावो घटादिसत्त्वदशायां घटादिरूपः घटादिप्रागभावदशायां तु घटादिप्रागभावरूपश्च। घटादिदशायां घटादिप्रागभावदशायां च घटादिध्वंसो भविष्यतीति प्रतीतेर्लाघवाच्च यथा घटादिप्रागभावघटादिध्वंसप्रागभावयोरेकरूपता तद्वत् घटादिध्वंसकाले घटादिध्वंसध्वंसकाले च घटादिर्विनष्ट इति प्रतीतेर्लाघवाच्च घटादिध्वंसघटादिध्वंसध्वंसयोश्चैकरूपत्वम्। तथा च घटादिध्वंसकालस्य घटादिकालत्वाभाववत् घटादिध्वंसप्रतियोगिकध्वंसकालस्यापि घटादिकालत्वाभावात् घटादिध्वंसध्वंसकालस्य घटादिध्वंसानाधारत्वं नास्तीति भावः। तस्यैव=घटध्वंसाभिन्नघटध्वंसध्वंसस्यैव। न च घटध्वंसघटध्वंसध्वंसयोरभेदे घटध्वंसाधिकरणकपालध्वंसोत्तरकालाभिन्नघटध्वंसध्वंसकाले घटध्वंसध्वंसस्यापि नाशापत्तिरिति वाच्यम्। घटध्वंसकाले घटध्वंसध्वंसस्याविद्यमानत्वात् घटप्रतियोगिकत्वेन घटध्वंसघटध्वंसध्वंसयोरभेदेऽपि घटध्वंसस्य केवलघटप्रतियोगिकत्वेन घटध्वंसध्वंसस्य तु घटजन्यध्वंसप्रतियोगिकत्वेन च घटध्वंसघटध्वंसध्वंसयोर्भेदस्यापि संभवाच्च॥

**अन्यथा प्रागभावध्वंसात्मकघटस्य नाशे प्रागभावोन्मज्जनापत्तिः। न चैवमपि यत्र ध्वंसाधिकरणं नित्यं तत्र कथं ध्वंसनाश इति वाच्यम्। तादृशमधिकरणं यदि चैतन्यव्यतिरिक्तं तदा तस्य नित्यत्वमसिद्धं ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मज्ञाननिवर्त्यतया वक्ष्यमाणत्वात्॥**

शि० म०–ननु ध्वंसस्य प्रतियोगिजन्यत्वनियमादजनको घटो न प्रतियोगीत्यत आह–अन्यथेति। तथा च प्रागभावस्य घटनाशं प्रत्यजनकत्वेऽपि घटध्वंसकाले प्रागभावो नष्ट इत्यनुभवाल्लाघवाच्च घटध्वंसस्य प्रागभावप्रतियोगित्वमिति तदा प्रकृतेऽपि तुल्यमिति भावः। नित्याधिकरणवृत्तिध्वंसस्य विनाशकाभावादनन्तत्वसिद्धौ तत्सामान्यादितरोऽपि ध्वंसस्तथेत्याशङ्क्य निराकरोति–न चैवमिति॥

म० प्र०—अजनकः=घटध्वंसध्वंसाजनकः, न प्रतियोगी=घटध्वंसध्वंसप्रतियोगी न भवति। परममूले **अन्यथेति**। ध्वंसजनकस्यैव ध्वंसप्रतियोगित्वमिति नियमस्वीकारे इत्यर्थः। परममूले **प्रागभावध्वंसात्मकेति**। नैयायिकमते घटादिप्रागभावध्वंसात्मको यो घटादिस्तस्य नाशे सति घटादिप्रागभावोन्मज्जनविरोधिनो घटादिप्रागभावनाशात्मकघटादेरभावा- घटादिप्रागभावप्रादुर्भावापत्तिः स्यादित्यर्थः। **तथा चेति**। घटादिप्रागभावध्वंसात्मकघटादेर्नाशे सति घटादिप्रागभावोन्मज्जनापत्तौ सत्यामित्यर्थः। **इतीति**। अस्याग्रे घटादिप्रागभावोन्मज्जनापत्तिदोषवारणायेति यदा ब्रूयादिति शेषः। प्रकृतेऽपि=घटध्वंसध्वंसकाले घटोन्मज्जनापत्त्यापादनेऽपि, तुल्यम्=समाधानं तुल्यम्। अयं भावः। नैयायिकमते हि घटादिप्रागभावध्वंसो घटादिकाले घटादिरूपः घटादिध्वंसकाले तु घटादिध्वंसरूपश्च यथा घटादिप्रागभावस्य घटादिजनकत्वेन घटादिध्वंसाजनकत्वेऽपि घटादिकाले घटादिप्रागभावो नष्ट इति प्रतीतिवत् घटादिध्वंसकालेऽपि घटादिप्रागभावो नष्ट इति प्रतीतेर्लाघवाच्च घटादिप्रागभावध्वंसाभिन्नघटादिध्वंसस्यैव घटादिप्रागभावप्रतियोगित्वं यथा च घटादिध्वंसो घटादिविरोधी तथा घटादिप्रागभावस्यापि विरोधीति न घटादिप्रागभावोन्मज्जनापत्तिरेवं मन्मतेऽपि घटादेर्घटादिध्वंसजनकत्वेन घटादिध्वंसध्वंसाजनकत्वेऽपि घटादिध्वंसकाले घटादिर्विनष्ट इति प्रतीतिवत् घटादिध्वंसध्वंसकालेऽपि घटादिर्विनष्ट इति प्रतीतिबलाल्लाघवाच्च घटादिध्वंसाभिन्नघटादिध्वंसध्वंसस्यैव घटादिप्रतियोगित्वं तथा च घटादिविरोधिनो घटादिध्वंसध्वंसस्य सत्त्वेन न घटाद्युन्मज्जनापत्तिरिति। अनन्तत्वसिद्धौ=नित्यत्वसिद्धौ, तत्सामान्यात्=अनित्याधिकरणकध्वंसस्यापि ध्वंसत्वेन नित्याधिकरणकध्वंसतुल्यत्वात्, इतरोऽपि=अनित्याधिकरणकोऽपि, तथा=नित्यः। अनित्याधिकरणको ध्वंसो नित्यः ध्वंसत्वान्नित्याधिकरणकध्वंसवदिति भावः। परममूले **एवमपीति**। अनित्याधिकरणकध्वंसनाशेन घटाद्युन्मज्जनापत्तिरूपदोषनिराकरणेनानित्याधिकरणकध्वंसस्यानित्यत्वेऽपीत्यर्थः। परममूले **यत्रेति**। यदित्यर्थः॥

**यदि च ध्वंसाधिकरणं चैतन्यं तदाऽसिद्धिः, आरोपितप्रतियोगिकप्रध्वंसस्याधिष्ठाने प्रतीयमानस्याधिकरणमात्रत्वात्। तदुक्तम्। "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः॥" इति। एवं शुक्तिरूप्यविनाशोऽपीदमवच्छिन्नचैतन्यमेव। यत्राधिकरणे यस्य कालत्रयेऽप्यभावः सोऽत्यन्ताभावः। यथा वायौ रूपात्यन्ताभावः। सोऽपि वियदादिवद्ध्वंसप्रतियोग्येव। इदमिदं नेति प्रतीतिविषयोऽन्योन्याभावः। अयमेव विभागो भेदः पृथक्त्वं चेति व्यवह्रियते। भेदातिरिक्तविभागादौ प्रमाणाभावात्। अयं चान्योन्याभावोऽधिकरणस्य सादित्वे सादिर्यथा घटे पटभेदः। अधिकरणस्यानादित्वेऽनादिरेव।**

**यथा जीवे ब्रह्मभेदः ब्रह्मणि जीवभेदः। द्विविधोऽपि भेदो ध्वंसप्रतियोग्येव अविद्यानिवृत्तौ तत्परतन्त्राणां निवृत्त्यवश्यंभावात्। पुनरपि भेदो द्विविधः। सोपाधिको निरुपाधिकश्चेति। तत्रोपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वम्। तच्छून्यत्वं निरुपाधिकत्वम्। तत्राद्यो यथा। एकस्यैवाकाशस्य घटाद्युपाधिभेदेन भेदः॥**

शि० म०—तत्किमाकाशादि नित्याधिकरणत्वेन विवक्षितमुत ब्रह्म तत्राद्यं निराकृत्य द्वितीयं दूषयति—**यदि चेति**। असिद्धिः=ध्वंसाधिकरणत्वासिद्धिः। ब्रह्मारोपितनाशरूपमारोपाधिष्ठानत्वादिदमवच्छिन्नचैतन्यवदित्यत्र दृष्टान्तासिद्धिमाशङ्क्याह—**एवमिति**। अतिरिक्तकल्पने गौरवादप्रामाणिकत्वाद् भेदप्रतीतेश्च राहोः शिर इतिवदुपपत्तेर्नातिरिच्यते ध्वंस इति भावः। अत्यन्ताभावं लक्षयति—**यत्रेति**। त्रैकालिकाभावं निस्संदिग्धमुदाहरति—**यथेति**। न्यायमतं निराकरोति—**अयमेवेति**। भेदं विभजते—**अयं चेति**। अनादिभेदस्य ब्रह्मवन्निवर्त्यत्वं न स्यादित्याशङ्क्याविद्यावन्न विरोध इत्याह—**द्विविधोऽपीति**॥

म० प्र०—तत्=तर्हि ध्वंसत्वेन नित्याधिकरणकध्वंसतुल्यत्वेनाधिकरणध्वंसस्य नित्यत्वापादने सतीति यावत्। नित्याधिकरणत्वेनाकाशादि किं विवक्षितमित्यन्वयः। **ध्वंसाधिकरणत्वेति**। चैतन्यस्य ध्वंसाधिकरणत्वेत्यर्थः। आरोपितप्रतियोगिकध्वंसस्याधिकरणमात्रत्वे सुरेश्वराचार्य्यसंमतिमाह—परममूले **तदुक्तमिति**। आरोपितप्रतियोगिकध्वंसस्याधिकरणमात्रत्वं सुरेश्वराचार्य्यैरुक्तमित्यर्थः। व्यावहारिकारोपितप्रतियोगिध्वंसोऽधिष्ठानमात्रो नाशत्वाच्छुक्तिरूप्यनाशवदित्यनुमानमभिप्रेत्याह—**ब्रह्मेति**। अतिरिक्तकल्पने=अधिष्ठानातिरिक्तारोपितप्रतियोगिकध्वंसकल्पने, भेदप्रतीतेः=शुक्त्यादौ रजताद्यभाव इत्यादिभेदप्रतीतेः, निःसंदिग्धम्=निःसंदिग्धाधिकरणम्। परममूले सोऽपि=अत्यन्ताभावोऽपि। परममूले **ध्वंसप्रतियोग्येवेति**। अधिकरणनाश एवात्यन्ताभावध्वंसप्रयोजकः, न चारोपितप्रपञ्चात्यन्ताभावाधिकरणब्रह्मणो नित्यत्वेन प्रपञ्चात्यन्ताभावस्य नित्यत्वापत्तिरिति वाच्यम्। प्रपञ्चात्यन्ताभावस्य ब्रह्मभिन्नत्वेन निरूपयितुमशक्यत्वादिति भावः। न विरोधः=अनादिभेदस्य निवर्त्यत्वानुपपत्तिर्नास्ति। परममूले **उपाधिसत्तेति**। यदाऽऽकाशादिभेदस्तदा घटाद्युपाधिसत्तेत्युपाधिसत्ताया व्याप्या सत्ता यस्य स तथा तस्य भावस्तत्त्वमित्यर्थः। परममूले तच्छून्यत्वम्=उपाधिसत्ताव्याप्यसत्ताकत्वात्यन्ताभाववत्त्वमित्यर्थः॥

**यथा चैकस्य सूर्य्यस्य जलभाजनभेदेन भेदः। यथा चैकस्य ब्रह्मणोऽन्तःकरणभेदाद्भेदः। निरुपाधिकभेदो यथा घटे पटभेदः। न च ब्रह्मण्यपि प्रपञ्चभेदाभ्युपगमेऽद्वैतविरोधः तात्त्विकभेदानभ्युपगमेन वियदादिवदद्वैताव्याघातात्। प्रपञ्चस्याद्वैते ब्रह्मणि**

कल्पितत्वाङ्गीकारात् । तदुक्तं सुरेश्वराचार्य्यैः । "अक्षमा भवतः केयं साधकत्वप्रकल्पने । किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥" इति । अत एव विवरणे अविद्यानुमाने प्रागभावव्यतिरिक्तत्वं विशेषणं तत्त्वप्रदीपिकायां चाविद्यालक्षणे भावत्वविशेषणं संगच्छते ॥

शि० म०—कल्पितद्वैताङ्गीकारमात्रान्नाद्वैतविरोध इत्यत्राभियुक्तसंमतिमाह—तदुक्तमिति । ननु नृसिंहाश्रमश्रीचरणैः प्रागभावस्य निराकृतत्वात्तदङ्गीकरणं सिद्धान्तविरुद्धमित्याशङ्क्य तदङ्गीकार एव सिद्धान्तानुरोधी विवरणादौ तदभ्युपगमादित्याह—अत एवेति । न च परमते नैतदिति वाच्यम्, स्वमते बाधकाभावात् उक्तप्रमाणसिद्धत्वाच्चेति भावः ॥

म० प्र०—ननु ब्रह्मणो जडत्वाभावाय ब्रह्मणि जडप्रपञ्चप्रतियोगिकभेदोऽभ्युपेयः, ब्रह्मणि जडप्रपञ्चभेदाभ्युपगमे त्वद्वैतहानिः स्यादित्यभिप्रायेणाशङ्क्याह—परममूले **न चेति** । नाद्वैतविरोधः=अद्वैतानुपपत्तिर्नास्ति, चरणैः=पूज्यैः । परममूले साधकत्वप्रकल्पने=ब्रह्मणि मुमुक्षुत्वकल्पने जगद्धेतुत्वकल्पने वा श्रवणादिसाधकत्वकल्पने वा, तदङ्गीकरणम्=प्रागभावस्वीकरणम् । तदङ्गीकार एव=प्रागभावस्वीकार एव तदभ्युपगमात्=प्रागभावस्वीकारात् । परममूले **अत एवेति** । प्रागभावस्याङ्गीकारादेवेत्यर्थः । एतत्=प्रागभावाङ्गीकरणम् । **उक्तप्रमाणेति** । घटो भविष्यतीत्यादिप्रतीत्याद्युक्तप्रमाणेत्यर्थः । परममूले अविद्यानुमाने=विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमप्रकाशितार्थप्रकाशकत्वादन्धकारे प्रथमोत्पन्नदीपप्रभावदित्याकारकाविद्यासाधकानुमाने । वस्तुपूर्वकमित्युक्ते प्रमाणज्ञानस्यात्मवस्तुपूर्वकतयाऽर्थान्तरं स्यात्तन्निवृत्त्यर्थं **वस्त्वन्तरेति** । आत्मवस्त्वतिरिक्तवस्त्विति तदर्थः । चक्षुरादिव्यावृत्त्यर्थं **स्वदेशगतेति** । अदृष्टादिव्यावृत्त्यर्थं **स्वनिवर्त्येति** । उत्तरज्ञाननिवर्त्यपूर्वज्ञानव्यावृत्त्यर्थं **स्वविषयावरणेति** । ज्ञानप्रागभावव्यावृत्त्यर्थं **स्वप्रागभावव्यतिरिक्तेति** । परममूले तत्त्वप्रदीपिकायाम्=चित्सुखाचार्य्यकृततत्त्वप्रदीपिकायाम् । परममूले अविद्यालक्षणे=अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वमविद्यात्वमित्याकारकाविद्यालक्षणे ॥

एवं चतुर्विधानामभावानां योग्यानुपलब्ध्या प्रतीतिस्तत्रानुपलब्धिर्मानान्तरम् ॥

शि० म०—तत्रानुपलब्धिर्मानान्तरमिति । अत्रेदमालोचनीयम् । किमनुपलब्धेरभावप्रमायां करणान्तरानुपपत्त्या मानान्तरत्वमास्थीयते अनुभवबलाद्वा । नाद्यः, क्लृप्तप्रमाणभावस्येन्द्रियस्यैव तत्करणत्वस्य संभवात् । न चेन्द्रियभावयोः संबन्धानिरूपणम्, संयुक्तविशेषणतासंबन्धस्यैव सत्त्वात् । न चात्र प्रमाणाभावः,

भूतले घटाभाव इत्याधाराधेयभावसंबन्धप्रतीतेः । घटाभावज्ञानं संबन्धविषयकं विशिष्टज्ञानत्वाद्दण्डी पुरुष इति ज्ञानवदित्यनुमानाच्च । अन्यथाऽभावस्य निरधिकरणत्वापत्तौ ध्वंसस्य स्वाधिकरणकपालनाशेनेत्यादिवर्णनमधिकरणस्य सादित्वे इत्यादिना भेदद्वैविध्यनिरूपणं च विरुध्येत। स च संबन्धः स्वरूपसंबन्धोऽन्यो वत्यन्यदेतत् । न च द्वितीयः, निर्घटं भूतलं पश्यामीति विपरीतानुव्यवसायात् । अन्यथा पर्वतं पश्यामि वह्निमनुमिनोमीतिवद्भूतलाभावयोर्विलक्षणानुव्यवसायापत्तिः । किंच प्रत्यक्षप्रमायां प्रत्यक्षप्रमाणं करणमित्युत्सर्गः । स च बलवता बाधकेनापोद्यते । प्रकृते चाभावज्ञानं प्रत्यक्षप्रमैवेत्युभयासिद्धम् । तत्र च प्रत्यक्षप्रमाणमिन्द्रियमेव करणं बाधकाभावात् । इन्द्रियाभावयोः संबन्धस्य च साधितत्वात् । ततश्च कथमनुपलब्धिर्मानान्तरम् । तस्मादत्र समाधानं चिन्त्यम् ॥

म० प्र०–परममूले **तत्रेति** । योग्यानुपलब्ध्याऽभावानां प्रतीतौ सत्यामित्यर्थः । अत्र=तत्रानुपलब्धिर्मानान्तरमिति मूले । अनुपलब्धेर्मानान्तरत्वमित्यन्वयः । अनुभवबलात्=घटाद्यभावमनुपलम्भयामीत्याद्यनुभवबलात् । तत्करणत्वस्य=अभावज्ञानकरणत्वस्य । **संयुक्तेति**=चक्षुरादिसंबद्धेत्यर्थः । अत्र=संयुक्तविशेषणतासंबन्धे । भूतलादिषु घटाद्यभावस्य यः संबन्धस्तत्प्रयोज्य एवेन्द्रियाभावयोः संबन्ध इत्यभिप्रेत्य प्रथमं भूतलादिषु घटाद्यभावसंबन्धं साधयति– **भूतले इति** । अन्यथा=अभावस्य भूतलादौ संबन्धानङ्गीकारे, निर्घटं=घटाभावविशिष्टम्, विपरीतानुव्यवसायात्=अनुपलब्ध्या घटाभावविशिष्टं भूतलं जानामीत्याकारकानुव्यवसायात्, विलक्षणानुव्यवसायात्, विलक्षणानुव्यवसायापत्तिः=अनुपलब्ध्या घटाभावं जानामि भूतलं पश्यामीत्याकारकविलक्षणानुव्यवसायापत्तिः । उत्सर्गः=समान्यनियमः, स च=सामान्यनियमस्तु, बाधकेन=आत्मश्रवणादिविधानवैयर्थ्यापत्तिरूपबाधकेन दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणवाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमरूपबाधकेन च, अपोद्यते=बाध्यते, प्रकृते च=अभावज्ञानस्येन्द्रियजन्यत्वे तु, किंचिद्बाधकं नास्तीति शेषः । बाधकाभावमेव साधयति– **अभावज्ञानमित्यादिना** । तत्र च=प्रत्यक्षाभावज्ञाने तु । नन्विन्द्रियाभावयोः संबन्धाभाव एवेन्द्रियनिष्ठाभावज्ञानकरणत्वे बाधक इत्याशङ्क्याह–**इन्द्रियाभावयोरिति** । ततश्च=बाधकाभावेनाभावज्ञानस्येन्द्रियजन्यत्वसंभवादेव । तस्मात्=अनुपलब्धेर्मानान्तरत्वासंभवादेव । अत्र=अभावज्ञानस्यानुपलब्धिप्रमाणजन्यत्वाभावे । **चिन्त्यमिति** । अभावज्ञानस्यानुपलब्धिप्रमाणजन्यत्वाभावाभावे इदं समाधानम् । न तावदिन्द्रियमभावज्ञानकरणम्, तयोः संबन्धानिरूपणात् । न चेन्द्रियाभावयोः संयुक्तविशेषणतैव सन्निकर्ष इति वाच्यम्, तत्र प्रमाणाभावात् । उक्तप्रतीतेरुक्तानुमानस्य च भूतलघटाभावयोराधाराधेयभावसाधकतयेन्द्रियाभावसंबन्धासाधकत्वात् । न चोक्तमूलविरोधः इन्द्रियाभावयोः संबन्धाभावकथनस्य भूतलादिघटाद्यभावयोराधाराधेयभावसंबन्धकथनपरेण मूलग्रन्थेन विरोधाभावात् । नाप्यनुव्यवसायविरोधः,

दृशिधातोः साजात्यज्ञानार्थकत्वेन फलीभूतज्ञानस्य प्रत्यक्षत्वेन चोक्तानुव्यवसायविरोधासंभवात्। यच्च किंचेत्यादिनोक्तं तदपि न सम्यक् । सन्निकर्षाभावरूपस्य प्रबलबाधकस्य सत्त्वात्। किंच किमभावस्येन्द्रियेण सह विशेषणतामात्रं सन्निकर्ष इन्द्रियसन्निकृष्टाधिकरणविशेषणता वाऽभावेन्द्रिययोः सन्निकर्षः, किंवा यत्राधिकरणे प्रतियोगिसत्त्वमनुपलब्धिविरोधि स्यात्तद्विशेषणतेन्द्रियाभावयोः सन्निकर्षः, नाद्यः, भित्त्यादिव्यवहितभूतलादिवृत्तिघटाद्यभावेऽपि विशेषणतामात्रस्य विद्यमानत्वेन घटाद्यभावस्य प्रत्यक्षतापत्तेः । न द्वितीयः, परमते कर्णवलयावच्छिन्ननभस एव श्रोत्रत्वेन कर्णवलयावच्छिन्ननभस एव स्वग्राह्यशब्दाभावाधिकरणत्वेन च स्वेन स्वस्यासन्निकर्षादधिकरणेन्द्रियसन्निकर्षाभावेन शब्दाभावस्याप्रत्यक्षत्वप्रसङ्गात् । तृतीयेऽपि प्रतियोगिसत्त्वस्यानुपलब्धिविरोधित्वमुपलभ्यमानत्वं प्रतियोगिसत्त्वे उपलभ्यमानत्वस्य यदाकदाचिद्भावः किमपेक्ष्यते उत नियमेन । नाद्यः, व्यवहितेऽप्यभावाधिकरणे कदाचित्प्रतियोगिसत्त्वे उपलम्भसंभवात्, अभावाधिकरणे व्यवधानसमयेऽपि घटाद्यभावस्य प्रत्यक्षतापत्तेः । न द्वितीयः, श्रोत्रदेशे भूतलादौ वा शब्दस्य घटादेर्वा सत्त्वेऽपि शब्दाद्युपलम्भसामग्र्यभावेन शब्दाद्यनुपलम्भसंभवेन नियमेन शब्दस्य घटादेर्वोपलम्भायोगेन श्रोत्रे भूतलादौ वा शब्दस्य घटादेर्वा भावस्याप्रत्यक्षतापत्तेस्तस्माद्योग्यानुपलब्धिरेवाभावग्राहिका नेन्द्रियमिति ॥

**एवमुक्तानां प्रमाणानां प्रामाण्यं स्वत एवोत्पद्यते ज्ञायते च ॥**

**शि० म०–प्रसङ्गादाह–एवमिति । प्रमाणानामिति । प्रमारूपाणामित्यर्थः ॥**

**तथा हि । स्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं तद्वति तत्प्रकारकज्ञानत्वं प्रमाण्यम् ॥**

**शि० म०–ननु यद्यज्ज्ञानगतं प्रामाण्यं न तत्सर्वं स्वत उत्पद्यते ज्ञायते वा तदभाववति तत्प्रकारकत्वाभावस्य विशेष्यावृत्त्यप्रकारकत्वादेश्च प्रामाण्यस्य तदयोगादित्यत आह–तथा हीति । भ्रमेऽतिप्रसङ्गवारणाय तद्वतीति । तद्विशेष्यकत्वे सतीत्यर्थः । इच्छावृत्ति प्रामाण्यं न स्वतो ग्राह्यमित्यत उक्तं ज्ञानत्वमिति । नन्विदं प्रामाण्यं स्मृतिसाधारणमिति तत्र प्रामाण्यव्यवहारप्रसङ्ग इत्याशङ्क्य प्रवृत्त्यनुकूलस्यैव प्रामाण्यस्यात्र विचार्य्यत्वात् स्मृतिसाधारणस्य च तादृशत्वेन लक्ष्यत्वान्न दोष इत्याह–संवादीति । ननु प्रामाण्यनिश्चयस्य कथं प्रवृत्तिहेतुत्वं प्रमाणाभावादिति चेत् न, निष्कम्पप्रवृत्तिः प्रामाण्यनिश्चयसाध्या तद्व्यतिरेकज्ञानत्वावच्छिन्नं प्रति बाध्यत्वात्सामान्यव्याप्तौ व्याप्तिनिश्चयसाध्यानुमितिवदित्यनुमानस्य तत्र प्रमाणत्वात् । न चाप्रामाण्यशङ्कानिवृत्तिरेव प्रवृत्तिहेतुः, तत्र चान्यथासिद्धिः प्रामाण्यनिश्चयस्येति वाच्यम् । लाघवेन भावस्य प्रामाण्यनिश्चयस्यैव हेतुत्वौचित्यात् । न च स्वतः सिद्ध एव यत्राप्रामाण्यशङ्काविरहस्तत्र व्यभिचार**

**इति वाच्यम्। दोषाभावसहितज्ञानग्राहकसामग्र्यां प्रामाण्यनिश्चयावश्यंभावात्। अन्यथा दोषे सत्यप्रामाण्यस्यैव ग्रहापत्तौ तन्निवृत्त्यनुपपत्तेरिति ॥**

म० प्र०—**यद्यदिति**। ज्ञानगतं यद्यत्प्रामाण्यमित्यन्वयः। न स्वत उत्पद्यते=आत्ममनः-संयोगादिरूपज्ञानसामान्यसामग्रीत उत्पत्त्याश्रयो न भवति, न ज्ञायते वा=दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीतो जन्यग्रहविषयो वा न भवति। **तदभाववतीति**। रजतत्वाद्यभाववद्विशेष्यकत्वसमानाधिकरणकरजतत्वादिप्रकारकत्वाभावरूपप्रामाण्यस्य शुक्त्याद्यवृत्तिप्रकारकभिन्नत्वादेश्च प्रामाण्यस्य। तदयोगात्=तदभाववति तत्प्रकारकत्वाभावादिरूपप्रामाण्यस्यात्ममनः-संयोगादिरूपज्ञानसामान्यसामग्रीप्रयोज्यत्वाभावेन प्रामाण्योत्पत्तावात्ममनःसंयोगादिरूपज्ञानसामान्यसामग्रीजन्यत्वरूपस्वतस्त्वायोगादित्यर्थः। अतिप्रसङ्गवारणाय=प्रामाण्यापत्तिवारणाय। प्रामाण्यम्=तद्वति तत्प्रकारकत्वम्, न स्वतो ग्राह्यम्=ज्ञानवृत्तिस्वतोग्राह्यप्रामाण्यभिन्नम्। तथा चेच्छायामतिव्याप्तिरिति भावः, इत्यतः=इच्छायामतिव्याप्तिरूपदोषात्, साधारणं=वृत्ति, इति=उक्तप्रामाण्यस्य स्मृतिवृत्तित्वात्। तत्र=स्मृतौ, प्रवृत्त्यनुकूलस्यैव=प्रामाण्यज्ञानद्वारा संवादिप्रवृत्तिजनकस्यैव, अत्र=मूले, स्मृतिसाधारणस्य च=स्मृतिवृत्तिप्रामाण्यस्य तु, तादृशत्वेन=संवादिप्रवृत्तिजनकत्वेन, न दोषः=स्मृतौ प्रामाण्यव्यवहारस्येष्टत्वेन प्रामाण्यव्यवहारप्रसक्तिरूपदोषो नास्ति। तद्व्यतिरेकज्ञानत्वावच्छिन्नं प्रति=प्रामाण्याभावज्ञानत्वावच्छिन्नज्ञानेन, सामान्यव्याप्तौ=यत्र यदभावज्ञानत्वावच्छिन्नेन बाध्यत्वं तत्र तन्निश्चयसाध्यत्वमित्याकारकसामान्यव्याप्तौ। **व्याप्तिनिश्चयसाध्यानुमितिवदिति**। अनुमितौ हि हेतुवृत्तिव्याप्त्यभावज्ञानत्वेन बाध्यत्वस्य व्याप्तिनिश्चयसाध्यत्वस्य च सत्त्ववदित्यर्थः। तत्र=प्रामाण्यनिश्चयस्य संवादिप्रवृत्तिजनकत्वे, तत्र च=संवादिप्रवृत्तिजनने तु, अन्यथासिद्धिः=अकारणत्वम्, लाघवेन=अप्रामाण्यशङ्काभावनिष्ठसंवादिप्रवृत्तिजनकत्वापेक्षया लघुत्वेन, स्वतः=ज्ञाने प्रामाण्यनिश्चयं विनैव, यत्र यस्मिञ्ज्ञाने, तत्र=तस्मिन् ज्ञाने। **व्यभिचार इति**। यस्मिञ्ज्ञाने पूर्वं प्रामाण्यशङ्का ततः प्रामाण्यनिश्चयस्तस्मिञ्ज्ञाने प्रामाण्यनिश्चयनिष्कम्पप्रवृत्तिजनकत्वयोरन्वयस्य सत्त्वेऽपि यस्मिञ्ज्ञाने प्रामाण्यशङ्कैव नास्ति तस्मिञ्ज्ञाने प्रामाण्यनिश्चयासत्त्वेन संवादिप्रवृत्तिजनकत्वस्य सत्त्वेन च व्यतिरेकव्यभिचार इत्यर्थः। अन्यथेत्यस्य विवरणं दोषे सतीति। तन्निवृत्त्यनुपपत्तेः=अप्रामाण्यग्रहनिवृत्त्यनुपपत्तेः। तथा च प्रामाण्यनिश्चयस्य सत्त्वेन व्यतिरेकव्यभिचार इति भावः ॥

**तच्च ज्ञानसामान्यसामग्रीप्रयोज्यं न त्वधिकगुणमप्यपेक्षते प्रमामात्रेऽनुगतगुणाभावात्। नापि प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रियसन्निकर्षः ॥**

शि० म०—ननु प्रामाण्यस्य न स्वोत्पाद्यत्वमुत्पत्तौ स्वतस्त्वमात्माश्रयात्। न च ज्ञानसामग्रीमात्रजन्यत्वं तदा प्रामाण्यस्योपाधित्वेनाजन्यत्वादित्यत आह—तच्चेति। प्रामाण्यं परत उत्पद्यते परतस्त्वं चोत्पत्तौ तस्य ज्ञानजनकसामग्र्यतिरिक्त-

कारणप्रयोज्यत्वमिति नैयायिकादयः, तान्प्रत्याह—**न त्विति** । प्रमाणाभावादिति भावः । अनुगतगुणासंभवादपि न तदपेक्षेत्याह—**प्रमामात्र इति** । भूयोऽवयवेन्द्रियसन्निकर्षसल्लिङ्गपरामर्शयोग्यतादीनां व्यभिचारेण प्रमात्वावच्छेदेन हेतुत्वायोगादिति भावः । नन्वत्र प्रत्यक्षप्रमात्वादिकमेव तज्जन्यतावच्छेदकमिति न व्यभिचार इत्याशङ्क्याह—**नापीति** ॥

म० प्र०—स्वोत्पाद्यत्वं=प्रामाण्येन जन्यत्वम्, आत्माश्रयात्=स्वोत्पत्तौ स्वापेक्षारूपात्माश्रयात्, तदा=प्रामाण्यस्य ज्ञानसामग्रीमात्रजन्यत्वं प्रामाण्योत्पत्तौ स्वतस्त्वमिति स्वीकारे, प्रामाण्यस्य=तद्वति तत्प्रकारकज्ञानत्वरूपप्रामाण्यस्य, उपाधित्वेन=नानापदार्थघटितस्वरूपत्वेन, अजन्यत्वात्=नानापदार्थानां मध्ये केषांचिदजन्यत्वेन केषांचित्स्वकारणजन्यत्वेन च ज्ञानसामग्रीमात्रजन्यत्वाभावात्, परतः=ज्ञानसामान्यसामग्र्यतिरिक्तसामग्रीतः, उत्पत्तौ=प्रामाण्योत्पत्तौ, तस्य=प्रामाण्यस्य । **ज्ञानजनकेति** । ज्ञानत्वावच्छिन्नज्ञानजनकसामग्री आत्ममनःसंयोगरूपा सामग्री तदतिरिक्तं कारणं सन्निकर्षादिरूपं कारणं तत्प्रयोज्यत्वं तदधीनत्वमित्यर्थः । परममूले **ज्ञानसामान्यसामग्रीप्रयोज्यमिति** । ज्ञानत्वावच्छिन्नज्ञानसामग्री आत्ममनःसंयोगरूपा सामग्री तत्प्रयोज्यं तदधीनमित्यर्थः । परममूले गुणं=सन्निकर्षादिरूपं गुणम् । **अनुगतेति**=अव्यभिचारीत्यर्थः । न तदपेक्षा=प्रामाण्यस्य सन्निकर्षादिगुणापेक्षा नास्ति । **भूय इति** । भूयांसो येऽवयवास्तैरिन्द्रियसन्निकर्ष इत्यर्थः । **प्रमात्वावच्छेदेनेति** । प्रमात्वावच्छिन्नप्रमानिरूपितकारणत्वासंभवादित्यर्थः, अत्र=प्रमासु । प्रत्यक्षप्रमात्वादिकमित्यत्रादिपदेनानुमितित्वोपमितित्वशाब्दत्वानां ग्रहः । **तज्जन्यतावच्छेदकमिति** । प्रत्यक्षप्रमात्वावच्छिन्नप्रमां प्रति भूयोऽवयवेन्द्रियसन्निकर्षत्वेन हेतुत्वमनुमितित्वावच्छिन्नानुमितिप्रमां प्रति सल्लिङ्गपरामर्शत्वेन हेतुत्वमुपमितित्वावच्छिन्नोपमितिप्रमां प्रति गवयनिष्ठगोसादृश्यज्ञानत्वेन हेतुत्वमित्यादिप्रकारेण सन्निकर्षादिनिष्ठजनकतानिरूपितजन्यतावच्छेदकमित्यर्थः । न व्यभिचारः=सन्निकर्षादीनां व्यभिचारो नास्ति ॥

**रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात् । सत्यपि तस्मिन् पीतः शङ्ख इति प्रत्यक्षस्य भ्रमत्वात् । अत एव सल्लिङ्गपरामर्शादिकमप्यनुमित्यादिप्रमायां न गुणः, असल्लिङ्गपरामर्शादिस्थलेऽपि विषयाबाधेनानुमित्यादेः प्रमात्वात् । न चैवमप्रमाऽपि प्रमा स्यात् ज्ञानसामान्यसामग्र्या अविशेषादिति वाच्यम्, दोषाभावस्यापि हेतुत्वाङ्गीकारात् ॥**

शि० म०—तथापि प्रमामात्रे अनुगतगुणासंभव इति दोषे सत्येव दोषान्तरमाह—**रूपादीति** । नन्वयं सन्निकर्षो बहिर्द्रव्यप्रत्यक्षप्रमायामेव गुण इति न रूपादिप्रत्यक्षप्रमायामात्मप्रत्यक्षे च व्यभिचारो दोष इत्यपरितोषादाह—**सत्य-**

**पीति** । तथा चान्वयव्यभिचार इति भावः । **असल्लिङ्गेति** । सत्यपि सल्लिङ्गपरामर्शे गन्धप्रागभावावच्छेदेन गन्धानुमितेरप्रमात्वाच्चेत्यपि बोध्यम् । **दोषाभावस्येति** । तर्हि स एवानित्यप्रमामात्रे गुणत्वेन हेतुरनुगतत्वादिति चेत् न, अपसिद्धान्तात् । दोषस्य प्रमाबाधकतया तदभावस्यान्यत्र क्लृप्तप्रतिबन्धकाभावत्वेन हेतुत्वोपपत्तौ गुणत्वेन हेतुत्वे मानाभावाच्चेति भावः ॥

म० प्र०—तथापि=प्रत्यक्षप्रमात्वादीनां सन्निकर्षादिनिष्ठजनकतानिरूपितजन्यतावच्छेदकत्वेऽपि, दोषान्तरम्=व्यतिरेकव्यभिचाररूपदोषान्तरम् । परममूले तदभावात्=भूयोऽवयवेन्द्रियसन्निकर्षस्य कारणत्वाभावात् , गुणः=असाधारणकारणम् , व्यभिचारः=व्यतिरेकव्यभिचारः । परममूले **अत एवेति** । वक्ष्यमाणव्यतिरेकव्यभिचाररूपहेतोरेवेत्यर्थः । परममूले सल्लिङ्गपरामर्शादिकमित्यत्रादिपदेन योग्यतायाः परिग्रहः । परममूले **न गुण इति** । अनुमित्यादिप्रमाऽसाधारणकारणं नेत्यर्थः । अत एवेत्युक्तवक्ष्यमाणव्यतिरेकव्यभिचारमेव दर्शयति—परममूले **असल्लिङ्गेति** । परममूले स्थलेऽपि=कालेऽपि । परममूले **प्रमात्वादिति** । तथा च व्यतिरेकव्यभिचार इति भावः । अन्वयव्यभिचारमप्याह—**सत्यपि सल्लिङ्गपरामर्शे इति** । गन्धव्याप्यपृथिवीत्ववान्पाषाण॰ इत्याकारकसल्लिङ्गपरामर्शे सत्यपीत्यर्थः । गन्धप्रागभावावच्छेदेन=पाषाणाद्युत्पत्त्युत्तरद्वितीयक्षणवृत्तिगन्धप्रागभावावच्छिन्नपाषाणादावित्यर्थः । गन्धानुमितेः=पाषाणो गन्धवान् पृथिवीत्वात्पुष्पवदित्याद्यनुमानजन्य 'पाषाणो गन्धवान्' इत्याद्यनुमितेः । परममूले **एवमिति** । प्रामाण्यस्य ज्ञानसामान्यसामग्रीप्रयोज्यत्वस्वीकारे सतीत्यर्थः । तर्हि=प्रामाण्यं प्रति दोषाभावस्यापि हेतुत्वस्वीकारे सति, स एव=दोषाभाव एव, गुणत्वेन=असाधारणकारणत्वेन, अनुगतत्वात्=दोषाभावस्य व्यभिचाराभावात् । अपसिद्धान्तात्=दोषाभावस्यानित्यप्रमामात्रेऽसाधारणकारणत्वेन हेतुत्वाभ्युपगमे सिद्धान्तहान्यापत्तेः, गुणत्वेन=असाधारणकारणत्वेन ॥

**न चैवं परतस्त्वम्, आगन्तुकभावकारणापेक्षायामेव परतस्त्वात् । ज्ञायते च प्रामाण्यं स्वतः । स्वतोग्राह्यत्वं च दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम् ॥**

शि० म०—प्रामाण्यस्य दोषाभावप्रयोज्यत्वे ज्ञानसामग्र्यतिरिक्तप्रयोज्यत्वेनाप्रामाण्यवदुत्पत्तौ परतस्त्वं स्यादित्याशङ्क्य निराकरोति—**न चैवमिति** । ज्ञानसामान्यप्रयोजकात्प्रमोत्पत्तावदृष्टादिसापेक्षत्वात्परतस्त्वं स्यादित्यत उक्तम् **आगन्तुकेति** । ज्ञानत्वाप्रयोजकेत्यर्थः । दोषाभावमागन्तुकमादाय तद्वारणाय **भावेति** । तथा चागन्तुकभावकारणसहकृतज्ञानत्वप्रयोजकप्रयोज्यत्वमुत्पत्तौ परतस्त्वम् स्वतस्त्वं तु तादृशकारणानपेक्षज्ञानसामान्यप्रयोजकप्रयोज्यत्वमिति भावः । **प्रामाण्यमिति** । तद्वति तत्प्रकारकज्ञानत्वमित्यर्थः । **दोषाभावे सतीति** । अत्र तत्प्रकारीभूतप्रकारकत्वेन

तद्विशेष्यीभूतविशेष्यकत्वेन च स्वाश्रयग्राहकत्वं स्वाश्रयग्राहकपदेन विवक्षितम्। तेन ज्ञानपदादिना तदग्रहान्न दोषः। परतस्त्ववादिनाऽपि तादृशेनानुमानादिना तद्ग्रहस्वीकारादित्यत उक्तं **यावदिति** स्वाश्रयग्राहकविशेषणम्। तादृशसामग्रीग्राह्यत्वं तज्जन्यग्रहविषयत्वम्। तथा च यत्र दोषवशादप्रामाण्यनिश्चयः तत्संशयो वा तत्र तादृश्याऽपि सामग्र्या प्रामाण्याग्रहाद्बाध इत्यत उक्तं **दोषाभाव इति**। तथा च दोषासहकृततादृशयावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं प्रामाण्यज्ञप्तौ स्वतस्त्वम्। तदुक्तं प्रथमवर्णके नृसिंहाश्रमश्रीचरणैः। दोषासहकृतज्ञानसामग्रीमात्रग्राह्यत्वं ज्ञप्तौ प्रामाण्यस्य स्वतस्त्वमिति॥

म० प्र०—**ज्ञानत्वाप्रयोजकेति**। ज्ञानत्वस्य स्मृत्यनुभवसाधारणत्वेनेन्द्रियसन्निकर्षादिकं ज्ञानत्वाप्रयोजकम्। ज्ञानत्वप्रयोजकं त्वदृष्टात्ममनस्संयोगादिकमेवेत्यर्थः। **तादृशकारणेति**। आगन्तुकभावकारणेत्यर्थः। अत्र=यावत्स्वाश्रयग्राहकेति मूले। **तत्प्रकारीभूतप्रकारकत्वेनेति**। ज्ञानप्रकारीभूतप्रकारकत्वविशिष्टेत्यर्थः। तद्विशेष्यीभूतविशेष्यकत्वेन=ज्ञानविशेष्यीभूतविशेष्यकत्वविशिष्टेत्यर्थः। तेन=स्वाश्रयग्राहकपदेन ज्ञानप्रकारीभूतप्रकारकत्वविशिष्टज्ञानविशेष्यीभूतविशेष्यकत्वविशिष्टस्वाश्रयग्राहकत्वस्य विवक्षितत्वेन, तदग्रहात्=प्रामाण्याग्रहात्, न दोषः=स्वतस्त्वहानिरूपदोषो नास्ति, तादृशेन=ज्ञानप्रकारीभूतप्रकारकज्ञानविशेष्यीभूतविशेष्यकस्वाश्रयाग्राहकेण, अनुमानादिना=घटज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात्पटज्ञानवत् व्यतिरेकेऽप्रमावदित्याद्यनुमानादिना। **तद्ग्रहेति**=प्रामाण्यग्रहेत्यर्थः। **स्वीकारादिति**। अस्याग्रे सिद्धसाधनं स्यादिति शेषः। **विशेषणमिति**। यावान् निखिलश्चासौ स्वाश्रयग्राहक इति समासः। तथा च यावत्कोटावनुव्यवसायसाक्षिरूपज्ञानादेरपि प्रविष्टत्वेन तद्विषयत्वसाधनान्न सिद्धसाधनमिति भावः। **तादृशसामग्रीति**। दोषाभावकालिकयावत्स्वाश्रयग्राहकसामग्रीत्यर्थः। तज्जन्यग्रहविषयत्वं=दोषाभावकालिकयावत्स्वाश्रयग्राहकसामग्रीजन्यग्रहविषयत्वम्। इदं हि कथनं मुरारिमिश्रभट्टमतानुसारेण। प्राभाकरमते व्यवसायस्यैव स्वाश्रयग्राहकत्वेन सिद्धान्तिमते साक्षिण एव स्वाश्रयग्राहकत्वेन तज्जन्यग्रहाभावात् तन्नये स्वाश्रयविषयकग्रहरूपसामग्रीविषयत्वरूपार्थस्याप्युक्तव्याख्यानस्योपलक्षणत्वेन न स्वतस्त्वहानिरिति। तथा च=तथैव, यत्र=यस्मिञ्ज्ञाने, तत्संशयः=प्रामाण्यसंशयः, तत्र=तस्मिञ्ज्ञाने, तादृश्याऽपि=स्वाश्रयग्राहकयाऽपि। तथा च=सिद्धसाधनादिदोषाभावे सति। **दोषासहकृतेति**=दोषासमानकालिकेत्यर्थः। **तादृशेति**। ज्ञानप्रकारीभूतप्रकारकत्वविशिष्टज्ञानविशेष्यीभूतविशेष्यकत्वविशिष्टेत्यर्थः, प्रथमवर्णके=प्रथमव्याख्याने, चरणैः=पूज्यैः प्रामाण्यस्य ज्ञप्तावित्यन्वयः॥

**स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानं तेनापि वृत्तिज्ञाने गृह्यमाणे तद्गतप्रामाण्यमपि गृह्यते। न चैवं प्रामाण्यसंश-**

यानुपपत्तिः, तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात् । यद्वा यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वम् । संशयस्थले प्रामाण्यस्योक्तयोग्यतासत्त्वेऽपि दोषवशेनाग्रहान्न संशयानुपपत्तिः ।

शि० म०-प्रामाण्यस्य स्वतोग्राह्यत्वमुपपादयति स्वाश्रय इति । संशयस्थलीयाऽपि सामग्री दोषासहकृतेति मन्वानो नैयायिकश्चोदयति-न चैवमिति । यद्वा सामग्र्यां दोषासहकृतत्वविशेषणमजानन् शङ्कते-न चैवमिति । परिहरति-तत्रेति । स्वतस्त्वमिति । प्रामाण्यस्येति शेषः । यद्यपि नेदं स्वतस्त्वप्रयोजकं संशयस्थल इवानुव्यवसायस्थलेऽपि प्रामाण्यानुमितिहेतुव्याप्तिज्ञानालिङ्गपरामर्शाभाववशेन प्रामाण्याग्रहेऽपि तद्योग्यताया न्यायमतेऽपि सत्त्वात् । तथापि पूर्वोक्त एव तात्पर्य्यम् ॥

म० प्र०-परममूले तेनापीति । साक्षिरूपज्ञानेनापीत्यर्थः । संशयस्थलीयाऽपि=संशयकालिकाऽपि । परममूले एवमिति । प्रामाण्यज्ञप्तावुक्तस्वतस्त्वस्वीकारे सतीत्यर्थः । परममूले तत्रेति । प्रामाण्ये इत्यर्थः । परममूले तत्रेति । ज्ञाने इत्यर्थः । सत्यन्तशब्दार्थानादानप्रयुक्तलाघवमभिप्रेत्याह-परममूले यद्वेति । इदं=यद्वेत्यादिनोक्तम्, स्वतस्त्वप्रयोजकं=स्वतस्त्वस्यव्यवहारप्रयोजकम् । संशयस्थल इवेति । यथा संशयकाले व्याप्तिज्ञानलिङ्गपरामर्शाद्यभाववशेन प्रामाण्याग्रहेऽपि प्रामाण्यस्य स्वाश्रयग्राहकग्राह्यत्वयोग्यताऽस्ति तद्वदित्यर्थः । अनुव्यवसायस्थलेऽपि=अनुव्यवसायकालेऽपि । तद्योग्यतायाः=प्रामाण्यग्रहयोग्यतायाः, सत्त्वादिति । प्रामाण्ये स्वतस्त्वव्यवहाराभावाच्चेति शेषः । पूर्वोक्ते एव प्रथमोक्ते निखिलत्वे एव निखिलस्वाश्रयग्राहकग्राह्यत्वयोग्यत्वे एवेति यावत् । तथा च नैयायिकमते निखिलान्तःपातिसाक्षिरूपज्ञानविषयत्वयोग्यताया अभावात्प्रामाण्ये स्वतस्त्वव्यवहारः सिद्धसाधनं च नास्तीति भावः ॥

अप्रामाण्यं तु न ज्ञानसामान्यसामग्रीप्रयोज्यं प्रमायामप्यप्रामाण्यापत्तेः । किंतु दोषप्रयोज्यम् । नाप्यप्रामाण्यं यावत्स्वाश्रयग्राहकग्राह्यमप्रामाण्यघटकतदभाववत्त्वादेर्वृत्तिज्ञानानुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात् । किंतु विसंवादिप्रवृत्त्यादिलिङ्गकानुमित्यादिविषय इति परत एवाप्रामाण्यमुत्पद्यते ज्ञायते च ॥

इति श्रीवेदान्तपरिभाषायामनुपलब्धिपरिच्छेदः ॥

शि० म०—उत्पत्तिज्ञप्त्योरप्रामाण्यस्य परतस्त्वमुपपादयति—अप्रामाण्यमिति। अप्रामाण्यं स्वतो ग्राह्यं परतोऽग्राह्यत्वादिति शङ्कते—किंत्विति। इदं रजतज्ञानमप्रमाणं विसंवादिप्रवृत्तिजनकत्वादित्यनुमानग्राह्यत्वाद्धेत्वासिद्धिरित्याह—विसंवादीति ॥

इति श्रीधर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते वेदान्तशिखामणौ अनुपलब्धिपरिच्छेदः ॥ ६ ॥

म० प्र०—परममूले अनुमित्यादीत्यादिपदेन शाव्दबोधग्रहः ॥

इति श्रीमद्ब्रह्मविज्ञानाभिधगुरुप्रसादलब्धोदासीनामरदासशब्दवाच्याविर्भूतायां वेदान्तपरिभाषाख्यग्रन्थस्य शिखामण्याख्यटीकायाश्च मणिप्रभाख्यायां व्याख्यायामनुपलब्धिपरिच्छेदः ॥ ६ ॥



# अथ विषयपरिच्छेदः ७.

एवं निरूपितानां प्रमाणानां प्रामाण्यं द्विविधम्। व्यावहारिकतत्त्वावेदकत्वं पारमार्थिकतत्त्वावेदकत्वं चेति। तत्र ब्रह्मस्वरूपावगाहिप्रमाणव्यतिरिक्तानां सर्वप्रमाणानामाद्यं प्रामाण्यं तद्विषयाणां व्यवहारदशायां बाधाभावात्। द्वितीयं तु जीवब्रह्मैक्यपराणां सदेव सोम्येदमग्र आसीदित्यादीनां तत्त्वमसीत्यन्तानां तद्विषयस्य जीवपरैक्यस्य कालत्रयाबाध्यत्वात्। तच्चैक्यं तत्त्वंपदार्थज्ञानाधीनज्ञानमिति प्रथमं तत्पदार्थो लक्षणप्रमाणाभ्यां निरूप्यते ॥

शि० म०—प्रमाणानामिति। प्रमाकरणानां तत्करणत्वलक्षणं प्रामाण्यं द्विविधमित्यर्थः। वेदान्तानां पारमार्थिकवस्तुगोचरप्रमाकरणत्वे हेतुमाह—तद्विषयस्येति। तर्ह्यादौ विषयनिरूपणमेव क्रियतामित्याशङ्क्य तन्निरूपणस्य तत्त्वंपदार्थनिरूपणाधीनत्वात्तत्पूर्वं तत्पदार्थादिनिरूपणमेवोचितमित्याह—तत्त्वंपदार्थेति। न च त्वंपदार्थनिरूपणमेव प्राग्भावि स्यादविशेषादिति वाच्यम्। तत्त्वंपदार्थेत्यत्र प्रथमं तत्पदार्थस्योपात्तत्वात् त्वंपदार्थस्य कथंचिल्लोकावगतत्वेन तदपेक्षयाऽस्यात्यन्तदुर्ज्ञेयतया च प्रथमं शिष्यजिज्ञासितत्वादिति भावः॥

म० प्र०—धर्मार्थकामादिपदार्थवृन्दं संदातृ यस्यास्ति पदारविन्दम्।
यतीन्द्रयोगीन्द्रमपूर्णचन्द्रं श्रीचन्द्रसंज्ञं सततं स्तुवे तम् ॥ १ ॥

प्रमाकरणानां=प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरूपाणाम्, तत्करणत्वलक्षणं=प्रमात्मकज्ञानजनकत्वरूपम्। परममूले **तत्त्वावेदकत्वमिति**। स्वरूपविषयकबोधजनकत्वम्। परममूले **तत्रेति**। द्विविधप्रामाण्ययोर्मध्ये इत्यर्थः। परममूले तद्विषयाणाम्=ब्रह्मस्वरूपावगाहिप्रमाणव्यतिरिक्तप्रमाणविषयाणाम्। परममूले द्वितीयं तु=पारमार्थिकस्वरूपावेदकत्वरूपप्रामाण्यं तु। ननु प्रत्यक्षादीनां पारमार्थिकवस्तुगोचरप्रमाणकरणत्वाभिधानमपहाय वेदान्तानां पारमार्थिकवस्तुगोचरप्रमाकरणत्वाभिधानं कुतः क्रियते इत्याशङ्क्य वेदान्तानां पारमार्थिकवस्तुगोचरप्रमाणकरणत्वाभिधाने हेत्वभिधानप्रतिज्ञामाह—**वेदान्तानामिति**। यो यस्य प्रमाणस्य विषयो भवति तस्मिन्नेव विषये तस्य प्रमाणस्य प्रमाजनकत्वं न त्वन्यत्रेति व्याप्तेः वेदान्तानां कालत्रयाबाध्यस्य ब्रह्मजीवैक्यरूपविषयस्य विद्यमानत्वेन ब्रह्मजीवैक्यरूपविषये संसर्गानवगाहिप्रमाजनकत्वं संभवत्येव। प्रत्यक्षादिप्रमाणानां तु ब्रह्मजीवैक्यरूपविषयाभावान्न पारमार्थिकवस्तुगोचरप्रमाकरणत्वमिति भावः। तर्हि=जीवपरैक्यस्य वेदान्तप्रमाणविषयत्वे सति, आदौ=

तत्त्वंपदार्थनिरूपणात्प्राक्, तन्निरूपणस्य=जीवपरैक्यरूपविषयनिरूपणस्य, तत्पूर्वं=जीवपरैक्यरूपविषयनिरूपणात्पूर्वम्, प्राग्भावि=तत्पदार्थनिरूपणात्पूर्वभावि, अविशेषात्=यथा तत्पदार्थो निरूपणीय एवं त्वंपदार्थोऽपि निरूपणीय इति निरूपणीयत्वेन तत्त्वंपदार्थयोस्तुल्यत्वात्। **तत्त्वंपदार्थेति**। तत्त्वंपदार्थज्ञानेत्यत्र तत्पदार्थस्य प्रथमं शिष्यजिज्ञासितत्वादित्यन्वयः। तत्पदार्थस्य प्रथमं शिष्यजिज्ञासितत्वे हेतुमाह–**प्रथमं तत्पदार्थस्योपात्तत्वादिति**। तत्त्वमसिवाक्ये आदौ तत्पदार्थस्योपस्थितत्वादित्यर्थः। प्रथमोपस्थितत्यागे बाधादिनिमित्ताभावात्प्रथमोपस्थिततत्पदार्थ एव प्रथमं निरूपणीय इति भावः। तत्पदार्थस्यैव प्रथमं जिज्ञासितत्वमित्यत्रैव हेत्वन्तरमाह–**त्वंपदार्थस्येत्यादिना दुर्ज्ञेयतया चेत्यन्तेन**। कथंचित्=सुखादिविशिष्टत्वरूपत्वेन, तदपेक्षया=लोकावगतत्वंपदार्थज्ञानापेक्षया, अस्य=तत्पदार्थस्य, अत्यन्तदुर्ज्ञेयतया च=बहुक्लेशेन ज्ञेयतया च ॥

**तत्र लक्षणं द्विविधं स्वरूपलक्षणं तटस्थलक्षणं चेति। तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणम्, यथा सत्यादिकं ब्रह्मस्वरूपलक्षणं सत्यं ज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्मेति व्यजानादित्यादिश्रुतेः ॥**

**शि० म०–लक्षणमिति**। असाधारणधर्म इत्यर्थः। वस्तुप्रतिपत्तौ स्वरूपलक्षणस्य प्रधानत्वात्तटस्थलक्षणोपजीव्यत्वाच्च प्रथमं तल्लक्षयति–**तत्रेति**। इतरानिरूप्यं यल्लक्षणं तत्स्वरूपलक्षणमित्यर्थः। यद्यपि प्रकृष्टप्रकाशश्चन्द्र इति लोकेऽपि स्वरूपलक्षणं प्रसिद्धं तथापि वैदिकस्य ब्रह्मलक्षणस्यैव प्रकृतत्वात्तदुदाहरति–**यथेति**। ज्ञानानन्दावादिपदग्राह्यौ। तथा च सत्यं ज्ञानमानन्दश्च प्रत्येकं ब्रह्मस्वरूपलक्षणं न तु सर्वज्ञत्वादिकं तस्य प्रपञ्चोपाधिकत्वेन इतरनिरूप्यत्वादिति भावः। नन्विदं ब्रह्मस्वरूपमिति कथमवगम्यते इत्यत आह–**सत्यमिति**। ननु "अस्य जन्मस्थितिभङ्गं यतस्सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः" इति वदता भगवता भाष्यकारेण सर्वज्ञत्वादेरेव ब्रह्मणः स्वरूपलक्षणत्वेनोक्तत्वात्तद्विरोध इति चेन्न, तस्य सर्वावभासनयोग्यविज्ञानाभिप्रायत्वात्। तदुक्तं विवरणाचार्य्यैः। अनेन सर्वज्ञशब्देन सर्वावभासनक्षमं विज्ञप्तिमात्रं विवक्ष्यत इति। केचित्तु सच्चिदानन्दात्मकत्वमेव ब्रह्मणः स्वरूपलक्षणं न तु सत्यत्वादि प्रत्येकं लक्षणम्। तथा हि। न तावत्सत्यत्वं लक्षणं तस्य घटादिसाधारणत्वात्। न च सत्यत्वे सति ज्ञानत्वं तस्य ज्ञानेऽपि परेणाङ्गीकारात्। नापि ज्ञानानन्दत्वे सत्यत्वरहितस्य ज्ञानानन्दात्मकस्य शून्यवादिभिरप्यङ्गीकारात्। तस्मात्सच्चिदानन्दात्मकत्वमेव स्वरूपलक्षणमिति तन्न, सिद्धान्ते घटादेः पारमार्थिकसत्यत्वाभावेनोक्तदोषासंस्पर्शात्। सिद्धान्तेनैव लक्षणप्रणयनात्। अन्यथा पराभिमतजगत्कारणस्य सच्चिदानन्दात्मकत्वाभावेन तत्राव्याप्तिप्रसङ्गात्, ततश्च सत्यत्वादि प्रत्येकमेव लक्षणमिति ॥

**म० प्र०**–वस्तुप्रतिपत्तौ=वस्तुस्वरूपज्ञानजनने, प्रधानत्वात्=प्रथमं वस्तुस्वरूपे जिज्ञासा पश्चाद्वस्त्वसाधारणधर्मे जिज्ञासेत्येवं क्रमसत्त्वेन वस्तुस्वरूपलक्षणस्य प्रधानत्वात् वस्तुस्वरूपस्यापरोक्षज्ञाने वस्तुस्वरूपस्य विषयविधया कारणत्वेन वस्तुस्वरूपस्य प्राधान्यं तटस्थलक्षणं त्वितरभेदानुमापकमित्येवं वा वस्तुस्वरूपलक्षणस्य प्रधानत्वात् । **तटस्थलक्षणोपजीव्यत्वाच्चेति** । उपजीव्यत्वं च परंपरया साक्षाद्वा जनकत्वमुपजीवकत्वं च परंपरया साक्षाद्वा कार्य्यत्वम् । तथा च तटस्थलक्षणनिष्ठकार्य्यतारूपोपजीवकतानिरूपितस्वरूपलक्षणनिष्ठकारणतारूपोपजीव्यत्वाच्च वस्तुस्वरूपतटस्थलक्षणयोर्द्देश्यविधेयभावेन तटस्थलक्षणनिष्ठोपजीवकतानिरूपितस्वरूपलक्षणनिष्ठोपजीव्यत्वाच्च वा वस्तुस्वरूपतटस्थलक्षणयोः सामान्यविशेषभावेन शेषशेषिभावेन वा तटस्थलक्षणनिष्ठोपजीवकतानिरूपितस्वरूपलक्षणनिष्ठोपजीव्यत्वाच्च वेत्यर्थः । सूचीकटाहन्यायेनादौ स्वरूपलक्षणनिरूपणमित्यपि केचिद्वदन्तीत्यपि बोध्यम् । तत्=वस्तुस्वरूपम्, लक्षयति=लक्षणेन निरूपयति, इतरानिरूप्यं=वस्तुस्वरूपेतराघटितम्, प्रकृष्टप्रकाशः=सर्वदीपादिप्रकाशाधिकप्रकाशाभिन्नश्चन्द्रः, तत्=वैदिकं स्वरूपलक्षणम्, तस्य=सर्वज्ञत्वादेः । प्रपञ्चोपाधिकत्वेन=सर्वं जानातीति सर्वज्ञ इति व्युत्पत्त्या ब्रह्मस्वरूपेतरसर्वप्रपञ्चघटितत्वेन, इतरनिरूप्यत्वात्=वस्तुस्वरूपेतरसर्वप्रपञ्चप्रयोज्यत्वात्, इदं=सत्यादिकम् । अस्य=जगतः । **इति वदतेति** । अस्यादौ "जन्माद्यस्य यतः" इति सूत्रव्याख्याने इति शेषः । तद्विरोधः=भाष्यकारोक्त्या सह विरोधः । तस्य=सर्वज्ञादित्यादिभाष्यस्य । **सर्वावभासनयोग्यविज्ञानाभिप्रायत्वादिति** । सर्वावभासने सर्वदृश्यनिष्ठविषयत्वे सर्वदृश्यविषयकव्यवहारे वा योग्यं यद्विज्ञानं तदभिप्रायकत्वादित्यर्थः । तथा च सर्वज्ञादित्यस्य सर्वदृश्यावभासनयोग्यविज्ञानादित्यर्थ इति भावः । ननु यतः सर्वज्ञादित्यादिभाष्यस्योक्ताभिप्रायकत्वं त्वया कथमवगम्यत इत्यत आह–**तदुक्तमिति** । तस्य=कालसंबन्धित्वरूपसत्यत्वस्य । घटादिसाधारणत्वात्=घटादिषु वृत्तित्वात्, तस्य=सत्यत्वे सति ज्ञानत्वस्य, ज्ञानेऽपि=अनात्मस्वरूपवृत्तिज्ञानेऽपि । परेण=नैयायिकादिना । **ज्ञानानन्दात्मकस्येति** । माध्यमिकमते हि सर्वमभावादेव भवतीत्येवं भाष्यादौ प्रसिद्धस्याभावापरपर्य्यायशून्यपदार्थस्येति शेषः । **शून्यवादिभिरिति** । सुप्तोत्थितस्य सुषुप्तावहं नासमिति परामर्शाच्छून्यमेवात्मा । अत एव "सर्वमिदं शून्यात्मकमेवासदेवेदमग्र आसीत्" इति श्रुतेरिति वदद्भिरिति शेषः । शून्यस्य सत्यत्वं नास्ति ज्ञानानन्दात्मकत्वं त्वस्तीत्यपि तदीयग्रन्थेभ्य एव द्रष्टव्यमिति । **उक्तदोषेति** । अतिव्याप्तिरूपदोषेत्यर्थः । ननु पारमार्थिकसत्यत्वस्य ब्रह्मलक्षणत्वे परमाण्वाकाशादिष्वतिव्याप्तिः स्यादित्यत आह–**सिद्धान्तेनेति** । सिद्धान्ते ब्रह्मभिन्ने कस्मिन्नपि सत्यत्वादीनामभावेन न कुत्राप्यतिव्याप्तिरिति भावः । अन्यथा=स्वसिद्धान्तेनैव लक्षणप्रणयनानङ्गीकारे । कारणस्य=परमाण्वादेः, तत्र=पराभिमतकारणे, अव्याप्तिप्रसङ्गात्=जगत्कारणलक्षणस्य सच्चिदानन्दात्मकत्वस्याव्याप्तिप्रसङ्गात्, ततश्च=सिद्धान्तेनैव लक्षणप्रणयनादेव ॥

**ननु स्वरूपस्य स्ववृत्तित्वाभावेन कथं लक्षणत्वमिति चेन्न। स्वस्यैव स्वापेक्षया धर्मधर्मिभावकल्पनया लक्ष्यलक्षणत्वसंभवात्॥**

शि० म०—स्वरूपं न लक्षणं धर्मत्वाभावादित्याक्षिपति—**नन्विति** । परिहरति—**नेति** । लक्षणलक्षणे पारमार्थिकधर्मत्वस्य गौरवेणाप्रयोजकत्वादिति भावः ॥

म० प्र०—धर्मत्वाभावात्=असाधारणधर्मस्यैव लक्षणत्वेन स्वस्य स्ववृत्तिधर्मत्वाभावात् । परममूले **स्वस्यैव स्वापेक्षयेति** । स्वस्यैव=ब्रह्मण एव, स्वापेक्षया=ब्रह्मणः स्वरूपभूतसत्यत्वाद्यपेक्षया, धर्मधर्मिभावकल्पनया=सत्यत्वादिरूपेण ब्रह्मणो लक्षणत्वं ब्रह्मत्वेन रूपेण ब्रह्मणो लक्ष्यत्वमित्येवं धर्मधर्मिभावकल्पनयेत्यर्थः । लक्षणलक्षणे=असाधारणधर्मो हि लक्षणमिति लक्षणलक्षणे, पारमार्थिकधर्मत्वस्य=पारमार्थिकासाधारणधर्मो हि लक्षणमित्यसाधारणधर्मनिष्ठपारमार्थिकत्वस्याप्रयोजकत्वादघटकत्वादित्यर्थः । पारमार्थिकत्वस्यासाधारणधर्माघटकत्वे हेतुमाह—**गौरवेणेति** ॥

**तदुक्तम् । आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते । तटस्थलक्षणं नाम यावल्लक्ष्यकालमनवस्थितत्वे सति यद्व्यावर्त्तकं तदेव । यथा गन्धवत्त्वं पृथिवीलक्षणम् । महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु गन्धाभावात् । प्रकृते च जगज्जन्मादिकारणत्वम् । अत्र जगत्पदेन कार्य्यजातं विवक्षितम्, कारणत्वं च कर्तृत्वमतोऽविद्यादौ नातिव्याप्तिः । कर्तृत्वं च तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् ॥**

शि० म०—अत्र पञ्चपादिकाचार्य्यसंमतिमाह—**तदुक्तमिति** । स्वरूपलक्षणेऽतिव्याप्तिवारणाय **यावदिति** । लक्ष्यावृत्तितादृशधर्मे तद्वारणाय **व्यावर्त्तकपदम्** । परमतेनाह—**महाप्रलय इति** । उभयमतेनाह—**उत्पत्तिकाले इति** । ब्रह्मणस्तटस्थलक्षणमाह—**प्रकृते चेति** । ननु ब्रह्मणो जगच्छब्दान्तःपातिमायादिकारणत्वाभावादसंभवः, जगच्छब्देन कार्य्यपरामर्शे कुलालादेरपि यत्किंचित्कार्य्यकारणत्वेनातिव्याप्तिरित्यत आह—**अत्रेति** । **कार्य्यजातमिति** । सर्वकार्य्यमित्यर्थः । ननु यावत्कार्य्यजन्मकारणत्वं न ब्रह्मलक्षणं तस्य प्रधानमायापरमाणुजीवशून्यसाधारणत्वादित्याशङ्क्याह—**कारणत्वं चेति**। **कर्तृत्वमिति**। अदृष्टाद्वारकतावदुपादादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमित्यर्थः । तेनाचेतनानां प्रधानमायादीनां निरास इति भावः ॥

म० प्र०—अत्र=सत्यत्वादीनां धर्मत्वे । **यावदिति** । यावदित्यारभ्य सतिपर्य्यन्तमित्यर्थः। लक्ष्यावृत्तितादृशधर्मे=पृथिव्यादिलक्ष्यावृत्तिपृथिव्यादिलक्ष्यकालपर्य्यन्तमनवस्थिते शाब्दज्ञानसुखा-

दिरूपधर्मे । तद्वारणाय=अतिव्याप्तिवारणाय । **उभयेति**=नैयायिकवेदान्तीत्यर्थः । आद्यक्षणे गुणानभिव्यक्तत्वाभिप्रायेणेयमुक्तिर्बोध्या । अन्यथा प्रश्नोपनिषद्भाष्यादावाकाशादीनां शब्दादि-गुणेन सहोत्पत्तिश्रवणेनोक्तभाष्यविरोधः स्याद्वस्तुत उभयमतेनाहेति कथनमापातत इति बोध्यम् । कार्य्यपरामर्शे=यत्किंचित्कार्य्यग्रहणे सति, तस्य=कारणत्वस्य । **प्रधानमायापरमाणुजीवशून्यसाधारणत्वादिति** । सांख्यैः स्वतन्त्रप्रकृतौ वेदान्तिभिरीश्वराश्रितमायायां नैयायिकैः परमाणुषु मीमांसकैरदृष्टद्वारा जीवेषु शून्यवादिभिः शून्ये च निखिलकार्य्यजन्मकारणत्वाभ्युपगमादित्यर्थः । **अदृष्टाद्वारकेति**=जीवादृष्टाद्वारकेत्यर्थः । अनेन विशेषणेन जीवानां निरासः । जीवानां निखिलजगदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वानां स्वादृष्टद्वारकत्वादिति भावः ॥

**ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञानसद्भावे च "यः सर्वज्ञः च सर्ववित्, यस्य ज्ञानमयं तपः, तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इत्यादिश्रुतिर्मानम् ॥**

**शि० म०**—ननु जगत्कारणस्य तावदुपादानगोचरापरोक्षज्ञानवत्त्वसद्भावे नानुमानं प्रमाणं तर्काप्रतिष्ठानात् । न च स ईक्षांचक्रे इत्यादिश्रुतिः, तस्याः सर्वगोचरेक्षणे अप्रमाणत्वादित्याशङ्क्याह-**ईश्वरस्येति** । यः सर्वज्ञः सामान्याकारेण सर्ववित् विशेषतः यस्य भगवतो ज्ञानमयं तप औपाधिकमीक्षणमिति यावत् । तस्मादीक्षणसहकृतात् कारणाद्ब्रह्मण एतत्कार्य्यं ब्रह्म=हिरण्यगर्भः, नाम=घट इत्यादि, रूपं=शुक्लादि, अन्नं=व्रीहियवादि । तदपि व्याकृतं न त्वव्याकृतम् । "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम् ॥" इति पूर्ववाक्ये अन्नपदवेदनीयाव्याकृतनामरूपसृष्टेरभिधानात् । 'यः कालकालो गुणी सर्वविद्यः' इत्यादिश्रुतिरादिपदग्राह्या ॥

**म० प्र०**—**नानुमानं प्रमाणमिति** । जगत्कारणं जगदुपादानगोचरापरोक्षज्ञानवत् चेतनत्वे सति कारणत्वात्, यत्र चेतनत्वे सति कारणत्वं तत्रोपादानगोचरापरोक्षज्ञानवत्त्वमिति सामान्यव्याप्तौ कुलालवदित्यनुमानं न प्रमाणमित्यर्थः । **तर्काप्रतिष्ठानादिति** । उक्तानुमानात्मकतर्कस्य जीवत्वरूपोपाधिमत्त्वेन निर्दोषत्वेन स्थित्यभावादित्यर्थः । सः=ईश्वरः, ईक्षां=दर्शनात्मकेक्षाम्, तस्याः=उक्तश्रुतेः । **सर्वगोचरेति**=निखिलकार्योपादानविषयकेत्यर्थः । औपाधिकं=मायारूपोपाधिजन्यम् । **तपसेति** । तपसा मायाजन्येक्षणेन, चीयते=जलेन बीजमिव वर्द्धते, ब्रह्म=अक्षरं ब्रह्म, ततः=उपचितब्रह्मणः, अन्नम्=अद्यते भुज्यते इत्यन्नमव्याकृतं सर्वप्राणिसाधारणभोग्यम्, अभिजायते=व्याचिकीर्षितावस्थारूपेणोत्पद्यते । अन्नात्=उक्ताद्व्याचिकीर्षितावस्थातोऽन्नात्, प्राणः=हिरण्यगर्भः । जायते इत्यनुषङ्गः । हिरण्यगर्भान्मनः=संकल्पविकल्पसंशयनिर्णयाद्यात्मकमभिजायते । संकल्पाद्यात्मकमनसः सत्यं=सत्याख्यमाकाशादिभूतपञ्चकमभिजायते । सत्याख्यभूतपञ्चकादण्डोत्पत्तिक्रमेण लोकाः=भूरादयो जायन्ते । तेभ्यो

लोकेभ्यो मनुष्यादिप्राणिवर्णाश्रमक्रमेण कर्माणि जायन्ते। कर्मसु निमित्तभूतेष्वमृतं। कर्मजफलं यावत्कर्माणि कल्पकोटिशतैरपि न विनश्यन्ति तावत्फलं न विनश्यतीत्यमृतमित्यर्थः। यः=परमात्मा, कालकालः=सर्वनाशकस्यापि कालस्य कालः=स्वकीयापरोक्षैक्यज्ञानद्वारा नाशकः। सर्वविद इत्यनेनापीश्वरस्योपादानगोचरापरोक्षज्ञानसद्भावः सूचित इति॥

**तादृशचिकीर्षासद्भावे च "सोऽकामयत बहु स्यां प्रजायेयेति" इत्यादिश्रुतिर्मानम्। तादृशकृतौ च "तन्मनोऽकुरुत" इत्यादिवाक्यम्। ज्ञानेच्छाद्यन्यतमगर्भलक्षणत्रितयं विवक्षितम्, अन्यथा व्यर्थविशेषणत्वापत्तेः। अत एव जन्मस्थितिध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः॥**

**शि० म०**—**तादृशेति**=तदुपादानगोचरेत्यर्थः। एवमग्रेऽपि। **ज्ञानेच्छाद्यन्यतमेति**। सकलकार्य्योपादानगोचरापरोक्षज्ञानाश्रयत्वं तादृशचिकीर्षाश्रयत्वं तादृशकृत्याश्रयत्वं चेति लक्षणत्रयं विवक्षितमित्यर्थः। तादृशज्ञानेच्छाकृत्याश्रयत्वस्य ब्रह्मलक्षणत्वे गौरवमित्याह—**अन्यथेति**। तर्हि स्थितिभङ्गगर्भमप्येकलक्षणं न स्यादित्याशङ्कामिष्टापत्त्या परिहरति—**अत एवेति**। व्यर्थविशेषणत्वादेव॥

**म० प्र०**—परममूले **प्रजायेयेति**। प्रजारूपेणोत्पद्येयेत्यर्थः। परममूले इत्यादिश्रुतिरित्यत्रादिपदेन तदैक्षतेत्याद्या श्रुतिर्ग्राह्या। परममूले इत्यादिवाक्यमित्यत्रादिपदेन स प्राणमसृजतेत्याद्या श्रुतिर्ग्राह्या। **तदुपादानेति**। निखिलजगदुपादानेत्यर्थः। **एवमग्रेऽपीति**। तादृशकृतावित्यत्रापि तादृशपदस्य तदुपादानगोचरेति व्याख्यानं बोध्यमित्यर्थः। **तादृशेति**=सकलकार्य्योपादानगोचरेत्यर्थः। **तादृशज्ञानेच्छाकृत्याश्रयत्वस्येति**। सकलकार्य्योपादानगोचरापरोक्षज्ञानाश्रयत्वे सति सकलकार्य्योपादानगोचरचिकीर्षाश्रयत्वे च सति सकलकार्य्योपादानगोचरकृत्याश्रयत्वमित्यस्य ब्रह्मलक्षणत्वे इत्यर्थः। गौरवम्=शरीरादिकृतगौरवम्। परममूले **अन्यथेति**। लक्षणत्रितयाविवक्षणे सतीत्यर्थः। तर्हि=सकलकार्य्यजन्मानुकूलसकलकार्य्योपादानगोचरापरोक्षज्ञानाश्रयत्वं सकलकार्य्यजन्मानुकूलसकलकार्य्योपादानगोचरचिकीर्षाश्रयत्वं सकलकार्य्यजन्मानुकूलसकलकार्य्योपादानगोचरकृत्याश्रयत्वं चेति लक्षणत्रितयविवक्षणे सति। **स्थितिभङ्गगर्भमपीति**। सकलकार्य्यस्थितिभङ्गानुकूलसकलकार्य्यस्थितिभङ्गोपादानगोचरापरोक्षज्ञान॰चिकीर्षाकृतिमत्त्वमित्याकारकस्थितिभङ्गगर्भमप्येकलक्षणं न स्यात्किंतु षडेव लक्षणानि स्युः। अथवा सकलकार्य्यस्थित्यनुकूलसकलकार्य्यस्थित्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं सकलकार्य्यभङ्गानुकूलसकलकार्य्यभङ्गोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमिति लक्षणद्वयं स्यादित्यर्थः॥

**एवं च लक्षणानि नव संपद्यन्ते। ब्रह्मणो जगज्जन्मादिकारणत्वे च "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति" इत्यादिश्रुतिर्मानम्॥**

**शि० म०**—ननु स्थित्यादिगर्भस्यापि न प्रत्येकं लक्षणत्वं स्थित्यनुकूलज्ञानवत्त्वस्यैव लक्षणत्वेन शेषवैयर्थ्यात् इत्याशङ्क्य जन्मगर्भलक्षणवत्स्थितिगर्भं लयगर्भं च लक्षणत्रितयमेव विवक्षितं तथा च ब्रह्मणस्तटस्थलक्षणानि नव संपद्यन्त इत्याह—**एवं चेति**। ननु ब्रह्मणो जगज्जन्मकर्तृत्वं न लक्षणम्। तद्धि सकलकार्य्योपादानविषयापरोक्षज्ञानवत्त्वं सकलकार्य्यानुकूलत्वविशेषिततादृशज्ञानवत्त्वं वा। नाद्यः, कार्य्यानुकूलतादृशज्ञानवत्त्वस्यैव कर्तृत्वव्यवहारप्रयोजकत्वेन तस्य कर्तृत्वाप्रयोजकत्वात्। न द्वितीयः, सिद्धान्ते तादृशज्ञानस्य वृत्तिविशेषरूपतया तस्यापि कार्य्यत्वेन सकलकार्य्यानुकूलत्वाभावात्। न हि तदेव तत्प्रति कारणम्, तथा च नव लक्षणानीत्यसंगतमित्यपरितोषादाह—**ब्रह्मण इति**। तथा च मायाभिन्नत्वे सति जगज्जन्महेतुत्वं तत्स्थितिहेतुत्वं तद्विलयहेतुत्वमिति लक्षणत्रयमेव विवक्षितमिति भावः। यद्वा ब्रह्मण्येव जगतो जन्मस्थितिलयोपन्यासात् तस्य जगदुपादानत्वं सूच्यते। तदुक्तं भामत्याम्, त्रिभिरस्योपादानत्वं सूच्यते इति। तथा च सर्वकार्य्योपादानत्वं ब्रह्मणस्तटस्थलक्षणम्। उपादानत्वं चाकरे एव स्फुटमिति न मायायामतिव्याप्तिरिति भावः॥

म० प्र०—उक्तलक्षणद्वयं सिद्धान्त्यभिप्रायं मत्वा शङ्कते—**ननु स्थित्यादिगर्भस्येति**। अत्रादिपदेन भङ्गो ग्राह्यस्तथा च सकलकार्य्यस्थित्यनुकूलसकलकार्य्यस्थित्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं सकलकार्य्यभङ्गानुकूलसकलकार्य्यभङ्गोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमित्येतयोरपि न प्रत्येकं लक्षणत्वं सकलकार्य्यस्थित्यनुकूलसकलकार्य्यस्थित्युपादानगोचरापरोक्षज्ञानवत्त्वमात्रस्य सकलकार्य्यभङ्गानुकूलसकलकार्य्यभङ्गोपादानगोचरापरोक्षज्ञानवत्त्वमात्रस्य च लक्षणत्वसंभवेन शेषयोश्चिकीर्षाकृतिमत्त्वयोर्वैयर्थ्यादित्यर्थः। एतामप्याशङ्कामिष्टापत्त्या परिहरति—**जन्मगर्भलक्षणवदित्यादिना। नव संपद्यन्ते इति**। सकलकार्य्यजन्मानुकूलसकलकार्य्योपादानगोचरापरोक्षज्ञानवत्त्वं सकलकार्य्यजन्मानुकूलसकलकार्य्योपादानगोचरचिकीर्षावत्त्वं सकलकार्य्यजन्मानुकूलसकलकार्य्योपादानगोचरकृतिमत्त्वं सकलकार्य्यस्थित्यनुकूलसकलकार्य्यस्थित्युपादानगोचरापरोक्षज्ञानवत्त्वं सकलकार्य्यस्थित्यनुकूलसकलकार्य्यस्थित्युपादानगोचरचिकीर्षावत्त्वं सकलकार्य्यस्थित्यनुकूलसकलकार्य्यस्थित्युपादानगोचरकृतिमत्त्वं सकलकार्य्यलयानुकूलसकलकार्य्यलयोपादानगोचरापरोक्षज्ञानवत्त्वं सकलकार्य्यलयानुकूलसकलकार्य्यलयोपादानगोचरचिकीर्षावत्त्वं सकलकार्य्यलयानुकूलसकलकार्य्यलयोपादानगोचरकृतिमत्त्वमिति नव लक्षणानि संपद्यन्ते इत्यर्थः। तद्धि=सकलकार्य्यजन्मकर्तृत्वं हि। **सकलकार्य्यानुकूलत्वविशेषिततादृशज्ञानवत्त्वं वेति**। सकलकार्य्यजनकत्वे सति सकलकार्य्योपादानविषयकापरोक्षज्ञानवत्त्वं वेत्यर्थः। **कार्य्यानुकूलतादृशज्ञानवत्त्वस्यैवेति**। कार्य्यजनककार्य्योपादानगोचरापरोक्षज्ञानवत्त्वस्यैवेत्यर्थः। तस्य=सकलकार्य्योपादानविषयकापरोक्षज्ञान-

वच्चस्येत्यर्थः । कर्तृत्वाप्रयोजकत्वात्=कर्तृत्वव्यवहाराहेतुत्वात् । तादृशज्ञानस्य=सकलकार्य्यजनकसकलकार्य्योपादानविषयकापरोक्षज्ञानस्य । वृत्तिविशेषरूपतया=मायावृत्तिरूपतया । **न हि तदेव तत्प्रति कारणमिति ।** तदेव सकलकार्य्यजनकमायावृत्तिरूपसकलकार्य्योपादानगोचरापरोक्षज्ञानमेव, तत्प्रति=स्वं प्रति, न कारणं स्वस्य पौर्वापर्य्याभावादित्यर्थः । हेतुत्वं=कर्तृत्वभिन्नकारणत्वमात्रम् । **इतीति ।** अत्रेत्येवेत्यन्वयः । भामत्यां=वाचस्पतिकृतभाष्यटीकायाम्, त्रिभिः=जन्मस्थितिलयैः, अस्य=ब्रह्मणः, उपादानत्वं च=ब्रह्मण उपादानत्वं तु, आकरे=वेदान्तभाष्ये ॥

**यद्वा निखिलजगदुपादानत्वं ब्रह्मणो लक्षणम् । उपादानत्वं च जगदध्यासाधिष्ठानत्वं जगदाकारेण परिणममानमायाधिष्ठानत्वं वा ॥**

शि० म०—ननु जगदुपादानत्वं न लक्षणम्, तद्धि सकलकार्य्याध्यासाधिष्ठानत्वं तथा सत्यकार्य्यावस्थानं ब्रह्मणोऽन्यत्रेत्यद्वितीयब्रह्मासिद्धिप्रसङ्गादित्यपरितोषादाह—**यद्वेति ।** शुक्त्यवच्छिन्ने चैतन्येऽतिव्याप्तिवारणाय **निखिलेति ।** असंभववारणाय जगत्पदं ब्रह्मव्यतिरिक्तपरम् । ननु न समवायिकारणत्वमुपादानत्वं समवायानभ्युपगमात् । नापि तदाकारेण परिणममानत्वं मायायामतिव्याप्तेः । ब्रह्मणोऽपरिणामित्वेनासंभवाच्चेत्यत आह—**उपादानत्वं चेति ।** तदध्यासाधिष्ठानत्वं तदुपादानत्वम् जगत्पदं तु प्रकृताभिप्रायमिति बोध्यम् । **जगदाकारेणेति ।** जगत्पदेनात्र कार्य्यजातं विवक्षितं निखिलपदं चानुषञ्जनीयम् । तथा च पूर्वोक्तविशिष्टचैतन्ये नातिव्याप्तिर्न वाऽसंभवः । यद्यपि मायाधिष्ठानत्वमात्रमेव ब्रह्मणो लक्षणमस्तु तस्य "मायिनं तु महेश्वरम्" इत्यादावीश्वरासाधारणधर्मत्वावगमात् तथापि तेन रूपेण ब्रह्मप्रतिपत्तौ तदन्याधिष्ठानमन्यदिति संभावनायामधिकरणान्तरप्रमितस्य जगतो नेह नानाऽस्तीत्यादिना ब्रह्मणि निषेधावगमेऽपि चत्वरप्रतीतघटवन्मिथ्यात्वानापत्त्याऽद्वैतब्रह्मासिद्धिप्रसङ्गात् । न च विशिष्टलक्षणेऽपि जगत्परिणामित्वस्य मायायामेवावगमादुक्तदोषतादवस्थ्यं ब्रह्मगतमायापरिणामस्य जगतः ब्रह्मगतत्वसंभवात् । अत एव शुक्त्यवच्छिन्नचैतन्यनिष्ठाज्ञानपरिणामरूपमपि रजतं तद्गतमेवेति राद्धान्तः ॥

म० प्र०—तद्धि=जगदुपादानत्वं हि । **अध्यासेति**=आरोपेत्यर्थः । तथा सति=ब्रह्मणः सकलकार्य्याध्यासाधिष्ठानत्वरूपोपादानत्वस्वीकारे सति । **अकार्य्यावस्थानमिति ।** यथाऽज्ञातशुक्त्यादेरज्ञातशुक्त्याद्यारोपितरजतादिकार्य्याधिष्ठानत्वेऽप्यज्ञातशुक्त्याद्यकार्य्यज्ञातशुक्त्याद्यकार्य्यव्यावहारिकरजताद्यवस्थानं शुक्त्यादिभ्योऽन्यत्र तथा ब्रह्माकार्य्यावस्थानं ब्रह्मणोऽन्यत्र स्यादित्यर्थः । परममूले **यद्वेति ।** न च यद्वेत्यादिग्रन्थेनाद्वितीयब्रह्मासिद्धिरूपदोषनिरासः कथमिति वाच्यम् । वक्ष्यमाणोपादानत्वनिर्वचनेनोक्तदोषनिरासादिति भावः । तदाकारेण=जग-

दाकारेण । **प्रकृताभिप्रायमिति ।** प्रकृतब्रह्मणो लक्ष्यत्वाज्जगदध्यासाधिष्ठानत्वमुपादानत्वमित्युक्तम् । वस्तुतस्तु तदधिष्ठानत्वं तदुपादानत्वमित्येवोपादानलक्षणमित्यर्थः । विशिष्टचैतन्ये=शुक्त्यवच्छिन्नचैतन्ये, नातिव्याप्तिः=निखिलपदस्यानुषञ्जनीयत्वेनातिव्याप्त्यभावः । जगदाकारेण परिणममानमायाधिष्ठानत्वरूपोपादानत्वस्य विवक्षितत्वेनासंभवस्याप्यभावः । तस्य=मायाधिष्ठानत्वस्य, तेन रूपेण=मायाधिष्ठानत्वेन रूपेण, तदन्याधिष्ठानमन्यत्=मायान्यप्रपञ्चाधिष्ठानमन्यत्, विशिष्टलक्षणेऽपि=जगदाकारेण परिणममानविशेषणविशिष्टलक्षणेऽपि । **उक्तदोषेति**=अद्वैतब्रह्मासिद्धिप्रसङ्गरूपदोषेत्यर्थः । अत एव=अज्ञानपरिणामस्याज्ञानाधिष्ठानगतत्वसंभवादेव । तद्गतमेव=शुक्त्यवच्छिन्नचैतन्यगतमेव ॥

**एतादृशमेवोपादानत्वमभिप्रेत्य "इदं सर्वं यदयमात्मा" "सच्च त्यच्चाभवत्" "बहुस्यां प्रजायेय" इत्यादिश्रुतिषु ब्रह्मप्रपञ्चयोस्तादात्म्यव्यपदेशः। घटः सन् घटो भाति घट इष्ट इत्यादिलौकिकव्यपदेशोऽपि सच्चिदानन्दरूपब्रह्मैक्याध्यासात् ॥**

शि० म०—ननु ब्रह्मणो न निखिलप्रपञ्चाध्यासाधिष्ठानत्वं तत्र प्रमाणाभावात् । न च पूर्वोक्ता यतो वेत्यादिश्रुतिर्मानमिति वाच्यम् । तस्याः सकलभूतोपादानत्वे प्रमाणत्वेऽपि ब्रह्मणो निखिलप्रपञ्चाध्यासाधिष्ठानत्वे प्रमाणाभावादित्यत आह—एतादृशमेवेति । इदं सर्वमिति । बृहदारण्यके श्रूयते "इदं ब्रह्म इदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि इदं सर्वं यदयमात्मेति ।" अस्या अर्थः । यदिदं ब्रह्मादिभूतपर्य्यन्तमिदं ब्रह्मेत्यादिपूर्ववाक्योपात्तं तत्सर्वमयमात्मेति । अत्र च यः स्थाणुः स पुमानितिवद्ब्रह्मसत्तातिरिक्तसत्ताकप्रपञ्चनिषेधोऽभिप्रेतः । न चैतावता ब्रह्मण्यध्यस्तत्वं प्रपञ्चस्य न सिद्ध्यतीति वाच्यम् । तत्सत्तातिरिक्तसत्ताशून्यत्वस्यैव तदध्यस्तत्वरूपत्वात् । अन्यानिरुक्तेः । न चायुर्वै घृतमितिवन्निमित्ततया ब्राह्मणो देवतेतिवदाधारतया आदित्यो यूप इतिवत्सदृशतया वा सामानाधिकरण्योपपत्तिरिति वाच्यम् । तत्रैव प्रतिज्ञातस्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातमित्यात्मविज्ञानेन सर्वविज्ञानस्य निमित्तादिपक्षे बाधापातादिति भावः । तादात्म्यव्यपदेशोऽपि प्रपञ्चस्य ब्रह्मण्यध्यासे प्रमाणमित्याह—सच्चेति । पृथिव्यादिस्थूलभूतत्रयमपरोक्षत्वात् सत् । वाय्वाकाशे परोक्षत्वात् त्यत् । नन्विदं सर्वं यदयमात्मेत्यत्र पूर्ववाक्योपात्तानां ब्रह्मक्षत्रलोकदेववेदप्रत्यक्षस्थूलभूतानां सच्चेत्यत्र स्थूलभूतानां ब्रह्मण्यध्याससिद्धावप्यव्याकृतनामरूपयोर्नाध्यस्तत्वसिद्धिरित्यस्वरसादाह—बहु स्यामिति । सर्वविकारकारणब्रह्मनिष्ठेक्षणस्य सर्वविकारविषयत्वावश्यंभावेन सर्वकार्य्यपरत्वे बाधकाभावेन च "तदैक्षत बहुस्यां प्रजायेय" इत्यत्र बहुशब्दस्य सर्वकार्य्यपरत्वात् सर्वाध्याससिद्धिरिति भावः । नन्वेवमप्यकार्य्यप्रपञ्चस्य

न ब्रह्मण्यध्यस्तत्वमुक्तवाक्यानां ब्रह्मणि विकाराध्यासे एव प्रमाणत्वादित्यपरितोषादाह–इत्यादिश्रुतिष्विति । "एकमेवाद्वितीयं, नेह नानाऽस्ति किंचन, यत्र त्वस्य सर्वमात्मैवाभूत् । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।" इत्यादिश्रुतय आदिपदग्राह्याः । लौकिकाभेदव्यवहारोऽपि ब्रह्मणि प्रपञ्चाध्यासे मानमित्याह–घटः सन्निति ॥

म० प्र०–तत्र=ब्रह्मणो निखिलप्रपञ्चाध्यासाधिष्ठानत्वे । **इदं ब्रह्मेति** । इदं हि वाक्यं बृहदारण्यकषष्ठाध्यायस्थमैत्रेयीब्राह्मणे स्थितम् । इदं ब्रह्म=ब्रह्मपदवाच्यं ब्राह्मणत्वम्, इदं क्षत्रं=क्षत्रपदवाच्यं क्षत्रत्वम्, इमे लोकाः=भूरादयः, इमे देवाः=इन्द्रादयः, इमे वेदाः=ऋगादयः, इमानि भूतानि=पृथिव्यादीनि, इदं सर्वमुक्तमनुक्तं च । यदयं योऽयं द्रष्टव्य इति प्रकृत आत्मा स एव न ततः पृथगित्यर्थः । **यः स्थाणुरिति** । यः स्थाणुः=स्थाणुत्वेन पूर्वं ज्ञातः स पुमान् पुरुषसत्तातिरिक्तसत्ताभाववानित्यर्थः । एतावता=प्रपञ्चस्य ब्रह्मसत्तातिरिक्तसत्ताकत्वनिषेधेन, आयुरिति=यथाऽऽयुर्वै घृतमित्यत्र घृतस्यायुर्निमित्तत्वेनायुरायुर्निमित्तं घृतमित्यायुष्पदस्य घृतपदेन सामानाधिकरण्यं यथा वा सर्वा हि देवता ब्राह्मणे निवसन्तीति वाक्याद्ब्राह्मणानां देवताधिकरणत्वेन ब्राह्मणो देवतेत्यत्र ब्राह्मणपदस्य ब्राह्मणः ब्राह्मणाधिकरणको देवतेति देवतापदेन सामानाधिकरण्यं यथा वा यूपे स्वच्छत्वादिनाऽऽदित्यो यूप इत्यत्रादित्यपदस्यादित्य आदित्यसदृशः यूप इति यूपपदेन सामानाधिकरण्यं तद्वदुक्तबृहदारण्यकवाक्येऽपि ब्रह्मणः प्रपञ्चनिमित्तकारणत्वेन प्रपञ्चाधारत्वेन वा प्रपञ्चसदृशत्वेन वा इदं सर्वं यदयमात्मेति सामानाधिकरण्यमित्यर्थः । अत्र घृतस्यायुःसाधनत्वं घृते आयुष्ट्वाहार्य्यारोपे निमित्तं ब्राह्मणस्य देवताधारत्वं ब्राह्मणे देवतात्वाहार्य्यारोपे निमित्तं यूपे आदित्यसदृशत्वं यूपे आदित्यत्वाहार्य्यारोपे निमित्तमिति भावः । तत्रैव=बृहदारण्यके एव । **आत्मनीति** । अरे हे मैत्रेयि, खलु=निश्चलं यथास्यात्तथा दृष्टेऽपरोक्षज्ञाननिवृत्तावरणे आत्मनि सति इदं सर्वं विज्ञातं भवति । ननु निश्चयात्मकात्मज्ञानं केन साधनेन भवतीत्याशङ्क्याह–**श्रुते इत्यादि** । श्रुते आगमाचार्य्यवाक्यश्रवणजन्यज्ञानविषये आत्मनि सति, मते=उपपत्त्या मननविषये आत्मनि सति, विज्ञाते=निदिध्यासनविषये आत्मनि सति निश्चयात्मकात्मज्ञानं भवतीत्यर्थः । इत्यत्र=इत्यतः । अवश्यंभावेन=अवश्यं वक्तव्यत्वेनान्यथा सर्वविकारस्योत्पत्तिर्न स्यादिति भावः । सर्वकार्य्यपरत्वे=बहुशब्दस्य सर्वकार्य्यविषयकतात्पर्य्यवत्त्वे, एवमपि=ब्रह्मकार्य्यप्रपञ्चस्य ब्रह्मण्यध्याससिद्धावपि । **एकमेवाद्वितीयमिति** । यदि सर्वप्रपञ्चस्य ब्रह्मण्यध्यासो न स्यात्तदैकमेवाद्वितीयमिति श्रुत्युक्ताद्वितीयत्वस्य नेह नानाऽस्ति किंचनेत्यादिश्रुत्युक्तसर्वप्रपञ्चनिषेधस्य च व्याघातः स्यात् । द्वितीयस्य सत्त्वादिति भावः । मायामात्रमित्यादिस्तु माण्डूक्यकारिकाऽत्र श्रुतित्वोक्तिरीश्वरतुल्यैः प्रोक्तत्वादिति, अभेदव्यवहारः=प्रपञ्चस्य सत्यज्ञानानन्दाभेदव्यवहारः ॥

नन्वानन्दात्मकचिदध्यासात् घटादेरिष्टत्वव्यवहारे दुःखस्यापि तत्राध्यासात् तस्यापीष्टत्वादिव्यवहारापत्तिरिति

चेन्न । आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः इत्यभ्युपगमेन दुःखादौ सच्चिदंशाध्यासेऽपि आनन्दांशाध्यासाभावात् ॥

**शि० म०**–ननु इच्छाविषयत्वमिष्टत्वं तच्च घटस्य स्वाभाविकं तज्ज्ञानादेव तद्व्यवहारः न त्वानन्दात्मकब्रह्मैक्याध्यासात् । अन्यथा दुःखे सदात्मकब्रह्माभेदव्यवहारात् दुःखस्यापीष्टत्वापत्तिरिति शङ्कते–**नन्विति** । दुःखे ब्रह्मगतसत्त्वचित्त्वाध्यासेऽप्यानन्दत्वाध्यासाभावान्नेष्टत्वव्यवहारः । न ह्यन्यगतकिंचिद्धर्माध्यासे तद्गतसर्वधर्मस्याध्यास इति नियमोऽस्ति । तज्जनकदोषस्य कार्य्योन्नेयत्वादित्याह–**नारोप इति** ॥

म० प्र०–तच्च=इच्छाविषयत्वरूपेष्टत्वम्, स्वाभाविकम्=अनागन्तुकं ब्रह्मणि घटाद्यध्यासनिमित्तकं न भवतीति यावत्, तज्ज्ञानादेव=घटादिनिष्ठानागन्तुकेच्छाविषयत्वरूपेष्टत्वज्ञानादेव । तद्व्यवहारः=घट इष्ट इत्यादिघटादिनिष्ठेष्टत्वादिव्यवहारः । **न त्वानन्दात्मकब्रह्मैक्याध्यासादिति** । घटादेरानन्दात्मकब्रह्मणि तादात्म्याध्यासान्नेष्टत्वव्यवहार इत्यर्थः । अन्यथा=आनन्दात्मकब्रह्मैक्याध्यासात् घटादेरिष्टत्वव्यवहारस्वीकारे सति, दुःखे सदात्मकब्रह्माभेदव्यवहारात्=दुःखमस्ति दुखं सदिति दुःखे सदात्मकब्रह्मणस्तादात्म्यव्यवहारात् । सत्यानन्दयोरभेदाच्चेति शेषः । परममूले **आनन्दात्मकचिदध्यासादिति** । घटादेरानन्दात्मकचिति तादात्म्याध्यासादित्यर्थः । परममूले **तत्रेति** । आनन्दात्मकचितीत्यर्थः । परममूले **तस्यापीति** । दुःखस्यापीत्यर्थः । सत्त्वचित्त्वाध्यासेऽपि=सत्त्वचित्त्वसंबन्धाध्यासेऽपि, आनन्दत्वाध्यासाभावात्=आनन्दत्वसंबन्धाध्यासाभावात् । **तज्जनकदोषस्य कार्य्योन्नेयत्वादिति** । रजताध्यासो दोषजन्यः अध्यासत्वाद्देहे आत्मबुद्धिवदित्यध्यासजनकदोषस्याध्यासरूपकार्य्येण कल्पनादित्यर्थः । अज्ञानमेवात्र मुख्यदोषस्तत्सत्त्वादेव मिथ्याघटादिप्रपञ्चे सत्यत्वादिबुद्ध्युत्पत्तिः । न चैवमध्यासस्याज्ञानरूपदोषाधीनत्वाभ्युपगमेऽध्यासरूपकार्य्यवैलक्षण्यं न स्यात्कार्य्यवैलक्षण्यस्य कारणवैलक्षण्याधीनत्वात्कारणस्य चाज्ञानस्यैक्यादिति वाच्यम् । उत्तरोत्तराध्यासं प्रति पूर्वपूर्वाध्यासजन्यसंस्काराणामसाधारणहेतूनां परस्परवैलक्षण्यात्तत्तत्कार्य्यवैलक्षण्योपपत्तेः । न चैवं तत्तत्संस्काराणामावश्यकत्वादज्ञानवैयर्थ्यमिति वाच्यम् । तत्तद्यवव्रीह्यादिरूपकार्य्यवैलक्षण्याय तत्तद्बीजानामसाधारणहेतूनामावश्यकत्वेऽपि साधारणहेतुजलवैयर्थ्याभाव इवाज्ञानवैयर्थ्याभावात् । न चैवं पूर्वपूर्वाध्यासजन्यसंस्काररूपनिमित्तकारणवैलक्षण्येऽप्यज्ञानरूपोपादानवैलक्षण्याभावादध्यासरूपकार्य्यवैलक्षण्यानुपपत्तितादवस्थ्यं घटपटादिकार्य्याणामुपादानवैलक्षण्येनैव वैलक्षण्यदर्शनादिति वाच्यम् । खण्डपटमहापटादौ तन्तुरूपोपादानकत्वेऽपि निमित्तकारणवैलक्षण्येन परैर्वैलक्षण्योपगमाज्ज्ञानेच्छासुखदुःखादिकार्य्याणामात्मादिरूपैकोपादानकत्वेऽपि मनःसंयोगादृष्टादिरूपनिमित्तभेदेन नानादिरूपकार्य्ये वैलक्षण्यस्य सर्वैरभ्युपगमाच्च "अजा-

मेकां लोहितशुक्लकृष्णाम्" इत्यादिवाक्येभ्यो निखिलकार्य्यं प्रत्यज्ञानहेतुत्वस्य श्रुतत्वाच्चैवं जनिमारभ्य मातापित्राद्युपदेशादिकं सादृश्यादिकं च बहुविधाध्यासरूपकार्य्यानुरूपं निमित्तकारणं ग्राह्यम् । विशेषदोषस्तु विशेषकार्य्योन्नेयः । तथा हि यथा रज्जुखण्डे कदाचिन्मालाभ्रमः कदाचिद्वक्रदण्डभ्रमः कदाचित्सर्पभ्रमस्तत्र रज्जौ मालाभ्रमकाले मन्दान्धकाररूपनिमित्तकारणे सत्यपि रज्जौ मालाभ्रमकाले कम्पादिजनकसर्पाध्यासरूपविशेषकार्य्याभावदर्शने सर्पाध्यासहेतुपूर्वसर्पाध्यासजन्योद्बुद्धसंस्कारदूरदृष्टत्वादिरूपविशेषदोषाभावः कल्प्यते सर्पभ्रमकाले तूक्तदोषः कल्प्यते । कम्पादिजनकसर्पाध्यासरूपकार्य्यदर्शनात्सर्पभ्रमकाले हर्षादिजनकमालाध्यासरूपकार्य्याभावदर्शनेन मालाध्यासहेतूद्बुद्धशुभसंस्काराभावः कल्प्यते । एवमपि सत्त्वाद्यारोपदर्शनेन सत्त्वाद्यारोपहेतुपूर्वसत्त्वाद्यध्यासजन्योद्बुद्धसंस्कारादिकं कल्प्यते । दुःखे आनन्दांशाध्यासाभावदर्शनेन नोक्तसंस्कारादिकं कल्प्यते इत्यलमतिविस्तरेण । परममूले **इत्यभ्युपगमेति** । एतन्न्यायाङ्गीकारेणेत्यर्थः । परममूले **सच्चिदंशाध्यासेऽपीति** । दुःखादौ सच्चिदंशाध्यासदर्शनेन दुःखादावुत्तरसच्चिदंशभ्रान्तिजनकपूर्वसच्चिदंशाध्यासजन्यसंस्कारसत्त्वेऽपीत्यर्थः । परममूले **आनन्दांशाध्यासाभावादिति** । दुःखदावुत्तरानन्दांशभ्रान्तिजनकपूर्वानन्दांशाध्यासाभावेन दुःखादावुत्तरानन्दांशभ्रान्तिजनकपूर्वानन्दांशभ्रान्तिजन्यसंस्काराभावाद् दुःखादौ नेष्टत्वव्यवहारापत्तिरित्यर्थः ॥

**जगति नामरूपांशद्वयव्यवहारस्तु अविद्यापरिणामात्मकनामरूपसंबन्धात् । तदुक्तम् । "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥" इति । अथ जगतो जन्मक्रमो निरूप्यते । तत्र सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतः अपरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितः सन् नामरूपात्मकनिखिलप्रपञ्चं प्रथमं बुद्धावाकलय्येदं करिष्यामीति संकल्पयति ॥**

**शि० म०**—ननु घटादाविष्टत्वादेर्नाध्यासो युक्तः तत्र प्रतीयमानसर्वधर्मस्य ब्रह्मगतत्वेन तदीयस्वाभाविकधर्माभावात्सर्वत्रांशान्तरवत्येवांशान्तराध्यासस्य दृष्टत्वादित्याशङ्क्य प्रपञ्चस्यास्ति व्यावहारिकमंशद्वयमित्याह—**जगतीति** । उक्तेऽर्थे अभियुक्तसंमतिमाह—**तदुक्तमिति** । ननु परमेश्वरः कर्मसापेक्षः सन् निखिलकार्य्यं करोति निरपेक्षो वा । नाद्यः, कर्मणो जगत्कारणत्वे प्रमाणाभावात्, अन्यथा कर्मणैव सृष्ट्युपपत्तौ ईश्वरवैयर्थ्यम् । नान्त्यः, विषमसृष्टिं निर्मिमाणस्य पृथग्जनवद्रागद्वेषापत्तेरित्यत आह—**सृज्यमानेति** । अयं भावः । परमेश्वरः कर्मसहकृत एव जगत्सृष्टिहेतुः । न चात्र प्रमाणाभावः, सृष्टेरेवात्र प्रमाणत्वात् । अन्यथा विचित्रकार्य्यानुपपत्तेः तस्य विचित्रकारणजन्यत्वनियमात् । "पुण्यो वै

पुण्येन कर्मणा भवति पापः पापेन" इत्यादिश्रुतेश्च अत एव न विषमसृष्टावीश्वरस्य रागद्वेषापत्तिः व्रीहियवादिसृष्टौ पर्जन्यवज्जगत्सृष्टावीश्वरः साधारणकारणं तत्तद्बीजानीव व्रीहियवादिवैषम्ये कांश्चिदत्यन्तदुःखभाजः कांश्चिदत्यन्तसुखभाजः करोतीति विषमसृष्टौ जीवगतकर्माण्यसाधारणकारणमिति । ननु गोपुरादिमहाकार्य्ये नानाकर्तृत्वदर्शनात् कथमसहायस्येश्वरस्य विचित्रप्रपञ्चकर्तृत्वमित्यत आह—**अपरिमितेति** । नन्वावश्यकत्वान्मायैव कर्मसहकृता दधिपरिणामिक्षीरवत् नामरूपाकारेण परिणमतां किमीश्वरेणेत्यत आह—**नामरूपेति** । यथा हि कुलालो बुद्धावालिख्य नामरूपे तथैव संकल्प्य घट इति नाम्ना रूपेण कम्बुग्रीवादिना घटमुत्पादयति तथेश्वरोऽप्युत्पत्तेः पूर्वं यस्य कार्य्यस्य यन्नाम यच्चास्य रूपमन्तरेवाकलयति तथैवैतद्वस्तु करिष्यामीति संकल्पयति तथैव करोतीत्यर्थः ॥

म० प्र०—तत्र=वटादिप्रपञ्चे, सर्वत्र=सर्वस्मिन्नध्यासाधिष्ठाने, अन्यथा=कर्मणो जगत्कारणत्वस्वीकारे, निर्मिमाणस्य=निर्माणकर्तुरीश्वरस्य, पृथग्जनवत्=श्रेष्ठजनेभ्यः पृथक् चासौ जनः पृथग्जनः पामरस्तद्वत्, अत्र=परमेश्वरस्य कर्मसहकृतत्वे, सृष्टेरेव=विषमसृष्टेरेव, अत्र=परमेश्वरस्य कर्मसहकृतत्वे, तस्य=विचित्रकार्य्यस्य, पुण्यः=पुण्यफलसम्यग्देहादिमान्, पापः=पापफलाशोभनदेहादिमान् । **गोपुरेति**=नगरद्वारेत्यर्थः। अत्रादिपदेन दुर्गादिमहाकार्य्यपरिग्रहः। **नानाकर्तृत्वेति**। नानापुरुषनिष्ठकर्तृत्वेत्यर्थः । **असहायस्येति** । न च कर्मसापेक्षेश्वरस्य विचित्रप्रपञ्चकर्तृत्वोक्तेः कथमसहायस्येत्युक्तिरिति वाच्यम् । अन्यपुरुषसहायाभावस्य तया विवक्षितत्वादिति, आवश्यकत्वात्=ईश्वरस्य जगत्कारणत्वेऽपि मायायास्तव मते नियमेन स्वीकारेण मायाया आवश्यकत्वात् । परममूले **बुद्धावाकलय्येति** । अविद्यावृत्तिरूपज्ञानविषयतां नीत्वेत्यर्थः। बुद्धौ=अन्तःकरणे, आलिख्य स्थापयित्वा ज्ञात्वेति यावत् । अस्य=कार्य्यस्य, अन्तरेव अविद्यान्तरेव । आकलयति=जानाति अविद्यावृत्तिविषयीकरोतीति यावत् ॥

**"तदैक्षत बहु स्यां प्रजायेय" इति, "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिश्रुतेः । तत आकाशादीनि पञ्च भूतानि अपञ्चीकृतानि तन्मात्रपदप्रतिपाद्यान्युत्पद्यन्ते ॥**

शि० म०—तत्र प्रमाणमाह—**तदिति** । तन्मनोऽकुरुतेत्यादिश्रुतिरादिपदग्राह्या । **तत इति** । ईक्षणसंकल्पप्रयत्नानन्तरमित्यर्थः । **आकाशादीनीति**। प्रथममाकाशस्तदनन्तरं वायुस्ततस्तेजस्ततो जलं ततः पृथिवीत्येवं क्रमवन्ति पञ्च भूतानि अपञ्चीकृतान्युत्पद्यन्ते इत्यर्थः । ननु छान्दोग्ये तेजआदिका सृष्टिः श्रूयते "तत्तेजोऽसृजत" इति, प्रश्नोपनिषदि प्राणादिका "स प्राणमसृजत" इति, ऐतरेये त्वेकदैव " स इमाँल्लोकानसृजताम्भो मरीचीर्मरमापः" इति । तथा च सृष्टेः कथमाकाशादित्वमिति चेन्न तावदाकाशादित्वे प्रमाणाभावः । तैत्तिरीयके "तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः ।

अद्भ्यः पृथिवी" इति सृष्टेराकाशादित्वस्यावगमात्। न च श्रुत्यन्तरविरोधः, ऐतरेयेऽपि गुणोपसंहारन्यायेनात्र श्रुतानां क्रमस्यावश्यं कल्पनीयत्वात्। नापि छान्दोग्यश्रुतिविरोधः, तस्यास्तेजोजनिप्रधानत्वेन श्रुत्यन्तरावगताकाशादित्वनिवारणे सामर्थ्याभावात्। एकस्य वाक्यस्य व्यापारद्वयासंभवात्। तत्तेजोऽसृजतेत्यत्राकाशाद्वायुरितिवत् क्रमवाचकशब्दाभावाच्चेति भावः। "महाभूतानि पञ्चैव भूरापोऽग्निमरुन्नभः। तन्मात्राणि च तावन्ति" इति पुराणे महाभूततन्मात्राणामेवावगतेः भूतानि पञ्च तन्मात्राणि पञ्च महाभूतानीति महोपनिषद्यपि तथैवावगमात् कथं तद्व्यतिरेकेणापञ्चीकृतानामप्युपगम इत्यत आह–**तन्मात्रेति**।

म० प्र०–तत्=ब्रह्म कार्य्यक्षममिति मनोविशेषणं वा, एकदैव=युगपदेव, इमान्=वक्ष्यमाणाम्भआदीन्, अम्भः=द्यौः, मरीचीः=अन्तरिक्षलोकः, मरं=पृथिवीलोकः, आपः=अधोलोकाः। सृष्टेराकाशादित्वे किं प्रमाणाभावः किंवा श्रुत्यन्तरविरोधो नाद्यः इत्याह–**न तावदिति**। न द्वितीय इत्याह–**न च श्रुत्यन्तरविरोध इति**। स इमान् लोकानित्यादिश्रुत्यन्तरविरोधोऽपि नेत्यर्थः। उक्तश्रुत्यन्तरविरोधाभावे हेतुमाह–**ऐतरेयेऽपीत्यादिना**। गुणोपसंहारन्यायेन=वेदान्तवाक्यानामुपासनावाक्यानाञ्चैकवाक्यतासंपत्तये एकस्यां शाखायामनुक्त आनन्दादिरूपो गुणः शाखान्तरीयवाक्येन ज्ञातव्य इत्यानन्दादयः प्रधानस्येत्यादावुक्तो यो गुणोपसंहारन्यायस्तेन। अत्र="तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादितैत्तिरीयश्रुतौ। तस्याः=छान्दोग्यश्रुतेः, तेजोजनिप्रधानत्वेन=तेजआदिभूतोत्पत्तिप्रतिपादनपरत्वेन, एकवाक्यस्य=तत्तेजोऽसृजतेत्याद्येकवाक्यस्य। **व्यापारद्वयासंभवादिति**। तस्माद्वा एतस्मादात्मन इति श्रुत्यन्तरावगताकाशादित्वनिवृत्त्यनुकूलव्यापारस्य तेजआदिभूतोत्पत्तिबोधानुकूलव्यापारस्य चाभावाच्छब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति न्यायादित्यर्थः। उक्तन्यायवाक्यस्य त्वयमर्थः। घटमानयेति वाक्यमेकदा प्रयुक्तं सद् घटकर्मककृतिसाध्यत्वबलवदनिष्टाननुबन्धीष्टसाधनानयनानुकूलकृतिं बोधयित्वा मध्ये विरम्य विश्रान्तिं लब्ध्वा पुनरुक्तकृतिविषयकबोधाय न व्याप्रियते किंतु घटमानयेति वाक्यान्तरमेवोक्तकृतिविषयकबोधाय व्याप्रियते पटादिकर्मककृतिसाध्यबलवदनिष्टाननुबन्धीष्टसाधनानयनानुकूलकृतिनिवृत्तिरूपार्थान्तरबोधाय वा न व्याप्रियते तद्बोधं न जनयति किंतु पटादिकं नानयेत्यादि वाक्यान्तरमेवोक्तार्थान्तरं बोधयति। अयं घट इति ज्ञानमपि घटं विषयीकृत्य मध्ये विरम्य विश्रान्तिं लब्ध्वाऽयं घट इति ज्ञानमेव पुनः घटं न विषयीकरोति किंत्वयं घट इति ज्ञानान्तरमेव विषयीकरोति पटादिकं वा न विषयीकरोति किंत्वयं पट इत्यादिज्ञानान्तरमेव पटादिकं विषयीकरोति। एवं कर्मापि विभागादिद्वारोत्तरदेशसंयोगं जनयित्वा तदेव कर्म मध्ये विरम्य विश्रान्तिं लब्ध्वा पुनर्विभागादिद्वारोत्तरदेशसंयोगान्तरं न जनयति किंतु कर्मान्तरमेवोत्तरदेशसंयोगान्तरं जनयतीति। महाभूतानि=स्थूलभूतानि, तन्मात्राणि=सूक्ष्मभूतानि, तावन्ति=पञ्च। **भूतानि पञ्चेति**। तन्मात्राणि भूतानि पञ्चेत्यन्वयः। तन्मात्राणि=सूक्ष्माणि, तथैव=स्थूलसूक्ष्मभूतानामेव। **तद्व्यतिरेकेणेति**। स्थूलसूक्ष्मभूतभेदविशिष्टेत्यर्थः॥

**तत्राकाशस्य शब्दो गुणः, वायोस्तु शब्दस्पर्शौ, तेजसस्तु शब्दस्पर्शरूपाणि, अपान्तु शब्दस्पर्शरूपरसाः, पृथिव्यास्तु शब्दस्पर्शरूपरसगन्धाः। न तु शब्दस्याकाशमात्रगुणत्वं वाय्वादावपि तदुपलम्भात्। न चासौ भ्रमः बाधकाभावात् ॥**

शि॰ म॰–यद्यपि तन्मात्रेषु गुणा नोपलभ्यन्ते तथापि तत्कार्य्येषु गुणदर्शनेन तत्कारणेष्वपि कारणत्वेन गुणानुमानादित्यभिप्रेत्य तत्रासाधारणगुणानाह–तत्रेति। **शब्दस्पर्शाविति**। यद्यपि स्पर्शः साधारणगुणस्तथापि पार्थिववायवीययोरनुष्णाशीतत्वं तैजसाप्ययोरुष्णशीतत्वम्। एवं रसेऽपि वैजात्यमनुभवसिद्धमस्तीत्यसाधारण्यं बोध्यम्। नैयायिकमतं निराकरोति–न त्विति। **वाय्वादाविति**। प्रत्यक्षवाय्यादावित्यर्थः। तथा तन्मात्रेषु तदनुमानमिति भावः। **बाधकाभावादिति**। इदमापाततः। जलादावपि गन्धोपलम्भात् सोऽपि पृथिवीमात्रगुणो न स्यात्। न चायमौपाधिकः। नियतोपाध्यनुविधानाभावात्। तदन्तर्वर्तिपार्थिवभागसंबन्धात्तदुपलम्भ इति चेद्वाय्वाद्यन्तर्वर्तिव्यापकाकाशसंबन्धाच्छब्दोपलब्धिरिति तुल्यम्। वस्तुतस्तु शब्दस्पर्शरूपरसगन्धाश्चैते पृथिवीगुणाः। तेषु गन्धहीनाश्चत्वारोऽपां गुणाः। तेषु गन्धरसहीनास्त्रयो गुणा अग्नेः। शब्दस्पर्शाविति द्वौ वायोः। शब्द एक आकाशस्येति लौकिकोपनिषद्वचनं शब्दस्य वाय्वादिगुणत्वे मानमिति बोध्यम् ॥

म॰ प्र॰– तन्मात्रेषु=सूक्ष्माकाशादिभूतेषु, तत्कार्य्येषु=सूक्ष्मभूतकार्य्यस्थूलाकाशादिभूतेषु। **गुणानुमानादिति**। स्थूलाकाशादिभूतोपादानकारणसूक्ष्माकाशादिभूतानि स्वकार्य्यस्थूलाकाशादिभूतगुणजातीयगुणवन्ति उपादानकारणत्वाद्यत्र यद्द्रव्योपादानकारणत्वं तत्र स्वोपादेयगुणजातीयगुणवत्त्वं मृदादिवदिति गुणानुमानादित्यर्थः। तत्र=स्थूलाकाशादिभूतेषु, साधारणगुणः=पृथिव्यप्तेजोवायुवृत्तिगुणः। **पार्थिववायवीययोरिति**। स्पर्शयोरिति शेषः। एवं तैजसाप्ययोरित्यत ऊर्ध्वमपि स्पर्शयोरिति शेषः। उष्णशीतत्वम्=उष्णत्वं शीतत्वं च। प्रत्यक्षवाय्वादौ=स्थूलवाय्यादौ, तन्मात्रेषु=सूक्ष्माकाशादिभूतेषु, तदनुमानं=स्थूलाकाशादिभूतोपादानेत्याद्युक्तरीत्या तेषां शब्दादिगुणानामनुमानम्। परममूले–**असाविति**। वाय्वादिषु शब्दोपलम्भ इत्यर्थः। सोऽपि=गन्धोऽपि, अयम्=जलादावुपलभ्यमानगन्धः, औपाधिकः=जलादिवृत्तिपृथिवीसंबन्धरूपोपाधिनिमित्तकः, नियतोपाध्यनुविधानाभावात्=अव्यभिचरितोपाधिनिरूपणाभावात्। **तदन्तर्वर्तीति**=जलाद्यन्तर्वर्त्तीत्यर्थः। तदुपलम्भः=जलादौ गन्धोपलम्भः। **वस्तुतस्त्विति**। बोध्यमित्यन्वयः। लौकिकोपनिषत्=लौकिकपदार्थविवेचनप्रधाना लोकनाम्ना मुनिना प्रोक्तेति लौकिकोपनिषत् ॥

**इमानि भूतानि त्रिगुणमायाकार्य्याणि त्रिगुणानि। गुणाः सत्त्वरजस्तमांसि। एतैश्च सत्त्वगुणोपेतैः पञ्चभूतैर्व्यस्तैर्यथाक्रमं**

**श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्चेन्द्रियाणि जायन्ते। एतैरेव सत्त्वगुणोपेतैः पञ्चभूतैर्मिलितैर्मनोबुद्ध्यहङ्कारचित्तानि च जायन्ते। श्रोत्रादीनां पञ्चानां क्रमेण दिग्वातार्कवरुणाश्विनोऽधिष्ठातृदेवताः॥**

शि० म०—भूतानां त्रिगुणत्वे हेतुमाह—त्रिगुणमायेति। मायायास्सत्त्वरजस्तमोगुणत्वे 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिश्रुतिर्मानमित्युक्तमधस्तात्। भूतानां सर्वदा गुणत्रयोपेतत्वेऽपि कार्य्यविशेषजनने कस्याचिद्गुणस्याविर्भाव इत्यभिप्रेत्याह—एतैरिति। सत्त्वगुणोपेतैरपञ्चीकृतैराकाशादिभिरित्यर्थः। मन इति। एकस्याप्यन्तःकरणस्य वृत्तिचातुर्विध्याच्चातुर्विध्यम्। तदुक्तं भागवते। "मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम्। चतुर्द्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया॥" इति। अत्र मनआदीनां गलान्तर्वदनहृदयनाभयः स्थानानि। मनसः स्थानं गलान्तरं बुद्धेर्वदनमहङ्कारस्य हृदयं चित्तस्य नाभिरिति शारीरकोपनिषदि श्रवणादिति ध्येयम्। श्रोत्रादीनामिति। न चात्र प्रमाणाभावः। अचेतनानीन्द्रियाणि चेतनाधिष्ठितान्येव कार्य्यं जनयन्ति अचेतनकारणत्वात् मृद्वदित्यनुमानस्य मानत्वात्। न च जीवेन सिद्धसाधनमनपेक्षितदुर्गन्धज्ञानस्योपेक्षिततृणज्ञानस्य च दर्शनात्। दिगादिदेवतानां च प्राणिकर्मवशेनान्यत्रापि प्रेरणसंभवात्। तदा श्रोत्रेण कर्णौ च दिश इत्यादिभागवतवचनं तत्र प्रमाणम्। वस्तुतस्तु चक्षुःश्रोत्रघ्राणरसनत्वगिन्द्रियाणां क्रमेणादित्यदिक्पृथिवीवरुणवायवोऽधिष्ठातृदेवताः। सुबालोपनिषदि "स्थानानि स्थानिभ्यो नीयन्ते" इत्युपक्रम्य चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतं श्रोत्रमध्यात्मं श्रोतव्यमधिभूतं दिशस्तत्राधिदैवतं नासाऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतं जिह्वाऽध्यात्मं रसयितव्यमधिभूतं च वरुणस्तत्राधिदैवतं त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतमित्याम्नानादिति बोध्यम्॥

म० प्र०—अधस्तात्=पूर्वस्मिन् प्रत्यक्षपरिच्छेदे। **गुणत्रयेति**=सत्त्वादिगुणत्रयेत्यर्थः। वृत्तिचातुर्विध्यात्=संकल्पनिश्चयाभिमानानुसंधानात्मकवृत्तिचातुर्विध्यात्, चातुर्विध्यं=संकल्पात्मकवृत्तिमदन्तःकरणं मनः निश्चयात्मकवृत्तिमदन्तःकरणं बुद्धिरभिमानात्मकवृत्तिमदन्तःकरणमहङ्कारः अनुसंधानात्मकवृत्तिमदन्तःकरणं चित्तमिति चातुर्विध्यम्। **मन इति**। इदं हि वाक्यं भागवततृतीयस्कन्धषडधिकविंशत्यध्यायस्य चतुर्दशश्लोकात्मकम्। अन्तरात्मकमन्तःकरणमिति चतुर्धा लक्ष्यते। नन्वेकस्यान्तःकरणस्य चतुर्धात्वं कथमित्यत आह—**भेद इति**। लक्षणरूपया=व्यवच्छेदकरूपया वृत्त्याऽन्तःकरणस्य भेद इत्यर्थः। अत्र=मूले, अस्येति ध्येयमित्यनेनान्वयः। अत्र=श्रोत्राद्यधिष्ठातृदेवतासु। अचेतनकारणत्वात्=अचेतनत्वे सति शब्दाद्युपलब्धिकारणत्वात्, जीवेन सिद्धसाधनं=श्रोत्रादीन्द्रियाणां जीवरूपचेतनाधिष्ठितत्वेनानुमाने सिद्धसाधनरूपो दोषः। **अनपेक्षितेति**=अनाकाङ्क्षितेत्यर्थः। यदि जीव एवेन्द्रियाणां नियन्ता स्यात्तदा स्वानिष्टदुर्गन्धादि

ज्ञानायेन्द्रियाणां प्रवर्त्तको न स्यात् प्रवर्त्तयति चेन्द्रियाण्यतो जीवान्य इन्द्रियाणां नियन्ताऽनुमानेन साध्यते इति न सिद्धसाधनमिति भावः । अन्यत्रापि=दुर्गन्धादावपि । **तदा श्रोत्रेणेति** । इदं हि वाक्यं भागवततृतीयस्कन्धे षड्विंशत्यध्याये अधिकषष्टिश्लोकात्मकं बोध्यम् । तदा श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्ततो विराडित्यस्य भागवतवचनस्यायमर्थः । श्रोत्रेण स्वांशश्रोत्रेन्द्रियेण सह दिशो दिगाख्या दिगभिमानिदेवताः कर्णौ कर्णाख्यगोलके विविशुस्तत इन्द्रियैः सहेन्द्रियदेवताप्रवेशनादपि तदा विराड्देहरूपो न उदतिष्ठन्नोत्थित एवं चक्षुरादिना सहादित्यादिप्रवेशेऽप्ययं विराड् नोत्थितो जीवप्रवेशे तूत्थित इति । तत्र=इन्द्रियाणां देवतावत्त्वे । वस्तुतस्त्विति बोध्यमित्यन्वयः । **देवता इति** । सन्तीति शेषः । आदित्यादिदेवतासत्त्वे हेतुमाह-**सुबालोपनिषदीत्यादिना** । स्थानिभ्यः=इन्द्रियेभ्यः, स्थानानि=कर्णादिगोलकानि, नीयन्ते=देवताभिः प्राप्यन्ते । आदित्यादिदेवताकर्तृकेन्द्रियरूपस्थानिप्रयोज्यप्राप्तिरूपसंबन्धाश्रयभूतानि कर्णादिगोलकरूपस्थानानीति वाक्यार्थः । **चक्षुरध्यात्ममिति** । आत्मनि शरीरे इत्यध्यात्मं चक्षुषोऽध्यात्ममिति संज्ञा द्रष्टव्यस्याधिभूतमिति संज्ञा । तत्र=चक्षुषि, अधिदैवतम्=अधिष्ठातृदेवता । एवमुत्तरवाक्येष्वपि बोध्यम् ॥

**मनआदीनां क्रमेण चन्द्रचतुर्मुखशङ्कराच्युता अधिष्ठातृदेवताः। एतैरेव रजोगुणोपेतैः पञ्चभूतैर्यथाक्रमं वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि जायन्ते ।**

**शि० म०-चन्द्रेति** । चन्द्रब्रह्मशङ्करविष्णवः क्रमेण मनआदीनामधिष्ठातृदेवताः । मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतं बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतमहङ्कारोऽध्यात्ममहङ्कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतं चित्तमध्यात्मं चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतमिति सुबालोपनिषदि श्रुतेः ॥

म० प्र०-अहङ्कर्त्तव्यम्=अहङ्कारविषयदेहादिकम् । परममूले **श्रोत्रादीनामिति** । यद्यपि सुबालोपनिषदि घ्राणेन्द्रियस्य पृथिवी देवतोक्ता तथापि पृथिव्या एवाश्विरूपेणावस्थितत्वान्न विरोध इति भावः ॥

**तेषां च क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधिष्ठातृदेवताः । रजोगुणोपेतैः पञ्चभूतैर्मिलितैः पञ्चवायवः प्राणापानव्यानोदानसमानाख्या जायन्ते । तत्र प्राग्गमनवान् वायुः प्राणो नासादिस्थानवर्ती । अवाग्गमनवानपानः पाय्वादिस्थानवर्त्ती ॥**

**शि० म०-वह्नीन्द्रेति** । वागध्यात्मं वक्तव्यमधिभूतमग्निस्तत्राधिदैवतं हस्तावध्यात्ममादातव्यमधिभूतमिन्द्रस्तत्राधिदैवतं पादावध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्राधिदैवतम् । पायुरध्यात्मं विसर्जयितव्यमधिभूतं मृत्युस्तत्राधिदैवतम् उपस्थो-

ऽध्यात्ममानन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवतमिति तत्रैव श्रवणादिति भावः। प्राणं लक्षयति–तत्रेति। ऊर्ध्वगतिमत्त्वं प्राणस्य लक्षणम्। न चोदानेऽतिव्याप्तिः, तस्योत्क्रान्तिकाले ऊर्ध्वगतिमत्त्वेऽपि सर्वदा तदभावात्। तस्यैव प्राणलक्षणत्वेन विवक्षितत्वात्। न च प्राणस्योर्ध्वगतिमत्त्वे प्रमाणाभाव इति वाच्यम्। अथ योऽयमूर्ध्वमुत्क्रामति एष वाव स प्राण इति मैत्रेयोपनिषदि तथैव प्राणस्याभिहितत्वादिति भावः। तस्यासाधारणस्थानं नासिकेत्याह–नासेति। वायुः प्राणो भूत्वा नासिके प्राविशदित्यैतरेयश्रुतिरत्र मानमन्यथा तदधिष्ठातृवायुदेवताया नासास्थानवर्तित्वं न स्यादिति बोध्यम्। अपानलक्षणमाह–अर्वागिति। तस्यार्वाग्गमनत्वे चाथ योऽयमर्वाचं संक्रामति एष वाव सोऽपान इति मैत्रेयोपनिषत्प्रमाणमिति भावः। पाय्वादीति। नाभिमारभ्य पायुपर्यन्तं तिष्ठतीत्यर्थः। न त्वपानः पायुप्रदेशमात्रवर्ती तथा सति मृत्युरपानो भूत्वा नाभिं प्राविशदिति नाभिवर्तिमृत्युदेवताधिष्ठेयत्वप्रतिपादिकैतरेयश्रुतिविरोधापत्तेरिति भावः॥

म० प्र०–**आनन्दयितव्यमिति**। आनन्दं करोतीत्यानन्दयति आनन्दयितुं योग्यमित्यानन्दयितव्यमानन्दं कर्तुं योग्यमित्यक्षरार्थः। विलक्षणक्रियायुक्तौ स्त्रीपुरुषोपस्थेन्द्रियगोलकावानन्दं कर्तुं योग्याविति प्रकृतार्थः। तत्रैव=सुबालोपनिषद्येव, तस्य=उदानस्य, उत्क्रान्तिकाले=चरमशरीरप्राणवियोगकाले। तदभावात्=ऊर्ध्वगतिमत्त्वाभावात्, तस्यैव=सर्वदोर्ध्वगतिमत्त्वस्यैव। **योऽयमिति**। वायुरिति शेषः। ऊर्ध्वम्=ऊर्ध्वस्थानम्, उत्क्रामति=गच्छति। वावेत्यवधारणे। स एष वायुः प्राण एवेति योजना। तथैव=सर्वदोर्ध्वगतिमत्त्वेनैव, तस्य=प्राणस्य, वायुः–महावायुः, प्राणो भूत्वा=शरीरप्रवेशात्पूर्वं व्यापकः सन् परिच्छिन्नोपाधिसंबन्धेन परिच्छिन्नो भूत्वा, अत्र=प्राणस्य नासास्थानवत्त्वे, अन्यथा=प्राणस्य नासास्थानानङ्गीकारे। **तदधिष्ठात्रिति**=प्राणाधिष्ठात्रित्यर्थः। तस्य=अपानस्य, अर्वाञ्चम्=अधःस्थानम्, संक्रामति=गच्छति। **एष वावेति**। अत्र वावपदमवधारणार्थकम्। स एष वायुरपान एवेति योजना। अपानो भूत्वा=अपानप्रेरको भूत्वा। यद्वा मृत्युरपानो भूत्वेत्यभेदोक्तिर्मृत्युरूपदेवताया अपानं विनाऽनुपलब्धेरपानस्य च देवतां विना स्वकार्यकरणासामर्थ्यात्तयोरेकलोलीभावेन प्रवेशाभिप्रायेण बोध्या। **मृत्युदेवताधिष्ठेयत्वेति**=मृत्युदेवतानियम्यत्वेत्यर्थः॥

**विष्वग्गतिमान् व्यानः अखिलशरीरवर्ती। ऊर्ध्वगमनवानुत्क्रमणवायुरुदानः कण्ठस्थानवर्ती। अशितपीतान्नादिसमीकरणकरः समानः नाभिस्थानवर्ती। तैश्च तमोगुणोपेतैरपञ्चीकृतभूतैः पञ्चीकृतानि भूतानि जायन्ते॥**

शि० म०–व्यानलक्षणमाह–विष्वगिति। येनैताः शिरा अनुव्याप्ता एष वाव स व्यान इति तत्रैव श्रवणादिति भावः। उदानं लक्षयति–ऊर्ध्वमिति।

ननु ऊर्ध्वगतिमत्त्वं न लक्षणं प्राणस्यापि तथात्वेन तत्रातिव्याप्तेरित्याशङ्क्योत्क्रमणसमर्थवायुत्वं तेन विवक्षितमित्याह–**उत्क्रमणेति**। उत्क्रमणं चात्र देहादूर्ध्वगतिर्लोकान्तरयात्राऽभिप्रेता "अथैकयोर्ध्व उदानः। पुण्येन पुण्यलोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकम्" इति प्रश्नोपनिषद्वचनं तस्य लोकान्तरगमयितृत्वे प्रमाणमित्यवधेयम्। अथवा पीताशितपानीयान्नाद्युद्गारक्रियाहेतुर्वायुरुदानः। अथ योऽयं पीतमशितमुद्गिरत्येष वाव स उदान इति मैत्रेयोपनिषदस्तत्र प्रमाणत्वादिति भावः। **अशितेति**। अशितपीतान्नपानीययोः स्थविष्ठभागं पुरीषमूत्रोपादानं बहिर्निर्यापयितुमपाने स्थापयति मध्यमं भागं मांसलोहितोपादानं सूक्ष्मं च मनःप्राणोपकारकमङ्गोपाङ्गेषु समानयति समान इत्यर्थः। अथ योऽयं स्थविष्ठमन्नं पीतमपाने स्थापयति अणिष्ठं चाङ्गं समानयत्येष वाव स समान इति तत्रैवावगतेः। अयं च सकलान्तर्वर्ती अन्यथा सकलाङ्गेष्वशितादिसमीकरणानुपपत्तेरिति भावः। महाभूतोत्पत्तिमाह–**तैश्चेति**। पञ्चीकरणे पुराणवाक्यं प्रमाणमिति भावः॥

**म० प्र०**–येन=वायुनेति शेषः, शिराः=नाडयः, तत्रैव=मैत्रेयोपनिषद्येव। परममूले **विष्वगिति**। नानाविधा सर्वत इति यावत्, न लक्षणम्=उदानलक्षणं न भवति। तथात्वेन=ऊर्ध्वगतिमत्त्वेन। **उत्क्रमणेति**=जीवस्य देहाद्बहिर्गमनेत्यर्थः। तेन=ऊर्ध्वगमनशब्देन। देहादूर्ध्वगतिरित्यस्य व्याख्यानं लोकान्तरयात्रेति, यात्रा च गमनमिति। **अथेति**। एकया=एकशतनाडीनां मध्ये या ऊर्ध्वगा सुषुम्नाख्या नाडी तयैकया, उदानः=आपादतलमस्तकं संचरन्नुदानसंज्ञकवायुः। ऊर्ध्वः=ऊर्ध्वदेशं प्राप्तः सन्, पुण्येन=शास्त्रविहितकर्मणा। पुण्यलोकं=पुण्यफलदेवादिस्थानम्, नयति=प्रापयति, पापेन=शास्त्रनिषिद्धकर्मणा, पापं=पापफलतिर्यग्योन्यादिकम्, उभाभ्यां=समपुण्यपापाभ्यां मनुष्यलोकं नयतीत्यर्थः। तस्य=उदानस्य। गमयितृत्वे=गमनकारयितृत्वे, उद्गारक्रियाहेतुः=ऊर्ध्वनयनात्मकच्छर्दक्रियाहेतुः। तत्र=उदानस्योद्गिरणक्रियाहेतुत्वे, निर्यापयितुं=प्रापयितुम्। अपाने=अपानपाय्वादिस्थाने, समानयति=प्रापयति, अन्तर्वर्ती=शरीरान्तरङ्गवर्ती, अन्यथा=समानस्य शरीरान्तःसकलाङ्गवर्तित्वानङ्गीकारे, पुराणवाक्यं=स्कान्दे ब्रह्मगीतायां पञ्चीकृत्य शिवाज्ञयेत्यादिवाक्यम्, पृथिवी च पृथिवीमात्रा च आपश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा चेत्याथर्वणश्रुतिरपि पञ्चीकरणे प्रमाणमित्यपि बोध्यमिति॥

**"तासां च त्रिवृतं त्रिवृतमेकैकां करणानि" इति श्रुतेः पञ्चीकरणोपलक्षणार्थत्वात्। पञ्चीकरणप्रकारश्चेत्थम्। आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषान्तु चतुर्णामंशानां वाय्वादिषु संयोजनम्। एवं वायुं द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषां चतुर्णामंशानामाका-**

शादिषु योजनम्। एवं तेजआदीनामपि । तदेवमेकैकभूतस्यार्द्धं स्वांशात्मकमर्द्धान्तरं चतुर्विधभूतमयमिति पृथिव्यादिषु स्वांशाधिक्यात्पृथिव्यादिव्यवहारः । तदुक्तम् "वैशेष्यात्तु तद्वादस्तद्वादः" इति ॥

शि० म०—ननु त्रिवृत्कृतिप्रतिपादकच्छान्दोग्यश्रुतिविरोधेन कथं पुराणादिवाक्यात् पञ्चीकृतिसिद्धिरित्याशङ्क्य तस्यास्त्रिवृत्कृतिपरत्वेन पञ्चीकृतिनिवृत्तिपरत्वाभावात्,एकस्य वाक्यस्य व्यापारद्वयाभावादित्यभिप्रेत्याह—तासामिति। ननु पञ्चतन्मात्रैस्समुदितैरेकमहाभूतोत्पत्तिर्यदि पञ्चीकरणशब्दार्थस्तदा पञ्चतन्मात्राणामेकत्रैवोपक्षयान्महाभूतान्तरोत्पत्तिर्न स्यात्। तानि भूतानि प्रत्येकं पञ्चधा विभज्य तद्भूतांशे पञ्चसमुदायकरणं पञ्चीकरणमित्यभ्युपगतावेकैकत्र महाभूते पृथिव्यादिपञ्चव्यवहारापत्तिरित्याशङ्क्य पञ्चीकरणप्रक्रियामाह—पञ्चीकरणप्रकार इति । नन्वस्त्वेकभूतार्धभागे तदितरभूतार्द्धचतुर्थांशानां चतुर्णां संयोजनं पञ्चीकृतिस्तथापि न व्यवहारसांकर्य्यस्य प्रतीकार इत्यत आह—तदेवमिति । अत्र सूत्रकारसंमतिमाह—तदुक्तमिति। केचित्तु तेजोऽबन्नानि त्रीण्येव भूतानि त्रिवृत्कृतानि न तु पञ्चभूतानि पञ्चीकृतानि तथा सत्याकाशे पार्थिवांशस्यापि भाने रूपवत्त्वेन चाक्षुषत्वापत्तेः। अभाने तद्व्यवहाराभावेन पञ्चीकृतिवैयर्थ्यात्। किंच त्रिवृत्करणमेव युक्तम् 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति तस्यैव श्रुतत्वान्न तु पञ्चीकृतिरस्या अश्रवणात्। तदुक्तं कल्पतरौ। "संप्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्। तथापि युक्तिदृष्टत्वाद्वाचस्पतिमतं शुभम्॥ पृथिव्यबनलात्मत्वं गगने पवनेऽपि चेत्। रूपवत्त्वमहत्त्वाभ्यां चाक्षुषत्वं प्रसज्यते ॥ अर्द्धभूयस्त्वतः क्षित्याद्यविभावनकल्पने । व्यवहारपथा प्राप्ता मुधा पञ्चीकृतिर्भवेत् ॥ अनपेक्ष्य फलं वेदसिद्धेत्येवेष्यते यदि। त्रिवृत्कृतिः श्रुता पञ्चीकृतिर्न क्वचन श्रुता"इति। त्रिवृत्करणप्रकारश्चैवम्।तेजोऽबन्नानि त्रीणि भूतानि प्रत्येकं द्विधा विदार्य्य प्रतिभूतमेकैकमर्द्धं द्विधा प्रस्फोट्य इतरभूतार्द्धद्वये योजनमिति तन्न । गगनपवनयोः स्वांशाधिक्यात्। न च पृथिव्यबग्न्यंशाविभावनेन रूपवत्त्वाभावः, व्यवहारप्रयोजनाभावाद्व्यर्थं पञ्चीकरणमित्युक्तमिति वाच्यम्। त्रिवृत्करणपक्षे पृथिव्या इवाप्तेजसोर्गन्धवत्त्वादिव्यवहाराभावेन दोषसाम्यात् । न च प्रमाणाभावः। तस्योक्तत्वात्। त्रिवृत्कृतिश्रुतेश्च तन्निवृत्तिपरत्वाभावेनाविरोधस्योक्तत्वात् । तस्मात्सुष्ठूक्तं पञ्चीकृतानि भूतानि जायन्ते इति ॥

म० प्र०—तस्याः=त्रिवृत्कृतिप्रतिपादकच्छान्दोग्यश्रुतेः । एकस्येति । शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति, न्यायेनैकवाक्यस्य त्रिवृत्कृतिबोधपञ्चीकृतिनिषेधबोधानुकूलतात्पर्यरूप-

व्यापारद्वयाभावादित्यर्थः । समुदितैः=मिलितैः, एकमहाभूतोत्पत्तिः=पृथिव्यादिषु मध्ये यस्य-कस्यचिदेकमहाभूतस्योत्पत्तिः, पञ्चधा विभज्य=एकैकभूतस्य तुल्यपञ्चभागं कृत्वा, तद्भूतांशे=पञ्चधाकृतपृथिव्यादिभूतैकांशे, अत्र=पृथिव्यादिव्यवहारासांकर्ये । द्वितीयाध्याये चतुर्थपादस्यान्तिम-सूत्रं वैशेष्यादित्यादि । ननु सर्वेषां त्रिवृत्करणे विशेषाभावादियं पृथिवीत्यादिवद्व्यवहारः कथं स्यादित्याशङ्क्याह-परममूले **वैशेष्यादित्यादि** । तुरुक्तशङ्कानिरासार्थः । सर्वेषां पृथिव्या-दीनां त्रिवृत्करणाविशेषेऽपि वैशेष्यात्स्वभागाधिक्यात्तद्वादः पृथिव्यादिवादः संगच्छते इत्यर्थः । तथा सति=आकाशादिभूतपञ्चीकरणाङ्गीकारे सति, तद्व्यवहाराभावेन=पृथिवीत्यादिव्यवहाराभावेन, तासां=तेजोऽबन्नरूपदेवतानां मध्ये । एकैकं=पृथिव्यादिरूपदेवताम्, त्रिवृतं त्रिवृतं=त्र्यंशं त्र्यंशम्, तस्यैव=त्रिवृत्करणस्यैव, अस्याः=पञ्चीकृतेः । संप्रदायाध्वना=प्राचीनाचार्य्यवाक्येन, वाचस्पति-मतम्=त्रिवृत्करणाङ्गीकाररूपवाचस्पतिमतम्, शुभं=श्रेष्ठम् । तत्र हेतुमाह-**युक्तिदृष्टत्वादिति** । आकाशे पार्थिवांशस्यापि भाने इत्याद्युक्तयुक्तिभिर्निश्चितत्वादित्यर्थः । **अविभावनेति** । अप्रतीतीत्यर्थः । व्यवहारपथा=आकाशादीनां पञ्चीकृतिरिति प्राचीनाचार्य्यव्यवहाररूपमार्गेण । अनपेक्ष्य फलं=प्रयोजनं विनैव । केचित्त्वित्यादिनोक्तं मतं निषेधयति-**तन्नेत्यादिना** । **व्यवहारेति**=आकाशादौ पृथिव्याद्यंशव्यवहारेत्यर्थः । तस्योक्तत्वात्=पञ्चीकरणे पुराणवाक्यं प्रमाणमिति पुराणवाक्यरूपप्रमाणस्योक्तत्वात् ॥

**तैश्चापञ्चीकृतभूतैर्लिङ्गशरीरं परलोकयात्रानिर्वाहकं मोक्षपर्य्यन्तं स्थायि मनोबुद्धिभ्यामुपेतं ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चक-प्राणादिपञ्चकसंयुक्तं जायते ॥**

**शि० म०**-पाञ्चभौतिकं हि शरीरं तेषां समुदायः शरीरमिति मैत्रेयश्रुतेः । तच्च द्विविधं स्थूलं सूक्ष्मं चेति । तत्र स्थूलं करचरणाद्यवयवोपेतमन्यच्चापञ्चीकृतपञ्चभूतै-रुत्पद्यत इत्याह-**तैश्चेति** । ननु परिदृश्यमानस्थूलशरीरेणैव जीवस्य सकल-कार्य्यसंभवात् किमनेन लिङ्गशरीरेणेत्यत आह-**परलोकेति** । स्थूलशरीरस्यैहैव भस्मीभावे परलोकयात्रानुपपत्तिस्तन्निर्वाहकं सूक्ष्माङ्गमवश्यमेष्टव्यमिति भावः । तस्य परलोकयात्रानिर्वाहकत्वे हेतुमाह-**मोक्षेति** । प्राकृतप्रलयपर्य्यन्तं स्थायीत्यर्थः । ननु "सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति" इत्यादौ सकल-कार्य्यलयश्रवणेन लिङ्गशरीरस्यापि नाशात्कथं कार्य्यब्रह्मविनाशपर्य्यन्तस्थायित्व-मिति चेत् न, ज्ञानशक्तिविशिष्टस्यासत्त्वाभ्युपगमादिति भावः ॥

**म० प्र०**-तेषां=पञ्चभूतानाम्, तच्च=पाञ्चभौतिकशरीरं च, तत्र=शरीरद्वययोर्मध्ये, अन्यच्च=सूक्ष्मं च । **परलोकेति** । जीवस्य स्वर्गादिलोकगमनेत्यर्थः । अनुपपत्तिः=असिद्धिः । भवत्यत इति शेषः । तन्निर्वाहकं=जीवपरलोकगमनकरम्, सूक्ष्माङ्गं=सूक्ष्मशरीरम् । **प्राकृतप्रलयेति**=प्रकृतिभवमहाप्रलयेत्यर्थः । विशिष्टस्य लिङ्गशरीरस्येति शेषः ॥

तदुक्तम्। "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्॥" इति। तच्च द्विविधं परमपरं चेति। परं हिरण्यगर्भलिङ्गशरीरम्। अपरमस्मदादिलिङ्गशरीरम्। तत्र हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वमस्मदादिलिङ्गशरीरमहङ्कार इत्याख्यायते। एवं तमोगुणयुक्तेभ्यः पञ्चीकृतभूतेभ्यो भूम्यन्तरिक्षस्वर्महर्जनतपःसत्याख्यस्योर्द्ध्वलोकसप्तकस्यातलपातालवितलसुतलतलातलरसातलमहातलाख्यस्याधोलोकसप्तकस्य ब्रह्माण्डस्य जरायुजाण्डजस्वेदजोद्भिज्जाख्यानां चतुर्विधस्थूलशरीराणां चोत्पत्तिः। तत्र जरायुजानि जरायुभ्यो जातानि मनुष्यपश्वादीनि शरीराणि। अण्डजानि अण्डेभ्यो जातानि पक्षिपन्नगादिशरीराणि। स्वेदजानि तु स्वेदाज्जातानि यूकामशकादीनि। उद्भिज्जानि तु भूमिमुद्भिद्य जातानि वृक्षादीनि॥

शि० म०—उक्तावयवोपेतलिङ्गशरीरे प्रमाणमाह—तदुक्तमिति। लिङ्गशरीरं विभजते—तच्चेति। परं ब्रह्माण्डव्यापि अपरं तदव्यापीत्यर्थः। हिरण्यगर्भलिङ्गशरीरस्य महत्तत्त्वव्यपदेशस्तस्य परत्वे प्रमाणमन्यथा शास्त्रादौ हिरण्यगर्भलिङ्गशरीरं महत् तादितरज्जीवलिङ्गशरीरमहङ्कारमात्रमिति व्यपदेशो न स्यादित्याह—तत्रेति। एवं तमोगुणयुक्तेभ्य इति। तस्मात्तमः संजायते तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुर्वायोरग्निः अग्नेरापः अद्भ्यः पृथिवीति तदण्डं समभवत् संवत्सरमात्रमुषित्वा द्विधा अकरोदधस्ताद्भूमिमुपरिष्टादाकाशमिति सुबालोपनिषद्वचनं ब्रह्माण्डस्य तमोगुणयुक्तोत्पन्नत्वे प्रमाणम्। अत्र च भूम्याकाशशब्दयोरधोलोकसप्तकोर्ध्वलोकसप्तकपरत्वात्। अत एव संन्यासविधायिन्यारण्यश्रुतिरपि भूलोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकं चातलपातालवितलसुतलतलातलरसातलमहातलं ब्रह्माण्डं च विसर्जयेदिति चतुर्दशभुवनात्मकं ब्रह्माण्डमाहेति भावः॥

म० प्र०—महत्तत्त्वव्यपदेशः=हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वमिति हिरण्यगर्भलिङ्गशरीरे महत्तत्त्वव्यवहारः। तस्य=हिरण्यगर्भलिङ्गशरीरस्य, अन्यथा=हिरण्यगर्भलिङ्गशरीरस्य परत्वानङ्गीकारे, शास्त्रादौ=शारीरकादौ। तस्मात्=ईक्षणविशिष्टपरमेश्वरात्। तमः=महत्तत्वम्, तमसः=महत्तत्वात्, भूतादिः=अहङ्कारः। तमोगुणयुक्तापञ्चीकृताकाशादिभूतपञ्चकेन पञ्चीकरणद्वारा ब्रह्माण्डोत्पत्तिमभिप्रेत्याह—**तदण्डं समभवदिति**। तत्=तस्मादपञ्चीकृतभूतपञ्चकादण्डं=ब्रह्माण्डं समभवदजायत, स्वनिर्मिताण्डे परमेश्वरः संवत्सरमात्रं=वर्षपर्यन्तमेवोषित्वा=आवासं कृत्वाऽण्डं द्विधा-

ऽकरोत् कृतवान् । द्विधा विभागमेवाह-**अधस्ताद्भूमिमिति** । अधस्तादधोभागं भूमिमधो-लोकसप्तकमुपरिष्टादूर्ध्वभागमाकाशमूर्ध्वलोकसप्तकमित्यर्थः । अत एव=ब्रह्माण्डस्य चतुर्दशभुवनात्मकत्वादेव । **आरण्येति** । आरण्योपनिषदि भवेत्यर्थः ॥

**वृक्षादीनामपि पापफलभोगायतनत्वेन शरीरत्वम् । अत्र च परमेश्वरस्य पञ्चतन्मात्राद्युत्पत्तौ सप्तदशावयवोपेतलिङ्गशरीरोत्पत्तौ हिरण्यगर्भस्थलशरीरोत्पत्तौ च साक्षात्कर्तृत्वम् । इतरनिखिलप्रपञ्चोत्पत्तौ हिरण्यगर्भादिद्वारा "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतेः ॥**

**शि० म०-वृक्षादीनामिति** । "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति वृक्षादेः केवलपापजन्यत्वावगमेन तज्जन्यदुःखभोगायतनत्वाच्छरीरत्वमिति भावः । ननु ब्रह्मणो न सकलजगत्कर्तृत्वं सुबालोपनिषदि "ब्राह्मणोऽस्य मुखमासीत्" इत्यादिना ब्राह्मणक्षत्रादिसृष्टेस्तत्रैव "अपानान्निषादा यक्षा राक्षसा गन्धर्वाश्चास्थिभ्यः पर्वता लोमभ्यः ओषधिवनस्पतयः" इत्यादिना निषादादिसृष्टेश्च शरीरसाध्यत्वावगमात् वेदस्य च लिप्यादिसंप्रदायस्य चाशरीरेण कर्तुमशक्यत्वात् । न च शरीरसाध्यं कर्म हिरण्यगर्भः करोति तदसाध्य तु ब्रह्मेति वाच्यम् । तर्हि ब्रह्मैव सकलजगत्कारणमिति व्याहन्येतेत्याशङ्क्याह-**अत्रेति** । **लिङ्गशरीरेति** । उभयविधलिङ्गशरीरेत्यर्थः । **हिरण्यगर्भस्थूलशरीरेति** । "मध्ये तु पुरुषो दिव्यस्सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्सहस्रबाहुः" इति सुबालोपनिषद्वचनं ब्रह्मणो हिरण्यगर्भशरीरकर्तृत्वे प्रमाणम् । न चात्रोत्पत्तिवाचकस्य शब्दस्याश्रवणात् कथं कर्तृत्वसिद्धिरिति वाच्यम् । "तस्मात्तमस्संजायते" इति पूर्ववाक्ये श्रुतस्य तदुभयस्यात्रानुषङ्गात् । ननु हिरण्यगर्भकर्तृकं कार्य्यं कथं ब्रह्मकर्तृकं स्यात् । न हि कुलालेन कृतं कुविन्देन कृतं भवतीत्याशङ्क्य तत्र छान्दोग्यश्रुतिं प्रमाणयति-**हन्तेति** ॥

**म० प्र०-तज्जन्येति**=पापजन्येत्यर्थः । अस्य=हिरण्यगर्भब्रह्मणः, मुखम्=मुखात्, तत्रैव=सुबालोपनिषद्येव । अपानात्=अपानवायोरपानवायुपायुरूपस्थानाद्वा, निषादाः=शूद्रविशेषाः, वेदस्य=शब्दात्मकवेदस्य । **अशरीरेणेति** । न च ब्रह्मणो योगिवत् ब्राह्मणादिकार्य्यकारित्वं स्यादन्यथेश्वरस्यापञ्चीकृतभूतकर्तृत्वं न स्यादिति वाच्यम् । अशरीरेण सूक्ष्मशरीरवता वेश्वरेण ब्राह्मणादिकार्य्यविशेषं कर्तुमशक्यत्वाद्योगिनोऽपि स्थूलशरीरसाध्यनृत्यगीतहिंसनादिकार्य्यविशेषं सूक्ष्मशरीरेण कर्तुमशक्यत्वात् स्थूलशरीरद्वारैव नृत्यादिकार्य्यकारित्वश्रवणादिति भावः । परममूले **अत्र चेति** । प्रकृते च स्रष्टृषु मध्ये वेत्यर्थः । **उभयविधेति**=परापरेत्यर्थः । मध्ये तु=अध ऊर्ध्वभागद्वयात्मकब्रह्माण्डमध्ये । अत्र हिरण्यगर्भविराजोः

अभेदाभिप्रायेण हिरण्यगर्भशरीरकर्तृत्वं बोध्यम् । तदुभयस्य=तस्माज्जायते इति पदद्वयस्य, तत्र=हिरण्यगर्भादिकर्तृककार्य्यमपि ब्रह्मकर्तृकमित्यर्थे । परममूले **इमा इति** । इमाः=पूर्वोक्ताः, देवताः=तेजोऽबन्नात्मरूपा देवताः । तथा च जीवस्यापि वस्तुतो ब्रह्मातिरिक्तत्वाभावात् सर्वं कार्य्यं ब्रह्मकर्तृकमेवेति भावः ॥

**हिरण्यगर्भो नाम मूर्त्तित्रयादन्यः प्रथमो जीवः । "स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्तत॥" "हिरण्यगर्भः समवर्तताग्रे" इत्यादिश्रुतेः । एवं भूतभौतिकसृष्टिर्निरूपिता । इदानीं प्रलयो निरूप्यते। प्रलयो नाम त्रैलोक्यनाशः । स चतुर्विधः नित्यः प्राकृतो नैमित्तिक आत्यन्तिकश्चेति । तत्र नित्यः प्रलयः सुषुप्तिः । तस्याः सकलकार्य्यप्रलयरूपत्वात् ॥**

**शि० म०**—नन्वनेन जीवेनेति वाक्येन हिरण्यगर्भो नाभिधीयते, तस्य ब्रह्मविष्णुरुद्रलक्षणमूर्तित्रयान्तर्भावेन जीवत्वाभावादित्यत आह—**हिरण्यगर्भो नामेति** । तत्र प्रमाणमाह—**स वै शरीरीति** । तस्य तदन्यत्वे मन्त्रवर्णं च प्रमाणयति—**हिरण्यगर्भ इति** । " ब्रह्मा देवानां प्रथमस्संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता " इति मुण्डकश्रुतिरपि तस्य प्रथमजीवत्वे प्रमाणमिति बोध्यम् । जगज्जन्मनिरूपणमुपसंहरति—**एवमिति** । स्थितेरेकरूपत्वेन तत्र निरूपणीयांशाभावाज्जन्मनिरूपणानन्तरं प्रलयो निरूप्यते इति प्रतिजानीते—**इदानीमिति** । प्रलयस्वरूपे हि ज्ञाते तद्विभाग इति प्रथमं तल्लक्षयति—**प्रलयो नामेति** । सकलकार्य्यनाशः प्रलय इत्यर्थः । नित्यप्रलयं निरूपयति—**तत्र नित्य इति** । प्रतिदिनं प्रतिसुप्तिजायमानो लयो नित्यः सुषुप्तिकालिकश्च प्रलयस्तथेत्यर्थः । ननु सुषुप्तिकाले सकलेन्द्रियव्यापारोपरमेऽपि न सर्वकार्य्यविलयः मानाभावादित्यत आह—**तस्या इति** । " सुषुप्तिकाले सकले विलीने " इति कैवल्योपनिषदि तत्काले सकलकार्य्यविलयस्य श्रवणादिति भावः ॥

**म० प्र०**—तस्य=हिरण्यगर्भस्य, मूर्त्तित्रयान्तर्भावेन=मूर्त्तित्रयान्यतमान्तर्भावेन । तत्र=हिरण्यगर्भस्य मूर्तित्रयादन्यत्वे । परममूले=**स वै इति** । यो ब्रह्मा हिरण्यगर्भोऽग्रे=मन्वादिसृष्टेः प्राक्, समवर्त्तत=अजायत, स=हिरण्यगर्भः, प्रथमः शरीरी=प्रथमो जीव उच्यते, स एव पुरुषः स एव भूतानामादिकर्तोच्यते इत्यर्थः । अत्र हिरण्यगर्भस्य प्रथमशरीरित्वश्रवणेन जीवत्वावधारणान्मूर्तित्रयादन्यत्वमवगम्यते इति भावः । तस्य=हिरण्यगर्भस्य, तदन्यत्वे=मूर्त्तित्रयान्यत्वे, मन्त्रवर्णं च=अतिरोहितार्थकमन्त्ररूपवेदभागं च । तत्र=स्थितौ । **सकलकार्य्यनाश इति** । सकलकार्य्यनाश-त्रैलोक्यमात्रनाशान्यतरनाश इत्यर्थः । अतो नैमित्तिकप्रलये नाव्याप्तिः । मूले नित्य इति लक्ष्यनि-

द्देशः, लक्षणबोधकप्रलयसुषुप्तिशब्दौ सुषुप्तिकालिकप्रलयपरौ । तथा च सुषुप्तिकालिकप्रलयो नित्यप्रलय इत्यर्थमभिप्रेत्याह—**प्रतिदिनमिति** । नित्यः=नित्यप्रलयः । लक्ष्ये लक्षणं योजयति—**सुषुप्तिकालिकश्चेति** । तथा=नित्यप्रलयः । तत्काले=सुषुप्तिकाले ॥

**धर्माधर्मपूर्वसंस्काराणां च तदा कारणात्मनावस्थानम् । तेन सुप्तोत्थितस्य न सुखदुःखाद्यनुपपत्तिः, न वा स्मरणानुपपत्तिः । न च सुषुप्तावन्तःकरणस्य विनाशेन तदधीनप्राणादिक्रियानुपपत्तिः, वस्तुतः श्वासाद्यभावेऽपि तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वात् सुषुप्तशरीरोपलम्भवत् । न चैवं सुप्तस्य परेतादविशेषः, सुप्तस्य हि लिङ्गशरीरं संस्कारात्मनात्रैव वर्तते परेतस्य तु लोकान्तर इति वैलक्षण्यात् । यद्वा अन्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चेति । तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशो, न क्रियाशक्तिविशिष्टस्येति प्राणाद्यवस्थानमविरुद्धम् ॥**

शि० म०—ननु सुषुप्तिकालस्य सकलकार्य्यप्रविलयाधारत्वे धर्माधर्मयोः स्मृतिहेतुसंस्कारस्य च तदा विनाशेन सुप्तोत्थितस्य सुखदुःखानुभवो घटादिस्मृतिश्च न स्यादित्यत आह—**धर्माधर्मेति** । **कारणात्मनेति** । अविद्यात्मनेत्यर्थः । ननु धर्मादिवदन्तःकरणस्याविद्यात्मनाऽवस्थितत्वेन स्वरूपेण विनाशाच्छ्वासादिक्रियानुपपत्तिरित्याशङ्क्य निराकरोति=**न चेति** । किं सुषुप्तौ क्रियाऽनुपपन्ना तदुपलब्धिर्वा । नाद्यः, इष्टापत्तेः । न द्वितीय इत्याह—**वस्तुत इति** । एवं सति सुषुप्त्युत्क्रान्त्योर्भेदो न स्यादित्याशङ्क्य निराकरोति—**न चैवमिति** । **संस्कारात्मनेति** । नाशाख्यसंस्काराविद्यात्मनेत्यर्थः । ननु सुषुप्तौ सकलकार्य्यलयाभ्युपगमे सुप्तोत्थितस्य धर्मादिविनाशे सुखाद्यनुपपत्तिर्दुर्वारा । कारणात्मनाऽवस्थानमिति चेत् किमविद्यात्मनाऽवस्थानं कारणात्मनाऽवस्थानमित्यनेन विवक्षितमुत धर्मादेरपि स्वकार्य्यकारणत्वेन स्वरूपेणावस्थानम् । आद्ये धर्मादिकारणमविद्यैव तदा वर्तते इत्यर्थः स्यात् । तथा च सुखादिकारणधर्माद्यभावादुक्तदोषतादवस्थ्यम् । द्वितीये "सकले विलीने" इति श्रुतिविरोधः । अन्तःकरणस्यापि स्वरूपेणावस्थाने श्वासोपलब्धेर्भ्रमत्वप्रतिपादनविरोधश्चेत्यस्वरसादाह—**यद्वेति** । **शक्ती इति** । शक्तिः=सामर्थ्यम् तच्च फलोपधानं विवक्षितं न स्वरूपयोग्यत्वम्, तस्य सर्वदा सत्त्वेन ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाश इत्युत्तरग्रन्थविरोधात् । **प्राणादीति** । अत्रादिपदेन सावयवलिङ्गशरीरधर्माधर्मसंस्काराणां परिग्रहः । न च धर्मादेरपि कथं स्वरूपेणावस्थानमन्यथा "सुषुप्तिकाले सकले विलीने" इति श्रुतिविरोधापत्तेरिति वाच्यम् । धर्मादि-

कार्य्यस्य सुखादेर्विनाशेन तस्य कार्य्यविशिष्टकारणनाशपरत्वात् । अत एव कैवल्योपनिषदि "पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः" इति तदुत्तरवाक्यं संगच्छते । अन्यथा कारणस्य धर्मादेः स्वरूपेण विनाशेन तद्विरोधापत्तेः । अत एव माण्डूक्योपनिषदि "यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तम्" इति निर्वचनम् । अत एव "अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद" इति बृहदारण्यकश्रुतिरपि ॥

म० प्र०—तदा=सुषुप्तिकाले । **सुषुप्त्युत्क्रान्त्योरिति** । उत्क्रान्तिश्चात्र देहजीववियोगरूपा ग्राह्या । परममूले **सुषुप्तशरीरोपलम्भवदिति** । यथा सुषुप्तिकाले सुप्तस्य ममेदं शरीरमिति शरीरादिसंबन्धाध्यासाभावेन सुषुप्तदृष्ट्या शरीरादेरभावात्सुप्तस्य शरीरेऽन्यस्योपलम्भो भ्रमात्मकस्तद्वदित्यर्थः । इदं च दृष्टिसृष्टिवादाभिप्रायेणेति ध्येयमिति । परममूले **परेतादिति** । मृतादित्यर्थः । **नाशाख्यसंस्काराविद्यात्मनेति** । यथा दर्दुरस्य पृथिव्यां तिरोभावाख्यसंस्काररूपपृथिव्यात्मनावऽस्थानं तथा लिङ्गशरीरस्यापि तिरोभावाख्यसंस्काररूपाविद्यात्मनाऽवस्थानमित्यर्थः । अनेन=कारणात्मनाऽवस्थानमिति शब्देन, स्वकार्य्यकारणत्वेन=धर्मादिकार्य्यसुखादिकारणत्वेन, तदा=सुषुप्तौ । **उक्तदोषेति** । सुप्तोत्थितस्य सुखाद्यनुपपत्तिरूपदोषेत्यर्थः । परममूले **ज्ञानशक्तिरिति** । ज्ञानाद्यनुकूलसामर्थ्यमित्यर्थः । परममूले **क्रियाशक्तिरिति** । प्राणादिक्रियानुकूलसामर्थ्यमित्यर्थः । तच्च=सामर्थ्यं च, फलोपधानं=ज्ञानादिफलसंबन्धरूपम्, स्वरूपयोग्यत्वम्=अन्तःकरणत्वरूपकारणतावच्छेदकधर्माक्रान्तत्वरूपम्, तस्य=उक्तस्वरूपयोग्यत्वस्य । अत्र=मूले, अन्यथा=धर्मादेः स्वरूपेणावस्थानस्वीकारे, तस्य=सुषुप्तावुक्तसकलकार्य्यलयबोधकश्रुतिवाक्यस्य, कार्य्यविशिष्टकारणनाशपरत्वात्=सुखादिकार्य्यविशिष्टधर्मादिकारणलयपरत्वात्, अत एव=सुषुप्तिकाले सकलकार्य्यलयबोधककैवल्योपनिषद्वाक्यस्य कार्य्यविशिष्टकारणनाशपरत्वादेव । **तदुत्तरेति** । सुषुप्तिकाले इत्यादिवाक्योत्तरेत्यर्थः । अन्यथा=सुषुप्तिकाले इत्यादिकार्य्यलयबोधकवाक्यानां कार्य्यविशिष्टकारणनाशपरत्वानङ्गीकारे किन्तु स्वरूपेण नाशपरत्वस्वीकारे, तद्विरोधापत्तेः=पुनश्च जन्मान्तरकर्मयोगादित्यादिवाक्यविरोधापत्तेः, अत एव=कार्य्यलयबोधकवाक्यस्य कार्य्यविशिष्टकारणनाशपरत्वादेव, यत्र=यस्मिन्काले, सुप्तः=उपरतेन्द्रियग्रामः, न कंचन कामं कामयते=कमपि पुण्यपापहेतुभूतपुत्रक्षेत्रादिकं नाभिलषति, न कंचन स्वप्नं पश्यति=कमपि शुभमशुभं वासनाविलासं नावलोकयति, तत्=कामाकामनस्वप्नानवलोकनरूपम्, सुषुप्तं=गाढनिद्राप्राप्तिस्थानम् । निर्वचनं संगच्छते इति शेषः । अत एव=कार्य्यलयबोधकवाक्यस्य कार्य्यविशिष्टकारणनाशपरत्वादेव । **यत्रेति** । न कामयते इत्यादेरिच्छादिरूपकार्य्याभावपरत्वेन स्वरूपेण पदार्थनाशपरत्वमिति भावः । प्राज्ञेनात्मना=ज्ञानस्वरूपब्रह्मणा, सम्परिष्वक्तः=अभिन्नः । न बाह्यं किंचन वेदेत्यस्य वेदनरूपकार्याभावपरत्वमिति भावः । **श्रुतिरपीति** । अस्याग्रे सङ्गच्छते इति शेषः ॥

"यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन्प्राणे एकधा भवति अथैनं वाक् सर्वैर्नामभिः सहाप्येति" "सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति" इत्यादिश्रुतिरुक्तसुषुप्तौ मानम् ॥

शि० म०—सुषुप्तौ सकलकार्य्यविलये कौशीतकश्रुतिप्रमाणमाह—यदेति। तत्र छान्दोग्यश्रुतिं प्रमाणयति—सता सोम्येति ॥

म० प्र०—परममूले अथेति। अथ=सुषुप्तिकाले, अस्मिन्प्राणेऽन्तर्यामिरूपे ब्रह्मणि, एकधा भिन्नः अथ सुषुप्तिकाले एनं प्राणरूपान्तर्यामिणमित्यर्थः। परममूले सतेति। हे सोम्य तदा=सुषुप्तिकाले, सता=सद्रूपब्रह्मणा सह संपन्नः=अभेदंगतः पुरुषो भवति स्वमपीतो भवति। अत्र स्वशब्देन सच्छब्दवाच्यात्मा परामृश्यते। तथा च स्वं स्वं प्रति सच्छब्दवाच्यात्मनि, अपीतो भवति=लीनो भवति तिरोहितोपाधिर्भवतीत्यर्थः "सति संपद्य न विदुः" इत्याद्या श्रुतिरादिपदग्राह्या ॥

प्राकृतप्रलयस्तु कार्य्यब्रह्मविनाशनिमित्तकः सकलकार्य्यनाशः। यदा तु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्य्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्मसमाप्तौ विदेहकैवल्यात्मिका परममुक्तिः तदा तल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह विदेहकैवल्यम्। "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥" इति श्रुतेः। एवं तल्लोकवासिभिः सह कार्य्यब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डान्तर्वर्तिनिखिललोकतदन्तर्वर्तिस्थावरादीनां भौतिकानां भूतानां च प्रकृतौ मायायां लयो न तु ब्रह्मणि बाधरूपविनाशस्यैव ब्रह्मनिष्ठत्वात् अतः प्राकृतलय इत्युच्यते ॥

शि० म०—प्राकृतेति। प्रकृतौ मायायां भवः प्राकृतप्रलय इत्यर्थः। न च सौषुप्तिकप्रलयेऽतिव्याप्तिः तदा सुखादिविनाशस्यान्तःकरणनिष्ठत्वादिति भावः। तल्लोकवासिनामिति। सत्यलोकवासिनामित्यर्थः। यद्यपि कार्य्यब्रह्मविनाश एव प्रकृतोपयोगी तथापि तत्प्रमाणत्वेन वक्ष्यमाणवचनेन कृतात्मान इति पदमुत्पन्नब्रह्मसाक्षात्कारवत्परम्। प्रविशन्तिपदं च विदेहकैवल्यपरं न तु लोकान्तरावाप्तिपरमिति दर्शयितुं तदभिधानमिति बोध्यम्। नन्वयं प्रलयो न प्राकृतः ब्रह्मनिष्ठत्वादित्याशङ्क्य मायानिष्ठ एवायं प्रलयः, परिणाम्युपादानकालिकनाशस्य तन्निष्ठत्वाभ्युपगमात्। अत एव घटादिनाशो मृत्पिण्डादिनिष्ठ

इत्यभिप्रेत्याह—**न त्विति। बाधेति** । इदं च नाशस्य ब्रह्मान्यत्वमभ्युपेत्योक्तम्। वस्तुतस्तु बाधोऽपि न ब्रह्मनिष्ठः। तस्याधिष्ठानावशेषत्वादिति बोध्यम् ॥

म० प्र०—परममूले **प्रागेवेति** । प्रलयात्पूर्वमेवेत्यर्थः। परममूले **ब्रह्मणेति** । परस्य=हिरण्यगर्भस्य अन्ते=मुक्तिसमये, प्रतिसञ्चरे=प्राकृतप्रलयसम्प्राप्ते सति, कृतात्मानः=साक्षात्कृतात्मानः सत्यलोकवासिनः सर्वे ब्रह्मणा सह परमं पदं ब्रह्म प्रविशन्ति—प्राप्नुवन्तीत्यर्थः। ननु प्राकृतप्रलयनिरूपणाय कार्य्यब्रह्मविनाशस्यैवोपयोगित्वेन तदेत्यारभ्य विदेहकैवल्यमित्यन्तग्रन्थो व्यर्थ इत्याशङ्क्याह—**यद्यपीत्यादिना** । तत्प्रमाणत्वेन=प्राकृतप्रलये प्रमाणत्वेन, वक्ष्यमाणवचनेन=ब्रह्मणा सहेत्यादिवक्ष्यमाणवाक्येन, इति दर्शयितुं तदभिधानं=तदेत्यारभ्य विदेहकैवल्यमित्यन्तग्रन्थाभिधानमित्यर्थः। तन्निष्ठत्वाभ्युपगमात्=परिणाम्युपादानवृत्तित्वस्वीकारात्, अत एव=परिणाम्युपादानकालिकनाशस्य परिणाम्युपादानवृत्तित्वाभ्युपगमादेव । परममूले **बाधरूपविनाशस्यैवेति** । उपादानेन सह कार्य्यनाशस्यैवेत्यर्थः। इदं च=बाधरूपनाशस्यैव ब्रह्मनिष्ठत्वाभिधानं च, ब्रह्मान्यत्वं=भावाद्वैतमते नाशस्य ब्रह्मधर्मत्वाद्ब्रह्मान्यत्वम् ॥

**कार्यब्रह्मणो दिवसावसाननिमित्तकस्त्रैलोक्यमात्रप्रलयो नैमित्तिकप्रलयः। ब्रह्मदिवसश्चतुर्युगसहस्रपरिमितकालः। "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ॥" इति वचनात् । प्रलयकालः दिवसकालपरिमितः रात्रिकालस्य दिवसतुल्यत्वात् । प्राकृतप्रलये नैमित्तिकप्रलये च पुराणवचनानि प्रमाणानि। "द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः। तदा प्रकृतयः सप्त कल्प्यन्ते प्रलयाय हि ॥ एष प्राकृतिको राजन् प्रलयो यत्र लीयते" इति वचनम् प्राकृतप्रलये मानम्। "एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृट्। शेतेऽनन्तासने नित्यमात्मसात्कृत्य चाखिलम् ॥" इति वचनं नैमित्तिके प्रलये मानम्। तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः । स चैकजीववादे युगपदेव नानाजीववादे क्रमेण। 'सर्वे एकीभवन्ति' इत्यादिश्रुतेः। तत्राद्यास्त्रयोऽपि प्रलयाः कर्मोपरमनिमित्ताः। तुरीयस्तु ज्ञानोदयनिमित्तोऽज्ञानेन सहैवेति विशेषः। एवं चतुर्विधप्रलयो निरूपितः। तस्येदानीं क्रमो निरूप्यते। भूतानां भौतिकानां च न कारणलयक्रमेण लयः ॥**

शि० म०—नैमित्तिकप्रलयं निरूपयति—**कार्य्यब्रह्मण इति** । **त्रैलोक्यमात्रेति** । सत्यलोकतदन्तर्वर्त्तिकार्य्यव्यतिरिक्तसकलकार्यविनाश इत्यर्थः। **तुरीयश्चतुर्थः। सर्वमोक्ष इति**। सर्वकार्य्यविनाश इत्यर्थः। ननु मोक्षस्यापि प्रलयत्वे नैमित्तिकादिप्रलयाविशेषापत्तौ तद्वदेव मोक्षस्य पुरुषार्थत्वं न स्यादित्यत आह—

तत्रेति । तथा च मोक्षस्यानर्थहेत्वविद्यानिवृत्तिरूपत्वात् पुरुषार्थत्वमिति भावः । जन्मवल्लयस्यापि क्रमाकाङ्क्षत्वात्तत्क्रमनिरूपणं प्रतिजानीते—तस्येति । तदुत्पत्तिक्रम एव प्रलयेऽप्यस्तु न तु विपरीतक्रमः, क्लृप्तत्वादित्यत आह—भूतानामिति ॥

म० प्र०—परममूले त्रैलोक्येति=भूरादिलोकत्रयेत्यर्थः । परममूले अनन्तासने इति । शेषरूपशय्यायामित्यर्थः । आत्मसात्=स्वाधीनीकृत्य, तद्वदेव=नैमित्तिकादिप्रलयवदेव, तथा च=तुरीयप्रलयस्य ज्ञानोदयनिमित्तकत्वेन नैमित्तिकप्रलयादिभ्यो वैलक्षण्ये सति । तत्क्रमेति=प्रलयक्रमेत्यर्थः । तर्हि=प्रलयक्रमस्य निरूपणीयत्वे सति । उत्पत्तिक्रम एवेति । यथा मायोपाधिकब्रह्मण आदावाकाशस्योत्पत्तिः पश्चादाकाशभावापन्नाद्ब्रह्मणः क्रमेण वाय्वादीनामुत्पत्तिस्तथा प्रथमं ब्रह्मण्याकाशस्य लयः पश्चादुत्पत्तिक्रमेणैव वाय्वादीनां लय इत्येव क्रमः प्रलयेऽप्यस्त्वित्यर्थः । विपरीतेति । प्रथमं पृथिव्या अप्सु लयोऽपां तेजसीत्यादिविपरीतक्रम इत्यर्थः । क्लृप्तत्वात्=उत्पत्तिक्रमस्य प्रसिद्धत्वात् ॥

**कारणलयसमये कार्य्याणामाश्रयमन्तरेणावस्थानानुपपत्तेः । किन्तु सृष्टिक्रमविपरीतक्रमेण तत्तत्कार्य्यनाशे तत्तज्जनकादृष्टनाशस्यैव प्रयोजकतयोपादाननाशस्याप्रयोजकत्वात् । अन्यथा न्यायमतेऽपि महाप्रलये पृथिवीपरमाणुगतरूपगन्धरसादेरविनाशापत्तेः । तथा च पृथिव्या अप्सु अपां तेजसि तेजसो वायौ वायोराकाशे आकाशस्य जीवाहङ्कारे तस्य हिरण्यगर्भाहङ्कारे तस्य चाविद्यायामित्येवं रूप एव प्रलयः ॥**

शि० म०—उत्पत्तिक्रमस्याङ्गीकारे बाधकमाह—कारणेति। आश्रयमन्तरेणेति। न च विनश्यदवस्थायामाश्रयमन्तरेणैवावस्थानमत एवानाश्रिता अवतिष्ठन्त इति न्यायसिद्धान्त इति वाच्यम् । तथा सति सर्वदा निराश्रयत्वापत्तेः । ननु क्रमान्तराभावादगत्या स एव क्रमः कल्प्यते इति चोदयति—किन्त्विति। तदभावोऽसिद्ध इत्याह—सृष्टीति । नन्वाश्रयनाशानन्तरमेव कार्य्यनाशः तस्यैव तद्धेतुत्वादित्यत आह—तत्तत्कार्येति । अयं भावः । न तावदाश्रयनाशमात्रं हेतुः पाकरक्तघटे श्यामनाश आत्मनि गुणनाशश्च न स्यात् । न चाश्रयनाशः कार्य्यद्रव्यनाशे हेतुः द्व्यणुकनाशाभावप्रसङ्गात् । न च तत्रासमवायिकारणनाशाद्द्व्यणुकनाशः, आत्मनि पाकरक्ते घटे च विरोधिगुणाविर्भावाद्गुणनाश इति न दोष इति वाच्यम् । अननुगमात् । कार्य्यजनकादृष्टनाशस्यानुगतस्य तत्तत्कार्य्यनाशजनकत्वसम्भवेनाननुगमस्यान्यात्वादिति । अदृष्टनाशस्य कारणत्वानङ्गीकारे बाधकमाह—अन्यथेति । सिद्धान्ते परमाणोरनभ्युपगमादाह—न्यायमतेऽपीति । तथा चादृष्टनाशस्य सत्त्वात्स एव सर्वत्र प्रयोजक इति भावः ॥

**म० प्र०**–अत एव=आश्रयं विनैवाश्रितकार्य्यावस्थानसम्भवादेव, अनाश्रिताः=आश्रयरहिताः सन्तः, अवतिष्ठन्ते=आश्रयनाशोत्तरकाले आश्रितकार्य्याणां परैर्नाशाभ्युपगमादाश्रयनाशक्षणोत्तरक्षणावस्थानवन्त आश्रितपदार्था भवन्ति। तथा सति=आश्रयनाशोत्तरक्षणे कार्य्याणामाश्रयं विनाऽवस्थानाभ्युपगमे। स एव=उत्पत्तिक्रम एव, तदभावः=उत्पत्तिक्रमात्क्रमान्तराभावः। तस्यैव=आश्रयनाशस्यैव, तद्धेतुत्वात्=कार्य्यनाशहेतुत्वात्। तत्र=द्व्यणुके। दोषः=आत्मादौ गुणनाशाभावरूपो दोषः। **अननुगमादिति**। त्र्यणुकादिनाशत्वावच्छिन्ननाशं प्रत्याश्रयनाशस्य हेतुत्वं द्व्यणुकनाशत्वावच्छिन्ननाशं प्रत्यसमवायिकारणनाशस्य हेतुत्वं योग्यविभुगुणनाशत्वावच्छिन्ननाशं प्रति पाकरक्तघटे पूर्वगुणनाशत्वावच्छिन्ननाशं प्रति च विरोधिगुणोत्पत्तेर्हेतुत्वमिति कार्य्यतावच्छेदककारणतावच्छेदकयोरेकरूपत्वाभावापातादित्यर्थः। अनुगतस्य=अदृष्टनाशत्वरूपैकविधनाशकतावच्छेदकधर्मवतः। अननुगमस्य=अनेककार्य्यतावच्छेदककारणतावच्छेदकस्य। **अनभ्युपगमादिति**। अनभ्युपगममभिप्रेत्येत्यर्थः। तथा च=कार्य्यनाशत्वावच्छिन्नकार्य्यनाशं प्रत्यदृष्टनाशस्य हेतुत्वाभ्युपगमे सति, स एव=अदृष्टनाश एव। सर्वत्र=सर्वकार्यनाशे, प्रयोजकः=कारणम्॥

**तदुक्तं विष्णुपुराणे। "जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते। तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते॥ वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते। अव्यक्तं पुरुषे ब्रह्मन् निष्कले च प्रलीयते॥" इति। एवंविधप्रलयकारणत्वं तत्पदार्थस्य ब्रह्मणस्तटस्थलक्षणम्। ननु वेदान्तैर्ब्रह्मणि जगत्कारणत्वेन प्रतिपाद्यमाने सति सप्रपञ्चं ब्रह्म स्यादन्यथा सृष्टिवाक्यानामप्रामाण्यापत्तेरिति चेन्न॥**

**शि० म०**–पृथिव्यादेरबादौ लये प्रमाणमाह–**तदुक्तमिति**। वस्तुतस्त्वाकाशस्येन्द्रियेष्वेव लयः इन्द्रियाणां तन्मात्रेषु तेषां जीवाहङ्कारे तस्य च हैरण्यगर्भाहङ्कारे तस्य च मायायामित्येवं बोध्यम्। पृथिव्यप्सु प्रलीयते आपस्तेजसि विलीयन्ते तेजो वायौ विलीयते वायुराकाशे आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयन्ते भूतादिर्महति विलीयते महानव्यक्त इति सुबालोपनिषदि तथैव श्रवणात्। ननु तत्पदार्थनिरूपणे सक्रमप्रलयनिरूपणस्य कः प्रसङ्गः इत्याशङ्क्य तस्य प्रकृतोपयोगमाह–**एवंविधेति**। ननु प्रपञ्चोपाधिकं जगज्जन्मादिकारणत्वं ब्रह्मणस्तटस्थलक्षणमित्युक्तं तदयुक्तं प्रमाणाभावात्। न च यतो वेत्यादिवाक्यं तत्र प्रमाणमित्युक्तमिति वाच्यम्, ब्रह्ममात्रपराणां वेदान्तानां तत्र प्रामाण्याभावात्। अन्यथा सप्रपञ्चं ब्रह्म शास्त्रार्थः स्यादिति चोदयति–**नन्विति**।

म० प्र०—**तस्य चेति**। जीवाहङ्कारस्य चेति प्रथमतच्छब्दार्थः। **तस्य चेति**। हैरण्यगर्भाहङ्कारस्य चेति द्वितीयतच्छब्दार्थः। तस्य=सक्रमप्रलयनिरूपणस्य। **प्रकृतेति**=तत्पदार्थनिरूपणेत्यर्थः। प्रपञ्चोपाधिकम्=प्रपञ्चनिमित्तकम्। तत्र=ब्रह्मणो जगज्जन्मादिकारणत्वे, अन्यथा=ब्रह्मणो जगज्जन्मादिकारणत्वे वेदान्तानां प्रामाण्याभ्युगमे सति॥

**न हि सृष्टिवाक्यानां सृष्टौ तात्पर्य्यं किंत्वद्वये ब्रह्मण्येव। तत्प्रतिपत्तौ कथं सृष्टेरुपयोगः। इत्थम्। यदि सृष्टिमनुपन्यस्य प्रपञ्चस्य निषेधो ब्रह्मणि प्रतिपाद्येत तदा ब्रह्मणि प्रतिषिद्धस्य प्रपञ्चस्य वायौ प्रतिषिद्धस्य रूपस्येव ब्रह्मणोऽन्यत्रावस्थानशङ्कायां न निर्विचिकित्सितमद्वितीयत्वं प्रतिपादितं स्यात्। ततः सृष्टिवाक्याद्ब्रह्मोपादेयत्वज्ञाने सत्युपादानं विना कार्य्यस्यान्यत्र सद्भावशङ्काया निरस्ततया नेति नेतीत्यादिना ब्रह्मण्यपि तस्यासत्त्वोपपादने प्रपञ्चस्य तुच्छत्वावगमे निरस्तनिखिलद्वैतविभ्रममखण्डसच्चिदानन्दैकरसं ब्रह्म सिद्ध्यतीति परंपरया सृष्टिवाक्यानामद्वितीये ब्रह्मण्येव तात्पर्य्यम्॥**

शि० म०—न हि यो योऽर्थः प्रतीयते स सर्वोऽपि शास्त्रार्थः, सुरां पिबेदित्यादौ सुरापानकर्तव्यत्वस्यापि शास्त्रार्थत्वापत्तेः, किन्तु यस्तात्पर्य्यविषयः, यत्परः शब्दः स शब्दार्थ इत्यभ्युपगमात्। सृज्यमानप्रपञ्चस्तु श्रुतिप्रतिपाद्योऽपि न तात्पर्य्यविषय इति न शास्त्रार्थः। न च निन्दाश्रवणेन प्रायश्चित्तोपदेशेन च सुरापानकर्तव्यतायाः शास्त्रतात्पर्य्यविषयत्वाभावेऽपि प्रकृते तदभावेन सप्रपञ्चं ब्रह्म तात्पर्य्यविषयः स्यादिति वाच्यम्। "उदरमन्तरं कुरुते। अथ तस्य भयं भवति॥" "आत्मनश्च परस्यापि यः करोत्यन्तरं मिथः। तस्य भिन्नदृशो मृत्युर्विधत्ते भयमुल्बणम्॥" अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः।" योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं न तेन कृतं पापं चौरेणात्मापहारिणा॥" इत्येवमादिभेददर्शननिन्दावचनस्य बहुलमुपलम्भात्। प्रपञ्चस्य लोकावगतत्वेन तत्र तात्पर्य्यायोगात्। अज्ञातस्यैव शास्त्रतात्पर्य्यविषयत्वात्। प्रपञ्चपरत्वे 'नेह नानाऽस्ति' इति प्रतिषेधानुपपत्तेश्चेत्याशयेनाह—न हीति। ननु सृष्ट्यादिवाक्यानां कथमद्वितीयब्रह्मप्रतिपत्तौ विनियोगः। न तावत्पुच्छब्रह्मप्रतिपत्तावन्नमयादिवाक्यवत् स्थूलारुन्धतीन्यायेन सूक्ष्मब्रह्मप्रतिपत्तावुपयोगः। तद्वत्प्रपञ्चस्य ब्रह्मत्वेनानुपदेशात्। नाप्युपासनावाक्यवद्ब्रह्मज्ञानोपयोग्यन्तःकरणशुद्धिद्वारा, उपासीतेत्यत्राश्रवणात्। न च प्रतिषेध्यप्रपञ्चसमर्पकतया तत्रोपयोगः, अन्योत्पन्नस्यापि प्रपञ्चस्य

तत्र प्रतिषेधसम्भवेन ब्रह्माधीनसृष्ट्यभिधानवैयर्थ्यापातात् । तथा च सृष्ट्यादिवाक्यानां सप्रपञ्चब्रह्मपरत्वाभावे अप्रामाण्यापत्तौ न निष्प्रपञ्चब्रह्म शास्त्रार्थ इत्याक्षिपति—तत्प्रतिपत्ताविति । यद्यप्यन्याधीनस्यापि प्रपञ्चस्य ब्रह्मणि प्रतिषेधः सम्भवति तथापि वायौ प्रतिषिद्धरूपवन्निषेध्यस्य पारमार्थिकत्वेऽपि सम्भवेन तन्मिथ्यात्वासिद्ध्या ब्रह्मणोऽद्वितीयत्वासिद्धिप्रसङ्गः, ब्रह्माधीनसृष्टिस्थिति-लयोपन्यासे तु प्रपञ्चस्य ब्रह्मोपादेयतया सिद्धस्य नेह नानाऽस्तीत्यादिना तत्रैव निषेधे शुक्तिरूपवन्मिथ्यात्वावगतावद्वितीयं ब्रह्म सिद्ध्यतीत्याह—इत्थमिति ॥

म० प्र०—**सुरां पिबेदिति**। कर्मविशेषोपकारतात्पर्य्येणेदं वाक्यं प्रवृत्तं न तूपभोग-तात्पर्य्येण सुरापानविधानार्थं वेदवाक्यं प्रवृत्तमिति भावः। यत्परः=योऽर्थः परस्तात्पर्य्यविषयो यस्य शब्दस्य स यत्परः। सः=तात्पर्य्यविषयः, प्रकृते=जगत्सृष्ट्यादौ, तदभावेन=निन्दाश्रवणप्रायश्चि-त्तोपदेशाभावेन, उल्बणं=दुःसहं महद्वा । प्रपञ्चपरत्वे=सृष्टिवाक्यानां प्रपञ्चविषयकतात्पर्य-स्वीकारे, विनियोगः=संबन्धः ब्रह्मप्रतिपत्त्यर्थत्वमिति यावत् । **पुच्छेति**=सर्वाधिष्ठानेत्यर्थः। **स्थूलारुन्धतीति**। यथा लोके बालस्य सूक्ष्मारुन्धतीज्ञानाय प्रथमं स्थूलनक्षत्रेष्वरुन्धती-त्वस्याहार्योपदेश उपयोगी दृष्टस्तथा सृष्टिवाक्यादिकमपि सूक्ष्मब्रह्मप्रतिपत्तावुपयोगि स्यादिति भावः । तद्वत्=अन्नमयादीनां ब्रह्मत्वोपदेशवत् । अत्र=सृष्टिवाक्यादौ, तत्र=ब्रह्मप्रतिपत्तौ, तत्र=ब्रह्मणि । वायौ प्रतिषिद्धरूपवत्=वायौ प्रतिषिद्धरूपस्य पृथिव्यादौ पारमार्थिकत्वेनावस्थान-वत्, निषेध्यस्य=नेति नेतिवाक्यबोधितनिषेधविषयप्रपञ्चस्य, सम्भवेन=निषेधसम्भवेन । ब्रह्मोपा-देयतया=ब्रह्मकार्य्यतया, तत्रैव=ब्रह्मण्येव ॥

**उपासनाप्रकरणपठितसगुणब्रह्मवाक्यानामुपासनाविध्यपेक्षित-गुणारोपमात्रपरत्वं न गुणपरत्वम् ॥**

शि० म०—प्रसङ्गाद्वाक्यान्तरस्यापि तदुपयोगमाह—उपासनेति । यद्वा ननु यथा "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" इत्यादिवाक्यानां सगुणब्रह्मपरत्वं तद्वत्सृष्टिवाक्यानामपि सप्रपञ्चब्रह्मपरत्वं स्यादित्याशङ्क्य किमुपासनाप्रकरणपठि-तानां हिरण्मयादिवाक्यानां गुणपरत्वमुत निर्गुणप्रकरणपठितानां "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च' इत्यादीनाम्। तत्राद्यं दूषयति—उपासनेति। गुणारोपेति। वाचं धेनुमुपासीतेत्यादिवद्वास्तवगुणाभावेऽपि तदारोपमात्रेणोपासनासंभवात् । न चैवमपि तदारोपपरत्वं न ब्रह्मपरत्वमिति वाच्यम् । फलानुषङ्गरहितानामुपास-नानां साक्षादन्तःकरणशुद्धिहेतूनां तद्द्वारा ब्रह्मज्ञाने विनियोगात् । अत एव "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये॥" इति भगवद्गीतावचनम्। "ददामि देयमित्येव यजे यष्टव्यमित्यपि" इत्यारण्यपर्वणि रुक्मिणीं प्रति द्रौपदीवचनं च । फलोद्देशेन क्रियमाणानां चोपासनानां क्रममुक्तिफलकत्वात् ॥

**म० प्र०**–प्रसङ्गात्=स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गात्, वाक्यान्तरस्य=सृष्टिवाक्यान्योपासनावाक्यस्य, तदुपयोगं=ब्रह्मप्रतिपत्त्युपयोगम्, गुणपरत्वं=हिरण्मयत्वादिधर्मपरत्वम्। **इत्यादीनामिति**। अस्य गुणपरत्वमिति पूर्वेणान्वयः। परममूले–**न गुणपरत्वमिति**। वास्तवधर्मपरत्वं न किन्तु शुद्धसच्चिदानन्दब्रह्मपरत्वमित्यर्थः। **वाचमिति**। वाचि धेनुत्वरूपवास्तवधर्माभावेऽपि वाचि धेनुत्वरूपधर्मारोपेणात्र वाक्ये उपासनाविधानवदित्यर्थः। वास्तवगुणाभावेऽपि=ब्रह्मणि वास्तवधर्माभावेऽपि, तदारोपमात्रेण=धर्मकल्पनयैव, एवमपि=धर्मकल्पनयोपासनासम्भवेऽपि, तदारोपपरत्वम्=उपासनावाक्यानां धर्मकल्पनापरत्वम्, फलानुषङ्गरहितानाम्=फलोद्देशेनाक्रियमाणानाम्, तद्द्वारा=अन्तःकरणशुद्धिद्वारा। विनियोगात्=संबन्धात्, अत एव=फलकामनारहितोपासनादेरन्तःकरणशुद्धिद्वारा ब्रह्मज्ञानार्थत्वादेव। **भगवद्गीतावचनमिति**। अस्याग्रे उपपद्यते इति शेषः। **ददामीति**। अधिकारिणं प्रति धनादिकं देयं दातुं योग्यमित्येव बुद्ध्याऽहं ददामि दानं करोमि न तु फलकामनया एवं विहितं कर्म यष्टव्यं संपादयितुं योग्यमित्येव बुद्ध्याऽहं यजे कर्म करोमि न तु फलकामनयेत्यर्थः। इदमपि वचनं फलकामनारहितयागदानादेरन्तःकरणशुद्धिद्वारा ब्रह्मज्ञानार्थत्वं बोधयतीति भावः। नन्वेवं फलोद्देशेन क्रियमाणोपासनाविषयकवाक्यानां ब्रह्मपरत्वं न स्यादित्याशङ्क्य तेषामपि वैराग्यादिद्वारा हिरण्यगर्भलोकप्राप्तिद्वारा च ब्रह्मपरत्वमित्यभिप्रेत्याह–**फलोद्देशेनेति**। क्रममुक्तिफलकत्वात्=सातिशयत्वादिदोषवत्फलकोपासनानिरूपणेन शुद्धान्तःकरणपुरुषस्य वैराग्यमुत्पद्यत इति वैराग्याद्युत्पत्तिक्रमेण हिरण्यगर्भलोकावाप्तिक्रमेण च फलोद्देशेन क्रियमाणोपासनानां मुक्तिफलकत्वात्। तथा च न पूर्वोक्तदोष इति भावः॥

**निर्गुणप्रकरणपठितानां सगुणवाक्यानां तु निषेधवाक्यापेक्षितनिषेध्यसम्पादकत्वेन विनियोग इति न किंचिदपि वाक्यमद्वितीयब्रह्मप्रतिपादनेन विरुध्यते॥**

**शि० म०**–द्वितीयं निरस्यति–**निर्गुणेति**। बृहदारण्यके हि मूर्तं चैवामूर्तं च मर्त्यं चामृतं चेत्युपक्रम्य तदेतन्मूर्तं यदन्यद्वायोरन्तरिक्षाच्चेत्यादिना वाय्वन्तरिक्षव्यतिरिक्तं मूर्तं वाय्वन्तरिक्षं चामूर्तमित्यादिभौतिकमुपन्यस्याध्यात्ममित्यादिना प्राणव्यतिरिक्तं मूर्तं प्राणश्चामूर्त इत्याध्यात्मिकमभिधाय अथात आदेशो नेति नेतीति निषेधति तत्र मूर्तादिगुणवाक्यानां निषेधवाक्यापेक्षितनिषेधप्रतियोगिसमर्पकतया प्रकरणार्थनिर्गुणब्रह्मज्ञाने विनियोग इत्यर्थः। ननु कर्मकाण्डवाक्यानां यथा ब्रह्मज्ञाने विनियोगाभावात् स्वार्थपरत्वं तथा सृष्ट्युपासनावाक्यानामप्यस्तु स्वार्थमात्रपरत्वम्। किं च ब्रह्मणो निष्प्रपञ्चत्वे कर्मवाक्यानां यागस्वर्गादिसाध्यसाधनभावप्रतिपादकानामसति स्वर्गादिलोकप्रपञ्चे कथं प्रामाण्यमिति चेत्, न तावदप्रामाण्यं स्वर्गयागादीनां व्यावहारिकत्वाभ्युपगमात्। नाप्यनुपयोगः अग्निहोत्रादीनामपि फलानुषङ्गरहितानामारादुपकारकत्वस्य "सर्वापेक्षा च यज्ञादिश्रुतेरश्व-

वत्" इत्यत्र सूत्रकारेणाङ्गीकृतत्वेन चित्तशुद्धावुपयोगसंभवात्तदेतदाह-न किंचिदपि वाक्यमद्वितीयब्रह्मप्रतिपादनेनेति ॥

म० प्र०-मर्त्यं चामृतं चेति। अत्र चकारावववधारणार्थौ । पूर्वोक्तमूर्तामूर्तयोरेव विशेषणं मर्त्यत्वादिकम् । मर्त्यं च=क्षिप्रविनाश्येव, अमर्त्यं च=मोक्षात्प्रागविनाश्येव, अथ=मूर्तामूर्तादिप्रपञ्चाध्यारोपकथनानन्तरम, अतः=मूर्तामूर्तादिप्रपञ्चापवादस्य ब्रह्मज्ञानार्थत्वात्, आदेशः=उपदेशः, तत्र=नेति नेतीति वाक्येन निषेधे सति । मूर्तादिगुणवाक्यानां प्रकरणार्थनिर्गुणब्रह्मज्ञाने विनियोग इति संबन्धः । विनियोग इति। तात्पर्यमुक्तब्रह्मज्ञानजनकत्वाख्यसंबन्धो वा न त्वङ्गप्रधानसंबन्धबोधकत्वरूपोऽत्र विनियोगस्तस्यात्रासंभवादित्यर्थः । फलानुषङ्गरहितानां=फलोद्देशेनाक्रियमाणानाम्, आरादुपकारकत्वस्य=अन्तःकरणशुद्ध्यादिरूपपरंपरयोपकारकत्वस्य-सर्वापेक्षेति। तृतीयाध्यायस्य चतुर्थपादस्य षडधिकविंशतिसंख्याकं सूत्रमिदम् । अस्यार्थः। किं विद्याया आश्रमकर्मणामत्यन्तमेवानपेक्षोक्ताऽस्ति काचिदपेक्षेति संशये विद्याग्नीन्धनाद्याश्रमकर्माणि नापेक्ष्यन्ते इत्येवमत्यन्तानपेक्षायां प्राप्तायामिदमुच्यते । सर्वापेक्षा चेति। अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि नात्यन्तमनपेक्षैव । ननु विरुद्धमिदं वचनमपेक्षते च विद्याऽश्रमकर्माणि विद्या नापेक्षते चेत्यतो ब्रूमः। उत्पन्ना हि विद्या स्वफलसिद्धिं प्रति न किंचिदन्यदपेक्षते स्वोत्पत्तिं प्रति त्वाश्रमकर्माण्यपेक्षते कुतो यज्ञादिश्रुतेः=तमेतमित्यादिश्रुतेः, अश्ववत्=यथाऽश्वस्य रथक्रियायां योग्यत्वं न तु लाङ्गलक्रियायां योग्यत्वं तथा सर्वकर्मणामन्तःकरणशुद्धिद्वारा ज्ञानोत्पत्तौ योग्यत्वं न तु स्वफलाविद्यानिवृत्तौ योग्यत्वमिति ॥

तदेवं स्वरूपतटस्थलक्षणलक्षितं तत्पदवाच्यमीश्वरचैतन्यं मायाप्रतिबिम्बितमिति केचित्। तेषामयमाशयः। जीवपरमेश्वरसाधारणचैतन्यमात्रं बिम्बम्। तस्यैव बिम्बस्याविद्यात्मिकायां मायायां प्रतिबिम्बमीश्वरचैतन्यमन्तःकरणेषु प्रतिबिम्बं जीवचैतन्यम् । "कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतेः । एतन्मते जलाशयगतशरावगतसूर्य्यप्रतिबिम्बयोरिव जीवपरमेश्वरयोर्भेदः ॥

शि० म०-नन्विदं लक्षणद्वयमयुक्तं लक्ष्याभावात्। तथा हि। न तत्पदवाच्यं लक्ष्यं तद्धि न चिद्रूपं जीवस्यापि तथात्वात्। नाप्यविद्यावच्छिन्नो जीवः, मायावच्छिन्न ईश्वर इति वाच्यम्। तरत्यविद्यामित्यादौ मायाविद्ययोः सामानाधिकरण्यव्यपदेशान्न तयोर्भेद इत्युक्तत्वात्। तस्माल्लक्ष्यानिरूपणाल्लक्षणद्वयं न युक्तमित्याशङ्क्याह-तदेवमिति । अविद्याप्रतिबिम्बरूपमीश्वरचैतन्यं तत्पदवाच्यं तदेव स्वरूपलक्षणतटस्थलक्षणयोर्लक्ष्यमित्यर्थः । नन्वविद्याप्रतिबिम्बो जीवः, तत्कथमीश्वरस्याविद्याप्रतिबिम्बत्वमित्याशङ्क्य एतन्मतेऽप्यन्तःकरणप्रतिबिम्बो

जीव इत्याह—**तेषामिति**। अन्तःकरणावच्छिन्नो जीवः तदनवच्छिन्न ईश्वर इति केचित्तन्न स्मृतिविरोधादित्याह—**कार्य्येति**। कार्य्यमन्तःकरणं कारणमविद्या। किंच जीवेश्वरावन्तःकरणाविद्याप्रतिबिम्बाविति युक्तं न त्ववच्छिन्नानवच्छिन्नौ, तथा सति जीवेश्वरयोरत्यन्तभेदापत्तेरित्याह—**एतन्मते इति**॥

म० प्र०—लक्षणद्वयं=स्वरूपलक्षणं तटस्थलक्षणं च। लक्ष्याभावात्=लक्षणद्वयलक्ष्याभावात्, लक्ष्यं=लक्षणद्वयलक्ष्यम्। तद्धि=तत्पदवाच्यं हि। मायाविशिष्टचैतन्यघटकीभूतचैतन्यमात्रमुक्त-स्वरूपलक्षणलक्ष्यं न भवतीत्यत्र हेतुमाह—**जीवस्यापीति**। जीवस्यापि चिद्रूपत्वेन लक्षण-द्वयलक्ष्यत्वापातादित्यर्थः। मायाविशिष्टचैतन्यस्योक्तस्वरूपलक्षणतटस्थलक्षणलक्ष्यत्वं निराकर्तु-माशङ्कते—**अविद्यावच्छिन्न इत्यादिना**। **सामानाधिकरण्येति**=अभेदेत्यर्थः। मायाऽविद्ययोरभेदमभिप्रेत्याह—**अविद्याप्रतिबिम्बेति**। तत्=तस्मात्कारणादविद्याप्रति-बिम्बस्य जीवत्वात्, एतन्मतेऽपि=अविद्याप्रतिबिम्ब ईश्वर इति पक्षेऽपि। अपिशब्देन बिम्बात्मक-मीश्वरचैतन्यमिति वदतोऽनेकजीववादिनो मतस्य परिग्रहो बोध्यः। अन्तःकरणावच्छिन्नः= अन्तःकरणेन परिच्छिन्नतामापन्नः, तदनवच्छिन्नः=अन्तःकरणेन परिच्छिन्नतामनापन्नः। **अत्यन्तभेदेति**=पारमार्थिकभेदेत्यर्थः। परममूले **भेद इति**। एतन्नये जलाशयगतसूर्यादि-प्रतिबिम्बयोः कल्पितभेदवज्जीवेश्वरयोरपि कल्पितभेद इति न ब्रह्मणोऽद्वितीयत्वहानिरिति भावः॥

**अविद्यात्मकोपाधेर्व्यापकतया तदुपाधिकेश्वरस्यापि व्यापकत्वम्। अन्तःकरणस्य परिच्छिन्नतया तदुपाधिकजीवस्यापि परिच्छिन्नत्वम्। एतन्मते अविद्याकृतदोषाः जीव इव परमेश्वरेऽपि स्युः उपाधेः प्रतिबिम्बपक्षपातित्वादित्यस्वरसात् बिम्बात्मकमीश्वरचैतन्यमित्यपरे। तेषामयमाशयः। एकमेव चैतन्यं बिम्बत्वाक्रान्तमीश्वरचैतन्यं प्रतिबिम्बत्वाक्रान्तं जीवचैतन्यम्। बिम्बप्रतिबिम्बकल्पनोपाधिश्चैकजीववादे अविद्या अनेकजीववादे अन्तःकरणान्येव॥**

शि० म०—अपिच ईश्वरस्यानवच्छिन्नरूपत्वे ब्रह्माण्डस्य सर्वजीवाक्रान्ततया-ऽनवच्छिन्नस्य ब्रह्मणोऽस्माद्बहिरेवावस्थानापत्तौ सर्वगतत्वसर्वोपादानत्वसर्वान्तर्या-मित्वादि ब्रह्मणो न स्यात्। अविद्याप्रतिबिम्बत्वपक्षे तु तत्सर्वमुपपद्यते इत्याशयेना-ह—**अविद्येति**। जीवस्य तु न व्यापकत्वं तदुपाधेरव्यापकत्वादित्याह—**अन्तःकरणस्येति**। एकजीववादे अविद्याप्रतिबिम्बो जीव इति तत्र जीवेश्वरविभागो न स्या-दिति प्रतिबिम्बत्वे दोषे सत्येव दोषान्तरमाह—**एतन्मते इति**। ननु सिद्धान्ते बिम्ब प्रतिबिम्बयोरभेदेन चैतन्यस्यैव बिम्बप्रतिबिम्बात्मकतया कथमेकस्यैव जीवेश्वरभाव इत्याशङ्क्य तस्य बिम्बत्वेनेश्वरत्वं प्रतिबिम्बत्वेन जीवत्वं चाविरुद्धमित्याह—**एक**

मेवेति। ननु बिम्बप्रतिबिम्बभावो यदि पारमार्थिकस्तदा निष्कलङ्कत्वविरोधः, उपाधिश्च सन्निहितः पारमार्थिकः स्यादित्यद्वितीयत्वव्याघातः, यदि कल्पितस्तत्कल्पनोपाधिर्यद्यन्तःकरणं तदा एकजीववादानवकाशः, यद्यविद्या तदा नानाजीववादादविरोध इत्याशङ्क्य मतभेदेन व्यवस्थितोपाधिमाह—बिम्बेति ॥

म० प्र०—अनवच्छिन्नरूपत्वे=अन्तःकरणेन परिच्छिन्नतानापन्नरूपत्वे । आक्रान्ततया=व्याप्ततया, अस्मात्=ब्रह्माण्डात् । **अविद्याप्रतिबिम्बत्वेति** । ईश्वरस्याविद्याप्रतिबिम्बत्वेत्यर्थः । तत्सर्वं=सर्वगतत्वादिकं सर्वम्, इति हेतोः=जीवस्याविद्याप्रतिबिम्बस्वरूपत्वाद्धेतोरिति यावत् । तत्र=एकजीववादे, इति=इत्याकारके । प्रतिबिम्बत्वे=ईश्वरस्य प्रतिबिम्बत्वपक्षे । परममूले **अविद्याकृतदोषा इति** । कर्तृत्वभोक्तृत्वबद्धत्वमुक्तत्वादयो दोषा इत्यर्थः । **चैतन्यस्यैवेति** । चैतन्यमात्रनिष्ठबिम्बप्रतिबिम्बत्वप्रयोज्यैकचैतन्यनिष्ठजीवेश्वरभावः कथमित्यर्थः । तस्य=एकचैतन्यस्य । बिम्बत्वेन=चलनाद्युपाधिधर्मशून्यत्वे सत्युपाधावभिव्यक्तत्वेनोपाधिनिमित्तकस्वप्रतियोगिकव्याप्यवृत्तिभेदाश्रयत्वे सत्यौपाधिकपरिच्छेदरहितत्वेन वा । प्रतिबिम्बत्वेन=चलनाद्युपाधिधर्मवत्त्वे सत्युपाधावभिव्यक्तत्वस्वरूपत्वेन उपाधिनिमित्तकस्वप्रतियोगिकव्याप्यवृत्तिभेदाश्रयत्वे सत्युपाधिपरिच्छिन्नत्वस्वरूपत्वेन वा । निष्कलङ्कत्वविरोधः=निष्कलङ्कं निष्क्रियमित्यादिश्रुतिबोधितनिर्धर्मकत्वानुपपत्तिः । बिम्बप्रतिबिम्बभावस्य पारमार्थिकत्वमुपाधेर्नित्यसन्निहितत्वं पारमार्थिकत्वं च विना न संभवतीत्युपाधिनिष्ठं नित्यसन्निहितत्वं पारमार्थिकत्वं च वाच्यम् । तथा च ब्रह्मणोऽद्वितीयत्वविरोधः स्यादित्यभिप्रेत्याह—**उपाधिश्चेत्यादिना** । नित्यसन्निहितः=सर्वदा बिम्बसमीपस्थः । **तत्कल्पनेति**=बिम्बप्रतिबिम्बभावकल्पनेत्यर्थः ॥

अविद्यान्तःकरणोपाधिप्रयुक्तो जीवपरभेदः । उपाधिकृतदोषाश्च प्रतिबिम्बे जीव एव वर्तन्ते न तु बिम्बे परमेश्वरे । उपाधेः प्रतिबिम्बपक्षपातित्वात् । एतन्मते च गगनसूर्यस्य जलादौ भासमानप्रतिबिम्बसूर्यस्येव जीवपरयोर्भेदः । ननु ग्रीवास्थमुखस्य दर्पणप्रदेश इव बिम्बचैतन्यस्य परमेश्वरस्य जीवप्रदेशे अभावात् तस्य सर्वान्तर्यामित्वं न स्यादिति चेन्न । साभ्रनक्षत्रस्याकाशस्य जलादौ प्रतिबिम्बितत्वे बिम्बभूतमहाकाशस्यापि जलादिप्रवेशसंबन्धदर्शनेन परिच्छिन्नबिम्बस्य प्रतिबिम्बदेशासंबन्धेऽप्यपरिच्छिन्नब्रह्मबिम्बस्य प्रतिबिम्बप्रदेशसंबन्धाविरोधात् । न च रूपहीनस्य ब्रह्मणो न प्रतिबिम्बसंभवः रूपवत एव तथात्वदर्शनादिति वाच्यम् । नीरूपस्यापि रूपस्य प्रतिबिम्बदर्शनात् । न च नीरूपस्य द्रव्यस्य प्रतिबिम्बाभावनियमः आत्मनो द्रव्यत्वाभावस्योक्तत्वात् ॥

**शि० म०**—मतभेदेन भेदमाह—**अविद्यान्तःकरणेति** । पूर्वमतोक्तदोषो नात्र मते प्रसरतीत्याह—**उपाधीति** । अत एव दर्पणगतमुखप्रतिबिम्ब एव श्यामावदातत्वादिकमिति भावः । ननूपाधिकृतो भेद इत्ययुक्तं स्वरूपत एव भेदसंभवादित्यत आह—**एतन्मते इति** । ईश्वरस्य बिम्बत्वे बाधकमाशङ्कते—**नन्विति** । सर्वान्तर्यामित्वं न स्यादित्युपलक्षणं सर्वोपादानत्वं च न स्यादित्यपि बोध्यम् । परिच्छिन्नस्यैव बिम्बस्य प्रतिबिम्बदेशावृत्तित्वनियमो नापरिच्छिन्नस्येत्याह—**नेति** । ननु महाकाशो जलादौ न प्रतिबिम्बते तत्रान्याकाशस्यैव भानसंभवादित्याशङ्क्याह—**साभ्रेति** । न चाभ्रादिकमेव तत्र न महाकाश इति वाच्यं प्रत्यभिज्ञाविरोधात् । किं नीरूपस्य प्रतिबिम्बाभावनियमः उत नीरूपद्रव्यस्य । तत्राद्यं निराकृत्य द्वितीयं दूषयति—**न चेति** । **आत्मन इति** । आत्मा न द्रव्यं तद्धि न समवायिकारणं समवायानभ्युपगमात् । नापि गुणाश्रयः ब्रह्मणो निर्गुणत्वादित्युक्तत्वादित्यर्थः ॥

**म० प्र०**—**पूर्वमतेति**=ईश्वरस्य प्रतिबिम्बस्वरूपत्वमतेत्यर्थः । अत्र मते=ईश्वरस्य बिम्बस्वरूपत्वमते । परममूले **प्रतिबिम्बपक्षपातित्वादिति** । प्रतिबिम्बे स्वधर्माधायकत्वादित्यर्थः । श्यामावदातत्वादिकं=दर्पणगतमलिनत्वशुद्धत्वादिकम् । भेदः=जीवेश्वरभेदः । परममूले **भेद इति** । कल्पितभेद इत्यर्थः । परममूले **दर्पणप्रदेश इवेति** । दर्पणप्रदेशे अभाव इवेत्यर्थः । परममूले **तस्येति** । बिम्बचैतन्यस्वरूपपरमेश्वरस्येत्यर्थः । तत्र=जलादौ । अन्याकाशस्यैव=महाकाशान्यघटाद्याकाशस्यैव, तत्र=जलादौ । प्रतिबिम्बत इति शेषः । **न महाकाशः** । जलादौ प्रतिबिम्बते इति शेषः । प्रत्यभिज्ञाविरोधात्=महाकाश एव जले प्रतिबिम्बिताकाश इति प्रत्यभिज्ञाविरोधात् । परममूले **आकाशस्येति**=महाकाशस्येत्यर्थः । परममूले **दर्शनेनेति** । ज्ञानेनेत्यर्थः । परममूले—**तथात्वेति** । प्रतिबिम्बितत्वेत्यर्थः । तद्धि=आत्मस्वरूपं हि ॥

**"एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" "यथा ह्ययं ज्योतिरात्मा विवस्वानापो भिन्ना बहुधैकोऽनुगच्छन्" इत्यादिवाक्येन ब्रह्मप्रतिबिम्बाभावानुमानस्य बाधितत्वाच्च । तदेवं तत्पदार्थो निरूपितः । इदानीं त्वंपदार्थो निरूप्यते । एकजीववादे अविद्याप्रतिबिम्बो जीवः ॥**

**शि० म०**—ननु ब्रह्मणि कल्पितगुणाङ्गीकारान्न निर्गुणश्रुतिविरोधः । न चाकाशवद्ब्रह्म नीरूपद्रव्यमपि प्रतिबिम्बतामिति वाच्यं तत्राप्यभ्रनक्षत्रादेरेव रूपवतः प्रतिबिम्बितत्वसंभवेन नीरूपाकाशप्रतिबिम्बस्यासंभवादित्यत आह—**एकधेति**। तत्पदार्थनिरूपणमुपसंहरति—**तदेवमिति** । **अविद्याप्रतिबिम्ब इति** । एकैवा-

विद्या 'अजामेकाम्' इत्यादिश्रुतेः । न चेन्द्रो मायाभिरिति बहुवचनविरोधः । तस्य तद्गतशक्तिभेदपरत्वेन व्याख्यातत्वात्। तथा चाविद्योपाधेरेकत्वात्तत्प्रतिबिम्बलक्षणो जीव एक इत्यर्थः ॥

म० प्र०–**श्रुतिविरोध इति** । तथा च ब्रह्मणि कल्पितगुणाङ्गीकारेण ब्रह्मणो द्रव्यत्वसिद्धिः नीरूपद्रव्यब्रह्मणः प्रतिबिम्बाभावसिद्धिश्चेति शेषः । तत्रापि=जलादावपि । **आहेति** । ब्रह्मणो द्रव्यत्वाभ्युपगमेऽपि ब्रह्मप्रतिबिम्बासंभवरूपदोषाभाव इत्यभिप्रेत्य हेत्वन्तरमाहेत्यर्थः । परममूले **एकधेति**=उपाधिरहितरूपेणैकरूपः सन् परमात्मा बहुधोपाधिना नानाजीवेश्वररूपो ज्ञायते इत्यर्थः । परममूले **यथेति** । एकोऽयं विवस्वान् सूर्यो भिन्ना आपोऽनुगच्छन् बहुधा भवतीति योजना । अत्रादिपदेनोपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मेति वाक्यशेषपरिग्रहः । तस्य=मायाभिरिति बहुवचनस्य । **तद्गतेति**=मायागतेत्यर्थः । परममूले **ब्रह्मप्रतिबिम्बाभावानुमानस्येति** ब्रह्म न प्रतिबिम्बते अचाक्षुषत्वाद्गन्धादिवदिति ब्रह्मप्रतिबिम्बाभावानुमानस्येत्यर्थः ॥

शि० म०–जीवैकत्वं च सम्प्रदायाध्वना स्थितमित्येतावतैव तत्पक्ष उपन्यस्तो न त्वयं पक्षो युक्तः । तथा सति एकजीववादे अविद्याया एकत्वेन एकस्य मुक्तत्वेनेदानीं प्रपञ्चानुपलम्भापत्तेः । पूर्वं मुक्त्यभावे वामदेवादिमुक्तिप्रतिपादकबहुवाक्यविरोधात् वामदेवादीनामुत्पन्नब्रह्मसाक्षात्काराणामप्यमुक्तावर्वाचीनानाम् "आषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठा" इति न्यायेन मुक्तिर्दूरोत्सारिता स्यात् । न चैवं विवरणाचार्य्यैर्जीवैक्योक्तेस्तद्विरोध इति वाच्यम् । तदुक्तेः जीवपदप्रतिपाद्य एक एवेति शास्त्रदृष्टजीवैक्यपरत्वात्। अन्यथा तद्वचनस्य लोकसिद्धजीवभेदप्रतिषेधकत्वे अनन्तजीवनिर्भासास्पदमेकरसं ब्रह्मेत्यहङ्कारटीकायां पद्मपादाचार्य्यैर्जीवभेदस्याभिधानात् तद्विरोधापत्तेः । अत एव विवरणाचार्य्यैः शारीरकन्यायसंग्रहे ग्रन्थान्तरे देवताधिकरणे "तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणाम्" इति वाक्योदाहरणेन यस्य ज्ञानं तस्यैव मुक्तिरित्युक्तम् । अत एव यावदधिकारमवस्थितिराधिकारिकाणामित्यत्र वसिष्ठादीन् ब्रह्मज्ञानिन उदाहृत्य तेषां पौरोहित्याद्यधिकारलक्षणप्रारब्धपर्य्यन्तमवस्थानं तत ऊर्द्ध्वं मुक्तिरित्युक्तम् । तदेतत्पारमर्षसूत्रम् 'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति । तस्माच्छ्रुतिसूत्रस्मृतिन्यायविरोधाज्जीवैकत्वप्रवादोऽयं नादर्त्तव्यः परीक्षकैः ॥

म० प्र०–संप्रदायाध्वना=प्राचीनवाक्येन, स्थितम्=प्राप्तम् । अयं पक्षो न युक्त इत्यत्र हेतुमाह–**एकजीववाद इत्यादिना** । ननु पूर्वं कस्यापि मुक्तिर्न जातेतीदानीं न प्रपञ्चानुपलम्भापत्तिरित्याशङ्क्याह–**पूर्वमिति** । दोषान्तरमाह–**वामदेवादीनामिति** । **आषाढवाते**

**इति**। आषाढवायुसंबद्धे द्विपेन्द्रे=गजेन्द्रे, चलति=इतस्ततो दोलायमाने सति, चक्रीवतो=रासभस्य वारिधिरेव=समुद्र एव, काष्ठा=विश्रामावधिरित्यर्थः। तद्विरोधः=नानाजीववादस्य विवरणाचार्य्योक्त्या सह विरोधः, तदुक्तेः=विवरणाचार्य्योक्तेः, एक एव=वस्तुत एक एव, अन्यथा=विवरणाचार्य्योक्तेः शास्त्रदृष्टजीवैक्यपरत्वानङ्गीकारे। अन्यथेत्यस्यैव वा विवरणं तद्वचनस्येत्यादि। तद्वचनस्य=विवरणाचार्य्यवचनस्य, निर्भासास्पदम्=प्रतीत्यधिकरणम्, तद्विरोधापत्तेः=पद्मपादाचार्य्यवचनविरोधापत्तेः, अत एव=विवरणाचार्य्योक्तेर्जीवपदप्रतिपाद्यो वस्तुत एक एवेति शास्त्रदृष्टजीवैक्यपरत्वादेव। तत्=ब्रह्म। यो यः देव इति शेषः। तदभवत्=ब्रह्माभवत्। **यावदधिकारमिति**। तृतीयाध्यायस्य तृतीयपादस्य द्व्यधिकत्रिंशत्संख्याकमिदं सूत्रम्। अस्यार्थः। विदुषो वर्तमानदेहपातानन्तरं देहान्तरप्राप्तिरस्ति न वेति संशये सत्यस्त्येवेति पूर्वपक्षः। कुतः अपान्तरतमवसिष्ठसनत्कुमारादीनां निर्गुणब्रह्मविदामपान्तरतमः कलिद्वापरयोः सन्धौ विष्णुनियोगात्कृष्णद्वैपायनः संबभूवेत्यादिना पुनः पुनरुत्पत्तिस्मरणादिति पूर्वपक्षे प्राप्ते सिद्धान्तमाह—**यावदिति**। आधिकारिकाणामपान्तरतमप्रभृतीनां वेदप्रवर्तनादिषु लोकव्यवस्थाहेतुष्वधिकारेषु परमात्मना नियुक्तानां यावदधिकारमवस्थितिः=यावत्प्रारब्धकर्मावस्थितिः। प्रारब्धकर्मणः प्रतिबन्धकस्यानेकशरीरभोग्यफलहेतोः फलस्य भोगेन नाशे विदेहमुक्तिप्रतिबन्धकान्तराभावादनादिसंसारे संचितकर्मणां ज्ञाननाश्यत्वेनाप्रतिबन्धकत्वादप्रतिबद्धः साक्षात्कारो वर्तमानदेहपातानन्तरं कैवल्यं संपादयतीति न देहान्तरप्राप्तिरप्रतिबद्धात्मसाक्षात्कारवतः। तथा च श्रुतिः 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इत्यप्रतिबद्धसाक्षात्कारवतः कैवल्यस्य वर्त्तमानदेहपातावधिं श्रावयतीति। **तदेतदिति**। तस्मिन्प्रकृतेऽर्थे एतदन्यदपीदं पारमर्षसूत्रमस्तीत्यर्थः। भोगेनेत्यादिसूत्रं हि चतुर्थाध्यायस्य प्रथमपादस्यैकोनविंशतिसंख्याकम्। अस्यार्थः। प्रारब्धकर्मणामनारब्धकार्य्ये एव त्वित्यत्र ज्ञानानिवर्त्यत्वेनोक्तानां निवृत्तिप्रकारमाह—**भोगेनेति**। किं ब्रह्मसाक्षात्कारवान् देहपातानन्तरमपि संसरति न वेति संशये देहपातात्पूर्वं यथा साक्षात्कारेऽपि संसारानुवृत्तिरेवं देहपातानन्तरमपि संसारानुवृत्तिरिति पूर्वपक्षे प्राप्ते ब्रूमः। संचितकर्मणां ज्ञानान्नाश उक्तः इतरे तु संचितक्रियमाणव्यतिरिक्ते आरब्धकार्य्ये पुण्यपापे भोगेन क्षपयित्वा विद्वान् ब्रह्म संपद्यते अथ संपत्स्ये ब्रह्मैव सन् ब्रह्माप्येतीत्यादिश्रुतिभ्यः देहपातात्पूर्वं प्रारब्धकर्मणां सत्त्वात्कुलालचक्रभ्रमिन्यायेन मिथ्याज्ञानरूपनिमित्तनाशेऽप्यविद्यालेशानुवृत्तिर्युक्ता तद्भोगानन्तरं कस्यचिदपि कर्मणो जन्ममरणलक्षणसंसारहेतोरभावान्न संसारस्तस्माद्भोगेन प्रारब्धकर्मनाशानन्तरं विद्वान् स्वरूपानन्दात्मनाऽवस्थानलक्षणं स्वास्थ्यं मोक्षाख्यं लभते इति सिद्धमिति॥

**अनेकजीववादे त्वन्तःकरणप्रतिबिम्बः। स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान्॥**

**शि० म०**—जीवैकत्वमतेन जीवस्य लक्षणमुक्त्वा तदनेकत्वमतेन लक्षणमाह—**अनेकजीववादे त्विति**। अन्तःकरणे प्रतिबिम्ब एव जीवो न त्वविद्यावच्छिन्न

इत्यर्थः । तदुपाधेरेकत्वेन जीवनानात्वानुपपत्तेः । नन्वविद्यावच्छिन्नो जीवः स च नानैव मायाभिरिति श्रुत्या तदुपाधेरनेकत्वावगमात् । अजामित्येकवचनश्रुतेरेकं वनमितिवत्समुदायाभिप्रायत्वादिति चेन्न । "कार्य्योपाधिरयं जीवः" इति स्मृतिविरोधात् । किंच स्वमपीतो भवतीत्यादिश्रुतौ ब्रह्मण्यौपाधिको लयः श्रूयते। जीवस्याविद्योपाधिकत्वे तद्वचनं न स्यात्, अविद्यायास्तदा विनाशाभावात् । अपि चैवं जीवस्योत्क्रान्तिगत्यागतयो नोपपद्येरन् अविद्याया व्यापकत्वेन तदवच्छिन्नस्य गत्याद्यनुपपत्तेः । उपाधेः प्रतिबिम्बपक्षपातित्वात्तत्कृता दोषाः प्रतिबिम्ब एव वर्तन्ते इत्युक्तं तत्र के ते दोषा इत्याकाङ्क्षायामाह—स चेति । अवस्थात्रयवानित्युपलक्षणम्। तुरीयनामकावस्थान्तरमादायावस्थाचतुष्टयवानिति द्रष्टव्यम्। न च "एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु" इत्यमृतबिन्दूपनिषद्वचनविरोधः, तस्यावस्थान्तरोपलक्षणार्थत्वात् । " जाग्रत्स्वप्नसुषुप्त्यादि प्रपञ्चं यत्प्रकाशते " इति कैवल्योपनिषदि आदिपदेन तस्याभिधानात्। सुबालोपनिषदि योऽयं विज्ञानघन उत्क्रामन् प्राणं वहतीत्युपक्रम्य जागरितं स्वप्नं सुषुप्तं तुरीयं चेति तुरीयपदेनावस्थान्तराभिधानात् । जाग्रत्स्वप्नः सुषुप्तिस्तुरीयमिति चतुर्विधाऽवस्था इति शारीरकोपनिषदि स्पष्टमेवावस्थाचातुर्विध्यस्योक्तत्वाच्च । न च लक्षणतः सुषुप्त्यादावेवान्तर्भावः इति वाच्यम् । श्रुतिसिद्धविलक्षणावस्थान्तरानुरोधेन तद्व्यावृत्तसुषुप्त्यादिलक्षणस्य सुषुप्त्यादिव्यावृत्तावस्थान्तरलक्षणस्य चावश्यं कल्पनीयत्वात् प्रमाणसिद्धस्य लक्षणेन निवर्त्तनायोगात् । न चैवं मूर्च्छामरणाभ्यां षड्विधाः स्युरवस्था इति वाच्यम् । तयोरवस्थान्तरत्वे प्रमाणाभावादिति दिक् ॥

म० प्र०–तदुपाधेः=अविद्यारूपजीवोपाधेः । **स्वमपीत इति**। अत्र स्वशब्देन सच्छब्दवाच्यात्मा परामृश्यते । तथा च स्वं स्वं प्रति सच्छब्दवाच्ये आत्मनि अपीतो भवति=जीवो लीनो भवति अपि पूर्वस्य एते लयार्थत्वात्सुषुप्त्यवस्थायामुपाधिलयेनोपाधिकृतविशेषाभावात् स्वात्मनि सच्छब्दवाच्ये जीवः प्रलीन इवेत्यर्थः । तद्वचनं=स्वमपीत इति वचनम्, उत्क्रान्तिगत्यागतयः=चरमदेहप्राणवियोगोत्तरैतद्देहजीववियोगगमनागमनानि, प्रतिबिम्बपक्षपातित्वात्=प्रतिबिम्बे स्वधर्माधायकत्वात् , तत्कृताः=उपाधिकृताः । तस्य=अमृतबिन्दूपनिषद्वचनस्य, तस्य=तुरीयनामकावस्थान्तरस्य, उत्क्रामन्=देहाद्बहिर्गच्छन् , प्राणं वहति=प्राणं कक्षीकृत्य गच्छति । **तद्व्यावृत्तेति**=तुरीयावस्थाऽवृत्तीत्यर्थः । सुषुप्त्यादिव्यावृत्तावस्थान्तरलक्षणस्य=सकलोपाधितादात्म्याध्यासनिवृत्तिकालत्वरूपसुषुप्त्याद्यवृत्तितुरीयावस्थालक्षणस्य, कल्पनीयत्वात्=ऊह्यत्वात् । कल्पनीयत्वे हेतुमाह—**प्रमाणसिद्धस्येति** । तुरीयनामकावस्थान्तरस्येति शेषः । लक्षणेन=तुरीयावस्थावृत्तिसुषुप्त्यादिलक्षणेन, एवं=तुरीयनामकावस्थान्तरस्वीकारे सति, तयोः=मूर्च्छामरणयोः ॥

**तत्र जाग्रद्दशा नाम इन्द्रियजन्यज्ञानावस्था। अवस्थान्तरे इन्द्रियाभावान्नातिव्याप्तिः। इन्द्रियजन्यज्ञानं चान्तःकरणवृत्तिः स्वरूपज्ञानस्यानादित्वात्। सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम्॥**

शि० म०—तत्र जाग्रदवस्थां निरूपयति—**तत्रेति**। **इन्द्रियजन्येति**। इन्द्रियजन्यज्ञानोपलक्षितकालो जाग्रदित्यर्थः। तेन जाग्रति सुखाद्यनुभवकाले औदासीन्यकाले च तद्विशिष्टत्वाभावान्नासंभवः। इन्द्रियपदव्यावर्त्यमाह—**अवस्थान्तर इति**। सुषुप्तावित्यर्थः। न चैवमपि स्वप्नेऽतिव्याप्तिः, तत्रेन्द्रियसत्त्वेऽपि तद्व्यापारोपरमादिति भावः। ननु सुषुप्ताविन्द्रियसद्भावपक्षे तत्रातिव्याप्तिरित्याशङ्क्य किमविद्यावृत्तिमादाय तत्रातिव्याप्तिः, उत स्वरूपज्ञानमादाय। नाद्यः, जाग्रति जायमानबाह्यगोचरान्तःकरणवृत्तेरेवेन्द्रियजन्यत्वेन सर्वोपरमलक्षणसुषुप्तिकालवृत्त्यविद्यावृत्तेस्तज्जन्यत्वाभावादित्याह—**इन्द्रियजन्यज्ञानं चेति**। द्वितीयं दूषयति—**स्वरूपज्ञानस्येति**। ननु निष्प्रयोजनेयमन्तःकरणवृत्तिरतो नापेक्षा स्यादित्यत आह—**सा चेति**॥

म० प्र०—तत्र=जाग्रदाद्यवस्थात्रयमध्ये। **उपलक्षितकाल इति**। कदाचित्संबन्धिव्यावर्त्तकरूपोपलक्षणव्यावर्त्यकाल इत्यर्थः। तेन=इन्द्रियेत्यादिमूलवाक्यस्योक्तार्थकत्वेन। **तद्विशिष्टत्वाभावादिति**। व्यावहारिकेन्द्रियजन्यज्ञानसंबन्धाभावात्प्राप्तो योऽसंभवोऽव्याप्तिः सा नास्तीत्यर्थः। एवमपि=सुषुप्तावतिव्याप्त्यभावेऽपि। **स्वप्नेऽतिव्याप्तिरिति**। स्वप्ने इन्द्रियाणां सत्त्वेन स्वप्नस्यापीन्द्रियजन्यज्ञानकालत्वादिति शेषः। न चेति प्रतिज्ञायां हेतुमाह—**तत्रेति**। **तद्व्यापारेति**=व्यावहारिकेन्द्रियव्यापारेत्यर्थः। तत्र=सुषुप्तौ। **तज्जन्यत्वेति**=इन्द्रियजन्यत्वेत्यर्थः। अतः=वृत्तिप्रयोजनाभावात्, अपेक्षा=वृत्त्यभ्युपगमः॥

**तथा हि। अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम्। एवं सति सर्वदा न घटादेर्भानप्रसङ्गः अनावृतचैतन्यस्यैव भानप्रयोजकत्वात्॥**

शि० म०—ननु चैतन्यप्रकाशसंबन्धेनैव घटादिस्फुरणोपपत्तेर्नावरणभङ्गार्था वृत्तिरित्याशङ्क्य किं शुद्धचैतन्यं विषयावभासकमुतेश्वरचैतन्यं जीवचैतन्यं वा। नाद्यः, शास्त्राद्ब्रह्मणो निर्विकारत्वेन विषयानवभासकत्वात्। न द्वितीयः, कल्पितबिम्बभावस्य चैतन्यस्य विषयप्रकाशकत्वे तेन जीवस्य व्यावहारिकभेदेन मयाऽवगतमिति घटसंबन्धानवभासप्रसङ्गात्। सर्वदा सर्वविषयावभासापाताच्च

न तृतीयः, अन्तःकरणावच्छिन्नो जीव इति पक्षे तस्य घटादिसंबन्धाभावेनानवभासकत्वात् । अविद्याप्रतिबिम्बः सर्वगतो जीव इति पक्षे तस्यावभासकत्वमिति-चेत्तत्राह–**तथा हीति** । **जीवरूपतयेति** । तदुपाध्योर्घटाविद्ययोरेकदेशस्थ-त्वादिति भावः । ननु घटाद्यावरकस्य मूलाज्ञानादत्यन्तभेदेन नानाऽज्ञानापत्तावेकाज्ञानश्रुतिविरोध इत्याशङ्क्य तत्तद्विषयावरणस्य मूलाज्ञानगतशक्तिभेदतया तत्पारतन्त्र्यान्नात्यन्तभेद इत्याह–**मूलाविद्येति** । अत एवोक्तं विवरणाचार्यैः मूलाज्ञानस्यैवावस्थाभेदा रजताद्युपादानानीति । नन्वस्तु घटादिचैतन्यावरकमज्ञानं ततः किमित्यत आह–**एवं सतीति** । तथापि कथं न भानं लाघवेन चैतन्यस्यैव विषयावभासकत्वादित्याशङ्क्य रूपप्रत्यक्षज्ञानसमये घटतद्गतपरिमाणादिग्रहापत्त्या तत्तद्विषयावरणभङ्गविशिष्टचैतन्यस्यैव वाच्यतया गौरवस्यापि प्रामाणिकत्वादित्याह–**अनावृतेति** ॥

म० प्र०–शास्त्रात्=असङ्गो ह्ययं पुरुष इत्यादिशास्त्रात्, तेन=कल्पितबिम्बभावेश्वरचैतन्येन सह । **मयेति** । घटादिकं वस्तु मयाऽवगतमित्यस्मदर्थजीवेन सह बहिर्घटाद्यर्थस्य यः संबन्धावभासस्तदभावापातादित्यर्थः । ननु जीवस्य वस्तुत ईश्वरचैतन्याभेदात्कथं मयाऽवगतमिति घटसंबन्धानवभासप्रसङ्ग इत्याशङ्क्याह–**सर्वदेति** । तस्य=जीवस्य । तदुपाध्योः=घटावच्छिन्नचैतन्याविद्यावच्छिन्नचैतन्योपाध्योः । **एकदेशेति**=शुद्धचेतनरूपैकदेशेत्यर्थः । घटाद्यावरकस्य=अवस्थापदवाच्यघटाद्यावरकाज्ञानस्य । एकाज्ञानश्रुतिविरोधः=अजामेकामित्याद्येकाज्ञानबोधकश्रुतिविरोधः, मूलाज्ञानगतशक्तिभेदतया=वह्निगतदाहकत्वप्रकाशकत्वाद्यनुकूलसामर्थ्यविशेषवन्मूलाज्ञानगतशक्तिविशेषतया, तत्पारतन्त्र्यात्=मूलाज्ञानान्वयव्यतिरेकप्रयोज्यान्वयव्यतिरेकवत्त्वात्, नात्यन्तभेदः=मूलाज्ञानादत्यन्तभेदो न, अवस्थाभेदाः=अंशविशेषाः ततः=घटादिचैतन्यावरकाज्ञानात् । किम्=कीदृशं फलम्, लाघवेन=अनावृतचैतन्यस्य विषयावभासकत्वापेक्षया चैतन्यमात्रस्य विषयावभासकत्वस्वीकारे लाघवेन, वाच्यतया=तत्तद्विषयभासकत्वं वक्तुमर्हतया । **प्रामाणिकत्वादिति** । तत्तद्विषयावरणभङ्गविशिष्टचैतन्यस्य विषयभासकत्वं विना रूपप्रत्यक्षसमये घटतद्गतपरिमाणादेरप्रत्यक्षत्वमनुपपन्नं सत्तत्तद्विषयावरणभङ्गविशिष्टचैतन्यस्य भासकत्वं कल्पयतीत्यर्थापत्तिसिद्धतयेत्यर्थः ॥

**तस्य चावरणस्य सदातनत्वे कदाचिदपि घटादिभानं न स्यात् इति तद्भङ्गे वक्तव्ये तद्भङ्गजनकं चैतन्यमात्रं तद्भासकस्य तदनिवर्त्तकत्वात् । नापि वृत्त्युपहितं चैतन्यं परोक्षस्थलेऽपि तन्निवृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य वाऽऽवरणभङ्गजनकत्वमित्यावरणाभिभवार्था वृत्तिरित्युच्यते । संबन्धार्था वृत्तिरित्यपरं मतम् । तत्राप्यविद्योपाधिकोऽपरिच्छिन्नो जीवः ॥**

**शि० म०**-नतु घटादिविषयावरणं ब्रह्मावरणवत् संसारदशायामनिवर्त्यमावरणत्वादित्याशङ्क्य तद्वदेवेदानीं न भानप्रसङ्ग इत्याह-**तस्येति** । ननु आवरणभङ्गस्यापि चैतन्येनैवोपपत्तेः न तथा वृत्तिरित्याशङ्क्य किं चैतन्यमात्रं तन्निवर्तकं विशिष्टचैतन्यं वा। नाद्य इत्याह-**तद्भङ्गजनकमिति** । **तद्भासकस्येति** । यद्यपि तृणादिप्रकाशकस्याप्यग्नेस्तन्नाशकत्वदर्शनान्न भासकत्वनिवर्त्तकत्वयोर्विरोधस्तथापि घटस्फुरणात्पूर्वं तत्सत्त्वेऽपि तदावरणभानस्यैव दर्शनेनान्वयव्यभिचारान्न निवर्त्तकमित्यत्र तात्पर्य्यम्। द्वितीयं दूषयति-**नापीति** । **वृत्तिविशेषस्येति**। या वृत्तिर्यद्विषया प्रत्यक्षा सा तदावरणभञ्जिकेत्यर्थः। ननु वृत्तिर्न निवर्त्तिका यतो ज्ञानमज्ञाननिवर्त्तकं मुख्यज्ञानस्यैव निवर्तकत्वाभ्युपगमादित्यत आह-**तदुपहितेति** । अस्मिन् पक्षे तु वृत्तेरवच्छेदकतया तन्निवृत्तिप्रयोजकत्वमिति बोध्यम्। उपसंहरति-**इत्यावरणाभिभवार्थेति**। आवरणाभिभवो नाम चितः प्रतिबिम्ब इत्येके, आवरणशक्तिनाश इत्यन्ये, तत्प्रतिबन्ध इत्यपरे, खद्योतादिप्रकाशे महान्धकारस्येवाज्ञानस्यैकदेशेन नाश इति संप्रदायविदः । तदुक्तं तत्त्वदीपने। प्रतिकर्मव्यवस्थायामावरणाभिभवशब्देनावच्छिन्नात्माज्ञाननिवृत्तिरिति। जीवस्य परिच्छिन्नत्वपक्षे वृत्तेः संबन्धार्थत्वस्य सुनिरूप्यत्वादपरिच्छिन्नत्वपक्षे तावत्तदुपपादयति-**तत्रेति** ॥

**म० प्र०**-तद्वदेव=ब्रह्मवदेव, इदानीं=संसारदशायाम, न भानप्रसङ्गः=घटादीनां प्रत्यक्षत्वं न स्यात्, न तथा वृत्तिः=आवरणभङ्गार्था वृत्तिर्न स्वीकार्य्या । विशिष्टचैतन्यं=वृत्त्युपहितचैतन्यम्। परममूले-**तद्भासकस्येति**। आवरणभासकस्येत्यर्थः। परममूले **तदनिवर्त्तकत्वादिति**। आवरणानिवर्त्तकत्वात् । यत्र यद्भासकत्वं तत्र तदनिवर्तकत्वमिति व्याप्तेरित्यर्थः । उक्तव्याप्तेर्भङ्गमाशङ्क्य मूलवाक्यस्य तात्पर्य्यमाह-**यद्यपीत्यादिना** । **तन्नाशकत्वेति**=तृणादिनाशकत्वेत्यर्थः । घटस्फुरणात्पूर्वम्=घटादिज्ञानात्पूर्वम्, तत्सत्त्वेऽपि=चैतन्यमात्रसत्त्वेऽपि । **तदावरणेति**=घटाद्यावरणेत्यर्थः । अन्वयव्यभिचारात्=चैतन्यमात्रसत्वेऽप्यावरणनाशरूपकार्य्याभावदर्शनात्। परममूले **तन्निवृत्त्यापत्तेरिति**। अभानापादकावरणविवृत्त्यापत्तेरित्यर्थः। अस्मिन्पक्षे=वृत्त्युपहितचैतन्यस्यावरणभङ्गजनकत्वमिति पक्षे, तन्निवृत्तिप्रयोजकत्वम्=आवरणनिवृत्तिकारणत्वम, चितः प्रतिबिम्बः=वृत्तिविशिष्टघटादौ चितोऽभिव्यक्तत्वं यथा राजकीयजनानां मध्ये एकस्याधिकारेऽपरस्थापनमेवैकस्य तिरस्कारस्तथा घटादौ चैतन्यप्रतिबिम्ब एव घटादिविषयकावरणाभिभव इति भावः । तत्प्रतिबन्धः=आवरणस्य स्वकार्य्याक्षमत्वरूपनिरोधः आवरणापसारणं वा। तत्त्वदीपने=चतुःसूत्रीव्याख्यानपञ्चपादिकाव्याख्यानविवरणव्याख्याने,प्रतिकर्मव्यवस्थायाम्=कस्यचित्पुंसः कदाचिदेव कश्चिदेव पदार्थः ज्ञानकर्म न सर्वस्य सर्वदा सर्वं इति प्रतिनियतकर्मव्यवस्थायाम्। **अवच्छिन्नेति**=घटाद्यवच्छिन्नेत्यर्थः । सुनिरूपत्वात्=शरीरान्तः जीवस्य बाह्यघटादिसंबन्धस्य वृत्तिं विनाऽसंभवाद्वृत्तेः संबन्धार्थत्वस्येष्टत्वात् ॥

**स च घटादिप्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति घटादिना सबन्धाभावात्। तत्तदाकारवृत्तिदशायां तु भासयति तदा संबन्धसत्त्वात्। नन्वविद्योपाधिकस्यापरिच्छिन्नजीवस्य स्वत एव समस्तवस्तुसंबद्धस्य वृत्तिविरहदशायां संबन्धाभावाभिधानमसंगतम्, असङ्गत्वदृष्ट्या च संबन्धाभावाभिधाने वृत्त्यनन्तरमपि संबन्धो न स्यादिति चेत् उच्यते। न हि वृत्तिविरहदशायां जीवस्य घटादिना सह संबन्धसामान्यं निषेधामहे किं तर्हि घटभानप्रयोजकं संबन्धविशेषम्। स च संबन्धविशेषो विषयस्य जीवचैतन्यस्य च व्यङ्ग्यव्यञ्जकभावलक्षणः कादाचित्कस्तदाकारवृत्तिनिबन्धनः॥**

शि० म०—नन्वपरिच्छिन्नत्वपक्षे जीवस्याविद्योपाधिवत्सकलसंयोगितया कथं तत्सम्बन्धार्था वृत्तिरित्याशङ्क्य संबन्धसत्त्वेऽपि घटादिभानप्रयोजकसंबन्धाभावात्तदर्था वृत्तिरित्याशयेनाह—**स चेति**। आशयमविद्वान् शङ्कते—**नन्विति**।वृत्तिविरहदशायां संबन्धाभावादित्येतत्संबन्धसामान्यनिषेधपरं पारमार्थिकतन्निषेधपरं वा तत्राद्यं निराकृत्य द्वितीयं निरस्यति—**असङ्गत्वेति**। "असङ्गो न हि सज्जते" इत्यादिश्रुत्या पारमार्थिकप्रपञ्चसंबन्धनिषेधावगमादित्यर्थः। **संबन्धो न स्यादिति**। पारमार्थिक इति शेषः। स्वाशयमुद्घाटयति—**न हीति**। ननु घटादिस्फुरणप्रयोजको न संयोगोऽतिप्रसङ्गात्। नापि समवायः अनभ्युपगमात्। अभ्युपगमे वा तस्य नित्यत्वादित्यत आह—**स चेति**। **व्यङ्ग्येति**। जीवस्य घटादिभासकत्वे तदाकारवृत्त्युपहितत्वं तद्भास्यत्वे घटादेस्तदुपाधिवृत्तिविषयत्वं प्रयोजकमित्यर्थः॥

म० प्र०—**अविद्योपाधिवदिति**। अविद्योपाधेर्यथा सकलकार्य्यसंबन्धित्वं तद्वदित्यर्थः। अविद्योपाधिना सह यथा जीवसंबन्धस्तद्वदिति वाऽर्थः। तत्सम्बन्धार्था=जीवसंबन्धार्था, संबन्धसत्त्वेऽपि=जीवचैतन्यस्य घटादिना सह घटादिनिष्ठाधेयतानिरूपिताधिष्ठानत्वाख्यसंबन्धसत्त्वेऽपि। **घटादिभानप्रयोजकेति**=वक्ष्यमाणव्यङ्ग्यव्यञ्जकभावलक्षणेत्यर्थः। तदर्था=व्यङ्ग्यव्यञ्जकभावलक्षणजीवसंबन्धार्था, आशयम्=व्यङ्ग्यव्यञ्जकभावलक्षणसंबन्धविशेषनिषेधविषयकाशयम्, इत्येतत्=वाक्यमिति शेषः। **सम्बन्धसामान्येति**। कल्पिताकल्पितविभागशून्यसंबन्धत्वावच्छिन्नसंबन्धेत्यर्थः। **तन्निषेधेति**=संबन्धनिषेधेत्यर्थः। तस्य=समवायस्य। **नित्यत्वादिति**। वृत्तेर्वैयर्थ्यमिति शेषः। घटादिभासकत्वे=घटादिज्ञातृत्वे। तदाकारवृत्त्युपहितत्वं=घटाद्याकारवृत्तिबिम्बितत्वम्। तद्भास्यत्वे=जीवभास्यत्वे। **तदुपाधिवृत्तीति**=जीवोपाध्यान्तःकरणादिवृत्तीत्यर्थः॥

**तथा हि तैजसमन्तःकरणं स्वच्छद्रव्यत्वात्स्वत एव जीवचैतन्याभिव्यञ्जनसमर्थं घटादिकं तु न तथा अस्वच्छद्रव्यत्वात् । स्वाकारवृत्तिसंयोगदशायां तु वृत्त्यभिभूतजाड्यधर्मकतया वृत्त्युत्पादितचैतन्याभिव्यञ्जनयोग्यताश्रयतया च वृत्त्युदयानन्तरं चैतन्यमभिव्यनक्ति । तदुक्तं विवरणे । अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयति । दृष्टं चास्वच्छद्रव्यस्यापि स्वच्छद्रव्यसंबन्धदशायां प्रतिबिम्बग्राहित्वम् । यथा कुड्यादेर्जलादिसंयोगदशायां मुखादिप्रतिबिम्बग्राहिता । घटादेरभिव्यञ्जकत्वं च तत्प्रतिबिम्बग्राहित्वं चैतन्याभिव्यक्तत्वं च तत्र प्रतिबिम्बितत्वम् ॥**

**शि० म०**–ननु चैतन्यवद् वृत्तिरपि यदि प्रकाशस्वभावा तर्हि सैवास्तु घटप्रकाशिका किं चैतन्येन । जडात्मिका चेत्तर्हि वस्त्रादिनेव तया घटादेरावरणापत्तेरित्याशङ्क्य सवितृकिरणस्य दर्पणसंबन्धेनेवात्यच्छान्तःकरणसंबन्धाच्चैतन्यस्य विषयप्रकाशकत्वमुपपद्यते इत्याह–**तथा हीति** । तर्हि घटादेरस्वच्छतयाऽनवभासकत्वे विषयस्यापरोक्षस्थलेऽभिव्यञ्जकत्वाभ्युपगमो विरुद्ध इत्यत आह–**स्वाकारवृत्तीति** । चैतन्यमभिव्यनक्तीत्यत्र घटादिकमित्यनुषङ्गः । ननु यस्य स्वच्छता तस्यैवान्तःकरणस्य व्यञ्जकता न तु तत्संयोगिनो विषयस्येत्यत आह–**दृष्टं चेति** । ननु घटादेर्न चैतन्याभिव्यञ्जकत्वमिन्द्रियादेरेव साक्षात्कारणत्वेन व्यञ्जकत्वात् । न चालोकवद्घटावच्छिन्नचैतन्यगोचराज्ञानलक्षणतमोनिवर्तकतया विषयस्य व्यञ्जकत्वमिति वाच्यम् । वृत्तेरेवावरणनिवर्तकत्वेनोक्तत्वादित्याशङ्क्याह–**घटादेरिति** ॥

**म० प्र०**–तर्हि=वृत्तेः प्रकाशस्वभावत्वे, सैव,वृत्तिरेव, तर्हि=वृत्तेर्जडात्मकत्वे । घटादेः=घटाद्यवच्छिन्नचैतन्यस्य । **सवितृकिरणस्येति** । यथा सवितृदीपादिकिरणानां दर्पणादिसंबन्धेन विशेषेण घटादिभासकत्वं न तु दर्पणादेः सवित्रादिकिरणावरकत्वं यथा वा नयनकिरणानामुपनेत्रसंबन्धद्वारा विशेषेण रेखादिप्रकाशकत्वं न तूपनेत्रस्य नयनकिरणोपरोधकत्वं तथा स्वच्छान्तःकरणसंबन्धेन घटादिचैतन्यस्य घटादिविषयप्रकाशकत्वं न त्वन्तःकरणस्य घटादिचैतन्यावरकत्वमित्यर्थः । परममूले **स्वत एवेति** । स्वरूपेणेत्यर्थः । परममूले **अभिव्यञ्जनेति**=प्रतिबिम्बग्राहित्वेत्यर्थः । तर्हीत्यस्यैवानवभासकत्वे इत्यन्तं विवरणम् । अनवभासकत्वे=अनभिव्यञ्जकत्वे । **इत्यनुषङ्ग इति** । तथा च चैतन्यप्रतिबिम्बग्राहित्वानुकूलव्यापारवद् घटादिकमित्यर्थः । तत्संयोगिनः=अन्तःकरणसंबन्धिनः । **साक्षादिति**। घटाद्यपरोक्षज्ञानेत्यर्थः । परममूले **तत्प्रतिबिम्बेति**=चैतन्यप्रतिबिम्बेत्यर्थः॥

एवंविधाभिव्यञ्जकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले बहिर्निर्गमनाङ्गीकारः । परोक्षस्थले तु वह्न्यादेर्वृत्तिसंयोगाभावेन चैतन्यानभिव्यञ्जकतया नापरोक्षत्वम् । एतन्मते विषयाणामपरोक्षत्वं चैतन्याभिव्यञ्जकत्वमिति द्रष्टव्यम् । एवं जीवस्यापरिच्छिन्नत्वेऽपि वृत्तेः संबन्धार्थत्वं निरूपितमिदानीं परिच्छिन्नत्वपक्षे संबन्धार्थत्वं निरूप्यते । तथा हि । अन्तःकरणोपाधिको जीवः ॥

शि० म०—ननु वृत्तिविषयस्य घटादेः कथं वृत्तिसंयोगादिवशादभिव्यञ्जकत्वं लाघवेन वृत्तिसंबन्धस्यैव तत्प्रयोजकत्वोपपत्तेरित्यत आह—**एवंविधेति** । अन्यथा संबन्धमात्रस्य चैतन्याभिव्यञ्जकत्वप्रयोजकत्वे वृत्तेरपरोक्षस्थले बहिर्निर्गमनवैयर्थ्यापत्तेरिति भावः । किंच तत्संबन्धमात्रस्य प्रयोजकत्वे परोक्षस्थले वह्न्यादेरपि वृत्तिविषयतया तत्संबन्धित्वेनापरोक्षत्वापत्तिः, वृत्तिसंयोगस्य प्रयोजकत्वे तु नायं दोष इत्याह—**परोक्षेति** । ननु संबन्धस्य प्रयोजकत्वे वह्न्यादेरभिव्यञ्जकत्वेऽपि नापरोक्षत्वं संविदभिन्नत्वस्य विषयप्रत्यक्षलक्षणत्वेनोक्तस्य तत्राभावादित्यत आह—**एतन्मते इति** ॥

म० प्र०—कथं=केन हेतुना, लाघवेन=वृत्तिसंबद्धघटादेश्चैतन्याभिव्यञ्जकत्वापेक्षया वृत्तिसंबन्धस्य चैतन्याभिव्यञ्जकत्वे लघुत्वेन, तत्प्रयोजकत्वोपपत्तेः=वृत्तिसंबन्धसत्त्वे घटादौ चैतन्याभिव्यक्तिः वृत्तिसंबन्धाभावे घटादिचैतन्याभिव्यक्त्यभाव इति वृत्तिसंबन्धस्यैव घटादिचैतन्याभिव्यञ्जकत्वकारणत्वोपपत्तेः, अन्यथा=वृत्तिसंबद्धघटादेरभिव्यञ्जकत्वानङ्गीकारे । संबन्धमात्रस्य=विषयविषयीभावादिसंबन्धसामान्यस्य, तत्संबन्धमात्रस्य=वृत्तिसंबन्धसामान्यस्य, प्रयोजकत्वे=घटादिविषयचैतन्याभिव्यञ्जकत्वकारणत्वे । **परोक्षस्थले इति** । परोक्षपर्वताद्यधिकरणे इत्यर्थः । **वह्न्यादेरपीति** । वह्न्यादेरप्यपरोक्षत्वापत्तिरित्यन्वयः । तत्र हेतुमाह—**वृत्तिविषयतया तत्संबन्धित्वेनेति** । वह्न्यादेर्वृत्तिविषयताऽभिन्नो यो वृत्तिसंबन्धस्तद्वत्त्वेनेत्यर्थः । **नायं दोष इति** । चैतन्यविषययोर्व्यङ्ग्यव्यञ्जकभावलक्षणसंबन्धविशेषार्था वृत्तिरङ्गीकृता वृत्तिरपि संयोगादिसंबन्धविशेषेणैव चैतन्यविषययोर्व्यङ्ग्यव्यञ्जकभावलक्षणसंबन्धविशेषप्रयोजिका न तु विषयविषयिभावादिसंबन्धसामान्येन चैतन्यविषययोर्व्यङ्ग्यव्यञ्जकभावलक्षणसंबन्धस्य प्रयोजिका विषयविषयिभावादिसंबन्धसामान्येन वृत्तेश्चैतन्यविषययोर्व्यङ्ग्यव्यञ्जकभावलक्षणसंबन्धविशेषप्रयोजकत्वाङ्गीकारे तु परोक्षपर्वताद्यधिकरणे वह्न्यादावपि विषयतासंबन्धेन वृत्तेः सत्त्वात्परोक्षस्थले वह्न्यादेरपि प्रत्यक्षत्वापत्तिरिति भावः । संबन्धस्य=वृत्तेर्विषयतादिसंबन्धसामान्यस्य, प्रयोजकत्वे=यत्र वृत्तेर्विषयतादिसंबन्धस्तत्र चैतन्याभिव्यञ्जकत्वमिति वृत्तेर्विषयतादिसंबन्धसामान्यस्य विषयचैतन्याभिव्यञ्जकत्वाव्याप्यत्वे, तत्र=वह्न्यादौ । परमूले **एतन्मते इति** । चैतन्यविषययोर्व्यङ्ग्यव्यञ्जकभावलक्षणसंबन्धार्था वृत्तिरिति मते इत्यर्थः ॥

**तस्य च घटाद्यनुपादानता घटादिदेशासंबंधात् । किंतु ब्रह्मैव घटाद्युपादानं तस्य मायोपहितचैतन्यस्य सकलघटाद्यन्वयित्वात् । अत एव ब्रह्मणः सर्वज्ञता । तथा च जीवस्य घटाद्यधिष्ठानब्रह्मचैतन्याभेदमन्तरेण घटाद्यवभासासंभवे प्राप्ते तदवभासाय घटाद्यधिष्ठानब्रह्मचैतन्याभेदसिद्ध्यर्थं घटाद्याकारवृत्तिरिष्यते। ननु वृत्त्याऽपि कथं प्रमातृविषयचैतन्ययोरभेदः संपाद्यते घटान्तःकरणरूपोपाधिभेदेन तदवच्छिन्नचैतन्ययोरभेदासंभवादिति चेन्न। वृत्तेर्बहिर्देशनिर्गमनाङ्गीकारेण वृत्त्यन्तःकरणविषयाणामेकदेशस्थत्वेनोपधेयभेदाभावस्योक्तत्वात् । एवमपरोक्षस्थले मतभेदेन वृत्तेर्विनियोग उपपादितः। इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था स्वप्नावस्था । जाग्रदवस्थाव्यावृत्त्यर्थमिन्द्रियाजन्येति । अविद्यावृत्तिमत्यां सुषुप्तावतिव्याप्तिवारणायान्तःकरणेति । सुषुप्तिर्नामाविद्यागोचराऽविद्यावृत्त्यवस्था ॥**

शि० म०—जीवस्य परिच्छिन्नत्वेऽपि घटाद्यधिष्ठानचैतन्याभिन्नत्वेन स्वत एव तत्सबन्धितया कथं वृत्तेस्संबन्धार्थत्वमित्याशङ्क्य किं जीवस्य स्वत एव घटाद्यधिष्ठानत्वान्न वृत्तिसंबन्धापेक्षा तदुपादानचैतन्याभेदाद्वा तत्राद्यं दूषयति—**तस्य चेति** । तर्हि चैतन्यमात्रं नोपादानं स्यात् निष्कलङ्कत्वश्रुतिविरोधेन शुद्धचैतन्यस्याप्यनुपादानत्वादिति शङ्कते—**किंत्विति** । कल्पितबिम्बभावमीश्वरपदवाच्यं ब्रह्मैव जगदुपादानमित्याह—**ब्रह्मैवेति** । द्वितीये तु कल्पितभेदस्य जीवस्य तदुपादानचैतन्याभेदो न वृत्तिं विना संभवतीति वृत्तिसंबन्धापेक्षा दुर्वारेत्याह—**तथा चेति**। वृत्तिप्रयोजनमुपसंहरति—**एवमिति** । एवमिन्द्रियजन्यान्तःकरणवृत्त्यवस्था जाग्रदिति जाग्रदवस्थां निरूप्य स्वप्नावस्थां निरूपयति—**इन्द्रियाजन्येति** । यथा च स्वाप्नं ज्ञानमिन्द्रियाजन्यं तथोपपादितमधस्तात् ॥

म० प्र०—स्वत एव=वृत्तिं विनैव, तत्संबन्धितया=घटादिसंबन्धितया, स्वत एव=घटाद्युपादानचैतन्याभेदं विनैव । **तदुपादानेति**=घटाद्युपादानेत्यर्थः । तत्र=पक्षद्वयमध्ये, तर्हि=जीवचैतन्यस्य घटाद्यनुपादानत्वे सति, निष्कलङ्कत्वश्रुतिविरोधेन="असङ्गो ह्ययं पुरुषोऽसङ्गो न हि सज्जते" इत्यादिनिर्धर्मकत्वबोधकश्रुतिविरोधेन । **तदुपादानेति**=घटाद्युपादानेत्यर्थः । परममूले **तदवच्छिन्नेति**=घटान्तःकरणावच्छिन्नेत्यर्थः । परममूले **विनियोग इति** । उपयोगः सफलत्वमिति यावत् । परममूले **इन्द्रियाजन्येति**=आगन्तुकदोषजन्येत्यर्थः ।

तेन सुखादिगोचरतत्त्वमस्यादिवाक्यजन्यब्रह्मादिगोचरापरोक्षान्तःकरणवृत्त्यवस्थायां जाग्रति स्वप्नलक्षणस्य नातिव्याप्तिरिति ध्येयम् ॥

जाग्रत्स्वप्नयोरविद्याकारवृत्तेरन्तःकरणवृत्तित्वान्न तत्रातिव्याप्तिः । अत्र केचित् मरणमूर्च्छयोरवस्थान्तरत्वमाहुः । अपरे सुषुप्तावेव तयोरन्तर्भावमाहुः । तत्र तयोरवस्थात्रयान्तर्भावबहिर्भावयोस्त्वंपदार्थनिरूपणे उपयोगाभावान्न तत्र यत्यते । तस्य मायोपाध्यपेक्षयैकत्वमन्तःकरणोपाध्यपेक्षया नानात्वं व्यवह्रियते । एतेन जीवस्याणुत्वं प्रत्युक्तम् । "बुद्धेर्गुणेनात्मगुणेन चैवाराग्रमात्रो ह्यवरोऽपि दृष्टः" इत्यादौ जीवस्य बुद्धिशब्दवाच्यान्तःकरणपरिमाणोपाधिकस्य परमाणुत्वश्रवणात् ॥

शि० म०–साक्षादविद्योपादाना वृत्तिरविद्यावृत्तिः । सा च नित्यसुखगोचरा अविद्यागोचरा चात एव सुप्तोत्थितानुभवः सुखमहमस्वाप्सं न किंचिदवेदिषमिति । तदवस्था सुषुप्तिरिति विवक्षितम् । तेन घटमहं न जानामीत्यविद्यागोचरां परंपरया तदुपादानान्तःकरणवृत्तिमादाय जाग्रत्स्वप्नयोर्नातिव्याप्तिरित्याह–**जाग्रदिति** । रामानुजादिमतं दूषयति–**एतेनेति** । चैतन्यात्मकस्य जीवनस्य किं पारमार्थिकमणुत्वमौपाधिकं वा । नाद्यः, अद्वितीयादिश्रुतिविरोधेन तदयोगात् । न द्वितीयः, जीवस्याविद्योपाधिकत्वपक्षे तद्वदेव व्यापकत्वात्, अन्तःकरणोपाधित्वे च मध्यमपरिमाणत्वात्, उपाधिपरिमाणसमानपरिमाणस्य घटावच्छिन्नाकाशादौ दर्शनात् । बुद्धेर्गुणेनाराग्रमात्रः इत्यौपाधिकपरिच्छेदश्रवणाच्च । क्वचिदणुत्वश्रवणस्य दुर्ज्ञेयवस्त्वभिप्रायत्वात् । अन्यथा अणोरणीयानिति श्रवणादात्मा अणोरप्यणुः स्यात् । अणुत्वे च प्रत्यक्षत्वानुपपत्तेः । शरीरव्यापिसुखाद्यनुभवानापत्तेश्च । न चात्मत्वमणुद्रव्यवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववत्, मनोऽनणुत्वपक्षे मनस्त्वे व्यभिचारात् । अनात्मवृत्तित्वस्योपाधित्वात् । आत्मत्वं नाणुनिष्ठमात्ममात्रवृत्तित्वादीश्वरत्ववदिति । प्रयोगाच्च तस्मान्नाणुर्जीव इति ॥

म० प्र०–**तदुपादानेति**=अविद्योपादानेत्यर्थः । परममूले **तत्रेति** । जाग्रत्स्वप्नयोरित्यर्थः । परममूले **अत्रेति** । अवस्थानिरूपणावसरे इत्यर्थः । परममूले **तत्रेति** । एवं वादिविवादे सतीत्यर्थः। परममूले **अवस्थात्रयेति**=अवस्थात्रयान्यतमेत्यर्थः। परममूले । **तत्रेति** । मरणमूर्च्छयोरवस्थात्रयान्यतमान्तर्भावबहिर्भावयोः । परममूले **तस्येति** । जीवस्येत्यर्थः । परममूले **एतेनेति** । वक्ष्यमाणहेतुनेत्यर्थः । परममूले **बुद्धेर्गुणेनेति** । बुद्ध्यादिरूपोपाधेरल्पपरिमाणरूपगुणेनैवाराग्रमात्रोऽल्पपरिमाणको दृष्टः शास्त्रतो ज्ञातः आत्मगुणेन निरुपाधिक-

स्वरूपात्मनोऽपरिच्छिन्नत्वादिलक्षणगुणेनैवावरो न वरो महान् यस्मात्स तथा दृष्ट इत्यर्थः । तदयोगात्=जीवस्य पारमार्थिकाणुत्वायोगात्, तद्वदेव=ईश्वरवदेव । "वालाग्रशतभागस्य शतधा कल्पितस्य च । जीवो भागः स विज्ञेयः स चानन्त्याय कल्प्यते ।" इत्यादिश्रुतिमवलम्ब्य शङ्कते–**आत्मत्वमिति । द्रव्यत्वसाक्षादिति** । गुणत्वव्याप्यजातिरूपत्वादौ व्यभिचारवारणाय **द्रव्यत्वेति** । घटत्वादौ व्यभिचारवारणाय **साक्षादिति** । ननु मनसोऽनणुत्वमेव नास्तीति कथं मनस्त्वे व्यभिचार इत्याशङ्क्य न चेति प्रतिज्ञायामेव हेत्वन्तरमाह–**अनात्मेति । उपाधित्वादिति** । यत्राणुद्रव्यवृत्तित्वं तत्रानात्मवृत्तित्वं यथा पृथिवीत्वे इति साध्यव्यापकत्वं यत्र द्रव्यत्वसाक्षाद्व्याप्यजातित्वं तत्रानात्मवृत्तित्वं नास्ति यथाऽऽत्मत्वे इति साधनाव्यापकत्वमिति ध्येयम् ॥

**स च जीवः स्वयंप्रकाशः स्वप्नावस्थामधिकृत्य "अत्रायं पुरुषः स्वयंज्योतिः" इति श्रुतेः ॥**

**शि० म०**–एवं जीवस्य जाग्रदवस्थादिकं कल्पितं धर्मं निरूप्य संप्रति तस्य पारमार्थिकं रूपं निरूपयति–**स चेति** । तत्र बृहदारण्यकोपनिषद्वचनं प्रमाणयति–**स्वप्नावस्थामिति** । न चायं शब्दः परमात्मपरः समनन्तरवाक्यविरोधात् । तथा हि । आत्मैवास्य ज्योतिरित्युक्त्वा "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन् म्रियमाणः" इति चोक्त्वा उत्तरत्र "स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिः" इत्यादिना स्वप्रकाशस्यैव स्वप्नावस्थामुपदर्शयन्तो वेदान्ता जीवात्मानमेव स्पष्टमुपस्थापयन्ति । तथा चास्य ज्योतिरात्मा स्वरूपमित्यर्थः । राहोः शिर इतिवत् षष्ठ्युपपत्तेः । तदेतदभिप्रेत्याह–**स्वप्नावस्थामधिकृत्येति** ।

**म० प्र०**–तस्य=जीवस्य, तत्र=आत्मनः स्वप्रकाशत्वे । **समनन्तरेति** । अव्यवहितपूर्ववाक्येत्यर्थः । **आत्मैवेति** । अस्य शिरःपाण्यादिमतः कार्य्यकारणसंघातरूपपुरुषस्यात्मैव चिद्रूप आत्मैव ज्योतिरित्यर्थः । कतम आत्मेत्यादिवाक्यजातं बृहदारण्यकषष्ठाध्यायस्थं बोध्यम् । हृद्यन्तः ज्योतिः पुरुष इत्यत ऊर्ध्वं स वा अयमित्यतः पूर्वं स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणीति वाक्यं बोध्यम् । अस्य सर्वस्यायमर्थः । इह बुद्ध्यादयो बहवः पदार्थाः सन्ति तेषु कतम आत्मेति पृष्टे तत्स्वरूपं प्राणादिभिन्नत्वेन दर्शयति–**योऽयमिति** । हे राजन् यस्त्वया पृष्टः सोऽयं विज्ञानमयो विज्ञायतेऽनेनेति व्युत्पत्तेर्विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः । प्राणेष्विति सामीप्यलक्षणा सप्तमी विज्ञानमयस्य बुद्ध्यादिव्यतिरेकप्रदर्शनाय ज्ञानेन्द्रियकर्मेन्द्रियपञ्चवाय्वाख्यपञ्चदशप्राणसमीपस्थः हृद्यन्तः ज्योतिः लक्षणया हृदयस्थबुद्धावन्तर्वर्त्तमानं ज्योतिरात्मा आत्मनैवायं ज्योतिषेत्युपक्रमात्

पुरुषः पूर्णः । तथा च विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्येतैः पञ्चभिर्विशेषणैः क्रमेण बुद्धिप्राणादितत्सदृशबुद्धिवृत्त्यव्यापकत्वविषयकाः पञ्च शङ्का निरस्ताः । एवं बुद्ध्याद्यतिरिक्तनित्यमुक्तस्यात्मनो विद्यया बुद्ध्यध्यासादेव संसारित्वमिति दर्शयितुमाह—**स इति** । स हृद्यन्तर्ज्योतीरूप आत्मा समानः सन् बुद्ध्या सदृशः सन्नन्योऽन्यधर्माध्यासे सति तप्तायःपिण्डवत्तादात्म्यमापन्नः सन्नेवोभौ लोकौ प्राप्तव्याविहलोकपरलोकावनुक्रमेणोपेतदेहं त्यजन्नन्यं च देहमुपाददत्संचरति न स्वतः । एतदेव प्रत्यक्षेणाभिनीय दर्शयति—**ध्यायतीवेति** । यतो ध्यानव्यापारवती बुद्धिरतस्तद्वतः सन्नवभासयन्नात्माऽपि ध्यायतीव ध्यानं करोतीव ज्ञायते, न तु परमार्थतो ध्यानं करोति । तथा लेलायतीव बुद्ध्यादिकरणेषु प्राणादिवायुषु च चलत्सु तदवभासकतया तत्समान आत्माऽपि चलतीव न तु परमार्थतश्चलति । यथा चलन्त्यां नावि नौस्थेन पुरुषेण तीरस्था वृक्षाश्चलन्तीति प्रतीयन्ते तद्वदित्यर्थः । कुतो हेतोरेतदवगम्यते इत्यत आह—**स हीति** । हि यस्मात्स आत्मा स्वप्नो भूत्वा स्वप्नाकारपरिणतधीवृत्त्यवभासकत्वेन तदाकारो भूत्वेमं लोकं जागरितकार्य्यकरणसंघातलक्षणमतिक्रामति तदभिमानं त्यजतीति यावत् । तथा मृत्यो रूपाणि चातिक्रामति मृत्युरज्ञानं रूप्यते ज्ञाप्यते यैरहङ्कारादिभिस्तानि मृत्यो रूपाण्यतिक्रामत्यतः संचरणादिकं नात्मनः स्वाभाविकं स्वभावस्य वह्न्युष्णत्वस्येव स्वसद्भावे सत्यतिक्रमणायोगादित्यर्थः । यथैकस्मिन्देहे स्वप्नजागरिते आचरत आत्मनो देहव्यतिरिक्तत्वं तथेहलोकपरलोकयोः संचारोक्त्याऽपि तद्व्यतिरेकित्वमाह—**स इति** । सोऽयं प्रकृतः पुरुषो जायमानः उत्पद्यमानो न घटादिवत्स्वरूपत उत्पद्यमानः किंतु शरीरमभिसंपद्यमानस्तत्रात्मभावं प्रतिपद्यमानो वै एव सन् पाप्मभिर्लक्षणया धर्माधर्माश्रयैः कार्य्यकरणैः संसृज्यते स एव पुनर्देहाद्यारम्भककर्मक्षये सति म्रियमाण इत्यस्य व्याख्या उत्क्रामन् शरीरान्तरसंयोगायोर्द्ध्वं प्रक्रामन् तानेव संसृष्टान् पाप्मनः कार्यकरणलक्षणान् विजहाति परित्यजत्यभिमानत्यागमात्रेणेत्यर्थः । स्वयं विहत्य स्वयमेव जाग्रद्देहं निःसंबन्धमापाद्य स्वयं निर्माय स्वयमेव स्वकर्मानुसारेण प्रातिभासिकस्वप्नदेहं निष्पाद्य स्वेन आत्मीयेन भासा दीप्त्या वासनोपादानलक्षणान्तःकरणवृत्तिरूपप्रकाशस्वरूपेणेति यावत् । स्वेन ज्योतिषा आत्मस्वरूपज्योतिषाऽलुप्तदृक् स्वरूपेण निर्मितवस्तु विषयीकुर्वन् प्रस्वपित्यत्रास्य स्वप्नावस्थायामयं पुरुष आत्मा स्वयमेव ज्योतिर्भवति तदाऽऽदित्यादेरभावादिन्द्रियाणां चोपसंहृतत्वान्मनसो विषयाकारेणैवापक्षयादिति परिशेषादित्यर्थः ॥

**अनुभवरूपश्च । प्रज्ञानघन एवेत्यादिश्रुतेः । अनुभवामीति व्यवहारस्तु वृत्तिप्रतिबिम्बितचैतन्यमादायोपपद्यते । एवं त्वंपदार्थो निरूपितः ॥**

**शि० म०**—किंच जीवः स्वप्रकाशः चिद्रूपत्वाच्चिद्वत् । स्वप्रकाशत्वं सजातीयप्रकाशाप्रकाश्यत्वम् । न च चिद्रूपत्वमसिद्धं तस्य श्रवणादित्याह—**अनुभवरूप इति** । "योऽयं विज्ञानघनः" इत्यादिश्रुतिरादिपदग्राह्या । किंच घटज्ञानयोः

संबन्ध आत्मनिष्ठः ज्ञाननिष्ठत्वात्सत्तावत् । अपिच आत्मा ज्ञानरूप आत्मान्यविषयान्यत्वात् ज्ञानवत् । न चाप्रयोजकता, आत्मा यदि यावत्स्वस्थितिसमानकालिकज्ञानाविषयत्वे सति ज्ञानरूपो न स्यात् स्वनिष्ठप्रकारकस्वविशेष्यकसंशयादिविषयः स्यात् घटादिवदिति बाधकतर्कसत्त्वात् । ततश्च जीवः स्वप्रकाशः ॥

म० प्र०—जीवः=जीवपदलक्ष्यः, चिद्रूपत्वात्=जडभिन्नत्वात् , चिद्वत्=ज्ञानत्वेनाभिमतमुख्यज्ञानपदार्थवत् । **सजातीयेति** । न च दीपादावपि तेजस्त्वेन सजातीयप्रकाशप्रकाश्यत्वसत्त्वात्स्वप्रकाशत्वं स्यादिति वाच्यम् । इष्टत्वादन्यथा विभुत्वे सतीत्यस्यापि स्वप्रकाशलक्षणे निवेशादिति । परममूले **वृत्तिप्रतिबिम्बितचैतन्यमिति** । वृत्तिप्रतिबिम्बितचैतन्याश्रयोऽहमिति प्रकारेणोपपद्यते । न चास्मदर्थस्य प्रमातुः कथं वृत्तिप्रतिबिम्बितचैतन्याश्रयत्वमिति वाच्यम् । प्रमातुर्वृत्त्याश्रयत्वेन वृत्त्युपहितचैतन्याश्रयत्वस्य संभवात् । न च वृत्त्याश्रयत्वमन्तःकरणस्यैव न प्रमातुरिति वृत्त्याश्रयत्वेनेत्युक्तिरनुपपन्नेति वाच्यम् , प्रमातुरन्तःकरणघटितत्वेनान्तःकरणवृत्त्याश्रयत्वस्य संभवादित्यर्थः । घनः=मूर्तिः, संबन्धः=विषयविषयिभावादिसंबन्धः, आत्मनिष्ठः=आत्मनिष्ठाधिकरणतानिरूपिताधेयतावान् , ज्ञाननिष्ठत्वात्=ज्ञाननिष्ठाधिकरणतानिरूपिताधेयतावत्वात् । न च गुणत्वानात्मत्वविषयेन्द्रियसंयोगजन्यत्वादिषु ज्ञाननिष्ठत्वस्य सत्त्वेन गुणत्वादिषु व्यभिचार इति वाच्यम् । ज्ञाने गुणत्वादीनामनङ्गीकारात् । न चोभयवादिसंमतदृष्टान्ताभावेनानुमानं न संभवतीति वाच्यम् । परसंमतदृष्टान्तेनाप्यनुमानसंभवादिति । आत्मा=लक्ष्यात्मपदार्थः । **आत्मान्यविषयान्यत्वादिति** । विषयान्यत्वादित्युक्ते ह्यात्मनोऽपि वृत्तिविषयत्वेन स्वरूपासिद्धिः स्यात्तद्वारणाय **आत्मान्येति** । आत्मान्यत्वादित्युक्ते हि पुनः स्वरूपासिद्धिस्तद्वारणाय **विषयान्यत्वेति** । **यावत्स्वस्थितीति** । यावत् यावत्कालपर्यन्तं स्वस्थितिः सुखदुःखादिस्थितिस्तत्समानकालिकं यज्ज्ञानं सुखदुःखादिज्ञानं तदविषयत्वे सति ज्ञानरूपत्वाभावो घटादिषु तत्रैव स्वं घटादयस्तन्निष्ठं यत् घटत्वादिकं तत्प्रकारकघटादिविशेष्यकसंशयादिविषयत्वमपि, प्रथमस्वपदेन घटादिकं धर्तुं न शक्यते, घटादिज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन यावद्घटादिस्थितिसमानकालिकघटादिज्ञानाप्रसिद्धेः । सुखादिज्ञानस्य तु सुखादिस्थितिसमानकालिकत्वं संभवति सुखादीनां ज्ञानसत्ताकत्वेनाज्ञातसत्ताकत्वाभावात् । यत्र ज्ञानरूपत्वाभावस्तत्र स्वनिष्ठप्रकारकस्वविशेष्यकसंशयादिविषयत्वमित्युक्ते हि सुखादीनामपि संशयादिविषयत्वं स्यादतः **स्वस्थितिसमानकालिकज्ञानाविषयत्वे सतीत्युक्तम्** । उक्ततर्कासंभववारणाय **यावदिति** । यावत्कालपर्यन्तं स्वस्थितिर्भवति तावत्कालपर्यन्तं ज्ञानं विवक्षितं नापि न्यूनकालिकं नाप्यधिककालिकमतो घटादिकालन्यूनकालिकघटादिज्ञानमादाय नोक्ततर्कासंभवः । आत्मा यदि यावत्स्वस्थितिसमानकालिकज्ञानाविषयत्वे सति ज्ञानरूपो न स्यात्तदा संशयादिविषयः स्यादित्युक्ते हि आत्मा गुणो न वेति गुणत्वप्रकारकात्मविशेष्यकसंशयस्तु भव-

त्येवेति नैयायिकं प्रत्यनिष्टोद्भावनमेव न स्यादतः **स्वनिष्ठप्रकारकेति** । अहं वा न वेति अहंत्वादिप्रकारकसंशयः स्यादिति भावः । स्वविशेष्यकपदानादाने तु इदं शरीरमहं वा न वेत्यहंत्वादिप्रकारकेदमर्थविशेष्यकसंशयो नैयायिकमते भवत्येवेति पुनरपि नैयायिकं प्रत्यनिष्टापादनं न स्यादतः **स्वविशेष्यकेति** । अहं वा न वेत्यहंत्वप्रकारकास्मद्विशेष्यकसंशयः स्यादिति भावः ॥

**अधुना तत्त्वंपदार्थयोरैक्यं महावाक्यप्रतिपाद्यमभिधीयते ॥**

**शि० म०**—विषयप्रतियोगिनिरूपणानन्तरं विषयनिरूपणं प्रतिजानीते अधुनेति । **महावाक्येति** । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवाक्यमवान्तरवाक्यं तत्त्वमस्यहं ब्रह्मास्मि अयमात्मा ब्रह्मेत्यादिवाक्यं महावाक्यं तेन शक्त्या लक्षणया वा तदैक्यं प्रतिपाद्यमित्यर्थः । अनेन चास्य विषयत्वमुक्तम्, अन्याप्रतिपाद्यत्वे सति तत्प्रतिपाद्यस्य तद्विषयत्वात् । द्वादशलक्षणी धर्ममीमांसा सपरिकरधर्मनिरूपणपरा न सिद्धार्थपरा विधिवाक्यानामेव तत्र विचारितत्वात् । वेदान्ताश्च न विधिपराः । तात्पर्यविषयब्रह्मासिद्धिप्रसङ्गात् । तथा च न सत्यन्तासिद्धिरिति ॥

**म० प्र०**—**प्रतियोगिनिरूपणेति** । ऐक्यनिरूपकतत्त्वंपदार्थनिरूपणेत्यर्थः । अवान्तरवाक्यं=तत्त्वंपदार्थान्यतरबोधकवाक्यम् । महावाक्यं=तत्त्वंपदार्थैक्यबोधकवाक्यम्, तेन=महावाक्येन, तदैक्यं=तत्त्वंपदार्थैक्यम्, अनेन=महावाक्यप्रतिपाद्यमिति वाक्येन, अस्य=ऐक्यस्य । अन्याप्रतिपाद्यत्वे सति यत्प्रतिपाद्यत्वं यत्र तत्र तद्विषयत्वमिति सामान्यव्याप्तिमभिप्रेत्यैक्यस्य वेदान्तविषयत्वे हेतुमाह—**अन्याप्रतिपाद्यत्वे सतीति** । वेदान्तान्याप्रतिपाद्यत्वे सतीत्यर्थः । तत्प्रतिपाद्यस्य=वेदान्तप्रतिपाद्यस्य । तद्विषयत्वात्=वेदान्तविषयत्वात् । ननु "तत्तु समन्वयात्" इति सूत्रे द्वादशाध्यायधर्ममीमांसाविचारितकर्मवाक्यैरपि ब्रह्मणः प्रतिपाद्यत्वस्वीकारात्सत्यन्तासिद्धिरित्याशङ्क्याह—**द्वादशलक्षणीति** । द्वादशाध्यायेत्यर्थः । सपरिकरधर्मनिरूपणपरा=अङ्गसमूहसहितयागादिरूपधर्मप्रतिपादकवाक्यार्थनिरूपणपरा, विधिवाक्यानां=लिङादिघटितयागादिबोधकवाक्यानाम्, तत्र=धर्ममीमांसायाम् । **विचारितत्वादिति** । द्वादशलक्षणमीमांसाविचारितकर्मवाक्यानां परम्परया ब्रह्मप्रतिपत्तावुपयोगो न तु तत्त्वमस्यादिवाक्यवत्साक्षादुपयोग इति भावः । विधिपराः=विधीयमानयागादिकर्मपराः । **ब्रह्मासिद्धिप्रसङ्गादिति** । वेदान्तानां विधिपरत्वे ब्रह्मप्रतिपादकत्वादिति शेषः । तथा च=वेदान्तानां विधिपरत्वाभावे सति ॥

**ननु नाहमीश्वर इत्यादिप्रत्यक्षेण किंचिज्ज्ञत्वसर्वज्ञत्वविरुद्धधर्माश्रयत्वादिलिङ्गेन द्वासुपर्णेत्यादिश्रुत्या "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर**

उच्यते ।' इत्यादिस्मृत्या च जीवपरभेदस्यावगतत्वेन तत्त्वमस्यादिवाक्यम् "आदित्यो यूपो यजमानः प्रस्तरः" इत्यादिवाक्यवदुपचरितार्थमेवेति चेन्न । भेदप्रत्यक्षस्य संभावितकरदोषस्यासंभावितदोषवेदजन्यज्ञानेन बाध्यमानत्वात् । अन्यथा चन्द्रगताधिकपरिमाणग्राहिज्योतिःशास्त्रस्य चन्द्रप्रादेशग्राहिप्रत्यक्षेण बाधापत्तेः । पाकरक्ते घटे रक्तोऽयं न श्याम इतिवत्सविशेषणे हीति न्यायेन जीवपरभेदग्राहिप्रक्षस्य विशेषणीभूतधर्मभेदविषयत्वाच्च ॥

शि० म०—तत्त्वमस्यादिवाक्यं न जीवेश्वराभेदे प्रमाणं भेदग्राहिबहुप्रमाणविरोधादिति शङ्कते—नन्विति । किंचिज्ज्ञत्वेति । जीवेश्वरौ परस्परं भिन्नौ किंचिज्ज्ञत्वसर्वज्ञत्वलक्षणविरुद्धधर्माश्रयत्वात् दहनतुहिनवदित्यर्थः । तर्हि तत्त्वमस्यादिवाक्यं न प्रमाणं स्यादित्यत आह—तत्त्वमस्यादीति । ननु प्रत्यक्षस्य ज्येष्ठतया प्रबलत्वेन बाधकत्वमित्यत आह—अन्यथेति । तर्हि भेदप्रत्यक्षस्याप्रामाण्यकल्पनमेवाभेदप्रामाण्ये बाधकमित्यत आह—पाकेति ॥

म० प्र०—विरुद्धेति । एकाधिकरणावृत्तीत्यर्थः । किंचिज्ज्ञत्वसर्वज्ञत्वलक्षणेति विशेषकथनं तु प्रकृताभिप्रायेण । हेतुस्तु विरुद्धधर्माश्रयत्वमेवेति ध्येयम् । दहनतुहिनवत्=अग्निहिमवत् । परममूले संभावितकरणदोषस्येति । स्वाश्रयकरणजन्यत्वसंबन्धेन संभाविताः करणानामिन्द्रियाणामपाटवादयो दोषा यस्मिन् भेदप्रत्यक्षे स तथा तस्येत्यर्थः । परममूले अन्यथेति । प्रत्यक्षस्य ज्येष्ठतया प्रबलत्वेनागमजन्यज्ञानबाधकत्वस्वीकारे इत्यर्थः । तर्हि=भेदप्रत्यक्षस्यागमजन्यज्ञानेन बाध्यत्वस्वीकारे सति । परममूले सविशेषणे हीति । शिखी ध्वस्तः दण्डी जातः रक्तोऽयं न श्याम इत्यादौ प्रसिद्धेन "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" इति न्यायेनेत्यर्थः ॥

अत एव नानुमानमपि प्रमाणमागमविरोधात् मेरुपाषाणमयत्वानुमानवत् । नाप्यागमान्तरविरोधस्तत्परातत्परवाक्ययोस्तत्परवाक्यस्य बलवत्त्वेन लोकसिद्धभेदानुवादिद्वासुपर्णादिवाक्यापेक्षया उपक्रमोपसंहाराद्यवगताद्वैततात्पर्यविशिष्टस्य तत्त्वमस्यादिवाक्यस्य प्रबलत्वात् ॥

शि० म०—अनुमानं च न भेदे प्रमाणं नराशिरःशौचानुमानवदागमबाधादित्याह—अत एवेति । भेदग्राहिश्रुतिस्मृतिविरोधं निरस्यति—नाप्यागमान्तरेति । ननु द्वासुपर्णेत्यादिवाक्यं प्रतीयमानभेदपरमेवास्तु बाधकाभावादित्याशङ्क्य शास्त्रस्याज्ञातार्थपरत्वात् भेदस्य च प्रत्यक्षादिप्रमाणावगतत्वात् न तत्परत्वमित्याह-

लोकसिद्धेति। ननु तत्त्वमस्यादिवाक्यमपि नाभेदपरं प्रस्तरादिवाक्यवत्तस्योपचरितार्थत्वस्योक्तत्वादित्याशङ्क्य किं बाधकसत्त्वादभेदपरत्वाभावस्तात्पर्य्यस्य ग्राहकाभावाद्वा। नाद्यः, प्रस्तरस्य यजमानत्वे बाधकवदभेदे बाधकाभावात्। न च प्रस्तरादिवाक्यवत्स्तुतिपरत्वं तात्पर्य्यबाधकं प्रस्तरं प्रहरतीति विधिशेषतयाऽवगतत्वेन प्रस्तरस्य स्तुतिविषयत्वेऽपि जीवेश्वरयोर्विध्यन्वयादर्शनेन स्तुतिविषयत्वायोगात्। न द्वितीय इत्याह–उपक्रमेति॥

म० प्र०–अनुमानं च=जीवेशौ परस्परभिन्नौ विरुद्धधर्माश्रयत्वाद्दहनतुहिनवदित्यनुमानं च, नरशिरःशौचानुमानवत्=सस्नेहं नरशिरोऽस्थि शुचि अस्थित्वात् शङ्खवदित्यनुमानम् 'स्पृष्ट्वा नरास्थि सस्नेहं सवासा जलमाविशेत्' इत्याद्यागमेन यथा बाधितं तद्वत्, आगमबाधात्=तत्त्वमस्यादिवाक्यरूपागमबाधात्। परममूले **अत एवेति**। वक्ष्यमाणहेतोरेवेत्यर्थः। परममूले **मेरुपाषाणमयत्वानुमानवदिति**। मेरुः पाषाणमयः पर्वतत्वाद्विन्ध्यादिवदित्यनुमानम् "सर्वतः सौवर्णः कुलगिरिराजो मेरुः" इत्याद्यागमेन यथा बाधितं तद्वदित्यर्थः। प्रस्तरादिवाक्यवत्="यजमानः प्रस्तरः" इत्यादिवाक्यस्य यथा सादृश्यरूपलाक्षणिकार्थपरत्वं तद्वत्, तस्य=तत्त्वमस्यादिवाक्यस्य। **उपचरितार्थत्वेति**। सादृश्यादिरूपलाक्षणिकार्थकत्वेत्यर्थः। बाधकवत्=प्रत्यक्षप्रमारूपबाधकवत्, अभेदे=तत्त्वंपदार्थाभेदे, बाधकाभावात्=प्रत्यक्षादिप्रमारूपबाधकाभावात्। न च नाहमीश्वर इति प्रत्यक्षादिकमभेदे बाधकमिति वाच्यम्। तस्याप्रमात्वेन बाधकत्वाभावात्। सविशेषणे हीत्यादिन्यायेन विशेषणीभूतधर्मभेदविषयकत्वाच्चेति। **प्रस्तरमिति**। अग्न्यधिकरणकदर्भमुष्टिकर्मकप्रक्षेपेणेष्टं भावयेदित्यर्थः। स्तुतिपरत्वं=तत्त्वमस्यादिवाक्यस्य जीवस्तुतिपरत्वम्, तात्पर्य्यबाधकम्=तत्त्वमस्यादिवाक्यस्याभेदतात्पर्य्यबाधकम्। विधिशेषतया=विधीयमानप्रक्षेपरूपकर्मशेषतया, स्तुतिविषयत्वेऽपि=यजमानः प्रस्तर इति स्तुतिविषयत्वेऽपि, जीवेश्वरयोः=जीवेश्वरपदलक्ष्ययोः, विध्यन्वयेति=विधीयमानकर्मान्वयेत्यर्थः॥

**न च जीवपरैक्ये विरुद्धधर्माश्रयत्वानुपपत्तिः शीतस्यैव जलस्यौपाधिकौष्ण्याश्रयत्ववत्स्वभावतो निर्गुणस्यैव तस्यान्तःकरणाद्यौपाधिककर्तृत्वाद्याश्रयत्वप्रतिभासोपपत्तेः। यदि च जलादावौष्ण्यमारोपितं तदा प्रकृतेऽपि तुल्यम्। न च सिद्धान्ते कर्तृत्वस्य क्वचिदप्यभावादारोप्यप्रमाहितसंस्काराभावे कथमारोप इति वाच्यं लाघवेनारोप्यविषयसंस्कारत्वेनैव तस्य हेतुत्वात्॥**

शि० म०–अर्थापत्तिमाशङ्क्य निराकरोति–न चेति॥

म० प्र०–परममूले **विरुद्धधर्माश्रयत्वानुपपत्तिरिति**। किंचिज्ज्ञत्वसर्वज्ञत्वविरुद्धधर्माश्रयत्वानुपपत्त्या जीवेश्वरभेदः कल्प्यते इति भावः। परममूले **प्रकृतेऽपीति**

आत्मन्यपीत्यर्थः । परममूले **तुल्यमिति** । कर्तृत्वादिकमारोपितमित्यर्थः । परममूले **अभावादिति** । पारमार्थिककर्तृत्वाभावादित्यर्थः । परममूले **आरोप्यप्रमाहितसंस्काराभावे इति** । आरोप्यकर्तृत्वादिविषयकपौर्वकालिकप्रमाजन्यसंस्काराभावे इत्यर्थः। परममूले **तस्येति** । आरोप्यविषयकसंस्कारस्येत्यर्थः। भ्रमप्रमान्यतरजन्यारोप्यविषयकसंस्कारत्वेनारोप्यविषयकसंस्कारस्य हेतुत्वमिति भावः ॥

**न च प्राथमिकारोपे का गतिः कर्तृत्वाद्यध्यासप्रवाहस्यानादित्वात् । तत्त्वंपदवाच्ययोर्विशिष्टयोरैक्यायोग्यत्वेऽपि लक्ष्यस्वरूपयोरैक्यमुपपादितमेव । अत एव तत्प्रतिपादकतत्त्वमस्यादिवाक्यानामखण्डार्थत्वं सोऽयमित्यादिवाक्यवत् । न च कार्य्यपराणामेव प्रामाण्यम्, चैत्र पुत्रस्ते जातः इत्यादौ सिद्धेऽपि संगतिग्रहात् ॥**

**शि० म०**–संप्रदायमतेनाह–**लक्ष्यस्वरूपयोरिति** । नन्वस्तु वाक्ये लक्ष्यस्वरूपमात्रपरत्वं ततः किमित्यत आह–**अत एवेति** । ननु वेदान्ता न ब्रह्मपराः, पदानां कार्य्यान्वितशक्त्यनुरोधेन कार्य्यपरत्वेनैव प्रामाण्यावधारणात् । तथा चादित्यो ब्रह्मेतिवत्तत्त्वमसीत्यभेदोपासनापरमित्याशङ्क्य सिद्धेऽपि संगतिग्रहस्योक्तत्वादिति दूषयति–**न चेति** ॥

**म० प्र०**–वाक्ये=तत्त्वमस्यादिवाक्ये, ततः=तत्त्वमस्यादिवाक्यानां लक्ष्यस्वरूपमात्रपरत्वात्, किं=किं फलम् । परममूले **अत एवेति** । तत्त्वंपदलक्ष्यस्वरूपैक्यस्योपपादितत्वादेवेत्यर्थः । कार्य्यान्वितशक्त्यनुरोधेन=कृतिसाध्यविशिष्टे शक्त्यभ्युपगमेन, सिद्धेऽपि=प्रयोगकाले कृत्यसाध्येऽपि पुत्रादौ, संगतिग्रहस्य=पुत्रादिपदशक्तिग्रहस्य ॥

**एवं सर्वप्रमाणाविरुद्धं श्रुतिस्मृतीतिहासपुराणप्रतिपाद्यं जीवपरैक्यं वेदान्तशास्त्रस्य विषय इति सिद्धम् ॥**

**इति श्रीवेदान्तपरिभाषायां विषयपरिच्छेदः ॥**

**शि० म०**–किंच नाभेदोपासनाऽत्र विधेया उपासीतेत्यश्रवणात् । तत्त्वमस्यन्ते तद्धास्य विजज्ञाविति ब्रह्मविद्याया एव श्रवणाच्च । 'तत्त्वमस्यादिवाक्यं नोपासनापरम् । "अभयं वै जनक प्राप्तोऽसि तदात्मानमेवावेत् अहं ब्रह्मास्मि" इति स्पष्टार्थश्रुत्यन्तरानुसारेणास्पष्टार्थश्रुतेरपि व्याख्यानौचित्यात् । अत एव तं चतुर्धा करोतीति वचनं स्पष्टार्थकवचनान्तरानुसारादाग्नेयविषयं व्याख्यातम् । न चाहं ब्रह्मेत्यत्राप्यभेदोपासनमिति युक्तमवेदिति विरोधात् । "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥" इत्येकत्वज्ञानस्यैव श्रुतौ पुमर्थत्वप्रतिपादनाच्च ।

" जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते । तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धात्प्रमुच्यते ॥ मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥" इति कैवल्योपनिषद्वचनाच्च । "यथा नदी नदो लोके सागरेणैकतामियात् । तद्वदात्माक्षरेणासौ निष्कलेनैकतामियात् ॥" इति कूर्मपुराणवचनाच्च । " यदस्थूलमनण्वाख्यमप्रमेयमवर्णकम् । तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥" इति विश्वामित्रस्मृतेश्च । " अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् । इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ॥" इति वररुचिवचनाच्च । " अत्रात्मव्यतिरेकेण द्वितीयं यो न पश्यति । ब्रह्मभूतः स एवेह दक्षपक्ष उदाहृतः ॥" इति दक्षस्मृतेश्च । "सर्वभूतान्तरस्थाय नित्यशुद्धचिदात्मने । प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥" इति वसिष्ठवचनाच्च । अन्यथा तत्त्वमस्यादिवाक्यस्य भेदग्राहिप्रमाणविरोधेनाभेदे प्रामाण्याभावे श्रुतिपुराणवचनानि बाध्येरन् । तस्मात्सिद्धं तत्त्वमस्यादिवाक्यस्य जीवपरैक्यपरत्वम्। तदेतत्सर्वमभिप्रेत्य उपसंहरति–**एवमिति**॥

इति श्रीधर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते वेदान्तशिखामणौ विषयपरिच्छेदः ॥ ७ ॥

म० प्र०–अत्र=तत्त्वमसिवाक्यादौ । **तद्धास्येति** । अस्य=पितुर्वाक्यात्तद्ब्रह्म, ह प्रसिद्धं विजज्ञौ=श्वेतकेतुर्विज्ञातवानित्यर्थः । अभयम्=भयशून्यं ब्रह्म । **तदात्मानमेवेति** । तदविद्याविशिष्टतयाऽधिकारित्वेनावस्थितं ब्रह्म नासि त्वं संसारी किंतु सकलसंसारधर्मरहितं सच्चिदानन्दैकरसं ब्रह्मैवासीति दयालुना आचार्य्येण बोधितमात्मानमेवावेदित्यर्थः । अत एव=स्पष्टार्थकश्रुत्यन्तरानुसारेणास्पष्टार्थकश्रुतिव्याख्यानस्योचितत्वादेव, तम्=पुरोडाशम् । **स्पष्टार्थकवचनान्तरेति** । आग्नेयं पुरोडाशं चतुर्धा करोतीति वचनान्तरेत्यर्थः । नदी=गङ्गायमुनादिः, नदः=सिन्ध्वादिः, दक्षपक्षः=स्वपक्षः । उदाहृतः=मया कथितः । अन्यथा=अहं ब्रह्मास्मीत्यादिवाक्यानामभेदोपासनापरत्वस्वीकारे । अन्यथेत्यस्यैव वा विवरणं तत्त्वमस्यादिवाक्यस्येत्यादि ॥

इति श्रीमद्ब्रह्मविज्ञानाभिधगुरुप्रसादलब्धोदासीनामरदासशब्दवाच्याविर्भूतायां वेदान्तपरिभाषाख्यग्रन्थस्य शिखामण्याख्यटीकायाश्च मणिप्रभाख्यायां व्याख्यायां विषयपरिच्छेदः ॥ ७ ॥

---

# अथ प्रयोजनपरिच्छेदः ॥ ८ ॥



**इदानीं प्रयोजनं निरूप्यते। यदवगतं सत् स्ववृत्तितयेष्यते तत्प्रयोजनम्। तच्च द्विविधं मुख्यं गौणं चेति। तत्र सुख-दुःखाभावौ मुख्ये प्रयोजने। तदन्यतरसाधनं गौणं प्रयोजनम्। सुखं च द्विविधं सातिशयं निरतिशयं चेति ॥**

**शि० म०—यदवगतमिति** । यद्येन रूपेण स्ववृत्तितया अवगतं तथैवेष्यते तेन रूपेण च प्रयोजनमित्यर्थः। अनागतसुखादिकं च स्ववृत्तितया सुखत्वेनानुमानात् ज्ञातं तेन रूपेणेष्यते सुखं मे भूयादिति । पशुपुत्रादिकं त्विष्टसाधनत्वेनावगतमिच्छाविषय इति तेन रूपेण प्रयोजनम्। तथा च सुखादेर्गुणत्वादिनाऽवगतौ सुखत्वादिना स्वात्मनि बाधदशायां चेच्छाविरहेऽपि न दोषः । न च पशुपुत्रादीनां कथं स्ववृत्तित्वं परंपरासंबन्धेन स्ववृत्तित्वेऽतिप्रसङ्गादिति वाच्यम् । स्वलक्षणसंबन्धेन स्ववृत्तित्वाभ्युपगमात्। स्वरूपसंबन्धस्यापि साक्षात्संबन्धत्वात् । द्वैविध्यमेवाह—**मुख्यमिति** । यत्स्वासाधारणरूपेणावगतं सदिष्यमाणं तन्मुख्यं प्रयोजनमतिरिक्तधर्मज्ञानापेक्षमिष्यमाणं गौणमित्यर्थः। तदुभयं क्रमेणोदाहरति—**तत्रेति** । सिद्धान्ते च सुखस्य द्वैविध्यमित्याह—**सुखं चेति** ॥

म० प्र०—संसारदावानलदग्धचेता यं शान्तभूतं शरणं गतोऽस्मिन्।
शान्तिं समाप्नोति परां नरोऽयं स मे धवः श्रीगुरुनानकोऽस्तु ॥ १ ॥

**यद्येन रूपेणेति** । यत्=सुखादिकम्, येन रूपेण=सुखत्वादिरूपेण, स्ववृत्तितयाऽवगतम्=ममेदं सुखमिति स्वसंबन्धितया ज्ञातं सत्, तथैवेष्यते=सुखादिकं मे भूयादिति सुखत्वादिरूपेण स्ववृत्तितयेच्छाविषयीक्रियते, तेन रूपेण=सुखत्वादिरूपेण सुखादिकं प्रयोजनमित्यर्थः। यत्स्ववृत्तितयेष्यते इत्युक्ते हि राजसुखराजदारादेरपि ममेदं भूयादिति स्ववृत्तितयेच्छाविषयत्वेन राजसुखादावतिव्याप्तिः स्यात्तद्वारणाय **स्ववृत्तितयाऽवगतमिति** । दुःखादावतिव्याप्तिवारणाय **स्ववृत्तितयेष्यते इति** । लक्ष्ये लक्षणं योजयति—**अनागतेति** । **स्ववृत्तितयेति** । अनागतसुखादिकं स्ववृत्ति विलक्षणसुखत्वादिमत्त्वादेतत्कालिकसुखादिवदिति सुखत्वादिहेतुना स्ववृत्तितयाऽवगतमनागतसुखादिकं तेन रूपेण सुखादिकं मे भूयादिति सुखत्वादिरूपेणेष्यते इति सुखत्वादिरूपेणानागतसुखादिकं प्रयोजनमित्यर्थः। येन रूपेण तथैवेष्यते इति शब्दयोः फलमाह—**तथा चेति** । न दोषः=अव्याप्तिरूपदोषो नास्ति, परंपरासंबन्धेन=स्वसंयुक्तसंयुक्तसंयुक्तत्वादिरूपपरंपरासंबन्धेन। स्वं पुत्रादिकं तत्संयुक्तमाकाशादिकं तत्संयुक्तं जीवदेहादिकं तत्संयुक्तत्वं जीवात्मनीति संबन्धवाक्यार्थः। अतिप्रसङ्गात्=रासभपुरीषादेरपि जीवात्मवृ-

वृत्तित्वप्रसङ्गात्, स्वलक्षणसंबन्धेन=संबन्धिद्वयसत्त्वरूपस्वरूपसंबन्धेन। **यदिति**। सुखादिक-मित्यर्थः। स्वासाधारणरूपेण=सुखाद्यसाधारणसुखत्वादिरूपेण। न च दरिद्राणां राजसुखं मुख्य-प्रयोजनं स्यात्तस्य सुखाद्यसाधारणसुखत्वादिरूपेणावगतत्वे सतीष्यमाणत्वादिति वाच्यम्। स्ववृत्ति-तयेत्यस्यापि निवेशादिति। अवगतं=प्रमाज्ञानविषयः। अतिरिक्तधर्मज्ञानापेक्षम्=यागादिवृत्तियाग-त्वाद्यतिरिक्तेष्टसाधनत्वादिरूपधर्मज्ञानापेक्षम्। मुख्यप्रयोजनत्वमन्येच्छानधीनेच्छाविषयत्वम्, अन्येच्छाधीनेच्छाविषयत्वं गौणप्रयोजनत्वमिति मुख्यप्रयोजनगौणप्रयोजनयोर्लक्षणान्तरं ग्रन्था-न्तरीयमपि द्रष्टव्यमिति ॥

**तत्र सातिशयं सुखं विषयानुषङ्गजनितान्तःकरणवृत्तितारत-म्यकृतानन्दलेशाविर्भावविशेषः। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः। निरतिशयं सुखं च ब्रह्मैव। "आनन्दो ब्रह्मेति व्यजानात्, विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतेः। आनन्दात्मकब्रह्मावाप्तिश्च मोक्षः शोकनिवृत्तिश्च ॥**

**शि० म०**—तत्र जन्यसुखं सातिशयमित्याह—**तत्र सातिशयमिति**। यथा काचिदन्तःकरणवृत्तिः सत्त्वगुणजन्यतया चैतन्यगतज्ञानांशप्रतिबिम्बग्राहित्वेन ज्ञानं तथा तादृशी वृत्तिस्तद्गतानन्दलेशप्रतिबिम्बग्राहकत्वात्सुखमिति व्यपदिश्यते। तस्यां सुखलक्षणायां वृत्तावन्वयव्यतिरेकाभ्यां स्रक्चन्दनवनितादिविषयसंबन्धो हेतुः। अत एव तत्तारतम्यात्सुखतारतम्यमत एव चास्मदादिसुखाद्राजसुखमुत्कृष्टं तस्मात्सार्वभौमसुखमुत्कृष्टतरं ततश्चेन्द्रादिसुखमुत्कृष्टतममिति। ननु यद्यानन्दप्र-तिबिम्बग्राहित्वादन्तःकरणवृत्तिरेव सुखं तदा सन्निहितपरिपूर्णानन्दस्यापि ग्रहण-संभवेन सर्वमपि सुखमेकरूपं स्यादिति चेन्न। परिपूर्णज्ञानवदखण्डानन्दस्य मूला-विद्यावृतत्वेनेदानीं तद्भानायोगात्। नन्वस्तु निरतिशयानन्दात्मकं ब्रह्म ततः किमि-त्यत आह—**आनन्दात्मकेति**। ननु न ब्रह्मावाप्तिर्मोक्षस्तस्याः संसारदशायामपि भावात्। निवृत्तशोकः परिपूर्णानन्दो न प्रागिति चेत्तर्ह्यावश्यकत्वात्सैव मुक्ति-रित्यतस्तथैव पक्षान्तरमाह—**शोकनिवृत्तिरिति**। अनर्थहेत्वविद्यानिवृत्तिरित्यर्थः ॥

**म० प्र०**—तत्र=सातिशयनिरतिशयसुखयोर्मध्ये। **ज्ञानांशेति**=अंशांशिभावकल्पनया चिदंशेत्यर्थः। अन्वयव्यतिरेकाभ्यां=स्रक्चन्दनवनितादिविषयसंबन्धसत्त्वे सुखलक्षणवृत्तिसत्त्वं स्रक्चन्दनवनितादिविषयसंबन्धाभावे सुखलक्षणवृत्त्यभाव इत्यन्वयव्यतिरेकाभ्याम्। अत एव=सुखलक्षणवृत्तिं प्रति स्रक्चन्दनवनितादिविषयसंबन्धस्य हेतुत्वादेव, तत्तारतम्यात्=स्रगादिविषय-संबन्धस्य न्यूनाधिक्यात्, अत एव=सुखस्य न्यूनाधिक्यसंभवादेव, तस्मात्=राजसुखात्, ततश्च=सार्वभौमसुखाच्च, एकरूपम्=एकरसं न्यूनाधिक्यरहितमिति यावत्, परिपूर्णज्ञानवत्=परिपूर्णज्ञानस्य मूलाज्ञानावृतत्वेन यथा भानाभावस्तद्वत्, इदानीं=संसारदशायाम्। **तद्भानेति**=

अखण्डानन्दभानेत्यर्थः । ततः=ब्रह्मणो निरतिशयानन्दात्मकत्वात्, किं सिध्यतीति शेषः। तस्याः=ब्रह्मावाप्तेः । **न प्रागिति** । ब्रह्मज्ञानात्पूर्वं न भवतीत्यर्थः । आवश्यकत्वात्=शोकनिवृत्तेरावश्यकत्वात्, सैव=शोकनिवृत्तिरेव, तथैव=पूर्वपक्ष्युक्तप्रकारेणैव ॥

**ब्रह्मविद्ब्रह्मैव भवति तरति शोकमात्मविदित्यादिश्रुतेः। न तु लोकान्तरावाप्तिः तज्जन्यवैषयिकानन्दो वा मोक्षः। तस्य कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः ॥**

**शि० म०-**क्रमेण प्रमाणमाह-**ब्रह्मेति** । तरति शोकमित्यत्र शोकहेतुत्वात्तत्पदेनाविद्योक्ता। तरणं चात्र तरति ब्रह्महत्यामितिवन्निवृत्तिरूपं विवक्षितम्, न तु सेतुं तरतीतिवत् शोकस्य मूर्त्तत्वाभावादिति ध्येयम् । लोकान्तरप्राप्तिरेव मुक्तिरिति तार्किकाः कल्पयन्ति । तान्प्रत्याह-**न त्विति** । लोकान्तरावाप्तेः सुखदुःखाभावान्यतरत्वाभावात् स्वतः प्रयोजनत्वाभावादिति भावः । ननु वैकुण्ठादिलोकविशेषं गतानामानन्दाविर्भावो भविष्यतीति चेन्न । स्वरूपानन्दाभिव्यक्त्यभ्युपगमे लोकान्तरगमनवैयर्थ्यात्। ननु न लोकान्तरावाप्तिः स्वतो मोक्षः किंतु तत्रत्यवैषयिकानन्दद्वारा। स च तत्रैवेति न लोकान्तरगमनवैयर्थ्यमिति चेन्न। किं सैव मुक्तिः उत तत्रत्यवैषयिकानन्दः । नाद्यः, आवश्यकत्वान्मुख्यप्रयोजनत्वाच्च तस्यैव मुक्तित्वौचित्यात् । अन्यथा मुक्तेः स्वतः पुरुषार्थत्वाभावप्रसङ्गात् । न द्वितीय इत्याह-**तज्जन्येति** । वैषयिकानन्दस्य मुक्तित्वे तस्य स्वर्गादिवत्सातिशयत्वापत्तौ मोक्षस्य परमपुरुषार्थत्वाभावप्रसङ्गात् । किंच वैषयिकानन्दस्य मुक्तित्वे मुक्तिदशायां भेदापत्तौ "यत्र त्वस्य सर्वमात्मैवाभूत्।" "यावन्मोक्षं तु भेदः स्याज्जीवस्य च परस्य च। ततः परं न भेदोऽस्ति भेदहेतोरभावतः॥ विभेदजनके ज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥" इत्यादिवचनविरोधापत्तिः। किंच मुक्तिदशायां शरीराभावेन वैषयिकानन्दानुपपत्तिः तस्य शरीरजन्यत्वनियमात्। अत एव स्वर्गशरीरकल्पनम्। न चात्रापि तत्कल्प्यत इति युक्तम्, अशरीरं वाव सन्तमित्यादिश्रुतिविरोधात्। किंच न ब्रह्मविदां लोकान्तरगमनमस्ति "न तस्य प्राणा उत्क्रामन्ति। अत्रैव समवनीयन्ते" इति श्रुतेः। न चार्चिरादिना गमनं श्रूयते इति, तद्वचनस्य सगुणोपासकविषयत्वेन ब्रह्मविद्गमनस्यानभिधानात् । अत एवाब्रह्मविदामपि पञ्चाग्निविद्योपासकानामर्चिरादिना गमनम्। न चैवं ब्रह्मविदां तदनभ्युपगतावेतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्त इत्यर्चिरादिना गतानामपुनरावृत्तिश्रवणं विरुध्येतेति वाच्यम्। सगुणोपासकानामर्चिरादिना गतानामश्व इव रोमाणि विधूय पापमित्यादिश्रुत्यवगतनिरस्तसमस्तदोषाणां ब्रह्मलोक एव संपादितश्रवणादिसाधनानां तत्रैव ब्रह्मसाक्षात्कार-

संपादनेन ब्रह्मणा सह परममुक्त्यभ्युपगमेनाविरोधात्। किंच लोकस्य प्रलयेऽप्य-विनाशे "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतिविरोधः। विनाशे मुक्तिशास्त्र-वैयर्थ्यम्। अपिच वैकुण्ठादि प्राप्तानां मुक्तत्वेन जयविजयादीनां भगवद्द्वारिकाणां मुनिशापादिना राक्षसादिदेहप्राप्तिर्न स्यात्। न चार्चिरादिगमनस्य परंपरया अपुन-रावृत्तिहेतुत्वेन जयविजयादयस्तव मतेऽपि न निवर्त्तेरन् इति वाच्यम्। न हि जयविजयावर्चिरादिना ब्रह्मलोकं गतौ किंतु वैकुण्ठाख्यं लोकान्तरम्। न हि तस्यैव ब्रह्मलोकत्वं प्रजापतेः सभां वेश्म प्रतिपद्यते इति वाक्यशेषेण कार्य्यब्रह्मा-धिष्ठितदेशविशेषस्यैव ब्रह्मलोकपदेनाभिधानात्। अपिच "ब्रह्मविद्ब्रह्मैव भवति, ब्रह्मैव सन् ब्रह्माप्येति" इत्यादिश्रुतयो वैषयिकानन्दस्य मोक्षत्वे न सामञ्जस्येनो-पपद्येरन्। अत एव "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति स्पष्टमेव स्वस्य प्राप्यत्वं भगवतैवोक्तम्। "एकाकिनः सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः॥" इति विष्णुपुराणे परमस्थानपदेन ब्रह्मस्वरूपमेवोक्तम्। एतेन तान्त्रिकाणां मुक्तौ तारतम्यकल्पनमपास्तम्। ब्रह्मा-त्मैक्ये अज्ञाननिवृत्तौ वा विशेषाभावात्। तस्मान्निरस्तसमस्तक्लेशमभिव्यक्तपरि-पूर्णानन्दमात्माभिन्नं ब्रह्मैव मोक्ष इति श्रुतिस्मृतीतिहासपुराणन्यायकोविदैरभ्युपग-न्तव्यमिति संक्षेपः॥

म० प्र०—तत्पदेन=शोकपदेन, अत्र=तरति शोकमिति श्रुतौ, तार्किकाः=तर्ककुशला मीमांसकाः। लोकान्तरावाप्तेः स्वतः प्रयोजनत्वाभावादित्यन्वयः। स्वतः=स्वरूपेण, स्वरूपानन्दा-भिव्यक्त्यभ्युपगमे=स्वरूपाभिन्नानन्दाभिव्यक्तेर्मोक्षपदार्थत्वाभ्युपगमे। **तत्रत्येति**=लोकान्तरीये-त्यर्थः। स च=विलक्षणवैषयिकानन्दस्तु, आवश्यकत्वात्=लोकान्तरे आनन्दस्यावश्यमभ्युपग-मनीयत्वात्, तस्यैव=अवाप्तानन्दस्यैव, अन्यथा=लोकान्तरावाप्तेर्मुक्तित्वाभ्युपगमे। यावन्मोक्षम्=मोक्षात्पूर्वम्। भेदः=औपाधिकभेदः, ततः परम्=ऐक्यबोधादुत्तरम्, तस्य=वैषयिकानन्दस्य, अत्रापि=मुक्तावपि, तत्=शरीरम्। **न तस्येति**। तस्य=विदुषः, प्राणाः=वागादयो नोत्क्रा-मन्ति=देहाद्बहिर्न गच्छन्ति। ननु तर्ह्ययं मृत इति व्यवहारो न स्यादित्याशङ्क्यार्तभागप्रकरणस्थ-वाक्यमाह—**अत्रैवेति**। परे ब्रह्मण्येकतां गते विदुष्येव समवनीयन्ते लीयन्ते इत्यर्थः। तद्वचनस्य=तेऽर्चिषमभिसंभवन्तीत्यादेरर्चिरादिमार्गेण लोकान्तरगमनप्रतिपादकवाक्यस्य, अत एव=ब्रह्मवि-ल्लोकान्तरगमनानभिधानादेव, अब्रह्मविदामपि=शुद्धब्रह्मविषयकबोधशून्यानामेव। तदनभ्युप-गतौ=अर्चिरादिमार्गेण गमनानभ्युपगतौ। एतेन=अर्चिरादिमार्गेण, प्रतिपद्यमानाः=ब्रह्मलोकं गताः, तत्रैव=ब्रह्मलोके एव, मुक्तिशास्त्रवैयर्थ्यं=न स पुनरावर्त्तते इत्यादिमुक्तिशास्त्रवैयर्थ्यम्, तस्यैव=वैकुण्ठस्यैव। **कार्य्यब्रह्माधिष्ठितेति**=कार्य्यब्रह्मस्वामिकेत्यर्थः। अत एव=ब्रह्मा-वाप्तेर्मोक्षत्वादेव, सूरयः=ब्रह्मात्मैक्यविषयकबोधवन्तः, एतेन=वक्ष्यमाणहेतुना॥

**ननु त्वन्मतेऽप्यानन्दावाप्तेरनर्थनिवृत्तेश्च सादित्वे तुल्यदोषः, अनादित्वे मोक्षमुद्दिश्य श्रवणादौ प्रवृत्त्यनुपपत्तिरिति चेन्न। सिद्धस्यैव ब्रह्मरूपस्य मोक्षस्यासिद्धत्वभ्रमेण तत्साधने प्रवृत्त्युपपत्तेः। अनर्थनिवृत्तिरप्यधिष्ठानभूतब्रह्मस्वरूपतया सिद्धैव ॥**

शि० म०—नन्वानन्दावाप्तिरनर्थहेत्वविद्यानिवृत्तिर्वा मोक्ष इत्युपगच्छतस्तव मतेऽपि तदुभयं सादि अनादि वा आद्ये कृतकत्वेनानित्यत्वापत्तावपुनरावृत्तिश्रुतिविरोधः। द्वितीये मोक्षस्यासिद्धत्वगर्भसाध्यत्वाभावेन तत्साधनश्रवणादौ प्रवृत्तिर्न स्यादिति तान्त्रिकः परिनोदयति—नन्विति। उभयविधस्यापि मोक्षस्य ब्रह्मरूपतयाऽनादित्वेऽपि न प्रवृत्त्यनुपपत्तिरित्याह—**सिद्धस्यैवेति**। **असिद्धत्वभ्रमेणेति**। लाघवेनेष्टसाधनताज्ञानस्य भ्रमप्रमासाधारणतत्साधनताज्ञानत्वेनैव प्रवर्त्तकत्वमिति भावः। अनर्थनिवृत्तिरेव मुक्तिः सा च ब्रह्मस्वरूपातिरिक्ता तत्त्वज्ञानात्प्रागसिद्धैव अद्वैतश्रुतेश्च भावाद्वैतपरत्वान्न तद्विरोध इति ये मन्यन्ते तेषां मतं दूषयति—**अनर्थनिवृत्तिरपीति**। आनन्दलक्षणमुक्तिवदनर्थनिवृत्तिरपि ब्रह्मस्वरूपैवान्यथा अद्वैतश्रुतिविरोधात्। भावाद्वैतवादस्य च प्रक्रियामात्रत्वेनायुक्तत्वादिति भावः ॥

म० प्र०—तदुभयम्=आनन्दावाप्तिरनर्थहेत्वविद्यानिवृत्तिरित्युभयम्, असिद्धत्वगर्भसाध्यत्वाभावेन=सिद्धत्वात्यन्ताभावविशिष्टत्वे सति साधनैरभिव्यक्तत्वरूपसाध्यत्वाभावेन। असिद्धत्वविशेषणानादाने तु सिद्धेऽपि वह्न्यादौ धूमादिसाधनैरभिव्यक्तत्ववन्मोक्षरूपब्रह्मण्यपि श्रवणादिसाधनैरभिव्यक्तत्वरूपसाध्यत्वसंभवेन ज्ञानद्वारा मोक्षसाधनश्रवणादौ प्रवृत्त्यनापादनमयुक्तं स्यादतः **असिद्धत्वगर्भेति** विशेषणं दत्तमिति। **तत्साधनेति**=ज्ञानद्वारा मोक्षसाधनेत्यर्थः। तान्त्रिकः=शास्त्रकुशलः, उभयविधस्यापि=आनन्दावाप्त्यनर्थहेत्वविद्यानिवृत्तिरूपस्यापि। लाघवेन=प्रवृत्तित्वावच्छिन्नप्रवृत्तिं प्रति प्रमेष्टसाधनताज्ञानत्वेन प्रमेष्टसाधनताज्ञानस्य कारणत्वापेक्षया प्रवृत्तित्वावच्छिन्नप्रवृत्तिं प्रतीष्टसाधनताज्ञानत्वेनेष्टसाधताज्ञानस्य हेतुत्वे लाघवेन। भावाद्वैतपरत्वात्=अभावात्मकद्वितीयसत्यपदार्थे सत्यपि भावात्मकद्वितीयसत्यपदार्थो नास्तीत्यर्थपरत्वात्। अन्यथा=अनर्थनिवृत्तिरूपमुक्तेर्ब्रह्मरूपत्वानङ्गीकारे। **अद्वैतश्रुतीति**=एकमेवाद्वितीयमित्याद्यद्वैतश्रुतीत्यर्थः ॥

**लोकेऽपि प्राप्तप्राप्तिपरिहृतपरिहारयोः प्रयोजनत्वं दृष्टमेव। यथा हस्तगतविस्मृतसुवर्णादौ तव हस्ते सुवर्णमित्याप्तोपदेशादप्राप्तमिव प्राप्नोति। यथा वा वलयितचरणायां स्रजि सर्पत्वभ्रमवतः पुंसो नायं सर्प इत्याप्तवाक्यात्परिहृतस्यैव सर्पस्य परिहारः प्रसिद्धः। एवं प्राप्तस्याप्यानन्दस्य प्राप्तिः परिहृतस्याप्यनर्थस्य निवृत्तिर्मोक्षः प्रयोजनम्। स च ज्ञानैक-**

साध्यः। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः॥

शि० म०—नन्वस्त्वसाध्यत्वेऽपि मुक्तेस्तत्साधनत्वभ्रमात्कथंचिच्छ्रवणादौ प्रवृत्तिस्तथापि कथं पुरुषार्थत्वं साध्यस्यैव लोके पुरुषार्थत्वदर्शनेन साध्यत्वस्य पुरुषार्थत्वप्रयोजकत्वादित्याशङ्क्य किमेतत्पुरुषार्थत्वस्य व्याप्यं व्यापकं वा। नाद्यः, व्याप्याभावेऽपि व्यापकसत्त्वविरोधाभावात्। दुःखादौ व्यभिचाराच्च। न द्वितीयः, प्राप्तेष्टपरिहृतानिष्टप्राप्तिपरिहारयोरसाध्यत्वेन व्यभिचारादित्याह—लोकेऽपीति। नन्वसिद्धत्वभ्रमाच्छ्रवणादौ प्रवृत्तस्य शब्दजन्यपरोक्षसिद्धत्वज्ञानमात्रात्कथं तद्भ्रमनिवृत्तिः। कथं वा तन्मूलाविद्यानिवृत्तिः। तदुभयस्य विरोधिसाक्षात्कारसाध्यत्वादिति चेत् न। तत्त्वमस्यादिवाक्यजन्यज्ञानस्यापरोक्षत्वाभ्युपगमात्। अत एव तदनुरूपदृष्टान्तमाह—यथेति। "हिरण्यदा अमृतत्वं भजन्ते" इत्यादिश्रुत्या मोक्षस्य कर्मसाध्यत्वावगमात् ज्ञानकर्मणोः समुच्चय इति ये वदन्ति तान्निराचष्टे—स चेति। नान्य इति। तथा च मुक्तावुपायान्तरप्रतिषेधेन हिरण्यदा अमृतत्वमित्यादेः प्रलयपर्य्यन्तस्थायिस्वर्गादिफलाभिप्रायत्वान्न दर्शपूर्णमासवज्ज्ञानकर्मणोः फले समुच्चयः॥

म० प्र०—तत्साधनत्वभ्रमात्=श्रवणादौ मुक्तिसाधनत्वभ्रमात्। प्रयोजकत्वात्=ज्ञापकत्वात्। एतत्=साध्यत्वम्। व्याप्यं=यत्र साध्यत्वं तत्र पुरुषार्थत्वमिति व्याप्यम्, । व्यापकं वा=यत्र पुरुषार्थत्वं तत्र जन्यत्वमिति व्यापकं वा। दुःखादौ व्यभिचाराच्च=दुःखादौ साध्यत्वसत्त्वेऽपि पुरुषार्थत्वाभावेन व्यापकाभाववद्वृत्तित्वरूपव्यभिचाराच्च। प्राप्तेष्टपरिहृतानिष्टप्राप्तिपरिहारयोः=प्राप्तेष्टप्राप्तिपरिहृतानिष्टपरिहारयोः। ननु मोक्षेऽसिद्धत्वभ्रमाच्छ्रवणादौ प्रवृत्तिसत्त्वेऽपि श्रवणजन्यपरोक्षसिद्धत्वज्ञानमात्रात्कथमपरोक्षासिद्धत्वभ्रमतदुपादानाविद्ययोर्निवृत्तिरिति शङ्कते—नन्विति। तद्भ्रमेति=असिद्धत्वभ्रमेत्यर्थः। तन्मूलेति=असिद्धत्वभ्रममूलेत्यर्थः। तदुभयस्य=असिद्धत्वभ्रमनिवृत्त्यसिद्धत्वभ्रमोपादानाविद्यानिवृत्तिरूपोभयस्य। अत एव=तत्त्वमस्यादिवाक्यजन्यज्ञानस्यापरोक्षत्वाभ्युपगमादेव। तदनुरूपेति=प्राप्तेष्टप्राप्तिपरिहृतानिष्टपरिहाररूपोक्तार्थानुकूलेत्यर्थः। वलयितचरणायामिति। वलयितौ=वेष्टितौ चरणौ यया सा तथा तस्यापरममूले। मित्यर्थः, तथा च=मोक्षस्य ज्ञानैकफलत्वे, स्थले=अधिकरणे॥

अज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वनियमाच्च। तच्च ज्ञानं ब्रह्मात्मैक्यगोचरम् "अभयं वै जनक प्राप्तोऽसि तदात्मानमेवावेदहं ब्रह्मास्मि" इति श्रुतेश्च। "तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्" इति नारदीयवचनाच्च। तच्च ज्ञानमपरोक्षरूपं परोक्षत्वेऽपरोक्षभ्रमनिवर्तकत्वानुपपत्तेः। तच्चापरोक्षज्ञानं तत्त्व-

**मस्यादिवाक्यादिति केचित्। मननिदिध्यासनसंस्कृतान्तःकरणादेवेत्यपरे। तत्र पूर्वाचार्य्याणामयमाशयः॥**

**शि० म०–**किंच मोक्षस्य कर्मजन्यापूर्वसाध्यत्वे स्वर्गादिवत्सातिशयता क्षयिष्णुता शरीरसंबन्धश्च स्यात्। अपि चानन्दाविर्भावो मोक्षः। आविर्भावश्चाविद्यानिवृत्तिः। सा च शुक्तिरूप्यादिस्थले विरोधिसाक्षात्कारमात्रसाध्यत्वावधारणान्न कर्मसाध्येत्याह–**अज्ञाननिवृत्तेरिति**। नन्वेवमपि जीवपरैक्यज्ञानं न मुक्तिहेतुर्मानाभावात्तरति शोकमात्मविदित्यादेश्च भेदज्ञानपक्षेऽप्युपपत्तेरित्यत आह–**तच्चेति**। ननु वाक्यजन्यज्ञानं नानर्थनिवर्तकं तस्य परोक्षत्वनियमादित्यत आह–**तच्चेति**। तत्त्वमस्यादिवाक्यजन्यं चाभेदज्ञानमपरोक्षरूपमेवेति तन्निवर्त्तकमित्यर्थः। ननु परोक्षजनकत्वस्वभावाद्वाक्यात्कथमपरोक्षधीरित्याशङ्क्याह–**तच्चेति। तत्त्वमस्यादिवाक्यादिति**। साक्षादिति शेषः। तत्त्वमस्यादिवाक्यावगते ब्रह्मणि मनननिदिध्यासनजनितासंभावनानिवृत्तिसहकृतादन्तःकरणात् प्रत्यक्षप्रमाणादेवापरोक्षज्ञानमुत्पद्यते न तु वाक्यादित्याचार्य्यवाचस्पतिमिश्रा व्याचक्षते तन्मतमाह–**मननेति**। ननु करणविशेषायत्तं कार्य्यं न हि कुटजबीजाद्यवाङ्कुरोत्पत्तिर्दृष्टपूर्वेत्याशङ्क्य प्रत्यक्षपरिच्छेदोक्तमर्थं स्मारयति–**तत्र पूर्वाचार्य्याणामिति॥**

**म० प्र०–साध्यत्वेति**=अविद्यानिवृत्तेः साध्यत्वेत्यर्थः। एवमपि=अज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वनियमेऽपि, तस्य=वाक्यजन्यज्ञानस्य, तन्निवर्तकम्=अज्ञाननिवर्तकम्। **परोक्षजनकत्वेति**=परोक्षज्ञानजनकत्वेत्यर्थः। **साक्षादिति**। तत्त्वमस्यादिवाक्यादित्यस्यादौ साक्षादिति पदस्य शेष इत्यर्थः। अवगते=परोक्षावगतिविषये, करणविशेषायत्तं=सामग्रीविशेषाधीनम्। **कुटजबीजेति**। "कुटजः पाण्डुरद्रुमः" इति त्रिकाण्डशेषात् "कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि" इति मेदिनीकोशाच्च कुटजशब्दो वृक्षविशेषवाचकस्तस्य बीजादित्यर्थः॥

**संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबन्धनं किंतु प्रमेयविशेषनिबन्धनमित्युपपादितम्। तथा च ब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्दजन्यं ज्ञानमपि अपरोक्षम्। अत एव प्रतर्दनाधिकरणे प्रतर्दनं प्रति "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्व" इतीन्द्रप्रोक्तवाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति मामुपास्स्वेत्यस्मच्छब्दानुपपत्तिमाशङ्क्य तदुत्तरत्वेन प्रवृत्ते "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यत्र सूत्रे शास्त्रीया दृष्टिः शास्त्रदृष्टिरिति तत्त्वमस्यादिवाक्यजन्यमहं ब्रह्मेति ज्ञानं शास्त्रदृष्टिशब्देनोक्तमिति॥**

शि० म०—शब्दप्रमाणकं च ज्ञानमपरोक्षमित्यत्र शास्त्रदृष्टिसूत्रमुपोद्बलयति—अत एवेति। यतो वाक्यजन्यज्ञानमपरोक्षमतः "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यत्र शास्त्रीया दृष्टिरिति व्युत्पत्त्या तत्त्वमस्यादिवाक्यजन्यमहं ब्रह्मेति ज्ञानं शास्त्रदृष्टिशब्देनोक्तमिति संबन्धः। ननु यथा ब्रह्मदृष्टिरुत्कर्षादित्यत्र दृष्टिशब्देनोपासना तथाऽत्रापि सैव विवक्षिता परोक्षधीरित्याशङ्क्य प्रतर्दनाधिकरणं संग्रहेण दर्शयति—प्रतर्दनेति। अस्ति हि कौषीतकब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिका "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्याम्नाता। तस्यां श्रूयते। "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्व" इति। तत्र किं प्राणशब्देन वायुरभिधीयते उतेन्द्रः उत जीवः परं ब्रह्म वेति चतुर्विधलिङ्गसंभवाच्चतुर्धा संशये इदं शरीरं परिगृह्य उत्थापयतीति वायुविकारप्राणलिङ्गस्य वक्तारं विजानीयादिति जीवलिङ्गस्य मामेव विजानीयादिति इन्द्रलिङ्गस्यानन्दोऽजरोऽमृत इत्यादिब्रह्मलिङ्गानां च प्राबल्यदौर्बल्यविवेकाभावादनिर्णयः। अथवा जीवब्रह्मप्राणास्त्रय एवात्रोपास्याः। न चैवं वाक्यभेदो दोषमावहति वाक्यार्थावगमपूर्वकत्वात् पदार्थानां चोक्तेन मार्गेण स्वातन्त्र्यात्। तस्मादुपास्यभेदादुपासनात्रैविध्यमिति पूर्वपक्षे प्राप्ते इदमुच्यते। प्राणस्तथाऽनुगमादिति प्राणशब्दवाच्यं ब्रह्म विज्ञेयं पौर्वापर्यालोचनया वाक्यस्य ब्रह्मपरत्वावगमात्। उपक्रमे हि तमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे इति हिततमत्वेन प्राण उपदिश्यते तथोपसंहारेऽपि आनन्दोऽजरोऽमृत इत्यानन्दत्वादिना। न चेदं ब्रह्मणोऽन्यत्संभवति जीवप्राणलिङ्गानां च तदानुगुण्येन नेतव्यत्वात्। अन्यथा भिद्येत वाक्यम्। न हि संभवत्येकत्वे वाक्यभेदः। तदाहुराचार्य्यवाचस्पतिमिश्राः। "तस्मादनन्यथासिद्धब्रह्मलिङ्गानुसारतः। एकवाक्यबलाज्जीवप्राणलिङ्गोपपादनम्" इति। तस्मात्प्राणशब्दवाच्यं ब्रह्मैव। तथा चेन्द्रोक्तप्राणशब्दस्य ब्रह्मपरत्वावगमात् सूत्रस्थदृष्टिशब्दस्य नोपासनापरत्वं किंत्वपरोक्षज्ञानपरत्वम्। अत एवोपक्रमगतं मामेव विजानीहीतिं वचनं संगच्छत इति॥

म० प्र०—शब्दप्रमाणकं=शब्दप्रमाणजन्यम्, उपोद्बलयति=प्रमाणत्वेनोपन्यस्यति। ब्रह्मदृष्टिरुत्कर्षादिति। इदं हि सूत्रं चतुर्थाध्यायस्य प्रथमपादे पञ्चमम्। अस्यार्थः। पूर्वोक्तप्रतीकोपासनेषु ब्रह्मणि मनआदिदृष्टिः कर्त्तव्या उत मनआदौ ब्रह्मदृष्टिरिति संशय निकृष्टे उत्कृष्टबुद्धिः कर्त्तव्येति न्यायग्रहणात् ब्रह्मण्येव मनआदिदृष्टिर्ब्रह्मणः प्राधान्येनोपास्यत्वोपपत्तये कर्तव्येति पूर्वपक्षे प्राप्ते ब्रूमः। मनआदावेव ब्रह्मदृष्टिः कार्य्यो ब्रह्मण उत्कर्षादुत्कृष्टदृष्टौ हि निकृष्टे कृतायां निकृष्टस्योत्कृष्टता भवति यथाऽमात्ये राजबुद्धिः फलाय न तु राज्यमात्यबुद्धिर्न चैवं प्राधान्याभाव इष्टत्वादिति। अत्रापि=शास्त्रदृष्ट्या तूपदेश इति

सूत्रेऽपि, सैव=उपासनादृष्टिरेव, दैवोदासिः=दिवोदासस्यापत्यम्, प्रियं=प्रेमास्पदम्, धाम=गृहं स्वर्गाख्यम्, युद्धेन च=समरयज्ञेन च । पौरुषेण च=पुरुषवृत्तियुद्धकारणोत्साहाख्य-प्रयत्नेन च । चकारावुभयोः कारणत्वसमुच्चयार्थाविति । परममूले **अस्मच्छब्दानुपपत्ति-मिति ।** त्वंपदार्थेन किंचिज्ज्ञत्वादिविशिष्टेन तत्पदार्थस्याभेदो बाधित इति सामित्य-स्मच्छब्दानुपपत्तिमित्यर्थः । वायुविकारप्राणलिङ्गस्येत्यादिषष्ठ्यन्तानां प्राबल्यदौर्बल्यविवेकाभा-वादित्यनेनान्वयः । **त्रय एवेति ।** इन्द्रस्य ब्रह्मणि जीवे वान्तर्भावात्त्रय एवेत्युक्तमिति भावः । अत्र=प्राणोऽस्मि प्रज्ञात्मेत्यादिवाक्ये, एवं=जीवादित्रयाणामुपास्यत्वस्वीकारे, दोषम्=गौरवरूपदोषम् । **वाक्यार्थावगमपूर्वकत्वादिति ।** प्रकृतवाक्यभेदस्येति शेषः । यस्मि-न्वाक्ये वाक्यभेदस्य वाक्यार्थानवगमपूर्वकत्वं तस्मिन्नेव वाक्ये वाक्यभेदस्य गौरवदोषप्रायकत्व-मत्र तु वाक्यभेदस्य वाक्यार्थज्ञानपूर्वकत्वात् न गौरवरूपदोषप्रायकत्वमिति भावः । पदार्थानां=जीवब्रह्मप्राणानाम्, उक्तेन मार्गेण=प्राबल्यदौर्बल्यविवेकाभावरूपमार्गेण, वृणीष्व=विचार्य्य मह्यं देहि । इदं=हिततमत्वानन्दत्वादिकम्, तदानुगुण्येन=ब्रह्मलिङ्गानुसारेण, नेत-व्यत्वात्=व्याख्येयत्वात्, अन्यथा=ब्रह्मलिङ्गानुसारेण जीवप्राणलिङ्गानां व्याख्येयत्वानङ्गीकारे, उपपादनं=निरूपणं भवति । तस्मात्=हिततमत्वादीनां ब्रह्मान्यत्रासंभवात्, अत एव=सूत्रस्थदृष्टि-शब्दस्यापरोक्षज्ञानपरत्वादेव ॥

**अन्येषां त्वेवमाशयः ॥**

**शि० म०**—नन्‍ु विषयविशेषनिबन्धनस्य प्रत्यक्षलक्षणस्य वाक्यजन्यज्ञानेऽपि सत्त्वाच्छास्त्रदृष्टिसूत्रविरोधाच्च आचार्य्यवाचस्पतेस्तत्त्वमस्यादिवाक्योत्थज्ञानेऽपरो-क्षत्वोक्तिरयुक्तेत्याशङ्क्याह—**अन्येषां त्विति** ॥

**म० प्र०**—विषयविशेषनिबन्धनस्य=प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वं ज्ञानगतप्रत्यक्षत्व-मिति विषयघटितस्य ॥

**करणविशेषनिबन्धनमेव ज्ञानानां प्रत्यक्षत्वं न विषय-विशेषनिबन्धनमेकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारदर्शनात्।तथा च संवित्साक्षात्त्वे इन्द्रि-यजन्यत्वस्यैव प्रयोजकतया न शब्दजन्यज्ञानस्यापरोक्षत्वम्। ब्रह्मसाक्षात्कारेऽपि मननानिदिध्यासनसंस्कृतं मन एव करणम्। "मनसैवानुद्रष्टव्यम्" इत्यादिश्रुतेः। मनोऽगम्यत्वश्रुतिश्चासंस्कृत-मनोविषया न चैवं ब्रह्मण औपनिषदत्वानुपपत्तिः अस्मदुक्तमनसो वेदजन्यज्ञानानन्तरमेव प्रवृत्ततया वेदोपजीवित्वात् । वेदानुप-जीविमानान्तरगम्यत्वस्यैव वेदगम्यत्वविरोधात । शास्त्रदृष्टि-सूत्रमपि ब्रह्मविषयमानसप्रत्यक्षस्य शास्त्रप्रयोज्यत्वादुपपद्यते ॥**

शि०म०-**करणविशेषेति**। इन्द्रियजन्यत्वं ज्ञानानां प्रत्यक्षत्वमित्यर्थः। प्रत्यक्षत्वस्य विषयविशेषायत्तत्वे सूक्ष्मवस्तुनि परोक्षप्रमाणजन्यज्ञानानां प्रत्यक्षत्वं स्याद्विषयभेदाभावात् । न चेष्टापत्तिः, तत्राप्रत्यक्षत्वव्यवहारविरोधात् । अस्ति सूक्ष्मवस्तुनि लिपिरेखादौ पश्याम्यहं लिपिमिति पटुकरणस्य पुनः स्थविरस्य तु करणापाटववतो न पश्यामीति व्यवहार इत्याह-**एकस्मिन्निति**। ननु इन्द्रियजन्यज्ञानत्वं न प्रत्यक्षत्वं मनसोऽनिन्द्रियत्वेन सुखादिप्रत्यक्षप्रतीतावव्याप्तेरिन्द्रियत्वे चानुमित्यादावतिव्याप्तेरित्याशङ्क्य न हीन्द्रियजन्यज्ञानत्वं प्रत्यक्षत्वं किंत्विन्द्रियत्वेन तज्जन्यज्ञानत्वमनुमितिश्च मनस्त्वेन तज्जन्येति नातिव्याप्तिः । एतन्मते च मनस इन्द्रियत्वाभ्युपगमान्न सुखादिप्रत्यक्षेऽव्याप्तिरित्यभिप्रेत्याह-**तथा चेति**। नन्वन्यत्र यथा तथाऽस्तु औपनिषदे ब्रह्मणि प्रमाणान्तरनिवृत्तेरनर्थनिवर्तकापरोक्षप्रमितौ तत्त्वमस्यादिवाक्यं करणं कल्प्यते । न च मनः करणमिदानीमपि ब्रह्मसाक्षात्कारापत्तेरित्यत आह-**ब्रह्मेति** । **मन एवेति**। प्रत्यक्षकरणत्वेन तस्य क्लृप्तत्वादिति भावः। मनसो ब्रह्मसाक्षात्कारकरणत्वे प्रमाणान्तरमाह=**मनसैवेति**। तस्य मनोगम्यत्वे बाधकमाशङ्क्य निराकरोति-**न चैवमिति**। अपूर्वस्य वेदवेद्यत्वेऽपि तदुपजीव्यनुमानार्थापत्तिवेद्यत्ववदुपनिषद्वेद्यत्वेऽपि ब्रह्मणो मननादिसंस्कृततदुपजीविमनोवेद्यत्वं न विरुद्धमित्याह=**अस्मदुक्तेति** । शास्त्रदृष्टिसूत्रविरोधमुद्धरति-**शास्त्रेति**॥

म० प्र०-सूक्ष्मवस्तुनि=लिपिरेखादौ, तत्र=सूक्ष्मवस्तुनि, इन्द्रियत्वे च=मनस इन्द्रियत्वे तु, तज्जन्यज्ञानत्वम्=इन्द्रियजन्यज्ञानत्वम् । **तज्जन्येति**=मनोजन्येत्यर्थः । अन्यत्र=ब्रह्मेतरवस्तुनि, इदानीमपि=संसारदशायामपि, प्रत्यक्षकारणत्वेन=सुखाद्यपरोक्षज्ञानकरणत्वेन, तस्य=मनसः, अपूर्वस्य=धर्माधर्मरूपस्य, वेदवेद्यत्वेऽपि=लिङादिघटितवेदवाक्यगम्यत्वेऽपि । **तदुपजीवीति**। वेदसहकृतेन स्वर्गादिफलवैचित्र्यं विचित्रापूर्वनिमित्तकं वेदगम्यविचित्रफलत्वाद्यन्नैवं तन्नैवमात्मवदित्यनुमानेन स्वर्गादिफलवैचित्र्यं विचित्रापूर्वेण विनाऽनुपपन्नमिति तदभावव्यापकीभूताभावप्रतियोगित्वज्ञानरूपार्थापत्तिप्रमाणेन च यथाऽपूर्वस्य वेद्यत्वं तद्वदित्यर्थः । **तदुपजीवीति**=वेदसहकृतेत्यर्थः । परममूले **शास्त्रप्रयोज्यत्वादिति** । शास्त्राधीनत्वादित्यर्थः ॥

**तदुक्तम् । "अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा ।**
**शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परम् ॥" इति ॥**

शि० म०-कल्पतरुकारसंमतिमाह-**तदुक्तमिति** । अनयोश्च पूर्वमतमेव युक्तं ग्रन्थकृदभिमतम् । तथा हि । न तावत्करणविशेषनिबन्धनं संवित्प्रत्यक्षत्वं मनस इन्द्रियत्वनिराकरणेन सुखादिप्रत्यक्षे अव्याप्तेः । किंतु प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमुक्तं सूक्ष्मवस्तुन्यसमर्थेन्द्रियस्य सन्निकर्षाभावेनान्तःकरणस्य बहि-

र्निर्गमनाभावान्नोक्तदोषः। तथा च ब्रह्मसाक्षात्कारे तत्त्वमस्यादिवाक्यमेव करणं "मनसैवानुद्रष्टव्यम्" इति श्रुतिश्च तत्सहकारित्वविषया। अन्यथा मनःकरणककामिनीसाक्षात्कारवत् ध्यानसहकृततज्जन्यतया तस्याप्रमात्वापत्तेः। मूलप्रमाणदाढर्यात् प्रामाण्यमिति चेत्तर्ह्यावश्यकत्वेनोपनिषद एव दशमस्त्वमसीतिवत्प्रमाणत्वोपपत्तेः तथा च मनोगम्यत्वाभावश्रुतिरपि मुख्यार्थसमर्थिता भवतीति ॥

म० प्र०—परममूले **अपि संराधने इति**। शास्त्रार्थध्यानजा=वेदान्तशास्त्रार्थध्यानजा, प्रमा=शास्त्रदृष्टिर्मता " शास्त्रदृष्ट्या तूपदेशो वामदेववत् " इति सूत्रे शास्त्रदृष्टिशब्देनाभिमता। तां शास्त्रार्थध्यानजां शास्त्रदृष्टिं वाचस्पतिरेव जानाति। शास्त्रार्थध्यानजा प्रमैव शास्त्रदृष्टिरित्यत्र को हेतुरित्याशङ्क्याह—**अपि संराधने सूत्रात् इति**। अपिच संराधने प्रत्यक्षानुमानाभ्यामिति सूत्रात्संराधनेऽपि भक्तिध्यानप्रणिधानाद्यनुष्ठानकालेऽपि निरस्तसमस्तप्रपञ्चमात्मानं योगिनः पश्यन्ति। तत्र हेतुमाह—**प्रत्यक्षानुमानाभ्यामिति**। "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः।" " यं विनिद्रा जितश्वासास्संतुष्टास्संजितेन्द्रियाः। ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः॥ " इति श्रुतिस्मृतिभ्यामित्यर्थः। **सूक्ष्मवस्तुन्यसमर्थेति**। लिपिरेखादिरूपसूक्ष्मवस्तुविषयकज्ञानजननासमर्थेत्यर्थः। उक्तदोषः=एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारानुपपत्तिरूपदोषः। तथा च=संविदः प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वरूपप्रत्यक्षत्वाभ्युपगमे दोषाभावे सति। **तत्सहकारित्वेति**=मनःसहकारित्वेत्यर्थः। अन्यथा=ऐक्यसाक्षात्कारे मनसः करणत्वे, ध्यानसहकृततज्जन्यतया=लक्ष्यैक्यगोचरप्रत्ययप्रवाहरूपध्यानसहकृतमनोजन्यतया, तस्य=ऐक्यसाक्षात्कारस्य। **मूलप्रमाणेति**=वेदान्तवाक्यरूपमूलप्रमाणेत्यर्थः। प्रामाण्यम्=अभेदविषयकध्यानसहकृतमनोजन्यज्ञानस्य प्रमात्वम्। तर्हि=वेदान्तवाक्यरूपमूलप्रमाणदाढर्यात् ध्यानसहकृतमनोजन्याभेदविषयकसाक्षात्कारस्य प्रामाण्ये सति, आवश्यकत्वेन=उपनिषद आवश्यकत्वेन, तथा च=उपनिषदः प्रमाणत्वे सति, श्रुतिरपि="यतो वाचो निवर्तन्ते" इत्यादिश्रुतिरपि, समर्थिता=उपपन्ना॥

**तच्च ज्ञानं पापक्षयाद्भवति स च कर्मानुष्ठानादिति परंपरया कर्मणां विनियोगः। अत एव "तमेतं वेदानुवचनेन ब्राम्हणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिश्रुतिः " कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्त्तते " इत्यादिस्मृतिश्च संगच्छते॥**

शि० म०—तत्र यज्ञादीनां श्रेयःपरिपन्थिकल्मषनिबर्हणद्वारोपयोग इति केचित्तन्न तत्त्वज्ञाने सति संचितस्य कर्मणो निवृत्तत्वेन मुक्तिप्रतिबन्धकत्वायोगात्। प्रारब्धस्य च भोगैकनाश्यत्वेन यज्ञादिनिबर्हणीयत्वायोगात्। तस्मात्कर्मणां न मुक्तौ विनियोगः। किंतु पापनिवृत्तिद्वारा ब्रह्मसाक्षात्कारो-

त्पत्तावित्याह—तच्चेति । तत्र प्रमाणमाह—अत एवेति । **तमेतमिति** । तमेतमात्मानं वेदानुवचनयज्ञदानानाशकतपोभिर्वेत्तुमिच्छन्तीतीच्छासाधनतया वेदानुवचनादीनि विधीयन्ते न तु विदन्तीति ज्ञानसाधनतया, वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वादिच्छायाश्च प्रत्ययार्थतया प्राधान्यात् । प्रधानेन च कार्य्यसंप्रत्ययात् । न हि राजपुरुषमानयेति वस्तुतः प्रधानमपि राजपुरुषविशेषणतया शब्दत उपसर्जनमानीयते अपितु पुरुष एव शब्दतस्तस्य प्राधान्यात् । एतानि च न साक्षाद्विविदिषाहेतवः, किंतु दुरितनिबर्हणलक्षणपुरुषसंस्कारद्वारा । 'यस्यैते चत्वारिंशत्संस्काराः' इत्यादिश्रुतेः । "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः । ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥" इत्यादिवचनैश्च तथात्वावगमात् । ततश्च नित्यनैमित्तिककर्माणि मलापकर्षलक्षणपुरुषसंस्कारद्वारा विविदिषाहेतव इत्याचार्य्यवाचस्पतिमिश्रा व्याचक्षते। विवरणाचार्य्यास्तु सर्वाण्येव कर्माणि तमेतं वेदानुवचनेनेत्यादिना ज्ञानसाधनत्वेन विधीयन्ते नत्विच्छासाधनतया शब्दतः प्रधानाया अपीच्छाया यज्ञादिसाध्यत्वायोगाद्वेदनस्य तूपसर्जनस्यापि स्वर्गादिवत्साध्यतया पुरुषार्थतया च भाव्यत्वेनान्वयोपपत्तेः । तथा चात्मानुभवकामो यज्ञादीननुतिष्ठेदिति विधिः परिणम्यते इति ॥

म० प्र०—तत्र=मोक्षे, निबर्हणद्वारा=नाशद्वारा, तत्र=कर्मणां ब्रह्मसाक्षात्कारोत्पत्तिकारणत्वे, वस्तुतः=वस्तुसामर्थ्येन, शब्दतः=शब्दसामर्थ्येन । **प्रत्ययार्थतयेति** । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति न्यायादिति भावः । कार्य्यसंप्रत्ययात्=इतरपदार्थान्वयरूपकार्य्यबोधात् । अपितु=किंतु पुरुष एवानीयते इत्यन्वयः । तस्य=पुरुषस्य, एतानि च=यज्ञादिकर्माणि तु । **यस्यैते चत्वारिंशत्संस्कारा इति** । गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मान्नप्राशननिष्क्रामणचौलोपनयनानि चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानम् अष्टका पार्वणं श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकसंस्था अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यान्याग्रहायणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र अप्तोर्याम इति सप्त सोमयज्ञसंस्था इत्येते चत्वारिंशत्संस्काराः । **इत्यादिश्रुतेरिति** । आदिपदेन संस्कारा इत्यस्याग्रे अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यमाप्नोतीति वाक्यशेषो ग्राह्यः । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेत्यष्टावात्मगुणाः । **महायज्ञैश्चेति** । "अध्ययनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥" इति पञ्चमहायज्ञैश्च । तथात्वावगमात्=यज्ञादिकर्मणां दुरितनाशलक्षणपुरुषसंस्कारद्वारा विविदिषाहेतुत्वावगमात् । **यज्ञादिसाध्यत्वायोगादिति** । इष्टसाधने इच्छाया इष्टसाधनताज्ञानजन्यत्वादिति भावः । भाव्यत्वेन=यज्ञादिफलत्वेन ॥

**एवं श्रवणमनननिदिध्यासनान्यपि ज्ञानसाधनानि मैत्रेयीब्राह्मणे "आत्मा वा अरे द्रष्टव्यः" इति दर्शनमनूद्य तत्साधनत्वेन "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रवणमनननिदिध्यासनानां विधानात् ॥**

शि०म०—ननु कर्मणां पापनिवृत्तिद्वारा ज्ञानजनकत्वे श्रवणादिवैयर्थ्यं स्यादित्याशङ्क्य न हि कर्मभिः पापनिवृत्तिस्तया चाहत्य ज्ञानमिति प्रणालिका विवक्षिता किंतु कर्मानुष्ठानात् पापनिवृत्त्या शुद्धसत्त्वोदये सति विषयदोषदर्शनसंजातवैराग्यादिसाधनसंपत्तौ, श्रवणादिद्वारेत्यभिप्रेत्याह--**एवमिति** । ननु श्रवणादेर्न ब्रह्मज्ञानहेतुत्वं मानाभावात् श्रोतव्य इत्यादेश्च श्रवणादिस्वरूपे एव प्रमाणत्वात् । स स्वर्गः स्यात् सर्वान्प्रत्यविशिष्टत्वादिति न्यायेन स्वर्गादिफलत्वकल्पनयैव विधेर्भाव्यकाङ्क्षोपशमादित्याशङ्क्य एतावदरे खल्वमृतत्वमित्यर्थवादावगतमोक्षसाधनत्वेन बोधितस्य सन्निहितस्यैव ब्रह्मज्ञानस्य फलत्वोपपत्तेर्नाश्रुतस्वर्गादिपरिकल्पनावकाश इत्याशयवानाह—**मैत्रेयीति** । **विधानादिति** । एतच्च नियमविधिमभ्युपेत्य, श्रवणस्य श्रूयमाणाव्यवहितयोग्यसाक्षात्कारजनकतायाः अन्वयव्यतिरेकसहकृतप्रत्यक्षसिद्धतया ब्रह्मविचारेऽपि तन्मूलानुमानादेव ब्रह्मसाक्षात्कारहेतुत्वसिद्धेः अपूर्वविधित्वायोगात् ।

म० प्र०—तया=पापनिवृत्त्या, आहत्य=स्वसामर्थ्येन, प्रणालिका=क्रमः, श्रवणादिस्वरूपे एव—न त्वात्मविषयकापरोक्षज्ञानजनकश्रवणादिस्वरूपे इत्येवकारार्थः । ननु श्रवणस्यात्मज्ञानफलानङ्गीकारे फलमन्तरेण विध्यनुपपत्तेः श्रवणादिफलं वाच्यमित्याशङ्क्याह—**स स्वर्ग इति**। विधेः=श्रवणादिविधेः, **भाव्येति**=फलेत्यर्थः। **एतावदर इति**। एतावत् ससंन्यासं नेति नेत्याद्युक्तरूपमात्मज्ञानमेवारे हे मैत्रेयि अमृतत्वममृतत्वसाधनमित्यर्थः । परममूले—**मैत्रेयीब्राह्मणे इति** । याज्ञवल्क्यस्य मैत्रेयीनामकस्वभार्य्यया सह संवादप्रकरणे इत्यर्थः । एतच्च=विधानादिति कथनं च, नियमविधिम्=श्रवणादिषु पक्षेऽप्राप्तस्य प्राप्तिविधायकनियमविधिम् । श्रवणादिषु नियमविध्यभ्युपगमे हेतुमाह—**अपूर्वविधित्वेति** । श्रवणादिषु प्रमाणान्तराप्राप्तार्थप्रापकत्वरूपापूर्वविधित्वेत्यर्थः । श्रवणादिषु अपूर्वविधित्वायोगे हेतुमाह—**श्रवणस्येत्यादिना** । श्रवणस्य=दशमस्त्वमसीत्यादिवाक्यश्रवणस्य, योग्येति=प्रत्यक्षयोग्यदेवदत्तादिपुरुषेत्यर्थः । **अन्वयव्यतिरेकेति** । अव्यवहितयोग्यार्थशब्दश्रवणसत्त्वे श्रूयमाणाव्यवहितयोग्यार्थसाक्षात्कारः तदभावे तदभाव इत्यन्वयव्यतिरेकेत्यर्थः । प्रत्यक्षसिद्धतया=मानसप्रत्यक्षसिद्धतया साक्षिरूपप्रत्यक्षसिद्धतया वा ब्रह्मविचारेऽपि=ब्रह्मश्रवणेऽपि, तन्मूलानुमानादेव=अधिकारिनिष्ठब्रह्मप्रतिपादकवाक्यश्रवणं ब्रह्मसाक्षात्कारजनकं योग्याव्यवहितार्थकशब्दश्रवणत्वात् यत्र योग्याव्यवहितार्थकशब्दश्रवणत्वं तत्र योग्याव्यव-

हितार्थसाक्षात्कारजनकत्वमिति सामान्यव्याप्तौ दशमस्त्वमसीत्यादिवाक्यश्रवणवदिति प्रत्यक्षमूलकानुमानादेव ॥

शि० म०–वस्तुतस्तत्र नियमोऽपि न संभवति व्यावर्त्त्याभावात्। तथा ह्यात्मा वा अरे श्रोतव्य इत्यत्र किं विषयनियम आत्मैव श्रोतव्य इति किंवा धात्वर्थनियमः श्रोतव्य एवेति अवहन्यादेवेतिवत्। नाद्यः, "तरति शोकमात्मवित्" इत्यादिश्रुत्या आत्मज्ञानस्यैव मोक्षहेतुत्वावगमेनानात्मविचारस्याप्राप्तेः। नापि द्वितीयः, मननादिविधिविरोधात्। न चात्मज्ञानाय वेदान्तवाक्यमेव विचारयेदिति नियमविध्याश्रयणे तेन पुराणवाक्यादिव्यावृत्तिसिद्धिरिति वाच्यम्। आत्मा वा अरे द्रष्टव्य इत्यादिषु वेदान्तवाक्यस्य पदार्थत्वेनाश्रवणात् अपदार्थनियमे चातिप्रसङ्गात्। "बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति। इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्॥" इति संभवपर्वणि वेदार्थनिर्णयोपायत्वेनेतिहासपुराणयोरपि विचार्य्यत्वप्रतिपादनाच्च। किञ्च श्रवणं नाम तात्पर्यावधारणं तदनुकूला मानसी क्रिया वा तदुभयं शाब्दज्ञाने हेतुः। तत्र नियमविध्याश्रयणे श्रवणमेव शाब्दज्ञानहेतुर्नान्यदिति स्यात्तच्च न भवति आकाङ्क्षादेस्तद्धेतुभूतस्य निवृत्त्ययोगादन्यस्य व्यावर्त्यस्यासिद्धेः। न चैवं श्रवणस्य शाब्दज्ञानहेतुत्वे दर्शनोद्देशेन श्रवणं विधीयते इत्यसंगतं स्यादिति वाच्यम्। सिद्धान्ते शाब्दज्ञानस्यापरोक्षरूपतया विरोधाभावात्॥

म० प्र०=तत्र--श्रवणादिषु, नियमोऽपि—नियमविधिरपि। **किं विषयनियम इति।** आत्मैव श्रोतव्य इति श्रवणविषये किं नियम इत्यर्थः। **अनात्मविचारस्याप्राप्तेरिति।** यद्यपि रागादनात्मश्रवणप्राप्तिरस्ति तथापि मोक्षफलकानात्मश्रवणस्य रागादप्राप्तेर्व्यावर्त्याभावः एकफलकोभयप्राप्तावेव नियमविधिस्वीकारादिति भावः। तेन=नियमेन, अपदार्थनियमे=श्रोतव्य इत्यत्रापदार्थवेदान्तवाक्ये नियमस्वीकारे, अतिप्रसङ्गात्=अपदार्थत्वस्य तुल्यत्वेन पुराणवाक्यमेव विचारयेदिति नियमप्रसङ्गात्, समुपबृंहयेत्=संशयविपर्ययागोचरार्थप्रतिपादकतां नयेत्। **तदनुकूलेति** तात्पर्य्यनिश्चयजनकेत्यर्थः। तत्र=उक्तश्रवणे, तच्च=श्रवणस्यैव शाब्दज्ञानहेतुत्वं च। नन्वाकाङ्क्षाद्यन्यस्यैवैवकारेण व्यावृत्तिः स्यादित्याशङ्क्याह—**अन्यस्येति**। आकाशाद्यन्यस्येत्यर्थः। एवं=विधिं विनैव। **शाब्दज्ञानेति**=परोक्षशाब्दज्ञानेत्यर्थः। असंगतम्=शाब्दज्ञानस्य परोक्षत्वेनापरोक्षात्मज्ञानसाधनतया श्रवणविधानमसंगतम्॥

शि० म०–उक्तस्य श्रवणस्य तात्पर्य्यविषयकत्वेन परंपरया आत्मविषयतया श्रोतव्य इति निर्देशो न विरुध्यते। किंच न वेदान्तानां श्रवणादिविधिपरत्वं वाक्यभेदप्रसङ्गात्। अन्यथा ब्रह्मपरत्वाभावे ब्रह्मणोऽसिद्धिप्रसङ्गः। ननु सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदित्यत्र श्रोतव्य इत्यादिवाक्यानां विधायकत्वाङ्गीकारात्र तद्विरोध इति चेत् न, पक्षेणेति वदता सूत्रकृता निपुणानां विध्यनपेक्षत्वं

जडानां तु सर्वसङ्गपरित्यागपूर्वकब्रह्मज्ञाने प्रवृत्तिर्न स्यादिति तेषामेव प्रवृत्तिसिद्ध्यर्थं विध्यङ्गीकरणमिति सूचितम्।अन्यथा पक्षेणेति विशेषणवैयर्थ्यापत्तेः । न चानुवादवैयर्थ्यं तस्य ह्ययमौपनिषद आत्मा यतो मोक्षहेतुसाक्षात्कारसाधनाविचाराविषय इति प्रकारेणात्मनः विष्णुरुपांशु यष्टव्य इतिवत्स्तुत्यर्थत्वेनोपपत्तेः। अत एव भाष्यकृता समन्वयसूत्रे लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवन्तीत्युक्तम्। अत एव द्वितीयवर्णके टीकाकृता यद्येवं किं विधिना स्वयमेव विज्ञानहेतौ पुरुषार्थसाधने प्रवर्त्तत इति विध्यभावः कण्ठरवेणाङ्गीकृतः । तत्रैव च विवरणाचार्य्यैर्निदिध्यासितव्य इति चात्मप्रतिपादनपरवाक्यस्य वाक्यभेदाभावाय स्तुतिपरत्वादित्युक्तम्। तस्मादर्हार्थे द्रष्टव्यपदसमभिव्याहारेण प्रदर्शितन्यायेन श्रोतव्य इत्यादेरप्यर्हार्थत्वमेव युक्तं न विधायकत्वमित्यास्तामतिविस्तरः ॥

म० प्र०—ननु श्रवणस्य तात्पर्य्यविषयकत्वेनात्मविषयकत्वाभावादात्मसाक्षात्कारमनूद्यश्रोतव्य इति श्रवणं विधीयते इत्युक्तिरनुपपन्नेत्याशङ्क्याह—**उक्तस्येति** । तात्पर्य्यनिश्चयरूपस्य तात्पर्य्यनिश्चयानुकूलमानसक्रियारूपस्य वेत्यर्थः । परंपरया=स्वविषयविषयत्वरूपपरंपरया, स्वं=श्रवणमिति संबन्धघटकस्वशब्दार्थः । वेदान्तानाम्=मैत्रेयीब्राह्मणस्थ 'श्रोतव्यः' इत्यादिवाक्यानाम् , वाक्यभेदप्रसङ्गात्=मैत्रेयीब्राह्मणस्थ 'श्रोतव्यः' इत्यादिवाक्यानाम् श्रवणादिविधिपरत्वे ब्रह्मपरत्वे च विषयभेदसत्त्वेन वाक्यभेदप्रसङ्गात्, अन्यथा=श्रोतव्य इत्यादिवाक्यानां श्रवणादिविधिपरत्वस्वीकारे, अन्यथेत्यस्यैव वा विवरणं ब्रह्मपरत्वाभावे इति, ब्रह्मणोऽसिद्धिप्रसङ्गः मैत्रेयीब्राह्मणस्य ब्रह्मपरत्वाभावेन मैत्रेयीं प्रति ब्रह्मविषयकनिश्चयाभावप्रसङ्गः। **सहकार्य्यन्तरविधिरिति** । इदं हि सूत्रं तृतीयाध्याये चतुर्थपादस्य सप्तचत्वारिंशत्संख्याकम् । अस्यार्थः। बृहदारण्यके हि "बाल्यं च पाण्डित्यं च निर्विद्याऽथ मुनिरमौनं च मौनं च निर्विद्याऽथ ब्राह्मणः" इति श्रूयते । अत्र किं निदिध्यासनाख्यं मौनं विधीयते न वेति संशयेऽत्र विध्यभावादथ मुनिरित्यत्र न मौनविधिरिति पूर्वपक्षे सिद्धान्तमाह—**सहाकार्य्यन्तरविधिरिति**। फलभूतसाक्षात्कारे श्रवणाद्यपेक्षायाः । सहकार्य्यन्तरस्य मौनस्यानिदिध्यासनाख्यस्य विधिरित्यर्थः । ननु गार्हस्थ्यमाचार्य्यकुलं मौनं वानप्रस्थमित्यत्र मौनशब्दस्य पारिव्राज्ये प्रयोगात्कथमत्र मौनं निदिध्यासनं स्यादत आह—**तृतीयमिति** । श्रवणमननद्वयापेक्षया तृतीयं निदिध्यासनमेवात्र मौनं विधेयमित्यर्थः । कस्यायं मौनविधिस्तत्राह—**तद्वत इति** । ब्रह्मपरोक्षज्ञानवतः पूर्ववाक्ये प्रकृतस्य संन्यासिन इत्यर्थः । ननु सूक्ष्मवस्तुसाक्षात्कारहेतोः निदिध्यासनस्य प्राप्तत्वान्न विधेयत्वमत आह—**पक्षेणेति** । यस्मिन्पक्षे भेददर्शनप्राप्तिस्तस्मिन्पक्षे प्राप्त्यभावाद्विधिरर्थवानित्यर्थः । ननु ब्रह्मपरवाक्ये कथं मौनविधिरित्याशङ्क्य दृष्टान्तमाह—**विध्यादिवदिति** । यथा दर्शपूर्णमासप्रधानपरवाक्येऽन्वाधानादेरङ्गजातस्य विधिस्तद्वदित्यर्थः । प्रधानमारभ्याङ्गपर्य्यन्तो विधिस्तस्यादिर्विध्यादिः प्रधानमिति यावदिति । **न तद्विरोध इति** ।

तस्य श्रवणादिविधेर्वाक्यभेदापत्त्यादिदोषैरनुपपत्तिर्नेत्यर्थः । तेषामेव=जडबुद्धीनामेव, अन्यथा=सर्वान्प्रति विध्यङ्गीकारे । **विशेषणेति**=विशेषकथनेत्यर्थः । तस्य=अनुवादस्य । विष्णुरुपांशु यष्टव्य इतिवत्=अयामित्वाय=अनालस्यायोपांशु=अस्फुटोच्चारणं यथा स्यात्तथा विष्णुर्यष्टव्यः=पूजनीय इत्यर्थकस्य विष्णुरुपांशु यष्टव्योऽयामित्वायेत्यनुवादवाक्यस्य यथा स्तुतिपरत्वं तद्वत् । न चोपांशुयाजमन्तरा यजतीत्यस्य यथा विधिपरत्वं विष्णुरुपांशु यष्टव्य इत्यस्य स्तुतिपरत्वं तथा मैत्रेयीब्राह्मणे विधिवाक्याभावात्कथं श्रोतव्य इत्यस्य स्तुतिपरत्वमिति वाच्यम् । अज्ञातज्ञापकस्य विधित्वेन मैत्रेयीब्राह्मणब्रह्मात्मवाक्यानामप्यज्ञातज्ञापकत्वसंभवेन श्रोतव्य इत्याद्यनुवादस्य स्तुतिपरत्वसंभवादिति । अत एव=वेदान्तानां मुख्यविधिपरत्वाभावादेव । समन्वयसूत्रे='तत्तु समन्वयात्' इति सूत्रे । अनियोज्यविषयत्वात्=वेदान्तानां सिद्धब्रह्मपरत्वेन वेदान्तेषु कार्य्याभावेन कार्य्यविषयकस्वकीयत्वज्ञानवत्पुरुषरूपनियोज्याभावेन कार्य्यविषयकस्वकीयत्वज्ञानवत्पुरुषरूपनियोज्यविषयकत्वाभावात्, द्वितीयवर्णके=तत्तु समन्वयादिति सूत्रद्वितीयव्याख्याने, टीकाकृता=वाचस्पतिसंज्ञकटीकाकारेण, एवं=नियोज्याभावः, तत्रैव=तत्तु समन्वयादिति सूत्रद्वितीयव्याख्याने एव ॥

**श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्य्यावधारणानुकूलमानसी क्रिया । मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः । निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्य्यानुकूलो मानसो व्यापारः ॥**

शि० म०—ननु दर्शनवच्छ्रवणादेरपि ज्ञानतया नानुष्ठेयत्वमित्याशङ्क्य श्रवणादिस्वरूपं निरूपयति—श्रवणं नामेत्यादिना ॥

**तत्र निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्कारणम् "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतेः । निदिध्यासने च मननं हेतुः अकृतमननस्यार्थदार्ढ्याभावेन तद्विषयनिदिध्यासनायोगात् । मनने च श्रवणं हेतुः श्रवणाभावे तात्पर्य्यानिश्चयेन शाब्दज्ञानाभावेन श्रुतार्थविषयकयुक्तत्वायुक्तत्वनिश्चयानुकूलमननायोगात् । एतानि त्रीण्यपि ज्ञानोत्पत्तौ कारणानीति केचिदाचार्य्या ऊचिरे । अपरे तु श्रवणं प्रधानं मनननिदिध्यासनयोस्तु श्रवणात्पराचीनयोरपि श्रवणफलब्रह्मदर्शननिर्वर्त्तकतया आरादुपकारकतयाऽङ्गत्वमित्याहुः । तदप्यङ्गत्वं न तार्तीयशेषत्वरूपम् ॥**

शि० म०—ननु ध्यानस्य निदिध्यासनपदवेदनीयस्य ध्येयगोचरसाक्षात्कारकारणत्वेऽपि मननश्रवणयोर्न हेतुत्वं ध्यानेन ब्रह्मसाक्षात्कारोत्पत्तिसमये तयोरभावादित्याशङ्क्य न हि तेषामेकरूपेण हेतुत्वमिह विवक्षितं किंतु ध्यानस्य साक्षात् । श्रवणमननयोस्तु मनननिदिध्यासनद्वारेत्याह—तत्रेति। साक्षादिति। यद्यपि शक्तितात्पर्य्यविशिष्टवेदान्तावधारणस्यैवापरोक्षज्ञाने साक्षात्कारणत्वं तथापि शाब्दज्ञानपरोक्षनियमवादिमते ध्यानस्यैव साक्षाद्धेतुत्वाभ्युपगमात्तदभिप्रायेणोक्तमथवाऽप्रतिबद्धब्रह्मापरोक्षज्ञानमेवानर्थनिवृत्तिहेतुरन्यथा तत्त्वमस्यादिवाक्यस्यापरोक्षज्ञानजनकत्ववादिमते मनननिदिध्यासनवैयर्थ्यात्तत्र प्रतिबन्धकनिवर्त्तकध्यानस्य साक्षात्कारणत्वम् । ननु श्रवणादीनां न तावद्दर्शपूर्णमासवत् समप्रधानभावेन ब्रह्मज्ञाने हेतुत्वं तेषामेकरूपेणाहेतुत्वात् । नापि प्रयाजदर्शादिवत् शेषशेषिभावेन श्रुतिलिंगादेस्तत्प्रमाणस्याभावादित्याशङ्क्य प्रधानाप्रधानौदासीन्येन कारणत्वमात्रं विवक्षितमित्याह—एतानीति । न तार्तीयेति । तृतीयाध्यायनिरूपितशेषत्वलक्षणाङ्गत्वं नेत्यर्थः ॥

म० प्र०—तयोः=मननश्रवणयोः, तेषां=श्रवणमनननिदिध्यासनानाम्, एकरूपेण=अनन्यथासिद्धत्वे सत्यव्यवहितपूर्वक्षणवृत्तित्वस्वरूपेण, मनननिदिध्यासनद्वारा=श्रवणस्य मनननिदिध्यासनद्वारा, मननस्य तु निदिध्यासनद्वारेति भावः। **अवधारणस्यैवेति** । अत्रैवकारेण न तु ध्यानस्येति ध्याननिष्ठसाक्षात्कारहेतुत्वव्यावृत्तिः । तदभिप्रायेण=शाब्दज्ञानस्य परोक्षत्वनियमवादिमताभिप्रायेण, उक्तम्=ध्यानस्यात्मसाक्षात्कारकारणत्वमुक्तम्, अन्यथा=ब्रह्मापरोक्षज्ञानमात्रस्यानर्थनिवृत्तिहेतुत्वाभ्युपगमे, तत्र=अप्रतिबद्धब्रह्मापरोक्षज्ञाने। परममूले **अर्थदार्ढ्याभावेनेति** । निदिध्यासनविषयनिश्चयाभावेनेत्यर्थः । परममूले **तद्विषयेति**=श्रुतार्थविषयेत्यर्थः । समप्रधानभावेन=तुल्यप्रधानत्वेन, तेषां=श्रवणादीनाम्, तत्प्रमाणस्य=शेषशेषिभावविषयकप्रमाजनकस्य । परममूले **पराचीनयोरिति** । परपूर्वकस्याञ्चुधातोः पश्चाद्भाव्यर्थकत्वेन पश्चाद्भाविनोरित्यर्थः ॥

**तस्य श्रुत्याद्यन्यतमप्रमाणगम्यस्य प्रकृते श्रुत्याद्यभावेऽसंभवात्। तथा हि व्रीहिभिर्यजेतेति दध्ना जुहोतीत्यादाविव मनननिदिध्यासनयोरङ्गत्वे न काचित्तृतीयाश्रुतिरस्ति। नापि बर्हिर्देवसदनं दामीत्यादिमन्त्राणां बर्हिःखण्डनप्रकाशनसामर्थ्यवत् किंचिल्लिङ्गमस्ति । नापि प्रदेशान्तरपठितप्रवर्ग्यस्याग्निष्टोमे प्रवृणक्तीति वाक्यवत् श्रवणानुवादेन मनननिदिध्यासनविनियोजकं किंचिद्वाक्यमस्ति। नापि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यावगतफलसाधनताकदर्शपूर्णमासप्रकरणे प्रयाजादीनामिव फलसाधनत्वेनावगतस्य श्रवणस्य प्रकरणे मनननिदिध्यासनयोराम्नानम् ॥**

**शि० म०**—ननु कारणताग्राहकादेव प्रमाणान्मननादेरङ्गत्वमवसीयते इत्याशङ्क्य प्रधानसाधारणत्वान्न तस्य निश्चायकत्वमित्यभिप्रेत्याह—**तस्येति**। श्रुत्याद्यभावमेवोपपादयति—**तथा हीति**। साक्षाद्विनियोजिकां श्रुतिं निराकृत्य तदनुमानद्वारा विनियोजकलिङ्गादीन्याशङ्क्य निरस्यति—**नापीति**॥

**म० प्र०**—कारणताग्राहकादेव=मन्तव्यो निदिध्यासितव्य इत्यादिरूपादात्मसाक्षात्कारनिरूपितमनननिदिध्यासननिष्ठकारणताग्राहकादेव, प्रधानसाधारणत्वात्=कारणतायाः प्रधानेऽपि वृत्तित्वात्, तस्य=कारणताग्राहकप्रमाणस्य, न निश्चायकत्वं=मननादिनिष्ठाङ्गत्वनिश्चायकत्वं न। अङ्गप्रधानवाक्ययोर्भिन्नत्वेनैकवाक्यस्य प्रधानाप्रधानविधायकत्वमेव न संभवतीति भावः। न च मन्तव्य इत्यादि भिन्नमेव वाक्यमिति वाच्यम्, भिन्नवाक्यत्वे विनिगमनाविरहेण मननस्य निदिध्यासनस्य वाऽङ्गित्वमितरयोश्चाङ्गत्वमित्यनिष्टापातात्। न च श्रवणं विनेतरमनननिदिध्यासनानुपपत्त्या श्रवणस्य प्रधानत्वमितरयोरप्रधानत्वमिति वाच्यम्। अङ्गैर्विना प्रधानकर्मणोऽप्यनुपपन्नत्वेनाङ्गेषु प्रधानत्वापत्तेरिति। **तदनुमानेति**। बर्हिश्छेदनं बर्हिर्देवसदनं दामीत्यनेन मन्त्रेण बर्हिश्छेदनं कुर्यादिति श्रुतिबोधितं लिङ्गवन्मन्त्रबोधितत्वात्। यत्र लिङ्गवन्मन्त्रबोधितत्वं तत्र श्रुतिबोधितत्वमिति सामान्यव्याप्तौ सदनकरणादिवदित्यादिश्रुत्यनुमानेत्यर्थः। आशङ्क्य=तार्तीयशेषशेषिभावप्रमाणत्वेनाशङ्क्य। परममूले **प्रवृणक्तीति**। प्रवर्ग्याख्यं कर्म कुर्यादित्यर्थः। परममूले **इति वाक्यवदिति**। देशान्तरपठितप्रवर्ग्याख्यकर्मणोऽङ्गत्वबोधकत्वं यथैतद्वाक्यस्य तद्वदित्यर्थः॥

**ननु द्रष्टव्य इति दर्शनानुवादेन श्रवणे विहिते सति फलवत्तया श्रवणप्रकरणे तत्सन्निधावाम्नातयोर्मनननिदिध्यासनयोः प्रयाजन्यायेन प्रकरणादेवाङ्गतेति चेन्न। "ते ध्यानयोगानुगता अपश्यन्" इत्यादिश्रुत्यन्तरे ध्यानस्य दर्शनसाधनत्वेनावगतस्याङ्गाकाङ्क्षायां प्रयाजन्यायेन श्रवणमननयोरेवाङ्गत्वापत्तेः। क्रमसमाख्ये च दूरनिरस्ते। किंच प्रयाजादिषु अङ्गत्वविचारः सप्रयोजनः पूर्वपक्षे विकृतिषु न प्रयाजानुष्ठानं सिद्धान्ते तु तत्रापि तदनुष्ठानमिति। प्रकृते तु श्रवणं न कस्यचित्प्रकृतिः येन मनननिदिध्यासनयोस्तत्राप्यनुष्ठानमङ्गत्वविचारफलं भवेत्। तस्मान्न तार्त्तीयशेषत्वं मनननिदिध्यासनयोः॥**

**शि० म०**—ननु मनननिदिध्यासनयोरप्राधान्येन प्रकरणाच्छ्रवणाङ्गत्वमवगम्यते इत्याशङ्क्य सिद्धे हि श्रवणस्य ज्ञानलक्षणफलसाधनत्वेन प्राधान्ये तदाकाङ्क्षालक्षणं प्रकरणं स्यात्तदेव तु नास्ति मानाभावात्। तथा हि। किं दर्शपूर्णमासवद्विध्युद्देशे काम-

पदश्रवणात्फलान्वयः। उत सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यते इति न्यायात्। तत्राद्यं निराकृत्य द्वितीयमुत्थापयति—**नन्विति**। "शृण्वन्तोऽपि बहवो यं न विद्युः" वाक्यं श्रवणस्य ज्ञानसाधनत्वे वक्रोक्त्या मानम्। तथा च श्रवणमेव प्रकरणीयमिति यदि ब्रूयात्तदा दोषान्तरमाह—**किंचेति**। **विकृतिष्विति**। सौर्ययागादिष्वित्यर्थः॥

म० प्र०—**तदाकाङ्क्षेति**। उभयाकाङ्क्षेत्यर्थः। तदेवं=श्रवणस्य ज्ञानलक्षणफलसाधनत्वेन प्राधान्यमेव, दर्शपूर्णमासवत्=दर्शपूर्णमासविधायकवाक्ये कामपदश्रवणाद्यथा दर्शपूर्णमासयोः स्वर्गफलान्वयस्तद्वत्, विध्युद्देशे=श्रवणविधिवाक्ये, फलान्वयश्रवणस्यात्मसाक्षात्कारलक्षणफलेनान्वयः सिद्धं=स्वर्गादिकम्, साध्याय=यागादिसाध्यविधानाय, उपयुज्यते=उपयुक्तो भवति समर्थो भवतीति यावत्। फले सति साधनविधानं दृष्टमिति भावः। न च दर्शनस्य जन्यत्वेन कथं सिद्धत्वमिति वाच्यम्, स्वर्गादीनां सिद्धत्वानुपपत्त्याऽजन्यत्वरूपसिद्धत्वासंभवेन प्रमाणान्तरेण ज्ञातत्वरूपसिद्धत्वस्यावश्यं वक्तव्यत्वेन दर्शनस्य 'ब्रह्मविदाप्नोति परम्' इत्याद्यर्थवादावगतत्वेन प्रमाणान्तरेण ज्ञातत्वरूपसिद्धत्वसंभवात्। न्यायात्फलान्वय इत्यन्वयः। तत्र=पक्षद्वयमध्ये। निराकृत्य=नापि दर्शपूर्णमासाभ्यामित्यादिग्रन्थेन निरस्य। परममूले **अङ्गतेति**। सिद्धसाध्यसमभिव्याहारे इत्यादिन्यायेन श्रवणस्य दर्शनलक्षणफलवत्त्वे सिद्धे फलवत्सन्निधावफलं तदङ्गमिति न्यायेन मनननिदिध्यासनयोः प्रकरणप्रमाणाच्छ्रवणाङ्गता स्यादिति पूर्वपक्ष्याशयः। परममूले **अङ्गत्वापत्तेरिति**। न्यायापेक्षया वाक्यस्य प्रबलत्वेन "ते ध्यानयोगानुगता अपश्यन्" इत्यादिवाक्येन ध्यानस्य दर्शनलक्षणफलवत्त्वे निश्चिते प्रत्युत प्रकरणप्रमाणाच्छ्रवणमननयोरङ्गता स्यादिति सिद्धान्त्याशय इति। वक्रोक्त्या=श्रवणस्य दर्शनलक्षणफलसाधनत्वेऽपि श्रवणस्य दर्शनलक्षणफलाभावोक्त्या, प्रकरणीयम्=प्रकरणप्रमाणवत् श्रवणस्य दर्शनलक्षणफलत्वेन प्राधान्यमिति यावत्। परममूले **पूर्वपक्षे इति**। प्रयाजादीनां दर्शपूर्णमासाङ्गत्वाभावपक्षे। परममूले **सिद्धान्ते इति**। प्रयाजादीनां दर्शपूर्णमासाङ्गत्वपक्षे इत्यर्थः। परममूले **तत्रापीति**। विकृतिष्वपीत्यर्थः। परममूले **तदनुष्ठानमिति**। प्रयाजाद्यनुष्ठानमित्यर्थः। परममूले **प्रकृते त्विति**। द्रष्टव्य इत्यादिवाक्ये त्वित्यर्थः। परममूले **येनेति**। श्रवणस्य प्रकृतित्वेनेत्यर्थः। परममूले **तत्रापीति**। श्रवणविकृतावपीत्यर्थः॥

**किंतु यथा घटादिकार्य्ये मृत्पिण्डादीनां प्रधानकारणता चक्रादीनां सहकारिकारणतेति प्राधान्याप्राधान्यव्यपदेशः तथा श्रवणमनननिदिध्यासनानामपीति मन्तव्यम्। सूचितं चैतद्विवरणाचार्य्यैः। शक्तितात्पर्य्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात्। मनननिदिध्यासने तु चित्तस्य प्रत्यगात्म-**

**श्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्य्यद्वारेण ब्रह्मानुभव-हेतुतां प्रतिपद्यते इति फलं प्रत्यव्यवहितकारणस्य तात्पर्य-विशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदङ्गे अङ्गीक्रियेते इति । श्रवणादिषु च मुमुक्षूणामधिकारः ॥**

शि० म०–एवं सति प्राधान्याप्राधान्यव्यपदेशं समर्थयति–**किंतु यथेति** । श्रवणमनननिदिध्यासनानां मध्ये श्रवणं प्रधानकारणं मननं निदिध्यासनं च तत्सहकारीत्यर्थः न च ध्यानमेव साक्षात्कारणतया प्रधानमिति वाच्यम् । तात्पर्य-विशिष्टवेदान्तावधारणलक्षणश्रवणस्य प्रमेयावगमं प्रति कारणत्वेन प्राधान्यात् । इदमेव प्राधान्यं प्रथमवर्णके विवरणाचार्य्यैः सूचितमित्याह–**सूचितं चेति** । ननु ज्ञानसाधनतया श्रवणादिकं नानुष्ठेयं तत्राधिकारानिश्चयाद्वैदिके कर्मणि तन्निश्चयस्य प्रवृत्त्यङ्गत्वात् । न च नित्यानित्यविवेकवैराग्यशमदमादिसंपन्नोऽधिकारीति वाच्यम्, शमदमादीनां प्रकरणेन प्रमाणेनाङ्गत्वावगमेन अधिकारनिमित्तत्वायोगादित्यत आह–**श्रवणादिष्विति** । **मुमुक्षूणामिति** । मोक्षसाधनब्रह्मज्ञानकामानामित्यर्थः । श्रवणादेर्ब्रह्मज्ञानफलकत्वेन तत्कामस्यैव तत्राधिकारौचित्यात् । उक्तं चैतत्पञ्चमवर्णके पञ्चपादिकाचार्य्यैः । ब्रह्मज्ञानकामिनेदञ्च शास्त्रं श्रोतव्यमिति ॥

म० प्र०– एवं सति=श्रवणादिषु तार्तीयशेषशेषिभावाभावे सति । **प्राधान्येति** । श्रवणादिष्वितिशेषः । तत्सहकारि=श्रवणस्य सहकारि । परममूले **अव्यवधानेनेति** । साक्षादित्यर्थः । परममूले **अव्यवधानादिति** । अनन्यथासिद्धत्वे सत्यव्यवहितपूर्वक्षणवृत्तित्वादित्यर्थः । तत्र=श्रवणादिषु । **अधिकारेति** । अधिकारनिमित्ताभावेनाधिकारानिश्चयादित्यर्थः । तन्निश्चयस्य=अधिकारनिश्चयस्य, अङ्गत्वावगमेन=श्रवणाङ्गत्वनिश्चयेन, अधिकारनिमित्तत्वायोगात्=यस्मिन्पुरुषे शमदमादिसंबन्धस्तस्मिन्पुरुषे श्रवणाधिकार इति शमदमादीनां श्रवणाधिकारप्रयोजकत्वाभावात् प्रयाजादीनामिव यस्याङ्गत्वेन ज्ञानं तस्याधिकारप्रयोजकत्वाभाव इति भावः । परममूले **व्यवहिते इति** । उत्तरभाविनि फलं प्रति व्यवहिते वेत्यर्थः । ननु मुमुक्षूणामित्यस्य मोक्षेच्छावतामित्यर्थमपहाय मोक्षसाधनब्रह्मज्ञानकामानामित्यर्थः किमिति क्रियते इत्यत आह–**श्रवणादेरिति** । तत्कामस्यैव=ब्रह्मज्ञानकामपुरुषस्यैव, तत्र=श्रवणादिषु । **औचित्यादिति** । मोक्षेच्छायां सत्यां तत्त्वज्ञानेच्छा तत्त्वज्ञानेच्छायां सत्यां श्रवणादिषु पुरुषप्रवृत्तिरिति तत्त्वज्ञानेच्छैव श्रवणादिषु पुरुषाधिकार इति भावः ॥

**काम्ये कर्मणि फलकामस्याधिकारित्वात् । मुमुक्षायां च नित्यानित्यविवेकस्येहामुत्रार्थफलभोगविरागस्य शमदमोपरति-तितिक्षासमाधानश्रद्धानां विनियोगः ॥**

शि० म०–ननु सर्वाधिकारकमिदं किं न स्यादित्यत आह–**काम्य इति** ।

मुमुक्षायामिति। यद्यपि मोक्षसाधनब्रह्मज्ञानचिकीर्षाया एवाधिकारनिमित्तत्वात्तत्रैव नित्यानित्यविवेकादीनां युक्तो विनियोग इति तथापि मोक्षकामनाया एव तत्प्रयोजकत्वमिति दर्शयितुं मुमुक्षोपन्यासः। नहि मोक्षमकामयमानस्तत्साधनं ज्ञानं कामयते न च नित्यानित्यविवेकादेः फलकामनाया हेतुत्वे मानाभाव इति वाच्यम्। श्रवणविधिप्रकरणे तत्संकीर्त्तनस्यैव मानत्वादन्यथा संकीर्त्तनवैफल्यं स्यात्तथाहि-सोऽन्वेष्टव्य इति विधिप्रकरणे तद्यथेह कर्मचित इत्यादिना नित्यानित्यविवेकः परीक्ष्य लोकान् कर्मचितानित्यादिना च इहामुत्रार्थफलभोगविरागः "शान्तो दान्त उपरतास्तितिक्षुः" इति च शमादिर्दर्शितः। विजज्ञासस्वेति विचारविधिप्रकरणे 'वरुणं पितरमुपससार' इति श्रुत्यन्तरे च तद्विज्ञानार्थं सगुरुमेवाभिगच्छेदिति च गुरूपसदनं दर्शितम्। न च सर्वत्र फलश्रुतेस्तेषां फले एव विनियोगः स्यादिति वाच्यम्। शमादिषु फलश्रुतेरर्थवादत्वेन कामनोत्पादनद्वारा मुमुक्षोरधिकारप्रदर्शनार्थत्वेन वा फलश्रुतेरुपपत्तेः। तदुक्तं विवरणाचार्य्यैः। सर्वत्र फलश्रुतयः कामनोत्पादनद्वारा मुमुक्षोरधिकारप्रदर्शनार्था इति॥

म० प्र०—चिकीर्षायाः=संपादनेच्छायाः। **अधिकारेति**—श्रवणादिषु योग्यतेत्यर्थः। तत्रैव=ब्रह्मज्ञानचिकीर्षायामेव, तत्प्रयोजकत्वं=मोक्षसाधनब्रह्मज्ञानप्रयोजकत्वम्, फलकामनायाः=मोक्षकामनायाः, तत्संकीर्तनस्यैव=विवेकादिसंकीर्तनस्यैव, अन्यथा=विवेकादेर्मोक्षकामनाहेतुत्वानङ्गीकारे। **संकीर्त्तनेति**। श्रवणविधिप्रकरणे विवेकादिसंकीर्त्तनेत्यर्थः। सः=आत्मा, अन्वेष्टव्यः=विचारितव्यः श्रवणीय इति यावत्। विजिज्ञासस्व=अन्नादिद्वारेण ब्रह्म विचारयस्व, सर्वत्र=सर्वेषु विवेकादिषु फलश्रुतेः। तेषां=विवेकादीनाम्, फले=स्वफले, विनियोगः=संबन्धः, अर्थवादत्वेन=श्रवणविध्यर्थवादत्वेन वाचस्पतिमते तु साक्षात्कारार्थवादत्वेन। **कामनेति**। मोक्षेच्छेत्यर्थः। अधिकारप्रदर्शनार्थत्वेन=शमादीनां फलश्रवणानन्तरं शमादिषु प्रवृत्तिः शमादिषु प्रवृत्त्यनन्तरं मुमुक्षा ततः श्रवणादिषु मुमुक्षोरधिकार इत्यधिकारप्रदर्शनार्थत्वेन, सर्वत्र=विवेकादिषु॥

**अन्तरिन्द्रियपरिग्रहः शमः। बहिरिन्द्रियनिग्रहो दमः। विक्षेपाभाव उपरतिः। शीतोष्णादिद्वन्द्वसहनं तितिक्षा। चित्तैकाग्र्यं समाधानम्। गुरुवेदान्तवाक्यविश्वासः श्रद्धा। अत्रोपरमशब्देन संन्यासोऽभिधीयते। तथा च संन्यासिनामेव श्रवणेऽधिकार इति केचित्। अन्ये तूपरमशब्दस्य संन्यासवाचकत्वाभावात् विक्षेपाभावमात्रस्य गृहस्थेष्वपि संभवाज्जनकादेरपि ब्रह्मविचारस्य श्रूयमाणत्वात् सर्वाश्रमसाधारणम् श्रवणादिविधानमित्याहुः॥**

शि॰ म॰—शमदमादिशब्दार्थान् भेदेन व्याचष्टे=अन्तरिन्द्रियेत्यादिना । अत्र संन्यासिनामेव ब्रह्मविद्यायामधिकार इत्यत्रोपरमशब्दं प्रमाणयन्तः "संन्यासयोगाद्यतयः शुद्धसत्त्वाः" इति श्रुतिं तात्पर्यभ्रमादुपोद्बलयन्तः "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिश्रुतिं जनकरैक्ववसिष्ठानां ब्रह्मविचारप्रतिपादिकामाख्यायिकाम् "गृहस्थोऽपि विमुच्यते" इति स्मृतिं चाच्छादयन्तस्तदुपोद्बलतया च स्वाश्रमस्य मोक्षाश्रमनामधेयादिकयुक्त्याभासं वदन्तो गृहस्थादिकृतसाष्टाङ्गप्रणाममात्रेण स्वात्मानमधिकं मन्यमाना ब्रह्मविचारे गृहस्थादीनामधिकारं तेषु प्रद्वेषमात्रेण केचिद्भिक्षवो दूषयन्ति तेषां मतमाह=अत्रेति । अस्तूपरमशब्दार्थः संन्यासस्ततः किमित्याशङ्क्य संन्यासस्य मुमुक्षाद्वारा विचाराधिकारनिमित्तत्वात्संन्यासिनामेवाधिकारः सिद्ध्यतीत्याह—तथा चेति । किमुपरमशब्देन शक्त्या संन्यासावगम उतार्थात् लक्षणया वा । तत्राद्यं निराकृत्य द्वितीयं निरस्यति=विक्षेपेति । ब्रह्मविचारविरोधिविषयान्तरव्यासङ्गाभावस्य गृहस्थेष्वपि केषुचित्संभवेन तस्य संन्यासानुमापकत्वायोगादित्यर्थः । तृतीयं दूषयति—जनकादेरपीति । तथा च गृहस्थादेर्ब्रह्मविचारप्रतिपादकश्रुत्यन्तरविरोधान्न लक्षणाकल्पनमिति भावः । ततश्च मुमुक्षासंपादकानां नित्यानित्यविवेकादीनामाश्रमिमात्रसाधारणत्वेनाधिकारनिमित्तस्य मुमुक्षुत्वस्यापि सर्वसाधारणत्वादाश्रमिमात्राधिकारकमेव श्रवणादिविधानमित्याह—सर्वाश्रमेति ॥

म॰ प्र॰—अत्र=संसारे, उपोद्बलयन्तः=प्रमाणत्वेनोपन्यस्यन्तः । आच्छादयन्तः=अकथयन्तः, तदुपोद्बलतया=स्मृत्याख्यायिकाच्छादनसहकारित्वेन, तेषु=गृहस्थेषु । परममूले **अत्रेति** । शमादिषट्कसंपत्तिमध्ये । परममूले **उपरमशब्देनेति** । उपरमबोधकोपरतिशब्देनेत्यर्थः । उपरमशब्दार्थः=उपरमबोधकोपरतिशब्दार्थः । उपरमशब्देन=उपरमबोधकोपरतिशब्देन, अर्थात्=संन्यासं विनोपरत्यनुपपत्त्या । तत्र=पक्षत्रयमध्ये । **व्यासङ्गेति** । चित्तसंचारेत्यर्थः । तस्य=ब्रह्मविचारविरोधिविषयान्तरचित्तसंचाराभावस्य । **अनुमापकत्वेति**=कल्पकत्वेत्यर्थः । ततश्च=उपरतिशब्दस्य केनापि प्रकारेण संन्यासपरत्वाभावादेव, साधारणत्वेन वृत्तित्वेन, सर्वसाधारणत्वात्=निखिलाश्रमिवृत्तित्वात् ॥

**सगुणोपासनमपि चित्तैकाग्र्यद्वारा निर्विशेषब्रह्मसाक्षात्कारहेतुः तदुक्तम् । "निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः । वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥" इति ॥**

शि॰ म॰—ननु मोक्षसाधनब्रह्मज्ञानाय श्रवणादीनि कर्तव्यानीत्युक्तं तदयुक्तम् । सगुणोपासकानां हिरण्यगर्भलोकं गतानामकृतवेदान्तश्रवणानामपि तत्रै-

वान्ते मुक्तिश्रवणादित्याशङ्क्य किमेतावता ब्रह्मसाक्षात्कारस्य व्यभिचारं चोदयत्युत श्रवणादेः । नाद्यः, "नान्यः पन्थाविद्यतेऽयनाय" "न कर्मणा न प्रजया धनेन" इति च प्रतिषेधेन यज्ञादिवदेव सगुणोपासनस्यापि साक्षान्मुक्तिहेतुत्वाभावादित्यभिप्रेत्य द्वितीयं दूषयति–सगुणेति । चित्तैकाग्र्यलक्षणनिदिध्यासनद्वारा सगुणोपासनमपि ब्रह्मसाक्षात्कारहेतुरित्यर्थः । ननु सगुणविषयम् उपासनं तत्कथं निर्गुणसाक्षात्कारोपयोगि अन्यविषयस्यापि हेतुत्वे अतिप्रसङ्गात् । प्रागपि वैराग्यादिसंपन्नस्य इहैव श्रवणमनननिदिध्यासनसंभवेन तत एव तत्साक्षात्कारोपपत्तौ सगुणोपासनद्वारा निदिध्यासने गौरवं चेत्याशङ्क्य कल्पतरुकारोक्तं समाधानमाह–तदुक्तमिति । ये हि वैषयिकफलानुषङ्गरहितभवान्तरानुष्ठितकर्मजनितचित्तवैमल्यतया अनादिदुर्वासनां विषयगोचरामुत्सार्य्य तद्दूषितं चित्तं विषयेभ्योऽपकृष्य ततो निर्विशेषं ब्रह्म ध्यातुमीशते ते नाऽत्राधिकारिणः । किंतु येऽनादिदुर्वासनाजनितविषयान्तरविक्षेपवशात्प्रागुपास्तेर्निर्विशेषं ब्रह्म ध्यातुमशक्ततया तत्त्वं साक्षात्कर्तुमसमर्थास्ते एव मन्दा निरूपितसगुणोपासनास्वधिकारिणः । तथा चाधिकारिभेदान्नोपासनावैयर्थ्यमिति भावः । आद्यं दोषं निरस्यति–वशीकृत इति । एषां सगुणोपासकानां मनसि सगुणब्रह्मध्यानाभ्यासाद्ब्रह्मण्येव स्थिरीकृते सति निरुपाधिकस्यापि ध्यानसंभवेन तदेव ध्यातं निरुपाधिकतया साक्षात्कृतं भवतीत्यर्थः । तथा च विषयभेदाभावान्नातिप्रसङ्ग इति भावः ॥

म० प्र०–तत्रैव=ब्रह्मलोके एव, अन्ते=हिरण्यगर्भनाशकाले एव । व्यभिचारं=मोक्षफलेन व्यभिचारम् । **श्रवणादेरिति** । साक्षात्कारेण व्यभिचारं भवान्नोदयतीति शेषः । अतिप्रसङ्गात्=निर्गुणोपासनात्सगुणसाक्षात्कारापत्तिप्रसङ्गात्, प्रागपि=सगुणोपासनायाः प्रागपि, इहैव=अस्मिन् जन्मन्येव, तत एव=श्रवणादित एव । **गौरवमिति** । सगुणोपासनाया वैयर्थ्यमिति भावः । **भवान्तरेति** । जन्मान्तरेत्यर्थः । तद्दूषितं=विषयगोचरानादिदुर्वासनारूपदोषविशिष्टम्, ततः=विषयगोचरानादिदुर्वासनारूपप्रतिबन्धात् । अत्र=सगुणब्रह्मोपासनासु, प्रागुपास्तेः=सगुणब्रह्मोपास्तेः पूर्वम् । तत्त्वं=ब्रह्म, नोपासनवैयर्थ्यम्=प्रागपीत्यादिना बोधितोपासनावैयर्थ्यं न । तदेव=निरुपाधिकब्रह्मैव ॥

**सगुणोपासकानां च अर्चिरादिमार्गेण ब्रह्मलोकं गतानां तत्रैव श्रवणादुत्पन्नतत्त्वसाक्षात्काराणां ब्रह्मणा सह मोक्षः ॥**

शि० म०–ननु सगुणोपासनया वशीकृतचित्तानां निरुपाधिकब्रह्मध्यानादिहैव तत्साक्षात्कार इत्युक्तम् तथा सति प्रारब्धकर्मक्षये सत्यत्रैव विदेहकैवल्यापत्तौ उपासकानां कार्य्यब्रह्मणा सह मुक्तिरित्यभ्युपगमविरोध इत्याशङ्क्य न हि सर्वेषा-

मुपासकानामिहैव ब्रह्मसाक्षात्कार इति ब्रूमः। किंतु ये निश्चिततात्पर्य्यक-वेदान्तावगतं तदनुकूलानुमानेन च संभावितं निर्विशेषं ब्रह्म सगुणोपासनया वशीकृतमनस्कतया ध्यातुं समर्थास्तेषामेव निरुपाधिकध्यानाभ्यासजनितब्रह्मसाक्षात्कारात्प्रारब्धक्षये सत्यत्रैव मुक्तिः। अन्येषां तु अकृतब्रह्मविचाराणां सगुणोपासकानां ब्रह्मलोकं गतानां तत्रैव साधितश्रवणादिसाधनानां साक्षात्कृतब्रह्मभावानां कार्य्य-ब्रह्मणा सह मुक्तिरित्यभिप्रेत्याह—**सगुणोपासकानां चेति**। उपासकानां केन मार्गेण ब्रह्मलोकगमनमित्याकाङ्क्षायामाह—**अर्चिरादीति**। यत्राग्निवाय्वादयो गन्तॄणां नेतारः सोऽर्चिरादिमार्गः। तथा च श्रुतिः "स एव देवयानं पन्थानमासाद्या-ग्निलोकमायच्छति स वायुलोकं स वरुणलोकमिति तेऽर्चिषमभिसंभवन्ति" इति। ननु यथा ग्रामं जिगमिषुं प्रति किंचिन्मार्गचिह्नमुपदिशति इतो वनं प्राप्य ततो न्यग्रोधं ततो ग्रामं प्राप्स्यतीति एवमर्चिरादिरपि मार्गचिह्नमेवोपदिश्यते अचेतनत्वात्। अथवा अर्चिरादयो भोगभूमयो लोकशब्दश्रवणादिति चेन्न, अर्चिरादेर्मार्ग-चिह्नत्वे भोगभूमित्वे वा गन्तॄणां गमयितृभावेन गमनानुपपत्तेः। न च स्वातन्त्र्येण गमनं मूर्च्छितादिवत्तस्य सपिण्डीकृतत्वात्। तस्मादर्चिषमग्निस्वामिकं प्राप्त इति, तेन वायुस्वामिकं च प्राप्तो वायुना वरुणस्वामिकामित्यभ्युपगन्तव्यम्। तथा चाहु-राचार्य्यवाचस्पतिमिश्राः। "सपिण्डीकरणानां हि सूक्ष्मदेहवतां गतौ न स्वातन्त्र्यं न चाग्न्याद्या नेतारोऽचेतनास्तव॥" इति॥

म० प्र०—इहैव=वर्तमानजन्मन्येव, तत्साक्षात्कारः=निर्गुणब्रह्मसाक्षात्कारः। तथा सति=वर्त्तमानदेहे एव निर्गुणब्रह्मसाक्षात्कारे सति, तदनुकूलानुमानेन=वेदान्ततात्पर्यं सविषयकं तात्पर्यत्वात् गेहे घट इतिवाक्यतात्पर्यवत्। यद्वा अज्ञानाध्यासः साधिष्ठानकः अध्यासत्वात् शुक्तिरजताद्यध्यासवदित्यादिवेदान्तानुकूलानुमानादिप्रमाणेन, अन्येषां तु=निश्चिततात्पर्यकवेदान्तजन्यब्रह्मविषयकावगतिशून्यानां तु, यत्र=यस्मिन्मार्गे, स एव=उपासक एव, देवयानं=यान्त्यनेनेति यानं मार्गो देवानां यानं देवयानमिति देवसंबन्धिमार्गाभिन्नम्। उपदिश्यते=श्रुत्या कीर्त्यते। **अचेतनत्वादिति**। अग्न्यादीनामिति शेषः। **श्रवणादिति**। न तूपासकानां नेतार इति भावः। तस्य=उपासकस्य, सपिण्डीकृतत्वात्=अदृष्टादिना कार्य्याक्षमेन्द्रियकत्वात् त्यक्तस्वस्थानकत्वाद्वा। **इत्यभ्युपगन्तव्यमिति**। उपासकस्योत्तरायणमार्गेण गमनक्रमस्तु प्रथमतोऽर्चिषं १ ततोऽहः २ ततः शुक्लपक्षं ३ ततो यान् षण्मासानादित्य उदङ्ङेति तान् षण्मासान् ४ ततः संवत्सरं ५ ततो देवलोकं ६ ततो वायुं ७ तत आदित्यं ८ ततश्चन्द्रं ९ ततो विद्युतं १० ततो वरुणं ११ तत इन्द्रं १२ ततः प्रजापतिं १३ ततो ब्रह्मलोकं १४ प्राप्नोतीति। अत्रार्चिरादिशब्दैरर्चिराद्यभिमानिदेवता गृह्यंते इति न दोषः॥

कर्मवतां धूममार्गेण पितृलोकं गतानामुपभोगेन कर्मक्षये सति पूर्वकृतसुकृतदुष्कृतानुसारेण ब्रह्मादिस्थावरान्तेषु

**पुनरुत्पत्तिः । तथा च श्रुतिः । रमणीयचरणाः रमणीयां योनिमापद्यन्ते कुपूयचरणाः कुपूयां योनिमिति ॥**

शि० म०-ननु विद्याभेदेन गमनद्वये सति सगुणविद्यावतामर्चिरादिमार्गेणेति-विशेषोक्तिर्युज्यते । न च निर्गुणविद्यावतां मार्गोऽस्तीत्याशङ्क्य पुण्यकर्मणां मार्गान्तरसद्भावात्तदपेक्षया मार्गविशेषकीर्त्तनमित्याह-**कर्मवतामिति** । धूमेति । ते धूमं संभवन्ति धूमाद्रात्रिमित्यादिश्रुतेरिति भावः । **पितृलोकं गतानामिति** । यद्यपि कर्मिणां मार्गविशेषजिज्ञासायां तत्कीर्तनमेव युक्तं तथापि प्रसङ्गात्तेषा-मुपभोगपुनरुद्भवादिकीर्त्तनम् । अत एव वक्ष्यति इत्यलं प्रसङ्गादागतप्रपञ्चेनेति ॥

म० प्र०-परममूले **पितृलोकमिति** । स्वरादिलोकमित्यर्थः । कर्मिगमनक्रमस्तु प्रथम-तो धूमं १ ततो रात्रिं २ ततः कृष्णपक्षं ३ ततो दक्षिणायनषण्मासान् ४ मासेभ्यः पितृ-लोकं ५ पितृलोकादाकाशम् ६ आकाशाचन्द्रमसमाप्नोतीति ७ । अत्रापि धूमादिशब्दै-र्धूमाद्यभिमानिदेवता ग्राह्याः तत्कीर्त्तनमेव=कर्मिमार्गविशेषकीर्त्तनमेव । न तु कर्मिणामुपभोग-पुनरुद्भवादिकीर्तनमित्येवकारार्थः । प्रसङ्गात्=स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गात्, तेषां=कर्मिणाम् ॥

**प्रतिषिद्धानुष्ठायिनां तु रौरवादिनरकविशेषेषु तत्तत्पापोप-चितं तीव्रदुःखमनुभूय सूकरादिषु तिर्यग्योनिषु स्थावरा-दिषु चोत्पत्तिरित्यलं प्रसङ्गादागतप्रपञ्चेन । निर्गुणब्रह्म-साक्षात्कारवतस्तु न लोकान्तरगमनम् "न तस्य प्राणा उत्क्राम-न्ति" इति श्रुतेः । किंतु यावत्प्रारब्धक्षयं सुखदुःखे ह्यनुभूय पश्चादपवृज्यते ॥**

शि० म०-दुष्कृतकारिणां तु न धूमादिनाऽर्चिरादिना वा मार्गेण गमनप्र-सक्तिः किंतु येन केनचित् कुत्सितेन मार्गेण भयङ्करपुरुषैर्नरकविशेषपातनमित्याह-**प्रतिषिद्धानुष्ठायिनांत्विति** । ननु निर्गुण विद्यावतोऽपि गतिरङ्गीकार्य्या विद्याव-त्त्वाविशेषात्, स एतान् ब्रह्म गमयतीत्यमानवपुरुषस्य परब्रह्मगमयितृत्वश्रवणाच्च । न चेदं ब्रह्मपदं कार्य्यब्रह्मपरं नपुंसकस्य परस्मिन्नेव ब्रह्मणि रूढस्य मुख्यार्थ-त्वसंभवे गुणकल्पनया कार्य्यपरत्वायोगात् । किंचेदं ब्रह्मपदं ब्रह्मपरमेव तत्प्रकरणे श्रूयमाणत्वादित्यत आह-**निर्गुणेति** । अयं भावः । न तावत्परं ब्रह्म प्राप्यं तस्य सर्वात्मकस्य सर्वदा प्राप्तत्वात् । न चाप्राप्तत्वभ्रमात्प्राप्तमेव प्राप्नोतीति सांप्रतं तत्त्व-मस्यादिवाक्यजन्यसाक्षात्कारात्प्राक्तादृशभ्रमसंभवेऽपि तद्वतस्तदसंभवात् । तस्माद-गत्या कार्य्यब्रह्मण्येव कथंचिद्ब्रह्मशब्दो व्याख्येयस्ततश्चामानवः पुरुषः सगुणोपासका-नेव लोकान्तरवर्तिकार्य्यब्रह्म प्रापयतीत्यभ्युपेयम् । तदाहुराचार्य्यवाचस्पतिमिश्राः ॥ "कार्य्यस्याप्राप्तिपूर्वत्वादप्राप्तप्रापणे गतिः । प्रापयेद्ब्रह्म न परं प्राप्तत्वाज्जगदात्मकम् ॥"

इति। तर्हि साक्षात्कारवतः सद्य एव विदेहकैवल्यं स्यादिति शङ्कते—किंत्विति। ज्योतिःष्टोमादिस्वर्गस्यैहिकशरीरेणेव मोक्षस्य प्रारब्धकर्मणा प्रतिबन्धात्तन्नाशानन्तरमेव विदेहकैवल्यमित्याह—यावदिति। प्रारब्धं कार्य्यं युगकल्पादिपर्य्यन्तमनुभोक्तव्यं सुखदुःखादिरूपं येन तत्प्रारब्धकर्म यथा वसिष्ठादीनां पौरोहित्यादिप्रापकं कर्म। तच्च प्रक्षिप्तशरवन्मध्ये न विनश्यति किन्तु स्वकर्त्तव्यं सकलभोगमुत्पाद्यैव शाम्यतीत्यर्थः ॥

म० प्र०—गुणकल्पनया=लक्षणाकल्पनया, प्राप्यम्—अर्चिरादिमार्गेण प्राप्यम् । **तादृशभ्रमेति**=अप्राप्तत्वभ्रमेत्यर्थः। तद्वतः=तत्त्वमस्यादिवाक्यजन्यसाक्षात्कारवतः। तदसम्भवात्—अप्राप्तत्वभ्रमासंभवात्, कथंचित्=लक्षण तया, ततश्च=तत्त्वमस्यादिवाक्यजन्यसाक्षात्कारवतो गमनासंभवादेव, अप्राप्तप्रापणे=अप्राप्तप्राप्त्यर्थम्, गतिः=गमनम्, संभवतीति शेषः । सद्य एव=अज्ञाननाशेन तत्कार्य्यस्यापि नाशसंभवाज्ज्ञानोत्तरक्षणे एव ॥

**ननु "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिश्रुत्या "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति स्मृत्या च ज्ञानस्य सकलकर्मनाशहेतुत्वनिश्चये सति प्रारब्धकर्मावस्थानमनुपपन्नमिति चेन्न। "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इत्यादिश्रुत्या "नाभुक्तं क्षीयते कर्म" इत्यादिस्मृत्या चोत्पादितकार्य्यकर्मव्यतिरिक्तानां संचितकर्मणामेव ज्ञानविनाश्यत्वावगमात् ॥**

शि० म०—ब्रह्मसाक्षात्कारवतः प्रारब्धकर्मावस्थानमाक्षिपति—नन्विति । श्रुतिस्मृतिभ्यां प्रारब्धकार्य्याणां देहपातलक्षणावधिप्रतीक्षावगमेन "क्षीयन्ते चास्य कर्माणि" इति सामान्यश्रुतेरनारब्धकार्य्यकर्मविनाशपरत्वादनारब्धकार्य्याणामेव सुकृतदुष्कृतकर्मणां विद्यासामर्थ्याद्विनाश इत्याह—तस्येति । अन्यथा देवर्षीणां हिरण्यगर्भमनूद्दालकप्रभृतीनां ब्रह्मसाक्षात्कारवतां सद्यो न जीविता भवेत् । श्रूयते चैषां श्रुतिस्मृतीतिहासपुराणेषु तत्त्वज्ञता महाकल्पसमयान्तजीविता च । न ह्येते महाधियो न ब्रह्मविदः ब्रह्मविदश्चाल्पपुण्ययशसो मनुष्या इति संभवति । तस्मादागमानुसारेण प्रारब्धकार्य्याणां सत्यपि तत्त्वसाक्षात्कारेऽवस्थानं युक्तमिति भावः ॥

म० प्र०—श्रुतिस्मृतिभ्यां="तस्य तावदेव चिरं यावन्न विमोक्ष्ये, नाभुक्तं क्षीयते" इत्यादिश्रुतिस्मृतिभ्याम्, प्रतीक्षावगमेन=स्थितेरवगतत्वेन, अन्यथा=अनारब्धकार्य्याणामेव सुकृतदुष्कृतकर्मणां विद्यासामर्थ्याद्विनाशानभ्युपगमे किन्तु सर्वकर्मनाशस्वीकारे ॥

**संचितं द्विविधं सुकृतं दुष्कृतं चेति। तथा च श्रुतिः। "तस्य पुत्रा दायमुपयान्ति सुहृदः साधुकृत्यं द्विषन्तः पापकृत्यम्"**

**इति । ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्कार्य्यप्रारब्धकर्मणोऽपि निवृत्तेः कथं ज्ञानिनो देहधारणमुपपद्यते इति चेन्नाप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्तकतया प्रारब्धकर्मरूपप्रतिबन्धकदशायामज्ञाननिवृत्तेरनङ्गीकारात् । नन्वेवमपि तत्त्वज्ञानादेकस्य मुक्तौ सर्वमुक्तिः स्यात् अविद्याया एकत्वेन तन्निवृत्तौ क्वचिदपि संसारायोगादिति चेन्न इष्टापत्तेरित्येके ॥**

शि॰ म॰–ननु यदि तस्य तावदेव चिरमिति प्रारब्धकर्मावस्थानप्रतिपादकश्रुत्यन्तरवशात् क्षीयन्ते चास्य कर्माणीति सामान्यश्रुतेरनारब्धकार्य्यपरत्वं तर्हि "यथा पुष्करपलाश आपो न श्लिष्यन्ते एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति विशेषश्रवणात्सामान्यवचनं पापे कर्मविशेषे उपसंहरणीयम् । किंचाधर्मस्य रागादिनिबन्धनतया शास्त्रीयेन ब्रह्मज्ञानेन विनाशो युक्तः धर्मब्रह्मज्ञानयोस्तु शास्त्रीयत्वेन ज्योतिःष्टोमदर्शपूर्णमासवदविरोधान्नोच्छेद्योच्छेदकभावः । अन्यथाऽनुत्पन्नफलस्यापि धर्मस्य नाशे स्वर्गादिसाधनत्वप्रतिपादकज्योतिःष्टोमवाक्यस्याप्रामाण्यापत्तिः। तस्माद् दुष्कृतमेव संचितं कर्म ज्ञानविनाश्यमित्याशङ्क्य न हि पापस्य संचितपापत्वप्रयुक्तं विद्यानिवर्त्यत्वम् किंतु तन्निवर्त्याविद्यानिबन्धनत्वप्रयुक्तम् । तच्चैतत्सुकृतेऽप्यविशिष्टम् । "उभे एवैष एते तरति" इति श्रुत्यन्तरे सुकृतदुष्कृतयोरुभयोरपि ज्ञाननिवर्त्यत्वश्रवणात् । "एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिश्रुतेरपि सुकृतदुष्कृतनाशपरत्वात् । दृष्टप्रयोगश्चायं पुण्येऽपि पाप्मशब्दस्तद्यथा पुण्यपापे प्रक्रम्य सर्वे पाप्मानो निवर्त्तन्ते इत्यत्र । ततश्च सुकृतदुष्कृतभेदेन द्विविधमपि ब्रह्मज्ञाननिवर्त्यमित्यभिप्रेत्याह–**संचितमिति । तस्य पुत्रा इति** । यद्यपि सर्वात्मकस्य ज्ञानिन इष्टद्विष्टविभागो नास्ति तथापि ज्ञानपूर्वकालाभिप्रायेण परदृष्ट्या वा तत्संभवादिति बोध्यम् । ननु ब्रह्मज्ञानादज्ञानानिवृत्तौ न जानामीति व्यहारात्तन्निबन्धनसंचितकर्मानिवृत्तिप्रसङ्गात् पूर्वावस्थातो विशेषाभावप्रसङ्गः । तन्निवृत्तौ जीवन्मुक्तस्य देहादिप्रपञ्चोऽनुपपन्न इति चोदयति–**नन्विति** । जीवन्मुक्तानां तत्त्वसाक्षात्कारात्पारमार्थिकत्वव्यावहारिकत्वसंपादनपटीयःशक्तिविशिष्टाज्ञानविनाशेऽपि प्रातिभासिकत्वसंपादनपटीयःशक्तिविशेषविशिष्टाज्ञानस्यानिवृत्तेर्देहादिधारणं युक्तमित्यभिप्रेत्याह–**नाप्रतिबद्धेति** । ननु सर्पबाधेऽपि भयकम्पानुवृत्तिवज्जीवन्मुक्तस्याविद्यासंस्कारवशादेव देहादिप्रपञ्चोऽस्तु किं शक्तिविशेषविशिष्टाज्ञानकल्पनया गौरवात्, शक्तिभेदे मानाभावाच्चेति चेन्नाविद्योपादेयदेहादिप्रपञ्चस्य तन्निवृत्ताववस्थानायोगात् । न च तत्त्वज्ञानोत्तरकालिकदेहादेरविद्यासंस्कार एवोपादानं नाविद्येति

वाच्यम्, संस्कारस्यापि भावकार्य्यतयोपादानावश्यंभावे सत्योपादानत्वे सत्यत्वापातेनाविद्याया एवोपादानत्वे तन्निवृत्तौ संस्कारस्याप्यनुपपत्तेः । सर्पादिभ्रमबाधेऽपि भयकंपानुवृत्तिर्न भ्रमसंस्कारादिना, अनन्तरमपि स्मरणान्यथानुपपत्त्या संस्कारस्य तावत्कालं स्थायितया तावत्पर्य्यन्तं भयाद्यनिवृत्त्यापत्तेः । किंतु सर्पभ्रमजनितभयप्रयुक्तधातुवैषम्यविशेषादेव । धातुवैषम्यं च कार्य्यानुसारेण यावत्कार्य्यावस्थायीति कल्प्यते । ततो न संस्कारवशाज्जीवन्मुक्तस्य देहादिप्रपञ्चः । किंतु शक्तिभेदविशिष्टाज्ञानात् । न च शक्तिभेदे मानाभावः । कार्य्यबलेनैव तत्कल्पनात् । तथा हि । यथा विक्षेपावरणात्मककार्य्यद्वयबलेन तदनुकूलं शक्तिद्वयं कल्प्यते तथेहाप्यश्रुतवेदान्तानां प्रपञ्चे पारमार्थिकत्वभ्रमः श्रुतवेदान्तानामनुत्पन्नब्रह्मसाक्षात्काराणां व्यावहारिकत्वभ्रमः उत्पन्नब्रह्मसाक्षात्काराणां जनकयाज्ञवल्क्योद्दालकोद्धवप्रह्लादप्रभृतीनां यावद्देहपातं प्रातिभासिकत्वभ्रम इत्यविद्यायास्तिस्रः शक्तयः स्वीकार्य्याः । एतदभिप्रेत्य "तुच्छाऽनिर्वचनीया च तात्त्विकी च त्रिधा मता । माया ज्ञेया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥" इति प्राचीनैरुक्तम् । अत एव शास्त्रेण नश्यति पारमार्थिकत्वभ्रमः । नश्यति चापरोक्षाद्व्यावहारिकत्वभ्रमः प्रारब्धनाशात्प्रातिभासिकत्वभ्रमनाश इति शक्तित्रयस्य नाश इत्युक्तम् । तथा च श्रुतिः । "तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः" इति । सर्वशक्तिविशिष्टाज्ञाननिवृत्तिरित्यर्थः ॥

म० प्र०—न श्लिष्यन्ते=क्लेदनादिरूपं स्वकार्यं न कुर्वन्ति, प्रदूयन्ते=पापकर्मणा फलसम्बन्धाभावेन नश्यन्ति, **तन्निवर्त्येति**=विद्यानिवर्त्त्येत्यर्थः । तच्चैतत्=विद्यानिवर्त्त्याविद्यानिबन्धनत्वं च । **ब्रह्मेति** । न जानामीति व्यवहारादज्ञानानिवृत्तावित्यन्वयः । **पारमार्थिकत्वेति** । प्रपञ्चनिष्ठपारमार्थिकत्वादीत्यर्थः । तन्निवृत्तौ=अविद्यानिवृत्तौ । अनन्तरमपि=सर्पभ्रमबाधोत्तरमपि, तावत्कालं=स्मरणपर्य्यन्तम् । तावत्पर्य्यन्तं=संस्कारपर्य्यन्तम् । **विक्षेपेति**=सर्पादिकार्य्येत्यर्थः । **इहापीति**। इह प्रपञ्चेऽपीत्यन्वयः। व्यावहारिकत्वभ्रमः=व्यावहारिकत्वप्रतीतिः। प्रातिभासिकत्वभ्रमः=प्रातिभासिकत्वप्रतीतिः । अत एव=अविद्यायाः शक्तित्रयस्वीकारादेव । **श्रुतिरिति** । अज्ञानस्य शक्तित्रितयविशिष्टत्वे क्रमशो नाशे वा श्रुतिरूपप्रमाणमपि भवतीत्यर्थः । तस्य=स्वप्रकाशब्रह्मणः, अभिध्यानात्=सुरनरतिर्य्यगादिविशेषेषु स देव एव स्वरूपप्रदतया कारणत्वेनानन्दरूपतया पोषकत्वेन सर्वसाक्षित्वेन च वर्तते इत्यभिध्यानात् । संसारे पारमार्थिकत्वापादकाज्ञानांशनिवृत्तिः । योजनात्=कार्य्यकारणसंघातसाक्षिभूतो यो हरः स एवास्मीत्याकारकात् । तत्त्वभावात्=द्वैतभ्रमतन्मूलाविद्यानिवर्त्तकापरोक्षसाक्षात्काररूपात् उभाभ्यां जन्मान्तरापादकाज्ञाननिवृत्तिः । अन्ते=प्रारब्धकर्मान्ते द्वैतप्रतिभासमात्रनिर्वाहकनिखिलाविद्यानिवृत्तिः ॥

अपरे त्वेतद्दोषपरिहारायैवेन्द्रो मायाभिरिति बहुवचनश्रुत्यनुगृहीतमविद्यानानात्वमङ्गीकर्त्तव्यमित्याहुः । अन्ये त्वेकैवावि-

**द्या। तस्या एवाविद्याया जीवभेदेन ब्रह्मस्वरूपावरणशक्तयो नाना। तथा च यस्य ब्रह्मज्ञानं तस्य ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशो न त्वन्यं प्रति ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाश इत्यभ्युपगमात् नैकमुक्तौ सर्वमुक्तिः। अत एव च यावदधिकारमवस्थितिराधिकारिकाणामित्यस्मिन्नधिकरणेऽधिकारिपुरुषाणामुत्पन्नतत्त्वज्ञानानामिन्द्रादीनां देहधारणानुपपत्तिमाशङ्क्याधिकारापादकप्रारब्धकर्मसमाप्त्यनन्तरं विदेहकैवल्यमिति सिद्धान्तितम्। तदुक्तमाचार्य्यवाचस्पतिमिश्रैः। "उपासनादिसंसिद्धितोषितेश्वरचोदितम्। अधिकारं समाप्ता ये प्रविशन्ति परं पदम्॥" इति। एतच्चैकमुक्तौ सर्वमुक्तिरिति पक्षे नोपपद्यते॥**

शि० म०—ननु कस्यापि मुक्त्यभावे शुकवामदेवादिमुक्तिप्रतिपादकश्रुतिस्मृतिविरोध इत्यरुच्या मतान्तरमाह—**अपरे त्विति**। ननु लाघवसहकृतानुमानानुगृहीत "अजाम्" इत्येकवचनश्रुतिविरोधान्नाविद्यानानात्वं मायाभिरिति बहुवचनश्रुतिस्तद्गतशक्तिभेदमादायैवोपपन्ना। न चोक्तदोषभयात्तन्नानात्वं वक्ष्यमाणरीत्या तद्दोषनिरासंभवादित्यस्वरसात्समाधानान्तरमाह—**अन्ये त्विति**। एकमुक्तौ न सर्वमुक्तिरित्येतत्सूत्रकारवचनेनापि द्रढयति—**अत एवेति**। नन्वेतत्सूत्रमन्यपरं कल्प्यतामित्यत आह—**तदुक्तमिति**। तथा चैकमुक्तौ सर्वमुक्तिरित्यभ्युपगतावेतदधिकरणविरोधो दुर्वार इत्याह—**एतच्चेति**॥

म० प्र०—**लाघवसहकृतानुमानेति**। एकाविद्ययैव सर्वकार्यसंभवेऽपि यदि नानाविद्यास्वीकरणं तदा गौरवमिति लाघवतर्कसहकृत "विवादास्पदप्रपञ्च आविद्यकः मिथ्यात्वाच्छुक्तिरजतादिवत्" इत्यनुमानेत्यर्थः। **तद्गतेति**=मायागतेत्यर्थः। **उक्तदोषेति**=एकमुक्तौ सर्वमुक्त्यापत्तिरूपदोषेत्यर्थः। वक्ष्यमाणरीत्या=तस्या एवाविद्याया इत्यादिपरममूलोक्तप्रकारेण। **तद्दोषेति**=एकमुक्तौ सर्वमुक्त्यापत्तिरूपदोषेत्यर्थः। परममूले **अत एवेति**। एकमुक्तौ सर्वमुक्त्यभावादेवेत्यर्थः। अन्यपरम्=अनुत्पन्नतत्त्वज्ञानपरम्। तथा च=अनुत्पन्नतत्त्वज्ञानपरत्वाभावे। परममूले **एतच्चेति**। यावदधिकारमवस्थितिरित्याद्यधिकरणमित्यर्थः॥

**तस्मादेकाविद्यापक्षेऽपि प्रतिजीवमावरणभेदोपगमेन व्यवस्थोपपादनीया। तदेवं ब्रह्मज्ञानान्मोक्षः स चानर्थनिवृत्तिर्निरतिशयब्रह्मानन्दावाप्तिश्चेति सिद्धं प्रयोजनम्॥**

**इति श्रीवेदान्तपरिभाषायां प्रयोजनपरिच्छेदः॥**

शि० म०—नन्वेकाविद्यागतनानाशक्त्यभ्युपगन्तृमतेऽप्येकमुक्तौ सर्वमुक्तिरेव, इयमावरणशक्तिनिवर्त्या इयं नेत्यत्र नियामकाभावेन ब्रह्मसाक्षात्कारात्सर्वावरण-

शक्तिविशिष्टाविद्याविनाशावश्यंभावादित्याशङ्क्य यथा शुक्तिसाक्षात्कारात्फलबलेनैकावरणशक्तिनाशः यथा सर्वज्ञानप्रागभावनिवृत्तिस्वरूपयोग्येन ज्ञानेन कस्यचिदेव प्रागभावस्य निवृत्तिरेवमन्येन प्रपञ्चोपलम्भानुरोधेन यस्य ब्रह्मज्ञानं तदीयानर्थहेत्वावरणशक्तेरेव नाशो नान्यदीयसंसारहेत्वावरणशक्तीनामिति व्यवस्थोपपद्यत इत्याह—तस्मादिति । परिच्छेदप्रतिपाद्यमर्थं निगमयति—तदेवमिति ॥

प्रमादालिखितं त्यक्तं प्रमादालस्यदोषतः ।
तत्क्षन्तव्यं बुधैः सद्भिः क्षमा हि विदुषां धनम् ॥ १ ॥
सुवर्णखचिताकारा कृतिरेषा मया कृता ।
विदुषामस्तु वेदान्तशिखामणिरलंक्रिया ॥ २ ॥
अनेन मत्प्रबन्धेन वेदान्तार्थावलम्बिना ।
गुरुकारुण्यलब्धेन तारकं ब्रह्म तुष्यतु ॥ ३ ॥
वन्देऽहं वन्दनीयानां वन्द्यां वाचामधीश्वरीम् ।
कामिताशेषकल्याणकलनाकल्पवल्लरीम् ॥ ४ ॥

इति श्रीधर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचिते वेदान्तशिखामणौ प्रयोजनपरिच्छेदः ॥ ८ ॥

म० प्र०—फलबलेन=कालान्तरीयरजतभ्रान्तिबलेन, स्वरूपयोग्येन=कारणतावच्छेदकज्ञानत्वरूपधर्माक्रान्तेन । **सुवर्णेति** । सुवर्णखचितभूषणस्येवाकारो यस्याः सा तथा मया कृता एषा वेदान्तशिखामणिः कृतिर्विदुषामलंक्रिया भूषणक्रियाऽस्त्विति योजना । अशेषकल्याणकलनाकल्पवल्लरीम्=सकलसुखप्राप्तिहेतुकल्पवृक्षलताम् ॥

जातं यतो विश्वमिदं तु यस्मिन्स्थित्वा लयं याति भवान्तकाले ।
तं योगिवर्यं मुनिभिः प्रतीक्ष्यं श्रीनानकाख्यं प्रणमामि नित्यम् ॥ १ ॥
भवदावाग्निसंतप्ताञ्जनानुद्धर्तुमिच्छया ।
माययोपात्तकायं तं भजे श्रीचन्द्रमीश्वरम् ॥ २ ॥
येभ्यो मया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ।
कायेन वाचा मनसाऽपि वन्दे श्रीमद्गुरूणां चरणारविन्दम् ॥ ३ ॥
यद्गीस्तु पूषेव तमो निहन्ति मोहं परानन्दसमूहदोग्ध्री ।
विद्यागुरूंस्तान्सततं नमामि श्रीब्रह्मविज्ञानपदाभिधेयान् ॥

इति श्रीमद्ब्रह्मविज्ञानाभिधगुरुप्रसादलब्धोदासीनामरदासशब्दवाच्याविर्भूतायां वेदान्तपरिभाषाख्यग्रन्थस्य शिखामण्याख्यटीकायाश्च मणिप्रभाख्यायां व्याख्यायां प्रयोजनपरिच्छेदः ॥ ८ ॥

**समाप्तश्चायं ग्रन्थः ॥**

# वेदान्त-ग्रन्थाः।



